शीतद्विषश्चलधृतिःस्मृतिबुद्धिचेष्टासौहार्ददृष्टिगतयोऽपि बहुप्रलापाः ॥ २॥ पित्तं वन्हिर्वन्हिजं वा यदस्मात्पित्तोद्रिक्तस्तीव्रतृष्णाबुभुक्षः । गौरोष्णाङ्गस्ताम्रहस्ताङ्घ्रिवक्त्रः शूरो मानी पिङ्गकेशोऽल्परोमा ॥३॥ श्लेष्मा सोमः श्लेष्मलस्तेन सौम्यो गूढस्निग्धश्लिष्टसंध्यस्थिमांसः । क्षुत्तृट्शोकक्लेदघर्मैरतप्तो बुद्ध्या युक्तः सात्विकः सत्यसन्धः ॥ ४ ॥ इति रूपपरीक्षा ॥

## ॥ अथ दृक्परीक्षा ॥

रूक्षा धूम्रा तथा रौद्रा चला चान्तर्ज्वलत्यपि । दृष्टिर्यदा तदा वातरोगं रोगविदो जगुः ॥१॥ दीपद्वेषि च सन्तप्तं पीतं पित्तेन लोचनम् । जलार्द्रं ज्योतिषा हीनं स्निग्धं मन्दं कफेन तत् ॥२॥ द्वन्द्वदोषे भवेन्मिश्रं तूर्णं तूर्णं विलोचनम् । श्यामवर्णं च निर्भुग्नं तन्द्रामोहसमन्वितम् ॥ ३ ॥ रौद्रं च रक्तवर्णं च भवेच्चक्षुस्त्रिदोषतः । एकं चक्षुर्यदा भीमं द्वितीयं मीलितं भवेत् ॥ ४ ॥ त्रिभिर्दिनैस्तदा रोगी स याति यममन्दिरम् । ज्योतिर्विहीनं सहसा रोगिणो यस्य लोचनम् ॥ ५ ॥ ईषत्कृष्णं स नियतं प्रयाति यमशासनम् । सरक्तं कृष्णवर्णं च रौद्रं च प्रेक्षते यदा ॥६॥ इतिलिङ्गैर्विजानीयान्मृत्युरेव न संशयः । एकदृष्टिरचैतन्यो भ्रमन्स्फुरिततारकः । एकरात्रेण नियतं परलोकपथं व्रजेत् ॥ ७ ॥ यामलात् । शुष्कास्यः श्यामकोष्ठोऽप्यसितरदततिः शीतनासाप्रदेशः शोणाक्षश्चैकनेत्रो लुलितकरपदः श्रोत्रपातित्ययुक्तः । शीतश्वासोऽथ चोष्णश्वसनसमुदयः शीतगात्रप्रकम्पः सोद्वेगो निःप्रपञ्चः प्रभवति मनुजः सर्वथा मृत्युकाले ॥ १ ॥ इति दृक्परीक्षा ॥

## ॥ अथास्यपरीक्षा ॥

वाते च मधुरास्यत्वं पित्ते च कटुकं तथा । मधुराम्लं कफे चैव सर्वलिङ्गं त्रिदोषजे । अजीर्णे घृतपूर्णं स्यात्कषायं चाग्निमान्द्यके ॥ १ ॥ इत्यास्यपरीक्षा ॥

## ॥ अथ जिव्हापरीक्षा ॥

जिव्हा शीता खरस्पर्शा स्फुटिता मारुतेऽधिके । रक्ता श्यामा भवेत्पित्ते कफे शुभ्राऽतिपिच्छिला ॥१॥ कृष्णा सकण्टका शुष्का सन्निपाताधिके तु सा । मिश्रिते मिश्रिता ज्ञेया सर्वलक्षणवर्जिता ॥ २ ॥ इति जिव्हापरीक्षा ॥

## ॥ अथ कालज्ञानम् ॥

अभ्रैर्लक्षितलक्षणेन पयसा पूर्णेन्दुना भानुना पूर्वादक्षिणपश्चिमोत्तरदिशं षट्त्रिद्विमासैककम् । छिद्रं पश्यति चेत्तदा दशदिनं धूमाकृतिं पश्चिमे ज्वालां पश्यति सद्य एव मरणं कालोचितज्ञानिनाम् ॥ १ ॥ अरुन्धतीं ध्रुवं चैव विष्णोस्त्रीणि पदानि च । आयुर्हीना न पश्यन्ति चतुर्थं मातृमण्डलम् ॥ २ ॥ अरुंधती भवेज्जिव्हा ध्रुवो नासा-

१ (ख०) पीता । २ (ख०ग०घ०ङ०) अभ्रे । ३ (ख० ङ०) पश्चिमे ।

ग्रमेव च । विष्णुस्तु भ्रूद्वयोर्मध्यो भ्रूद्वयं मातृमण्डलम् ॥ ३ ॥ नासाग्रं भ्रूयुगं जिव्हां मुखं चैव न पश्यति । कर्णघोषं न जानाति स गच्छेद्यममन्दिरम् ॥ ४ ॥ नवभ्रूः पञ्चचक्षुश्च सप्तकर्णस्त्रिनासिका । जिह्वा च दिनमेकं तु कालचिन्हं दिने दिने ॥ ५ ॥ अकस्माच्च भवेत्स्थूलो ह्यकस्माच्च कृशो भवेत् । अकस्मादन्यथाभावः षण्मासैश्च विनश्यति ॥ ६ ॥ रसनायां कृष्णभावो मुखं कुङ्कुमसन्निभम् । जिव्हा स्वल्पखरस्पर्शा दुर्लभं तस्य जीवितम् ॥ ७ ॥ स्वेदो ललाटे हिमवज्ज्वरस्य शीतार्दितस्यापि सुपिच्छिलस्य । कण्ठस्थितो यस्य न याति वक्षो मार्गं* यमस्यैति गृहं स मर्त्यः ॥८॥ रात्रौ दाहो ऽभितपति दिवा जायते शीतलत्वं कण्ठे श्लेष्मा विरसवदनं कुङ्कुमाकारनेत्रे । जिह्वा कृष्णा वहति च सदा स्थूलसूक्ष्मा च नाडी तद्भैषज्यं स्मरणमधुना रामरामेति नाम्नः ॥ ९ ॥ सौम्या दृष्टिर्वदति विमलं हस्तपादौ सदोष्णौ स्वल्पो दाहः सुरसवदनं कोमला यस्य जिह्वा । नासाश्वासो वहति सरलः स्वेदहीनो ज्वरोऽसौ साध्यो रोगी भवति नियतं वैद्यभैषज्ययोग्यः ॥ १० ॥ इति कालज्ञानम् ॥

## ॥ अथ देशाः ॥

देशोऽल्पवारिद्रुनगो जाङ्गलः स्वल्परोगदः । अनूपो विपरीतोऽस्मात्समः साधारणः स्मृतः ॥ १ ॥ जाङ्गलं वातभूयिष्ठमनूपं तु कफोल्बणम् । साधारणं सममलं त्रिधा भूदेशमादिशेत् ॥ २ ॥ मतान्तरे । देशः प्रचुरपानीयो बहुवृक्षसमाकुलः । बहुवातकफव्याधिरनूप इति कथ्यते ॥३॥ स्वल्पोदकः स्वल्पवृक्षो बहुपित्तास्रगामयः । कथ्यते जाङ्गलो देशस्ताभ्यां साधारणः परः ॥ ४ ॥ इति देशः ॥

## ॥ अथ केषु मासेषु दोषत्रयप्रकोपः ॥

मार्गे पौषे तथा माघे आषाढे श्रावणेऽपि च । भाद्रे मासि चिकित्सज्ञैर्वातो राजा प्रकीर्तितः ॥ १ ॥ आश्विने कार्तिके मासे वैशाखज्येष्ठयोर्ध्रुवम् । सर्वशास्त्रविचारज्ञैः पित्तं राजा प्रकीर्तितः ॥ २ ॥ फाल्गुने चैत्रमासे च जन्तुपीडाकरो मतः । शीतलाम्बुसमुद्भूतः श्लेष्मा राजा प्रकीर्तितः ॥ ३ ॥ इति केषु मासेषु दोषत्रयप्रकोपः ॥

## ॥ केषु ऋतुषु दोषोत्पत्तिः ॥

हेमन्तवर्षाशिशिरेषु वायोः पित्तस्य तोयान्तनिदाघयोश्च । कफस्य कोपः कुसुमागमे च करोति यद्विहितं तथैवं ॥ १ ॥ इति ऋतुदोषोत्पत्तिः ॥

## ॥ अथ वातादिप्रकोपः ॥

संधारणाध्यशनजागरणोच्चभाषाव्यायामयानकटुतिक्तकषायरूक्षैः । चिन्ताव्यवायभयलङ्घनशीतशोकैर्वातः प्रकोपमुपयाति घनागमे च ॥ १ ॥ कट्वम्लमद्यलवणोष्णविदाहितीक्ष्णक्रोधातपानलभयश्रमशुष्कशाकैः । क्षाराद्यजीर्णविषमाशनभोजनैश्च

१ (ख०) त्रिनासिकं । २ (ख०) तथैषाम् ।

* नूनमिति पाठान्तरम् ।

पित्तं प्रकोपमुपयाति घनागमे च ॥ २ ॥ स्वप्नाद्दिवा मधुरशीतलमत्स्यमांसगुर्वम्लपिच्छिलतिलेक्षुपयोविकारैः । स्निग्धातितृप्तिलवणोदकपानभक्ष्यैः श्लेष्मा प्रकोपमुपयाति तथा वसन्ते ॥ ३ ॥

## ॥ अथ दोषत्रयलक्षणानि ॥

पारुष्यसंकोचनतोदशूलश्यावत्वमङ्गव्यथचेष्टभावान् । सुप्तत्वशीतत्वखरत्वशोषान् कर्माणि वायोः प्रवदन्ति तज्ज्ञाः ॥ १ ॥ परिश्रमस्वेदविदाहरागवैगन्ध्यसंक्लेदविपाककोपाः । प्रलापमूर्छाभ्रमपित्तदाहाः पित्तस्य कर्माणि वदन्ति तज्ज्ञाः ॥२॥ श्वेतत्वशीतत्वगुरुत्वकण्डूस्नेहोपदेहस्तिमितत्वलेपान् । उत्सेधसंक्लेदचिरक्रियां च कफस्य कर्माणि वदन्ति तज्ज्ञाः ॥ ३ ॥

## ॥ अथ दोषत्रयशमनम् ॥

स्निग्धोष्मस्थिरवृष्यबल्यलवणस्वाद्वम्लतैलातपस्नानाभ्यञ्जनबस्तिमांसमदिरासंबाहनोद्वर्तनम् । स्नेहस्वेदनिरूहनस्यशयनस्थानोपनाहादिकं पानाहारविहारभेषजमिदं वातं प्रशान्तिं नयेत् ॥ १ ॥ तिक्तस्वादुकषायशीतपवनच्छायानिशावीजनज्योत्स्नाभूगृहवारियन्त्रजलजस्त्रीगात्रसंस्पर्शनम् । सर्पिः क्षीरविरेकसेकरुधिरस्रावोपदेहादिकं पानाहारविहारभेषजमिदं पित्तं प्रशान्तिं नयेत् ॥ २ ॥ रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवनं स्त्रीसेवाध्वनियुद्धजागरजलक्रीडापदाघातनम् । धूमस्तापशिरोविरेकवमनं स्वेदापनाहादिकं पानाहारविहारभेषजमिदं श्लेष्माणमुग्रं जयेत् ॥ ३ ॥ अन्यच्च । कफं दुर्जनवत्तीक्ष्णैर्वातं स्नेहेन मित्रवत् । पित्तं जामातरमिव मधुरैः शीतलैर्जयेत् ॥ ४ ॥ कफप्रकोपे वमनं सनस्यं विरेचनं पित्तभवे विकारे । वातामयं बस्तिविशोधनं च संसर्गजे च प्रविमिश्रमेतत् ॥ ५ ॥

## ॥ अथाहर्निशदोषत्रयप्रवर्तनम् ॥

श्लेष्मा प्रायस्तु पूर्वाह्णे प्रदोषे च प्रवर्तते । पित्तं प्रायस्तु मध्याह्ने क्षपामध्ये प्रवर्तते ॥ १ ॥ अपराह्णेऽनिलः प्रायः पूर्वाह्णे च प्रवर्तते ॥

## ॥ अथ आमव्याधिलक्षणम् ॥

आलस्यतन्द्रा हृदयाविशुद्धिदोषप्रवृत्याकुलमूत्रभावैः । गुरूदरस्वारुचिप्रसक्ताभिरामान्वितं व्याधिमुदाहरन्ति ॥ १ ॥

## ॥ अथ तत्प्रतीकारः ॥

आमं जयेल्लङ्घनपञ्चकोललघ्वन्नरूक्षौदनतिक्तयूषैः । निरूहणैः स्वेदनपाचनैश्च संशोधनैरूर्ध्वमधस्तथा च ॥ १ ॥

१ ( ग० ) धनात्यये । ( ख० ) अङ्गव्यथचेष्टभावान् । २ ( ख० ग० घ० ङ० ) कोपगन्धेय ।

## ॥ अथ वयोविचारः ॥

बाल्यमाषोडशाद्वर्षान्मध्यमासप्ततेस्ततः ॥ वृद्धत्वमूर्ध्वं विज्ञेयं वयोमानमिति त्रिधा ॥ १ ॥

## ॥ अथ प्रकृतिः ॥

अधृतिरदृढसौहृदः कृतघ्नः कृशपुरुषो धमनीततः प्रलापी। द्रुतगतिरटनोऽनवस्थितात्मा वियति च गच्छति संभ्रमेण सुप्तः॥१॥ अव्यवस्थितमतिश्चलदृष्टिर्मन्दरत्नधनसंचयमित्रः। किञ्चिदेव विलपत्यनिबद्धं मारुतप्रकृतिरेष मनुष्यः॥ २॥ मेधावी निपुणमतिर्विगल्भवक्ता तेजस्वी समितिषु दुर्निवारवीर्यः। सुप्तः सन् कनकपलाशकर्णिकारान् संपश्येदपि च हुताशविद्युदुल्काः॥ ३॥ न भयात्प्रणमेदनतेष्वमृदुः प्रणतेष्वपि सान्त्वनदानपरः। भवतीह सदा व्यथितास्यगतिः स भवेदिह पित्तमयप्रकृतिः॥ ४॥ शुक्लाक्षः स्थिरकुटिलालिनीलकेशो लक्ष्मीवान् जलदमृदङ्गसिंहघोषः। सुप्तः सन् सकमलहंसचक्रवाकान् संपश्येदपि च जलाशयान्मनोज्ञान्॥ ५॥ रक्तान्तनेत्रः सुविभक्तगात्रः स्निग्धच्छविः सत्वगुणोपपन्नः। क्लेशक्षमो मानयिता गुरूणां ज्ञेयो बलासप्रकृतिर्मनुष्यः॥ ६॥ द्वयोर्वा तिसृणां वापि प्रकृतीनां तु लक्षणैः। ज्ञात्वा संसर्गजा वैद्यः प्रकृतीरभिदर्शयेत्॥ ७॥ विषजातो यथा कीटो न विषेण विपद्यते। तद्वत्प्रकृतयो मर्त्यं शक्नुवन्ति न बाधितुम्॥ ८॥ इति प्रकृतयः॥

## ॥ अथारोग्यलक्षणम् ॥

मङ्गलाचारसंपन्नपरिवारस्तथातुरः। श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः॥ १॥ सत्वलक्षणसंयुक्तो भक्तिर्वैद्यद्विजातिषु। चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम्॥ २॥

## ॥ अथ परिभाषा ॥

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित्। अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया॥ १॥ मानं च द्विविधं प्रोक्तं कलिङ्गं मागधं तथा। कलिङ्गान्मागधं श्रेष्ठमिति मानविदो विदुः॥ २॥ त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः। त्रसरेणुस्तु पर्यायनाम्ना वंशी निगद्यते॥ ३॥ जालान्तरगतैः सूर्यकरैर्वंशी विलोक्यते। षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका॥ ४॥ तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः। यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम्॥ ५॥ षड्भिस्तु रक्तिकाभिः स्यान्माषको हेमधानकः। माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते॥ ६॥ टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते। क्षुद्रभो वटकश्चैव द्रंक्षणः स निगद्यते॥ ७॥ कोलद्वयं तु

१ (ख० ग० घ० ङ०) त्रिंशाद्भिः। २ (ख।०) माषकौ। ३ (ख० ग० घ० ङ०) धान्यकौ।

कर्षः स्यात्स उक्तः पाणिमानिका । अक्षः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम् ॥ ८ ॥ बिडालपदकं चैव तथा षोडशिका मता । करमध्यो हंसपदं सुवर्णं कवलग्रहः ॥ ९ ॥ उदुम्बरं च पर्यायैः कर्ष एव निगद्यते । स्यात्कर्षाभ्यामर्धपलं शुक्तिरष्टमिका तथा ॥ १० ॥ शुक्तिभ्यां च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका । प्रकुञ्चः षोडशी बिल्वं पलमेवात्र कीर्त्यते ॥ ११ ॥ पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतश्च निगद्यते । प्रसृतिभ्यामञ्जलिः स्यात् कुडवोऽर्धशरावकः ॥ १२ ॥ अष्टमानं च विज्ञेयं कुडवाभ्यां च मानिका । शरावोऽष्टपलं तद्वद् ज्ञेयमत्र विचक्षणैः ॥ १३ ॥ शरावाभ्यां भवेत्प्रस्थश्चतुःप्रस्थैस्तथाढकम् । भाजनं कांस्यपात्रं च चतुः षष्टिपलैश्च तत् ॥ १४ ॥ चतुर्भिराढकैर्द्रोणः कलशो नल्वणोर्मणः । उन्मानश्च घटो राशिर्द्रोणपर्यायसंज्ञिताः ॥ १५ ॥ द्रोणाभ्यां शूर्पकुम्भौ च चतुःषष्टिशरावकः । शूर्पाभ्यां च भवेद्द्रोणी वाहो गोणी च सा स्मृता ॥ १६ ॥ द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः । चतुःसहस्रपलिका षण्णवत्यधिका च सा ॥ १७ ॥ पलानां द्विसहस्रं च भार एकः प्रकीर्तितः । तुला पलशतं ज्ञेया सर्वत्रैवं विनिश्चयः ॥ १८ ॥ माषटङ्काक्षबिल्वानि कुडवः प्रस्थमाढकम् । राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणाः ॥ १९ ॥ गुञ्जादिमानमारभ्य यावत्स्यात्कुडवस्थितिः । द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् ॥ २० ॥ प्रस्थादिमानमारभ्यद्विगुणं तद्द्रवार्द्रयोः । मानं तथा तुलायास्तु द्विगुणं न क्वचित्स्मृतम् ॥ २१ ॥ मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम् । विस्तीर्णं च तथोच्चं च तन्मानं कुडवं वदेत् ॥ २२ ॥ यदौषधं तु प्रथमं यस्य योगस्य कथ्यते । तन्नाम्नैव स योगो हि कथ्यतेऽत्र विनिश्चयः ॥ २३ ॥ इति मागधपरिभाषा ॥

## ॥ अथ कलिङ्गपरिभाषा ॥

स्थितिर्नास्त्येव मात्रायाः कालमग्निं वयो बलम् । प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत् ॥ १ ॥ यतो मन्दाग्नयो ह्रस्वा हीनसत्वा नराः कलौ । अतस्तु मात्रा तद्योग्या प्रोच्यते सुज्ञसंमता ॥ २ ॥ यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः । यवद्वयेन गुञ्जा स्यात्त्रिगुञ्जो वल्ल उच्यते ॥ ३ ॥ माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत्क्वचित् । स्याच्चतुर्माषकैः शाणः स निष्कष्टङ्क उच्यते ॥ ४ ॥ गद्याणो माषकैः षड्भिः कर्षः स्याद्दशमाषकः । चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः ॥ ५ ॥ चतुःपलैश्च कुडवः प्रस्थाद्याः पूर्ववन्मताः ॥ इति कलिङ्गपरिभाषा ॥

## ॥ अथ धान्यादिफलकन्दशाकगुणाः ॥

श्वेता रक्ता स्थूलसूक्ष्मा ये चान्ये शालयः शुभाः । स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ॥ १ ॥ कषायानुरसाः पथ्या लघवो मूत्रला हिमाः । षष्टिका व्रीहिषु

१ (ग०) द्विगुणं तु द्रवार्द्रयोः ।

श्रेष्ठा गौराश्चासितगौरतः ॥ २ ॥ रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृच्चवः । सन्धानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ॥ ३ ॥ युगन्धरस्त्रिदोषघ्नः स्वादुः पथ्यो रसायनः । मुद्गाढकीमसूरादि शिम्बिधान्यं विबन्धकृत् ॥ ४ ॥ कषायं स्वादु सङ्ग्राहि कटुपाकं हिमं लघु । मेदश्लेष्मास्रपित्तेषु हितं लेपोपसेकयोः ॥ ५ ॥ मुद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम् । वातानुलोमी कौलत्थो गुल्मतूनिप्रतूनिजित् ॥ ६ ॥ वरोऽत्र मुद्गोऽल्पबलः कलायस्त्वतिवातलः । चणको वातलस्तद्वत्कुलत्थः कफवातहृत् ॥ ७ ॥ वास्तुकं ग्रहणीकुष्ठत्रिदोषार्शोहरं सरम् । तद्वल्लघुदला चिल्ली काचमाची च मेथिका ॥ ८ ॥ तन्दुलीयो हिमो रूक्षो विषपित्तास्रकासजित् । चाङ्गेरी कफवातास्रसंग्रहण्यतिसारजित् ॥ ९ ॥ हृद्यं पटोलं कृमिजित् स्वादु शीतं रुचिप्रदम् । पटोलपत्रं पित्तघ्नं नालं तस्य कफापहम् ॥ १० ॥ फलं त्रिदोषशमनं मूलं चास्यविरेचनम् । पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम् ॥ ११ ॥ कारवेल्लं सतिक्तं स्याद्दीपनं कफजित्परम् । कर्कोटकं ज्वरश्वासदद्रुकुष्ठविषापहम् ॥ १२ ॥ वार्ताकं कफवातघ्नं किञ्चित्पित्तप्रकोपनम् । सरलं मूत्रलं प्रोक्तं बलकृद्बालमेव तत् ॥ १३ ॥ भेण्डी त्वम्लरसा सोष्णा ग्राहिका रुचिकारिका । बिम्बीफलं स्वादु शीतं स्तम्भनं लेखनं गुरु ॥ १४ ॥ पित्तास्रदाहशोफघ्नं वाताध्मानविबन्धकृत् । कूष्माण्डं बृंहणं शीतं गुरु पित्तास्रवातजित् ॥ १५ ॥ बालं पित्तापहं शीतं मध्यमं कफकारकम् । पक्वं नातिहिमं स्वादु सारकं दीपनं लघु ॥ १६ ॥ बस्तिशुद्धिकरं चेतोरोगदोषत्रयापहम् । मिष्टतुम्बीफलं वृष्यं कफपित्तहरं गुरु ॥ १७ ॥ कटुतुम्बी हिमा हृद्या पित्तकासकफापहा । त्रपुसं मूत्रलं शीतं रूक्षं पित्तास्रकृच्छ्रजित् ॥ १८ ॥ तत्पक्वमुष्णमम्लं स्यात्पित्तलं कफवातजित् । कोशातकी लघुस्तिक्ता रूक्षामाशयशोधिनी ॥ १९ ॥ शोफपाण्डूदरप्लीहकुष्ठार्शःकफपित्तजित् । तत्पत्रं भेदनं शीतं लघु मेहविशोषजित् ॥ २० ॥ शतपुष्पा कटुः स्निग्धा तिक्तोष्णा श्लेष्मवातहा । रुच्या बस्तिहिता नेत्र्या बद्धविट्क्रिमिशुक्रनुत् ॥ २१ ॥ चक्रवर्त्यभिधं शाकं गुणैर्वास्तुकवन्मतम् । सरं शीतं त्रिदोषघ्नं लघु दीपनपाचनम् ॥ २२ ॥ शाकं तु सर्षपोद्भूतं चक्षुर्घ्नं दाहि रोचनम् । बद्धविट्कं बद्धमूत्रं गुरूष्णं च त्रिदोषकृत् ॥ २३ ॥ कौसुम्भं स्वादु रूक्षोष्णं कफजित्पित्तलं लघु । चणकं शाकमुद्दिष्टं दुर्जरं कफवातकृत् ॥ २४ ॥ शिग्रुस्तीक्ष्णो लघुर्ग्राही वह्निदः कफवातजित् । तीक्ष्णोष्णो विद्रधिप्लीहव्रणघ्नश्चाम्लपित्तजित् ॥ २५ ॥ [ग्रन्थान्तरे] ॥ मधुशिग्रुः कटुस्तिक्तः शोफघ्नो दीपनः सरः । तत्पत्रं वातपित्तघ्नं चक्षुष्यं स्वादु शीतलम् ॥ २६ ॥ शिग्रुजं कुसुमं स्वादु कफपित्तहरं गुरु । सकषायं गुरु ग्राहि चक्षुष्यं कृमिनाशनम् ॥ २७ ॥ सौभाञ्जनफलं स्वादु कषायं कफपित्तजित् । शूलकुष्ठक्षयश्वासगुल्मघ्नं दीपनं परम् ॥ २८ ॥ आर्द्रा कुस्तु-

---

१ (ख० ग० घ०) कौलित्था । २ (ख० ग० घ० ङ०) चलः । ३ (ख० ग०) कर्कोटजम् । ४ (ख० ग० घ० ङ०) वृन्ताकम् । ५ (ख० ग० घ० ङ०) तत्फलम् ।

म्बरी कुर्यात् स्वादुसौगन्ध्यहृद्यताः । शुष्का स्निग्धा स्वादुपाका कषाया कटुका लघुः ॥ २९ ॥ कदलीकुसुमं तिक्तं कषायं ग्राहि दीपनम् । उष्णवीर्यं बलासघ्नं तद्वर्णं चास्फुटं दलम् ॥ ३० ॥ आगस्त्यपुष्पं शिशिरं चतुर्थज्वरशान्तिकृत् । नक्तान्ध्यनाशनं प्रोक्तं दीपनं श्लेष्मपित्तनुत् ॥ ३१ ॥ सतिक्तं कटुकं पाके कषायं वातलं मतम् । आगस्त्यशिम्बः सदृशो गुणैः पुष्पस्य दुर्जरः ॥ ३२ ॥ शतपत्री तरुण्युक्ता कर्णिका चारुकेसरा । महाकुमारी गन्धाढ्या लाक्षापुष्पातिमञ्जुला ॥ ३३ ॥ शतपत्री हिमा हृद्या ग्राहिणी शुक्रला लघुः । दोषत्रयास्रजिद्वर्ण्या तिक्ता कट्वी च पाचनी ॥ ३४ ॥ मूलकं बालकं रुच्यं वीर्योष्णं पाचनं लघु । महत्तदेव रूक्षोष्णं गुरु दोषत्रयप्रदम् ॥ ३५ ॥ सूरणो दीपनो रूक्षः कफार्शःक्रिमिजिल्लघुः । तद्वदन्यो विशेषेण कफघ्नो रक्तपित्तकृत् ॥ ३६ ॥ गर्जरं मधुरं तीक्ष्णं तिक्तोष्णं दीपनं लघु । संग्राहि रक्तपित्तार्शोग्रहणीकफवातजित् ॥ ३७ ॥ शीतलः कदलीकन्दो ग्राही रूक्षोऽस्रपित्तजित् । ईषत्कषायः कफकृत् वातलः प्रदरे हितः ॥ ३८ ॥ रूक्षातिपित्तकृद्दर्वी वातला गौरवाकुची । तिक्ता नोदरिणां पथ्या ग्रहण्यर्शोविकारनुत् ॥ ३९ ॥ क्षुपजं मरिचं रुच्यं दोषलं सर्वरोगकृत् । विशेषतः प्रमेहार्शोविकारेषु न शस्यते ॥ ४० ॥ बृहन्मरीचं क्षुपजं ततोऽप्यल्पतरं गुणैः । क्षीराककर्कटिका त्वन्या राजकर्कटिका च सा ॥ ४१ ॥ सुदीर्घा राजिलफला वार्णैः कुलककर्कटी । वालुकं श्लेष्मलं स्वादु लघु भेदि च पित्तजित् ॥ ४२ ॥ मधुराम्लरसं पित्तरक्तजित्पक्वमुत्तमम् । अग्निदीप्तिकरं श्वेतं शाकूटममलं सरम् ॥ ४३ ॥ दुर्नामक्रिमिमेहघ्नं कफपित्तहरं परम् । दुर्नामहृत् श्यामलशाकुटं तु मन्दाग्निविण्मूत्रविबन्धहन्तृ । द्राक्षाबालफलं कटूष्णविशदं पित्तास्रदोषप्रदं मध्यं चाम्लरसं रसान्तरगतं रुच्यातिवह्निप्रदम् । पक्वं चेन्मधुरं तथाम्लसहितं तृष्णास्रपित्तापहं पक्वं शुष्कतमं श्रमार्तिशमनं सन्तर्पणं पुष्टिदम् ॥ ४४ ॥ द्राक्षा पक्वा सरा शीता चक्षुष्या बृंहणी गुरुः । हन्ति तृष्णाज्वरश्वासवातवान्तास्रकामलाः ॥ ४५ ॥ कृच्छ्रास्रपित्तसंमोहदाहशोषमदात्ययान् । आमा स्वल्पगुणा गुर्वी सैवाम्ला रक्तपित्तजित् ॥ ४६ ॥ आम्रा ग्राही प्रमेहास्रकफपित्तव्रणान्जयेत् । तत्फलं बालमत्यम्लं रूक्षं दोषत्रयास्रकृत् ॥ ४७ ॥ बद्धास्थि तादृगेवाक्तं वातहारि च पित्तलम् । पक्वं तु मधुरं वृष्यं स्निग्धं हृद्यं बलप्रदम् ॥ ४८ ॥ गुरु वातहरं रुच्यं वर्ण्यं शीतमपित्तलम् । सन्तर्पणो यः सकलेन्द्रियाणां बलप्रदो वृष्यतमश्च हृद्यः । क्षीप्र प्रहर्षं प्रचुरं ददाति फलाधिराजः सहकार एव ॥ ४९ ॥ रसस्त्वस्य स्निग्धो रोचनो बलवर्णकृत् । आम्रबीजं कषायं स्याच्छर्द्यतीसारनाशकृत् ॥ ५० ॥ आम्रपुष्पमतीसारकफपित्तप्रमेहनुत् । असृग्दोषहरं शीतं रुचिकृद्वातनाशनम् ॥ ५१ ॥ आम्रस्य पुल्लकं रुच्यं कफपित्तविनाशनम् । पनसं शीतलं पक्वं स्निग्धं पित्तानिलापहम् ॥ ५२ ॥ बल्यं शुक्रप्रदं हन्ति रक्त-

---

१ (ख० ग० घ० ङ०) गृञ्जनम् । २ (ख० ग० घ०) दाह ।

पित्तक्षतक्षयान् । आमं तदेव विष्टम्भि वातलं तुवरं गुरु ॥ ५३ ॥ ईषत्कषायं मधुरं तद्बीजं वातलं गुरु । तत्फलस्य विकारघ्नं रुच्यं त्वग्दोषनाशनम् ॥ ५४ ॥ कदली योनिदोषाश्मरक्तपित्तहरा हिमा । तत्कन्दः शीतलो बल्यः केश्यः पित्तकफास्रजित् ॥ ५५ ॥ तत्फलं मधुरं शीतं विष्टम्भि बलकृद्गुरु । स्निग्धं पित्तास्रतृड्दाहक्षतक्षयसमीरजित् ॥ ५६ ॥ बालं फलं मधुरमम्लमथो कषायं पित्तापहं शिशिररुच्यमथापि नालम् । पुष्पं तदप्यनुगुणं कृमिहारि कन्दं पर्णं च शूलशमनं कदलीभवं स्यात् ॥ ५७ ॥ रम्भापक्वफलं कषायमधुरं बल्यं च शीतं तथा पित्तं चास्रविमर्दनं गुरुतरं पथ्यं न मन्दानले । सद्यः शुक्रविवर्धनं कृमिहरं तृष्णापहं कान्तिदं दीप्ताग्नौ सुखदं कफामयहरं सन्तर्पणं दुर्जरम् ॥ ५७ ॥ नारीकेलफलं शीतं दुर्जरं बस्तिशोधनम् । विष्टम्भि बृंहणं बल्यं वातपित्तास्रदाहजित् ॥ ५८ ॥ तस्याम्भः शीतलं हृद्यं दीपनं शुक्रलं लघु । तत्पादपशिरोमज्जा शुक्रला वातपित्तजित् ॥ ५९ ॥ वेशपतः कोमलनारिकेलं निहन्ति पित्तज्वरपित्तदोषान् । तदप्यजीर्णं गुरुपित्तकारि विदाहि विष्टम्भि मतं भिषग्भिः ॥ ६० ॥ खर्जूरिकाफलं शीतं स्वादु स्निग्धं क्षुदास्रजित् । बल्यं हन्ति मरुत्पित्तमदमूर्छामदात्ययान् ॥ ६१ ॥ तस्मात्स्वल्पगुणं ज्ञेयमन्यत्खर्जूरिकाफलम् । दाडिमं ग्राहि दोषघ्नं हृद्यं रोचनदीपनम् ॥ ६२ ॥ तद्वदामलकं पथ्यं मधुराम्लरसं सरम् । बदरं लघु संग्राहि रुच्यमुष्णं समीरजित् ॥ ६३ ॥ कफपित्तकरं तद्वत्कोमलं गुरु संमतम् । सौवीरं बदरं शीतं भेदनं गुरु शुक्रलम् ॥ ६४ ॥ बृंहणं पित्तदाहास्रक्षयतृष्णानिलापहम् । जम्बूफलं ग्राहि रूक्षं कफपित्तव्रणास्रजित् ॥ ६५ ॥ क्षुद्रजम्बूफलं तद्वद्विशेषाद्दाहनाशनम् । खर्बुजं मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु ॥ ६६ ॥ स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम् । वातामुष्णं सुस्निग्धं वातहृद्बलशुक्रकृत् ॥ ६७ ॥ अक्षोटं मधुरं बल्यं गुरूष्णं वातहृत्सरम् । सेव्यं समीरपित्तघ्नं बृंहणं कफकृत् गुरु ॥ ६८ ॥ रसे पाके च मधुरं शिशिरं रुचिशुक्रकृत् । शीताफलं तु मधुरं शीतं पित्तविनाशनम् ॥ ६९ ॥ हृद्यं बलकरं स्वादु पुष्टिदं स्वल्प वातलम् । रामाह्वयफलं तद्वदीषत्स्वादु च वातकृत् ॥ ७० ॥ शृङ्गाटं मधुरं रूक्षं गुरु ग्राहि हिमं तथ । शुक्रानिलश्लेष्मकरं शुष्कमार्द्रं विशेषतः ॥ ७१ ॥ विरेचनफलः शाखी श्यामः करभवल्लभः । अर्कार्धः कटुकः पीलुः कषायो मधुराम्लकः ॥ ७२ ॥ रसः स्वादुश्च गुल्मार्शः । शमनो दीपनः परः । मधुरस्तु महापीलुर्वृष्यो विषविनाशनः ॥ ७३ ॥ पित्तप्रशमनो रुच्यो ह्यामघ्नो दीपनः परः ॥ सुस्वादु पाकरसयोर्गुरु शीतलं च श्लेष्मामवातकरमञ्जिरमग्निशत्रु । आमं तु कैतकं रुच्यं कफपित्तकरं गुरु । अश्मरोचकं हृद्यं श्रमक्लमनिबर्हणम् ॥ ७४ ॥ पक्वं तु पित्तहृत्स्वादुरसमातपदोषनु-

१ (ख० ग० घ० ङ०) दोषास्र । २ (ख० ग० घ० ङ०) तृड्दाह । ३ (ख० ग०) क्षुधा ४ (ख०ग०घ०ङ०) कोलं गुरुसरम् । ५ (ख० ग०) दाह । ६ (ख०ग०घ०ङ०) शीत ।

त् । बीजपूरफलं रुच्यं रसेऽम्लं दीपनं लघु ॥७५॥ रक्तपित्तकरं ग्राहि जिह्वाहृच्छोधनं परम् त्वक् तस्य तिक्ता गुर्व्युष्णा कृमिवातकफापहा ॥ ७६ ॥ तन्मांसं बृंहणं शीतं गुरु पित्तसमीरजित् । केसरो मधुरो ग्राही शूलगुल्मोदरापहः ॥७७॥ बीजमुष्णं कृमिश्लेष्मवातजित् गर्भदं गुरु । तत्पुष्पं शीतलं ग्राहि रक्तपित्तहरं लघु ॥ ७८ ॥ मधुकर्कटिका शीता रक्तपित्तहरा गुरुः । कालिङ्गं ग्राहि दृक्पित्तशुक्रहृत् शीतलं गुरु ॥ ७९ ॥ नारङ्गमम्लमत्युष्णं रुच्यं वातहरं सरम् । कट्वम्लमपरं हृद्यं दुर्जरं वातनाशनम् ॥८०॥ जम्बीरमम्लं शूलघ्नं गुरूष्णं कफवातजित् । आस्यवैरस्यहृत्पीडावह्निमान्द्यकृमीन्जयेत् ॥ ८१ ॥ अम्लवेतसमत्यम्लं भेदनं शतवेधि च । हृद्रोगशूलगुल्मघ्नं पित्तास्रकफदूषणम् ॥८२॥ साराम्लमम्लं वातघ्नं गुरु पित्तकफप्रदम् [1] कर्मरङ्गं हिमं ग्राहि स्वाद्वम्लं कफपित्तजित् ॥ ८३ ॥ निम्बूकमम्लं वातघ्नं पाचनं दीपनं लघु । राजनिम्बुफलं स्वादु कफपित्तसमीरजित् ॥ ८४ ॥ मिष्टनिम्बूफलं पित्तवातहृत् गुरु रोचनम् । भ्रमतृड्दाहपित्तास्रच्छर्दिक्षयगरापहम् ॥ ८५ ॥ आम्लिकाभागुरुर्वातहरा पित्तकफास्रजित् । पक्वा तद्वत्सरा रुच्या वह्निबस्तिविशुद्धिकृत् ॥ ८६ ॥ शुष्का हृद्या श्रमभ्रान्तितृष्णाकृमिहरा लघुः । तिन्तिडीकं समीरघ्नमाममुष्णं परं गुरु ॥ ८७ ॥ तत्पक्वं लघु संग्राहि ग्रहणीकफवातजित् । करमर्दं गुरूष्णाम्लं रक्तपित्तकफप्रदम् ॥८८॥ तत्पक्वं मधुरं रुच्यं लघु पित्तसमीरजित् । शुष्कं पक्ववदश्यामं पक्वमप्याद्रमामवत् ॥८९॥ कपित्थमामं सङ्ग्राहि लघु दोषत्रयापहम् । पक्वं गुरु तृषाहिक्काशमनं वातपित्तजित् ॥९०॥ स्वाद्वम्लं तुवरं कण्ठशोधनं ग्राहि दुर्जरम् । आम्रातमामं वातघ्नं गुरूष्णं रुचिकृत्सरम् ॥ ९१ ॥ पक्वं स्वादु हिमं वृष्यं मरुत्पित्तक्षतास्रजित् । पूगं गुरु हिमं रूक्षं कषायं कफपित्तजित् ॥९२॥ मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् । आर्द्रं तु गुर्वभिष्यन्दिवह्निदृष्टिहरं सरम् ॥ ९३ ॥ स्विन्नं त्रिदोषहृत्सर्वं तद्भेदांस्तद्वदादिशेत् । लशुनो बृंहणो वृष्यः स्निग्धोष्णः पाचनः सरः ॥ ९४ ॥ भग्नसन्धानकृत् केश्यो गुरुः पित्तास्रबुद्धिदः । रसायनं कफश्वासकासगुल्मज्वरारुचीः ॥ ९५ ॥ हन्ति शोफप्रमेहार्शः कुष्ठशूलानिलं कृमीन् । तत्पत्रं मधुरं क्षारं नालो मधुरपिच्छिलः ॥ ९६ ॥ पलाण्डुस्तु गुणैस्तुल्यः कफकृन्नातिपित्तलः । अनुष्णः केवलं वातं स्वादुपाकरसैर्जयेत् ॥९७॥ आर्द्रं पाचनदीपनं रुचिकरं वृष्यं कटूष्णं वरं स्वर्यं मेदहरं कफामयहरं शोफापहं शूलजित् । जिह्वाकण्ठविशोधनं सलवणं पथ्यं सदा भोजने निम्बूतोयविमिश्रितं रुचिकरं संदीपनं सारणम् ॥ ९८ ॥ कुष्ठे पाण्ड्वामये कृच्छ्रे रक्तपित्ते व्रणे ज्वरे । दाहे निदाघे शरदि नैव पूजितमार्द्रकम् ॥ ९९ ॥ शाकेषु सर्वेषु वसन्ति रोगाः सहेतवो देहविनाशनाय । तस्माद्बुधः शाकविवर्जनं हि कुर्यात्तथाम्लेषु स नैव दोषः ॥ १०० ॥

---

1 ( ग० प० क० ) प्यामम् ।

## ॥अथ तमाखुगुणाः॥

धूमाख्यो धूमवृक्षश्च बृहत्पत्रश्च धूसरः । तमाखुर्गुच्छफलको धूमयन्त्रप्रकाशकः ॥ १ ॥ बहुबीजो बहुफलः सूक्ष्मबीजस्तु दीर्घकः । दीर्घं पाटलवर्णं च पुष्पं तस्य प्रकीर्तितम् ॥ २ ॥ तस्य पत्रं तु तीक्ष्णोष्णं कफवातहरं परम् । श्वासकासहरं चैव कोष्ठवातहरं तथा ॥ ३ ॥ वातानुलोमनकरं बस्तिशोधनमुत्तमम् । दन्तरुकूशमनं चैव कृमिकण्ड्वादिनाशनम् ॥ ४ ॥ मदपित्तभ्रमकरं वमनं रेचनं स्मृतम् । दृष्टिमान्द्यकरं चैव तीक्ष्णशुक्रकरं तथा ॥ ५ ॥. तस्यैव धूमपानं तु विशेषाद्दृष्टिशुक्रहृत् । देशान्तरप्रभेदेन तीक्ष्णं चार्तवपित्तलम् ॥ ६ ॥ वमनस्य प्रभावेन वृश्चिकादिविषं हरेत् । रेचनत्वाद्धरेद्वातं श्लेष्माणं च नियच्छति ॥ ७ ॥ इति धान्यादिफलकन्दशाकादिवर्गः ॥

## ॥ अथ मांसगुणाः ॥

मांसवर्गो द्विधा ज्ञेयो जाङ्गलानूपभेदतः । [ तत्र जाङ्गललक्षणं गुणाः ] मांसवर्गेऽत्र जङ्घाला बिलस्थाश्च गुहाशयाः ॥ १ ॥ तथा पर्णमृगा ज्ञेया विष्किरा प्रतुदा अपि । प्रहसा अथ च ग्राम्या अष्टौ जाङ्गलजातयः ॥ २ ॥ [हरिणैणकुरङ्गमृगादयः जङ्घालाः । गोधाशशभुजङ्गाखवादयो बिलस्थाः । सिंहव्याघ्रवृकऋक्षादयो गुहाशयाः । वानरऋक्षमार्जारादयः पर्णमृगाः । वार्तिकलावतित्तिरविकिरकपिञ्जलादयो विष्किराः । हारितकपोतसारिकाखञ्जरीटपिकादयः प्रतुदाः । काकोलूकगृध्रशशचिल्लचाषादयः प्रहसाः । प्रच्छिद्यभक्षणात् ] छागमेषवृषाश्वाद्याः ग्राम्याः प्रोक्ता महर्षिभिः ॥ इति अष्टौ जाङ्गलाः ॥

## ॥ अथानूपजातिलक्षणं तद्गुणाश्च ॥

कुलेचराः प्लवाश्चापि कोशस्थाः पादिनस्तथा । मत्स्या एतेऽत्र विख्याताः पञ्चधानूपजातयः ॥ १ ॥ महिषागण्डवाराहाश्चमरीवारणादयः । एते कुलेचराः प्रोक्ता यस्मात्कुले चरन्त्यपाम् ॥ २ ॥ [हंससारसबकबृहद्बककौञ्चादयः प्लवसंज्ञकाः । शुक्तिशङ्खशम्बूकादयः कोशस्थाः । कूर्मनक्रघण्टिकाशिशुमारकर्कटादयः पादिनः] रोहिताद्यास्तु ये जीवास्ते मत्स्याः परिकीर्तिताः । इत्यनूपजाः पञ्च ॥

## ॥ अथ जाङ्गलमांसगुणाः ॥

एणमांसं हिमं रुच्यं ग्राहि दोषत्रयापहम् । षड्रसं बलदं पथ्यं लघु रूक्षं ज्वरास्रजित् ॥ १ ॥ चित्राङ्गो वातुलः कश्चिन्मधुरो बलवर्धनः । तद्वच्छम्बरमांसं तु वृष्यं दोषत्रयापहम् ॥ २ ॥ शशः शीतो लघुः स्वादुर्ग्राही पथ्योऽग्निदीपनः ॥ सन्निपा-

---

१ (ख० ग० घ० ङ०) जम्बाल । २ (ग० घ० ङ०) प्रसहा ।

तज्ज्वरश्वासरक्तपित्तकफापहः ॥४॥ गोधाऽनिलहरा बल्या वृष्या मेध्या च कीर्तिता। मूषको बद्धविण्मूत्रो बल्यो वृष्योऽनिलापहः ॥५॥ सल्लकः श्वासकासास्रशोषदोषत्रयापहः। सेधा तथैव विज्ञेया विशेषाद्बलवर्धिनी ॥६॥ शृगालो बलदो वृष्यः सर्ववातक्षयापहः। वानरः पवनश्वासमेदःपाण्डुकृमीञ्जयेत् ॥ ७ ॥ वार्तिको मधुरः शीतो रूक्षश्च कफवातजित्। पारावतो गुरुः स्वादुः कषायो रक्तपित्तहा ॥ ८ ॥ चटकः शीतलः स्निग्धः स्वादुः शुक्रकफप्रदः। सन्निपातहरो वेश्मचटकः शुक्रलः परः ॥९॥ लावा वह्निकराः स्निग्धा मधुरा ग्राहिणो हिमाः। पांशुलः श्लेष्मलस्तेषु वीर्योष्णोऽनिलनाशनः ॥ १० ॥ गौरो लघुतरो रूक्षो वह्निकारी त्रिदोषजित्। पौण्ड्रकः पित्तकृत्किञ्चिल्लघुर्वातकफापहः ॥ ११ ॥ दर्भरो रक्तपित्तघ्नो हृदामयहरो हिमः। तित्तिरः कृष्णवर्णः स्यात्स तु गौरः कपिञ्जलः ॥ १२ ॥ तित्तिरो वर्णदो ग्राही हिक्कादोषत्रयापहः। श्वासकासज्वरहरस्तस्माद्गौरोऽधिको गुणैः ॥१३॥ मयूरमांसं सुस्निग्धं वातघ्नं शुक्रवर्धनम्। बल्यं मेधाकरं प्रोक्तं चक्षूरोगविनाशनम् ॥ १४ ॥ सेव्यं मयूरजं मांसं हेमन्ते शिशिरे मधौ। न शरद्ग्रीष्मयोः पथ्यं वर्षास्वपि हितं न च ॥ १५ ॥ स्वादुः कषायश्च लघुः कपोतः कफपित्तहा। शुको बल्योऽतिवृष्यश्च वीर्यवृद्धिकरः परः ॥ १६ ॥ कुक्कुटो बृंहणः स्निग्धो वीर्योष्णोऽनिलजिद्गुरुः। चक्षुष्यः शुक्रकफकृद्वल्यो हृद्यः कफान्तकः ॥ १७ ॥ पानीयकुक्कुटः स्निग्धो बृंहणः श्लेष्मलो गुरुः। छागमांसं गुरु स्निग्धं लघुपाकं त्रिदोषजित् ॥१८॥ अदाहि बृंहणं नातिशीतं पीनसनाशनम्। देहधातुसमानत्वादनभिष्यन्दि बृंहणम् ॥ १९ ॥ तत्रापि कोमलच्छागमांसं पथ्यं त्रिदोषजित्। मेषमांसं गुरु स्निग्धं बल्यं पित्तकफप्रदम् ॥२०॥ मेदः पुच्छामिषं वृष्यं कफपित्तकरं गुरु ॥ इति जाङ्गलमांसानि ॥

## ॥ अथानूपमांसगुणाः ॥

सौकरं पित्तलं स्वादु बल्यं वातापहं गुरु। स्निग्धोष्णं शुक्रलं रुच्यं निद्रास्थूलत्वदार्ढ्यकृत् ॥ १ ॥ चक्रक्रौञ्चबकोद्रादिमांसं स्निग्धं हिमं गुरु। मधुरं सृष्टविण्मूत्रं वातपित्तास्रनाशनम् ॥ २ ॥

## ॥ अथ मत्स्यादिजलजन्तवः ॥

मोरिका वातहृद्बल्या बृंहणी मधुरा गुरुः। पित्तहृत्कफकृद्रुच्या वृष्या दीप्ता कृशे हिता ॥ १ ॥ शिलीन्ध्रः श्लेष्मलो बल्यो विपाके मधुरो गुरुः। वातपित्तहरो हृद्य आमवातकरश्च सः ॥ २ ॥ वाम्बमत्स्यो हरेद्वातपित्तं रुचिकरो लघुः। शकुली ग्राहिणी हृद्या मधुरा तुवरा स्मृता ॥ ३ ॥ कविका मधुरा स्निग्धा कषाया रुचिकारिणी। किञ्चित्पित्तकरी वातनाशिनी बलवर्धिनी ॥ ४ ॥ गरघ्नी मधुरा तिक्ता तुवरा वातपित्तहृत्। कफघ्नी रुचिकृद्वह्निदीपनी बलवीर्यकृत् ॥ ५ ॥ मद्गुरो वातहृ-

१ (ख० ग० घ० ङ०) पित्त। २ (ख० ग० घ० ङ०) डांड। ३ (ख० ग० ङ०) मोयिका। ४ (ग० घ० ङ०) स्निग्धा।

वृष्यो बल्यः कफकरो लघुः। मत्स्यगर्भो भृशं वृष्यः स्निग्धः पुष्टिकरो गुरुः॥६॥ दग्धमत्स्यो गुणैः श्रेष्ठः पुष्टिकृद्बलवर्धनः। महाशफरसंज्ञस्तु तिक्तः पित्तकफापहः॥७॥ शिशिरो मधुरो रुच्यो वाते साधारणः स्मृतः। क्षुद्रमत्स्याःस्वादुरसा दोषत्रयविनाशनाः॥८॥ लघुपाका रुचिकराः सर्वदा ते हिता मताः। अतिसूक्ष्माः पुंस्त्वहरा रुच्याः कासानिलापहाः॥ ९॥ नादेया बृंहणा मत्स्या गुरवोऽनिलनाशनाः। कौप्या वृष्याः कफाष्ठीलामूत्रकृच्छ्रविबन्धदाः॥१०॥ताडागा गुरुवो वृष्याः शीतला बलमूत्रदाः। सरोजा मधुराः स्निग्धा बल्या वातनिबर्हणाः॥ ११॥ सामुद्रा गुरवो नातिपित्तलाः पवनापहाः। तत्रापि लवणाम्भोजा ग्राहिणो दृष्टिनाशनाः॥१२॥ ह्रदोद्भवा बलकरास्ते तु स्वच्छजलोद्भवाः। हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिताः॥१३॥ वसन्ते तु नदीजाता ग्रीष्मे चौढासमुद्भवाः। तडागजाता वर्षासु तेषु पथ्या नदीभवाः॥१४॥ नैर्झराः शरदि श्रेष्ठा विशेषोऽयमुदाहृतः॥ इति मत्स्यगुणाः॥

## ॥ अथ शङ्खादिगुणाः॥

शङ्खो वराटकश्चैव शुक्तिशम्बूकभल्लुकाः। जीवाश्चैवंविधाः सर्वे कोशस्थाः परिकीर्तिताः॥ १॥ कोशस्था मधुराः स्निग्धाः पित्तवातहरा हिमाः। बृंहणाश्च तथा वृष्या वर्चस्याः कफवर्धनाः॥ २॥ कर्कटो बृंहणो वृष्यः शीतलोऽसृग्गदापहः। कच्छपो बलदः स्निग्धो वातघ्नः पुंस्त्वकारकः॥ ३॥ इत्यानूपमांसानि॥

## ॥ अथ सिद्धान्नादिपाकगुणकथनम्॥

[ अथ भक्तम् ] जले चतुर्दशगुणे तण्डुलानां चतुःपलम्। विपचेत्स्रावयेन्मण्डं स भक्तो मधुरो लघुः॥ १॥ अत्युष्णं बलहृद्भक्तं शीतं शुष्कं च दुर्जरम्। अतिक्लिन्नं ग्लानिकरं दुर्जरं तण्डुलान्वितम्॥ २॥ अतिद्रवं तु यद्भक्तं श्वासकासाभिपीनसैः। हरेद्वर्णबलं ज्ञेयं शकृद्वातनिरोधकृत्॥ ३॥ तक्रसिद्धं तु यद्भक्तं ग्रहण्यर्शःश्रमापहम्। वातघ्नं बलदं श्लेष्मपित्तरक्तविवर्धनम्॥ ४॥ भृष्टतण्डुलजं भक्तं रुचिकृत्कफजिल्लघु। वातपित्तहरं ग्राहि ज्वरयक्ष्मातिसारनुत्॥ ५॥ यथोचिते जले धौतांस्तण्डुलान्विपचेत्सुधीः। मण्डं संस्राव्य सर्पिस्तु तत्र किञ्चिद् विनिक्षिपेत्॥ ६॥ ज्वलन्तमेकमङ्गारं तदुपर्यर्पयेत्तथा। घटिकानन्तरं दर्व्योपरिभागं विनिर्हरेत्॥ ७॥ भक्तं विभक्तमेतत्तु राजयोग्यं मनोहरम्। यवागूः षड्गुणैस्तोयैः संसिद्धा विरला द्रवा॥ ८॥ यवागूर्ग्राहिणी तृष्णाज्वरघ्नी बस्तिशोधनी। चतुर्गुणे तु संसिद्धा विलेपी घनसिक्थका॥ ९॥ विलेपी दीपनी वृष्या हृद्या संग्राहिणी लघुः। व्रणाक्षिरोगिणां पथ्या तर्पणी तृड्ज्वरापहा॥१०॥ आमशूलहरा स्वादुर्दीपनी रुचिपुष्टिकृत्। पेया सिक्थान्विता तोये चतुर्दशगुणे कृता॥११॥ पेया कुक्षिगदक्लान्तिज्वरस्तम्भातिसारजित्। रुच्याग्निकृल्लघुर्दोषमलस्वेदानुलोमनी॥१२॥ मण्ड-

---

१ (ग० घ० ङ०) तास्वपथ्या। २ (ग० घ० ङ०) पले ३ (ग० घ० ङ०) गुणे तोये।

चतुर्दशगुणे सिद्धस्तोये त्वसिक्थकः । मण्डो ग्राही लघुः शीतो दीपनो धातुसाम्यकृत् ॥ १३ ॥ स्रोतोमार्दवकृत्पित्तज्वरश्लेष्मामयापहः । वाट्यमण्डो यवैर्भृष्टैर्लाजमण्डस्तु शालिभिः ॥ १४ ॥ वाट्यमण्डो लघुर्ग्राही शूलेदाहत्रिदोषनुत् । नवज्वरेऽपि पथ्योऽयं पटोलमगधान्वितः ॥ १५ ॥ लाजमण्डो लघुर्ग्राही हृद्यः पाचनदीपनः । अतीसारग्रहण्यर्शोऽरोचकारुक्त्रिदोषनुत् ॥ १६ ॥ [अथाष्टगुणमण्डः] तण्डुलैरर्द्धमुद्गांशैः किञ्चिद्भृष्टैः सुपाचितैः । हिङ्गुसिन्धूत्थधनिकातैलत्रिकटुसंस्कृतः ॥ १ ॥ ज्ञेयः सोऽष्टगुणो मण्डो ज्वरदोषत्रयापहः । रक्तक्षुद्वर्धनः प्राणप्रदो बस्तिविशोधनः ॥ २ ॥

## ॥ अथ साराणि ॥

सारं भोजनसारं सारं सारङ्गलोचनाधरतः । पिब खलु वारं वारं नो चेन्मुधा भवति संसारः ॥ १ ॥ अम्लिकायाः पलं पक्वं प्रस्थे नीरे विनिक्षिपेत् । अर्द्धावशिष्टे पूते च मरीचार्धपलं तथा ॥ २ ॥ सैन्धवं जरणं हिङ्गु यथायोग्यं प्रकल्पयेत् । श्लक्ष्णपिष्टकृतं सर्वं तस्मिंस्तोये विनिक्षिपेत् ॥ ३ ॥ कालशाकेन संयोज्य चार्द्रां कुस्तुम्बरीं भिषक् । पुनः पाकं विधायाथ यथाकालं च सेवयेत् ॥ ४ ॥ अम्लिकाफलसम्भूतं सारं वातविनाशनम् । पित्तश्लेष्मकरं किंचित्सुरुच्यं वह्निबोधकम् ॥ ५ ॥

## ॥ अथ यूषाः ॥

[वैदलयूषः] यूषः स्मृतो वैदलानामष्टादशगुणेऽम्भसि । यूषो बल्यो लघुः पाके रुच्यः कण्ठकफापहः ॥ १ ॥ मुद्गानामुत्तमो यूषो दीपनः शीतलो लघुः । व्रणोर्ध्वजत्रुरुग्दाहकफपित्तज्वरास्रजित् ॥ २ ॥ दाडिमामलकाभ्यां तु मुद्गयूषः सुसाधितः । पित्तवातहरः पथ्यो लघुरग्निप्रदः सरः ॥ ३ ॥ मुद्गामलकयूषस्तु भेदनः कफपित्तजित् । तृड्दाहशमनः शीतो मूर्छाभ्रममदापहः ॥ ४ ॥ कुलित्थयूषो गुल्मार्शःकफवाताश्मशर्कराः । तूनीप्रतूनीमेदांसि मेहं हन्त्यग्निकृत्सरः ॥ ५ ॥ चणकैर्विहितो यूषोऽनुष्णस्तुवरको लघुः । रक्तपित्तप्रतिश्यायकासपित्तकफापहः ॥ ६ ॥ मकुष्ठयूषः सङ्ग्राही पित्तश्लेष्मज्वरापहः । लघुः सन्तर्पणःपथ्यो हृद्यः पीनसकासजित् ॥ ७ ॥ मसूरयूषः सङ्ग्राही बृंही स्वादुः प्रमेहजित् । तथा कषायो मधुरश्च यूषो विशोषणो वातहृदाढकीनाम् । पित्तापहः श्लेष्महरो ज्वराणां कृमीन्निहन्याद्गुददारणं च ॥ ८ ॥ इति यूषाः [अथागस्तिसारः] अगस्तिसारःसुस्वादुस्तिक्तो वायुकफप्रणुत् । पाण्डुशोफारुचिप्लीहगुल्मशूलगदापहः ॥ १ ॥ इति अगस्तिसारः ॥

## ॥ अथ सूपाः ॥

मुद्गसूपो लघुर्ग्राही कफपित्तहरो हिमः। स्वादुर्नेत्र्योऽनिलहरः कुल्माषाः शुक्रवर्ध-

---

१ (ख०) भ्रमश्रमापहः । (ङ०) भ्रमभ्रमापहः ।२ ( ख० ग० ) शूलानाह । ३ ( ख० ग० घ० ) क्वाथे । ४ ( ख० ) व्रणे । ( ग० घ० ङ० ) व्रणोर्ध्वं ।

नाः ॥ १ ॥ माषसूपश्च कुल्माषस्निग्धो वृष्योऽनिलापहः । उष्णः संतर्पणो बल्यः सुस्वादुरुचिकारकः॥२॥आढकीसूप उद्दिष्टः श्लेष्मपित्तहरो हिमः। किञ्चित्कषायो रुचिकृत् साज्यो दोषत्रयप्रणुत्॥३॥चाणकः सूप आख्यातो रोचनः पाचनः परः। बलासपित्तनुद्बल्यो रक्तजिन्नातिवातलः ॥ ४ ॥ मकुष्ठसूपोऽल्पबलः पाचनो दीपनो लघुः । चक्षुष्यो बृंहणो वृष्यः पित्तश्लेष्मास्ररोगनुत् ॥ ५ ॥ मसूरसूपः संग्राही शीतलो मधुरो लघुः । कफपित्तास्रजिद्वर्ण्यो विषमज्वरनाशनः ॥ ६ ॥ राजमाषभवः सूपः स्वादुरूक्षः कषायकः । ग्राही गुरुर्वातकरःस्तन्यकृद्रुचिकारकः ॥ ७ ॥ निष्पावसूपः पित्तास्रमूत्रस्तन्यानिलप्रदः । विदाह्युष्णो गुरुः शोफकफकृच्छुक्रलः सरः॥८॥ कुलत्थसूपो वातघ्नः कटुः पाके कषायकः । कफाविरोधी पित्तास्रकरोष्मश्वासकासनुत् ॥ ९ ॥ इति सूपाः ॥

## ॥ अथ पर्पटाः ॥

पटुजीरकबाल्हीकस्वर्जिकामरिचान्विताः । अरोचकजिगीषूणां पर्पटाः पुरतो भटाः ॥१॥ माषजाः पर्पटा बल्या रोचनाः पाचनाः सराः । गुरवो रक्तपित्ताग्निकफदा बहुवर्चसः ॥ २ ॥ मुद्गजाः पर्पटाः पथ्या ज्वराक्षिश्रवणामये । अरोचकच्छिदः स्निग्धा लघवो दोषनाशनाः ॥ ३ ॥ इति पर्पटाः ।

## ॥ अथ मुद्गतण्डुलकृशरा ॥

मुद्गतण्डुलजा ज्ञेया कृशराऽल्पबला लघुः । भक्ततो दुर्जरा बल्या पुष्टिकृत्तर्पणी हिमा ॥१॥तण्डुलैर्मौक्तिकाकारैः कण्डितैर्न च खण्डितैः। चतुर्थभागैर्माषस्य वैदलैः परिमिश्रितैः ॥ २ ॥ यथोचिताम्बुसंसिद्धैः सहिङ्गुलवणार्द्रकैः । सस्नेहा कामिनीवेयं कृशरा शिशिरे हिता ॥ ३ ॥ कृशरा दुर्जरा बल्या गुर्वी वातविनाशिनी । बलपुष्टिमलश्लेष्मपित्तरेतःप्रदा सरा ॥ ४ ॥

## ॥ अथ पायसम् ॥

अर्धावशिष्टे क्वथनाद्दुग्धेऽष्टांशांश्च तण्डुलान् । पचेन्नातिद्रवघनं परमान्नमिदं स्मृतम् ॥ १ ॥ पायसं दुर्जरं बल्यं धातुपुष्टिप्रदं गुरु । शुक्रलं मधुरं पाके पित्तघ्नं बृंहणं सरम् ॥२॥ इति तण्डुलपायसम् । गोधूमपायसम् बल्यं मेदःकफकरं गुरु । शीतलं पित्तशमनं वातकृच्छुक्रवर्धनम् ॥ ३ ॥ इति गोधूमपायसम् ॥

## ॥ अथ पोलिका ॥

गोधूमपोलिका बल्या कफला वातनुद्गुरुः । शुक्रला मधुरा पाके पित्तघ्नी बृंहणी सरा ॥ १ ॥ गोधूमचूर्णं वस्त्रंशचणकक्षोदमिश्रितम् । यवानीहिङ्गुलवणैः किञ्चिदाज्यैश्च मर्दितम् ॥ २ ॥ संमर्द्य चक्रिकांस्तस्य कार्या निम्नास्तु मध्यतः । निर्धूमाङ्गार-

संभृष्टा अदग्धास्ताम्रलोचिषः ॥ ३ ॥ अङ्गारकर्करी बल्या बृंहिणी शुक्रला लघुः । दीपनी कफहृद्रोगपीनसश्वासवातनुत् ॥ ४ ॥ इति पुरणपोलिका ॥ मण्डको लघुरुष्णस्तु पथ्यो दोषत्रयापहः । रेतःपुष्टिप्रदो दृष्टिप्रदःस्निग्धश्च बृंहणः ॥ ५ ॥

## ॥ अथाङ्गारिका ॥

मर्दिता दृढपाणिभ्यां शर्करा घृतसंयुता । अङ्गारिका महावृष्या वातपित्तहरा गुरुः ॥ १ ॥

## ॥ अथ वटकाः ॥

लवणमरिचहिङ्गुशृङ्गवेरैः समुपचितो वरमाषजः सुपक्वः । अतिसुरभिघृतेऽथवा सुतैले विशति मुखे वटकः सुपुण्यभाजाम् ॥ १ ॥ पवनारुचिदैन्यजयोद्भटकः क्षपितार्दितकम्पमरुत्कटकः । रसनातलरङ्गधरानटकः कफपित्तविकारकरो वटकः ॥ २ ॥ [ अथ काञ्जिकवटकः ] बाल्हीकधूपयुतनिर्मलवारिपूर्णे कुण्डे यथोचितपटूत्तमराजिकाद्यैः । संधूपिताः कतिचिदेव दिनानि रुच्या वाताश्च काञ्जिकवटाः कफपित्तलाः स्युः ॥ ३ ॥ मुद्गवटी गुरुरुच्या वातपित्तास्रदा मता । श्लेष्मला पुष्टिबलकृच्छुक्रला मृदुलाऽल्पतृट् ॥ ४ ॥ वेदलैश्चाणकैः स्विन्नैः सगुडैः सूक्ष्मपेषितैः । किंवा सलवणाजाजीहिङ्गुभिः पूरणीकृतैः ॥ ५ ॥ एतैर्भृताश्च तलिताः कृतगोधूमपूरिकाः । पूरिका मधुरा बल्याः श्रमवातामयापहाः ॥ ६ ॥ शुक्रला बृंहणी श्वासपथ्या हृद्रोगनाशिनी । इत्थं सलवणा लघ्वी श्लेष्मवातविनाशिनी ॥ ७ ॥ सुशालिपिष्टं घनदुग्धमिश्रितं सशर्करं वस्त्रसुपूतमेतत् । घृते सुपक्वं पृथुलीकृतं बुधैर्निगद्यते शालिजघेवरोऽयम् ॥ ८ ॥ माषपिष्टयथवा मुद्गपिष्टी सपटुरामठा । जीरकार्द्रकसंयुक्ता पिण्डिता मुष्टिमात्रया ॥ ९ ॥ तृणाम्बुगर्भिते पात्रे सुस्विन्ना तलितास्ततः । खादयेदिण्डरीं शुष्कां किंवाम्लाद्यैः प्रलोडिताम् ॥ १० ॥ माषेण्डर्युदिता बल्या रोचिकानिलजिद्गुरुः । शुक्रला बृंहिणी चाथ मुद्गजा स्वल्पजा लघुः ॥ ११ ॥ शालिपिष्टकृता भक्ष्या नातिबल्या विदाहिनः । अवृष्या गुरवश्चोष्णाः कफपित्तप्रकोपनाः ॥ १२ ॥ गोधूमविहिता भक्ष्या बल्याः पित्तानिलापहाः । वैदला वातला भक्ष्या गुरवस्तुवरा हिमाः ॥ १३ ॥ माषपिष्टकृता भक्ष्या बल्याः पित्तकफप्रदाः ॥ इति वटकाः ॥

## ॥ अथ पिष्टभक्ष्यजनितगुणाः ॥

घृतपाचितभक्ष्यास्तु बल्याः पित्तानिलापहाः । तैलजा दृक्समीरघ्ना उष्णाः पित्तास्रदूषणाः ॥ १ ॥ दुग्धालोडितगोधूमशालिपिष्टादिनिर्मिताः । वातपित्तहरा भक्ष्या हृद्याः शुक्रबलप्रदाः ॥ २ ॥

---

१ ( ख० घ० ङ० ) रोचिषः । २ ( ख० ग० घ० ङ० ) मुद्गवय्यो । ३ (ग० घ० ङ०) घृतेन । ४ ( ख० ग० घ० ङ० ) पुनीत ।

## ॥ अथ पानकानि ॥

द्राक्षाम्लिकापरूषादिजलं खण्डादिभिर्मिश्रितम् । मरिचार्द्रककर्पूरचातुर्जातादिसंस्कृतम् ॥ १ ॥ पानकं द्विविधं तत्स्यादम्लानम्लविभेदतः । पानकं मूत्रलं हृद्यं प्रीणनं तृट्श्रमापहम् ॥ २ ॥ यथाद्रव्यगुणात्तत्तु गुरुलघ्वादि निर्दिशेत् । द्राक्षादिपानकं हृद्यं मूत्रलं तृट्श्रमापहम् ॥ ३ ॥ पित्तवातक्लमच्छर्दिदाहमोहमदप्रणुत् । परूषकाणां कोलानां हृद्यं विष्टम्भि पानकम् ॥ ४ ॥ अपक्वाम्ररसोद्भूतं पानकं वातनाशनम् । कफपित्तकरं किञ्चित्प्रत्यहं यदि पीयते.॥ ५ ॥ पक्वाम्रसंभवं तत्तु स्वादूष्णं गुरु पित्तकृत् । रुचिदं श्लेष्मलं बल्यं वर्ण्यं वृष्यं तु वातनुत् ॥ ६ ॥ धान्यकल्कसिताजातं पानकं शशिवासितम् । शीतं परं पित्तहरं मूत्रकृच्छ्रविनाशनम् ॥ ७ ॥ भागैकं निम्बुजं तोयं षड्भागं शर्करोदकम् । लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम् ॥ ८ ॥ निम्बूफलभवं पानमत्यम्लं वातनाशनम् । वह्निदीप्तिकरं रुच्यं समस्ताहरपाचकम् ॥ ९ ॥ इति पानकानि ॥

## ॥ अथ रागखाण्डवः ॥

आममाम्रं त्वचा हीनं द्विस्त्रिर्वा खण्डितं ततः । भृष्टमाज्ये मनागस्तं खण्डपाकेऽथ युक्तितः ॥ १ ॥ सुपक्वं च समुत्तीर्य मरीचैलेन्दुवासितम् । स्थापितं स्निग्धमृद्भाण्डे रागखाण्डवसंज्ञितम् ॥ २ ॥ पुष्टिदो बलदः पित्तवातास्रारुचिनाशनः । स्निग्धो गुरुस्तर्पणश्च सुस्वादूरागखाण्डवः ॥ ३ ॥ सितारुचकसिन्धूत्थैः सवृक्षाम्लपरूषकैः । जम्बूफलरसैर्युक्तो रागो रजिकया कृतः ॥ ४ ॥ खाण्डवा मधुराम्लादिरससंयोगसंभवाः । दीपना बृंहणा रुच्यास्तीक्ष्णा हृद्याः श्रमापहाः ॥५॥ इति नानाखाण्डवाः ॥

## ॥ अथ रसाला शिखरिणी ॥

दधिबद्धं तुल्यसितं त्वर्धपयोगालितं शनकैः । मरिचैलाशशिसहितं भवति रसालाभिधं लोके ॥ १ ॥ अन्यच्च । ससितं दधिमध्वाज्यमरिचैलादिसंस्कृतम् । मथितं कान्तकामिन्या कर्पूरपरिवासितम् ॥ २ ॥ रसाला शिखरिण्युक्ता मार्जारी मार्जिका बुधैः । रसाला शुक्रला बल्या रोचना वातपित्तजित् ॥ ३ ॥ स्निग्धा गुरुमतिश्यायं विशेषेण विनाशयेत् ॥

## ॥ अथ भरित्थम् ॥

लवणमरिचचूर्णेनावृतं रामठाढ्यं दहनवदनपक्वं निम्बुतोयेन युक्तम् । हरति पवनसंघं श्लेष्महन्तृ प्रसिद्धं जठरभरणयोग्यं चारुभोज्यं भरित्थम् ॥ १ ॥ [अथार्द्रकम्] धौतं खण्डितमार्द्रकं च सलिलैः क्षिप्तं सुतप्ते घृते सिन्धूत्थं मरिचं सुजीरयुगलं चूर्णीकृतं प्रक्षिपेत् । चूर्णं भृष्टचणोद्भवं च वितुषं हिङ्ग्वाज्यधूमे दहेदित्थं दोषविहीनमार्द्रकवरं सुस्वादु संजायते ॥ २ ॥ इत्यार्द्रकम् ॥

## ॥ अथ पृथुकादयः ॥

पृथुका गुरवो बल्याः श्लेष्मला वातनाशनाः । दुर्जराः शुक्ररुचिदा आमविष्टम्भकारिणः ॥ १ ॥ लाजा लघुतराः शीता बल्याः पित्तकफच्छिदः । वम्यतीसारदाहास्रमेदोमेहतृषापहाः ॥ २ ॥ शिम्बीधान्यैरर्धपक्कैः सुभृष्टैर्होलका मताः । होलकाल्पानिला मेदःकफदाश्च स्वभावतः ॥ ३ ॥

## ॥ अथ वेसवारः ॥

शुण्ठीमरीचपिप्पल्यो धान्यकाजाजिदाडिमम् । पिप्पलीमूलसंयुक्तं वेसवार इति स्मृतः ॥ १ ॥ वेसवारो गुरुः स्निग्धो बल्यो वातरुजापहः । पुष्टिदः सर्वधातूनां विशेषान्मलनाशनः ॥ २ ॥ इति सिद्धान्नादिपाकगुणकथनम् ॥

## ॥ अथ आयुर्विचारमाह ॥

भिषगादौ परीक्षेत रुग्णस्यायुः प्रयत्नतः । सत्यायुषि तु विस्तीर्णे चिकित्सा सुफला भवेत् ॥ १ ॥ [तत्र दीर्घायुषः] सौम्या दृष्टिर्भवेद्यस्य श्रोत्रं त्वक् च तथैव च । स्वादुगन्धं विजानाति स साध्यो नात्र संशयः ॥ २ ॥ पाणी पादौ च यस्योष्णौ दाहः स्वल्पतरो भवेत् । जिह्वा सुकोमला यस्य स रोगी न विनश्यति ॥ ३ ॥ स्वेदहीनो ज्वरो यस्य श्वासो नासिकया सरेत् । कण्ठश्च कफहीनः स्यात्स रोगी जीवति ध्रुवम् ॥ ४ ॥ यस्य निद्रा सुखेन स्याच्छरीरं सोद्यमं भवेत् । इन्द्रियाणि प्रसन्नानि स रोगी नैव नश्यति ॥ ५ ॥ विकारनामा कुशलो न जिह्रीयात् कदाचन । न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥ ६ ॥

## ॥ अथ स्वल्पायुषो लक्षणानि ॥

अथ कालस्य विज्ञानं प्रवक्ष्यामि यथाश्रुतम् । जीवितं मरणं योगी यन्न जानाति निश्चितम् ॥ १ ॥ कालग्रहस्य यस्येदं दंष्ट्रायाः संयुगे जगत् । अद्यैव वा प्रभाते वा सोऽवश्यं भक्षयिष्यति ॥ २ ॥ रसं रसायनं योग्यं कालं ज्ञात्वा समाचरेत् । तस्याज्ञाने वृथा सर्वं तस्मात्तत्प्रोच्यते मया ॥ ३ ॥ शरीरशीलयोर्यस्य प्रकृते विकृतिर्भवेत् । तदरिष्टं समासेन व्यासतश्च निबोध मे ॥ ४ ॥ शृणोति विविधान् शब्दान् विपरीतं शृणोति वा । न शृणोति च योऽकस्मात्तं वदन्ति गतायुषम् ॥ ५ ॥ यत्तूष्णमिव गृह्णाति शीतमुष्णं च शीतवत् । उष्णगात्रोऽतिमात्रं यो भृशं शीतेन कम्पते ॥ ६ ॥ प्रहारं नैव जानाति यो गच्छेदन्यथापि वा । पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते ॥ ७ ॥ वर्णोऽन्यथा वा राज्यो वा यस्य गात्रे भवन्ति हि । स्नातानुलिप्तं यं चापि भजन्ते नीलमक्षिकाः ॥ ८ ॥ विपरीतेन गृह्णाति रसान् यश्चोपयोजितान् । यो वा रसान्न संवेत्ति तं गतासुं प्रचक्षते ॥ ९ ॥ सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धं च सुगन्धवत् । गृह्णाति योऽन्यथा गन्धं शान्ते दीपे

निरामयः ॥ १० ॥ रात्रौ सूर्यं ज्वलन्तं वा दिवा वा चन्द्रवर्चसम् । दिवा ज्योतींषि यश्चापि ज्वलितानीव पश्यति ॥ ११ ॥ विद्युत्वतः सितान्मेघान् गगने निर्घने घनान् । विमानयानप्रासादैर्यश्च सङ्कुलमम्बरम् ॥ १२ ॥ यश्चानिलं मूर्तिमन्तमन्तरिक्षेऽवलोकते । धूमनीहारवासोभिरावृतां यश्च मेदिनीम् ॥ १३ ॥ प्रदीप्तमिव यो लोकं यो वा प्लुतमिवाम्भसा । भूमिमष्टापदाकारां लेखाभिर्यश्च पश्यति ॥ १४ ॥ यो न पश्यति ऋक्षाणि यश्च देवीमरुन्धतीम् । ध्रुवमाकाशगङ्गां च तं वदन्ति गतायुषम् ॥ १५ ॥ आदर्शेऽम्बुनि घर्मे वा छायां यश्च न पश्यति । पश्यत्येकाङ्गहीनां वा विकृतां वान्यसत्वजाम् ॥ १६ ॥ ह्रीभियौ नश्यतो यस्य तेजओजःस्मृतिप्रभाः । अकस्माद्यं भजन्ते वा स परासुरसंशयम् ॥ १७ ॥ यस्याधरोष्ठः पतितः क्षिप्तश्चोर्ध्वं तथोत्तरः । उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ॥ १८ ॥ आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति वा । खञ्जनप्रतिमा वापि तं गतायुषमादिशेत् ॥ १९ ॥ कृष्णा तथानुलिप्ता च जिह्वा शूना च यस्य वै । कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् ॥ २० ॥ कुटिला स्फुटिता चापि शुष्का वा यस्य नासिका । अवस्फूर्जति भग्ना वा स न जीवति मानवः ॥ २१ ॥ [अवस्फूर्जति श्वासवेगेनोच्चैः शब्दं करोति] । संक्षिप्ते विषमे स्तब्धे रूक्षे स्रस्ते च लोचने । स्यातां च प्रस्रुते यस्य स गतायुर्नरो ध्रुवम् ॥ २२ ॥ केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ । लुलन्ति वाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे ॥ २३ ॥ नाहरत्यन्नमास्यस्थं न धारयति यः शिरः । एकाग्रदृष्टिर्मूढात्मा सद्यः प्राणान्स मुञ्चति ॥२४॥ उत्थाप्यमानो बहुशः संमोहं योऽधिगच्छति । बलवान् दुर्बलो वापि तं पक्वं भिषगादिशेत् ॥२५॥ निद्रा निरन्तरं यस्य यो जागर्ति च सर्वदा । मुह्येद्वा वक्तुकामश्च प्रत्याख्येयः स जानता ॥ २६ ॥ उत्तरोष्ठं च यो लिह्यात्फूत्कारांश्च करोति यः । प्रेतैर्वा भाषते सोऽयं प्रेतरूपं तमादिशेत् ॥ २७ ॥ खेभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते । पुरुषस्याविषार्तस्य स सद्यो जीवितं त्यजेत् ॥ २८ ॥ सम्यक् चिकित्स्यमानस्य विकारो योऽभिवर्धते । प्रक्षीणबलमांसस्य लक्षणं तद्गतायुषः ॥ २९ ॥ भूताः प्रेताः पिशाचाश्च रक्षांसि विविधानि च । मरणाभिमुखं जन्तुमुपसर्पन्ति नित्यशः ॥ ३० ॥ तानि भेषजवीर्याणि प्रतिघ्नन्ति जिघांसया । तस्मान्मोघाः क्रियाः सर्वा भवन्त्येव गतायुषाम् ॥ ३१ ॥ जलजा नवलक्षास्तु दशलक्षास्तु पक्षिणः । रुद्रलक्षास्तु कृम्याद्या स्थावराणां च विंशतिः ॥ ३२ ॥ त्रिंशल्लक्षं गवादीनां चतुर्लक्षास्तु मानवाः । शतायुः पुरुषश्चैव वृक्षाणां तु सहस्रकम् ॥ ३३ ॥ द्वात्रिंशच्च तुरङ्गाणां शतं कुञ्जरसिंहयोः । व्याघ्राणां च चतुःषष्टिः सहस्रं फणिकाकयोः ॥ ३४ ॥ जम्बुकानां षोडशाब्दं शुनां द्वादशवत्सरम् । चतुर्विंशतिरुक्तं गोमहिष्योः सूकरस्य च ॥ ३५ ॥ अजानां द्वादश प्रोक्तं मत्स्यानामप्लुतं तथा । कुक्कुटा नव वर्षाणि मृगाणां विंशतिर्भवेत् ॥ ३६ ॥ पक्षिणां दश वर्षाणि खराणां द्वादशद्वयम् । चतुर्विंशतिरुष्ट्राणां रासभानां तथैव च ॥ ३७ ॥ इत्यायुर्विचारः ॥

## ॥ अथ नित्यप्रकारमाह ॥

दिनचर्यां निशाचर्यामृतुचर्यां यथोदिताम् । पुरुषः संव्यवहरन्सदा तिष्ठति नान्यथा ॥ १ ॥ समदोषः समाग्निश्च समधातुमलक्रियः । प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ २ ॥ ब्राह्मे मुहूर्ते बुध्येत स्वस्थो रक्षार्थमायुषः । तत्र सर्वाघशान्त्यर्थं स्मरेच्च मधुसूदनम् ॥ ३ ॥ दध्याज्यादर्शसिद्धार्थबिल्वगोरोचनस्रजाम् । दर्शनं स्पर्शनं कार्यं प्रबुद्धेन शुभावहम् ॥४॥ स्वमाननं घृते पश्येद्यदीच्छेच्चिरजीवितम् । आयुष्यमुषसि प्रोक्तं मलादीनां विसर्जनम् ॥ तदन्त्रकूजनाध्मानोदरगौरववारणम् ॥ ५ ॥ आटोपशूलौ परिकर्तिका च सङ्गः पुरीषस्य तथोर्ध्ववातः । पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ॥ ६ ॥ वातमूत्रपुरीषाणां सङ्गोऽध्मानं क्लमो रुजा । जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥ ७ ॥ बस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा । विनामो वंक्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥ ८ ॥ न वेगितोऽन्यकार्यः स्यान्न वेगान् वारयेद्बलात् । कामशोकभयक्रोधान् मनोवेगान् विधारयेत् ॥ ९ ॥ गुदादिमलमार्गाणां शौचं कान्तिबलप्रदम् । पावित्र्यकरमायुष्यमलक्ष्मीकलिपापहृत् ॥ १० ॥ प्रक्षालनं हि पाण्योश्च पादयोः शुद्धिकारणम् । मलश्रमहरं वृष्यं चक्षुष्यं राक्षसापहम् ॥ ११ ॥ अर्कन्यग्रोधखदिरकरञ्जककुभादिकम् । प्रागुदङ्मुखमासीनो निश्चलो मौनवानपि ॥ १२ ॥ मधुको मधुरे श्रेष्ठः करजः कटुके तथा । निम्बस्तु तिक्तके श्रेष्ठः कषाये खदिरस्तथा ॥ १३ ॥ समयं तु समालोक्य दोषं च प्रकृतिं तथा । यथोचिते रसैर्वीर्यैर्युक्तं द्रव्यं प्रयोजयेत् ॥ १४ ॥ तेनास्यरसवैरस्यं गन्धजिह्वास्यजा गदाः । रुचिवैशद्यलघुता न भवन्ति भवन्ति च ॥ १५ ॥ अर्के वीर्यं वटे दीप्तिः करञ्जे विजयो भवेत् । प्लक्षे चैवार्थसंपत्तिर्बदर्यां मधुरो ध्वनिः ॥ १६ ॥ खदिरे मुखसौगन्ध्यं बिल्वे तु विपुलं धनम् । उदुम्बरे तु वाक्सिद्धिस्त्वाम्रे त्वारोग्यमेव च ॥ १७ ॥ कदम्बे च धृतिर्मेधा चम्पके दृढवाक् श्रुतिः । शिरीषे कीर्तिसौभाग्यमायुरारोग्यमेव च ॥ १८ ॥ अपामार्गे धृतिर्मेधा प्रज्ञा शक्तिस्तथा ध्वनिः । दाडिम्यां सुन्दराकारः ककुभे कुटजे तथा ॥ १९ ॥ जातीतगरमन्दारैर्दुःस्वप्नश्च विनश्यति । भक्षयेद्दन्तपवनं द्वादशाङ्गुलमायतम् ॥ २० ॥ कनिष्ठिकावत्स्थूलं च मृद्वग्रन्थि तथाव्रणम् । एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेण तु ॥ २१ ॥ दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् । क्षौद्रत्रिकटुकाक्तेन तैलसिन्धुभवेन वा ॥ २२ ॥ चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत् । शिरोरुजार्तस्तृषितः श्रान्तो पानक्लमान्वितः ॥ २३ ॥ अर्दिती कर्णशूली च नेत्ररोगी नवज्वरी । वर्जयेद्दन्तकाष्ठं तु हृदामययुतोऽपि च ॥ २४ ॥ न खादेद्गलताल्वोष्ठजिह्वादन्तगदेषु तत् । मुखस्य पाके शोथे च श्वासकासवमीषु च ॥ २५ ॥ दुर्बलो जीर्णभुक्तश्च हिक्कामूर्छामदान्वितः । जिह्वानिर्लेखनं हैमं राजतं ताम्रजं तथा ॥ २६ ॥ पाटितं मृदु तत्काष्ठं मृदुपत्रमयं तथा । दशाङ्गुलं मृदु स्निग्धं तेन जिह्वां लिखेत्सुखम् ॥ २७ ॥ तेनास्यमलवैरस्यगन्धा जिह्वास्यदन्तजाः । नश्यन्ति रुचिवैशद्यं लघुता च भवन्ति

हि ॥२८॥ गण्डूषमथ कुर्वीत शीतेन पयसा मुहुः । कफतृष्णामलहरं मुखान्तःशुद्धिकारणम् ॥ २९ ॥ सुखोष्णोदकगण्डूषः कफारुचिमलापहः । दन्तजाड्यहरश्चापि मुखलाघवकारकः ॥ ३० ॥ विषमूर्छामदार्तानां शोषिणां रक्तपित्तिनाम् । कुपिताक्षिमलक्षीणरूक्षाणां स न शस्यते ॥ ३१ ॥ मुखप्रक्षालनं शीतपयसा रक्तपित्तजित् । मुखस्य पिडकाशोषनीलिकाव्यङ्गनाशनम् ॥ ३२ ॥ कुर्याद्वापि कदुष्णेन पयसास्यविशोधनम् । कफवातहरं स्निग्धं मुखशोषविनाशनम् ॥ ३३ ॥ कटुतैलादि नस्यार्थे नित्याभ्यासेन योजयेत् । प्रातः श्लेष्मणि मध्याह्ने पित्ते सायं समीरणे ॥ ३४ ॥ सुगन्धवदनाः स्निग्धनिःस्वना विमलेन्द्रियाः । निर्वलीपलितव्यङ्गा भवेयुर्नस्यशीलिनः ॥ ३५ ॥ सौवीरमञ्जनं नित्यं पथ्यमक्ष्णोस्ततो भजेत् । लोचने तेन भवतः सुस्निग्धे घनपक्ष्मणी ॥ ३६ ॥ वक्रे त्रिवेणीविमले मनोज्ञे सूक्ष्मदर्शने । चक्षुस्तेजोमयं तस्य विशेषाच्छ्लेष्मतो भयम् ॥३७॥ स्रोतोऽञ्जनमतः श्रेष्ठं विशुद्धं सिन्धु-* संभवम् । दृष्टेः कण्डूमलहरं दाहक्लेदरुजापहम् ॥ ३८ ॥ अक्ष्णो रूपावहं चैव सहते मारुतातपौ । नेत्ररोगा न जायन्ते तस्मादञ्जनमाचरेत् ॥ ३९ ॥ रात्रौ जागरितः श्रान्तश्छर्दितो भुक्तवांस्तथा । ज्वरातुरः शिरःस्नातो नाक्ष्णोरञ्जनमाचरेत् ॥ ४० ॥ पक्षात्पक्षान्नखश्मश्रुकेशरोमाणि कल्पयेत् । केशश्मश्रुनखादीनां कर्तव्यं संप्रसाधनम् ॥ ४१ ॥ पौष्टिकं धन्यमायुष्यं शौचकान्तिकरं परम् । उत्पाटयेत्तु रोमाणि नासायां न कदाचन ॥ ४२ ॥ तदुत्पाटनतो दृष्टेर्दौर्बल्यं त्वरया भवेत् । केशपाशे प्रकुर्वीत प्रसाधन्या प्रसाधनम् ॥ ४३ ॥ केशप्रसाधनं केश्यं रजोजन्तुमलापहम् । आदर्शालोकनं प्रोक्तं माङ्गल्यं कान्तिकारकम् ॥ ४४ ॥ पौष्टिकं बलमायुष्यं पापालक्ष्मीविनाशनम् । लाघवं कर्मसामर्थ्यं विभक्तघनगात्रता ॥ ४५ ॥ दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते । व्यायामदृढगात्रस्य व्याधिर्नास्ति कदाचन ॥ ४६ ॥ विरुद्धं वा विदग्धं वा भुक्तं शीघ्रं विपच्यते । भवन्ति शीघ्रं नैतस्य वलीशिथिलतादयः ॥४७॥ न चैनं सहसाक्रम्य जरा समधिरोहति । न चास्ति सदृशं तेन किञ्चित्स्थौल्यापकर्षणम् ॥ ४८ ॥ स सदा गुणमाधत्ते बलिनां स्निग्धभोजिनाम् । वसन्ते शीतसमये सुतरां स हितो मतः ॥४९॥ अन्यदापि च कर्तव्यो बलार्धेन यथाबलम् । हृदयस्थो यदा वायुर्वक्त्रं शीघ्रं प्रपद्यते ॥ ५० ॥ मुखं च शोषं लभते तद्बलार्धस्य लक्षणम् । किंवा ललाटे नासायां गात्रसंधिषु कक्षयोः ॥५१॥ यदा संजायते स्वेदो बलार्धं तु तदादिशेत् । भुक्तवान् कृतसम्भोगः कासी श्वासी कृशः क्षयी ॥ ५२ ॥ रक्तपित्ती क्षती शोषी न तं कुर्यात्कदाचन । अतिव्यायामतः कासो ज्वरश्छर्दिर्भ्रमः क्लमः ॥ ५३ ॥ तृष्णाक्षयः प्रतमको रक्तपित्तं च जायते । अभ्यङ्गं कारयेन्नित्यं सर्वेष्वङ्गेषु पुष्टिदम् ॥ ५४ ॥ शिरःश्रवणपादेषु तं विशेषेण शीलयेत् । सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् ॥ ५५ ॥ अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन । 'अभ्यङ्गो वातकफहृत् क्लमशान्तिबलं

---

* सिन्धुनामा पर्वतस्तत्र संभवमित्यर्थः ।

सुखम् ॥ ५६ ॥ निद्रावर्णमृदुत्वायुः कुरुते दृष्टिपुष्टिकृत् । अभ्यङ्गः शीलितो मूर्ध्नि सकलेन्द्रियतर्पणः ॥ ५७ ॥ दृष्टिपुष्टिकरो हन्ति शिरोभूमिगतान् गदान् । केशानां बहुतां दार्ढ्यं मृदुतां दीर्घतां तथा ॥ कृष्णतां कुरुते कुर्याच्छिरसः पूर्णतामपि ॥५८॥ न कर्णरोगा न मलं न च मन्याहनुग्रहः । नोच्चैः श्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णपूरणात् ॥५९॥ रसाद्यैः पूरणं कर्णे भोजनात्प्राक्प्रशस्यते । तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥ ६० ॥ पादाभ्यङ्गस्तु सुस्थैर्यनिद्राहृष्टिप्रसादकृत् । पादसुप्तिश्रमस्तम्भसंकोचस्फुटनप्रणुत् ॥ ६१ ॥ मूर्ध्नोऽभ्यङ्गात्कर्णयोः शीतमाहुः कर्णाभ्यङ्गात्पादयोरेवमेव । पादाभ्यङ्गो नेत्ररोगान् हरेच्च नेत्राभ्यङ्गाद्दन्तरोगश्च नश्येत् ॥ ६२ ॥ व्यायामक्षुण्णवपुषं पद्भ्यां संमर्दितं तथा । व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ॥ ६३ ॥ रोमकूपशिराजालधमनीभिः कलेवरम् । तर्पयेद्बलमाधत्ते स्नेहो युक्तोऽवगाहने ॥ ६४ ॥ अद्भिः संसिक्तमूलानां तरूणां पल्लवादयः । वर्धन्ते हि तथा नृणां स्नेहसंसिक्तधातवः ॥ ६५ ॥ नवज्वरी ह्यजीर्णी च नाभ्यक्तव्यः कदाचन । तथा विरिक्तो वान्तश्च निरूढो यश्च मानवः ॥ ६६ ॥ पूर्वयोः कृच्छ्रता व्याधेरसाध्यत्वमथापि वा । शेषाणां बहवः प्रोक्ता वह्निसादादयो गदाः ॥ ६७ ॥ उद्वर्तनं कफहरं मेदोघ्नं शुक्रदं परम् । बल्यं शोणितकृत्कान्तित्वक्प्रसादमृदुत्वकृत् ॥ ६८ ॥ मुखलेपाद्दृढं चक्षुः पीनो गण्डस्तथाननम् । कान्तमव्यङ्गपिटकं भवेत्कमलसंनिभम् ॥ ६९ ॥ दीपनं वृष्यमायुष्यं स्नानमोजोबलप्रदम् । कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपापनुत् ॥ ७० ॥ बाह्यैश्च सेकैः शीताद्यैरूष्मान्तर्याति पीडितः । नरस्य स्नातमात्रस्य दीप्यते तेन पावकः ॥ ७१ ॥ प्रातःस्नातनरस्य पापहरणं दुःस्वप्नविध्वंसनं शौचस्यायतनं मलापहरणं संवर्धनं तेजसाम् । रूपद्योतकरं शरीरसुखदं कामाग्निसंदीपनं स्त्रीणां मन्मथगाहनं श्रमहरं स्नाने दशैते गुणाः ॥ ७२ ॥ शीतेन पयसा स्नानं रक्तपित्तप्रशान्तिकृत् । तदेवोष्णेन तोयेन बल्यं वातकफापहम् ॥ ७३ ॥ उष्णाम्बुनाधः कायस्य परिषेको बलावहः । तेनैव चोत्तमाङ्गस्य बलहृत्केशचक्षुषाम् ॥ ७४ ॥ शिरःस्नानमचक्षुष्यमत्युष्णेनाम्बुना सदा । वातश्लेष्मप्रकोपे तु हितं तच्च प्रकीर्तितम् ॥ ७५ ॥ यः सदामलकैः स्नानं करोति स विनिश्चितम् । वलीपलितनिर्मुक्तो जीवेद्वर्षशतं नरः ॥ ७६ ॥ अशीतेनाम्भसा स्नानं पयःपानं युवस्त्रियः । एतद्धि मानवाः पथ्यं स्निग्धमल्पं च भोजनम् ॥ ७७ ॥ स्नानं ज्वरेऽतिसारे च नेत्रकर्णानिलार्तिषु । आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ॥ ७८ ॥ स्नानस्यानन्तरं सम्यग्वस्त्रेण तनुमार्जनम् । कान्तिप्रदं शरीरस्य कण्डूत्वग्दोषनाशनम् ॥ ७९ ॥ कौशेयं चित्रवस्त्रं च रक्तवस्त्रं तथैव च । वातश्लेष्महरं शीतकाले तत्तु विधारयेत् ॥ ८० ॥ मेध्यं सुशीतं पित्तघ्नं काषायं वस्त्रमुच्यते । तद्धारयेदुष्णकाले तच्चापि लघु शस्यते ॥ ८१ ॥ शुक्लं तु शुभदं वस्त्रं शीतातपनिवारणम् । न चोष्णं न च वा शीतं तच्च वर्षासु धारयेत् ॥ ८२ ॥ यशस्यं काम्यमायुष्यं श्रीदमानन्दवर्धनम् । त्वच्यं वशीकरं रुच्यं नवं निर्मलमम्बरम् ॥ ८३ ॥ कदापि न जनैः सद्भि-

धार्यं मलिनमम्बरम् । तत्तु कण्डूकृमिकरं ग्लान्यलक्ष्मीकरं परम् ॥ ८४ ॥ कुङ्कुमं
चन्दनं चापि कृष्णागुरुविमिश्रितम् । उष्णं वातकफध्वंसि शीतकाले तदिष्यते
॥ ८५ ॥ चन्दनं घनसारेण वालकेन च मिश्रितम् । सुगन्धि परमं शीतमुष्णकाले
प्रशस्यते ॥ ८६ ॥ चन्दनं घुसृणोपेतं मृगनाभिसमायुतम् । न चोष्णं न च शीतं वा
वर्षाकाले तदिष्यते ॥ ८७ ॥ अनुलेपस्तृषामूर्छादुर्गन्धश्रमदाहजित् । सौभाग्यतेज-
स्त्वग्वर्णकान्त्योजोबलवर्धनः ॥ स्नानानर्हस्य लोकस्य त्वनुलेपोऽपि नो हितः
॥ ८८ ॥ सुगन्धिपुष्पपत्राणां धारणं कान्तिकारणम् । पापरक्षोग्रहहरं कामौजः-
श्रीविवर्धनम् ॥ ८९ ॥ भूषणैर्भूषयेदङ्गं यथायोग्यं विधानतः । शुचि सौभाग्यसं-
तोषदायकं काञ्चनं स्मृतम् ॥ ९० ॥ ग्रहदुष्टिहरं पुष्टिकरं दुःस्वप्ननाशनम् । पापदौ-
र्भाग्यशमनं रत्नाभरणधारणम् ॥९१॥ माणिक्यं तरणेः सुनिर्मलमथो चन्द्रस्य मुक्ताफलं
माहेयस्य च विद्रुमो निगदितः सौम्यस्य गारुत्मतम् । देवेज्यस्य च पुष्परागमसुरा-
चार्यस्य वज्रं शनेर्नीलं निर्मलमन्ययोश्च गदिते गोमेदवैडूर्यके ॥ ९२ ॥ वासः स्रगा-
दिरत्नानां धारणं प्रीतिवर्धनम् । रक्षोघ्नमर्थ्यमोजस्यं सौभाग्यकरमुत्तमम् ॥ ९३ ॥
सततं सिद्धमन्त्रस्य महौषध्यास्तथैव च । रोचनासर्षपादीनां मङ्गल्यानां च धार-
णम् ॥ ९४ ॥ आयुर्लक्ष्मीकरं रक्षोहरं मङ्गलदं शुभम् । हिंस्रादिभयविध्वंसि वशी-
करणकारकम् ॥ ९५ ॥ देवगोविप्रवृद्धानां गुरूणां चैव पूजनम् । आयुष्यं वृद्धिदं
पुण्यमलक्ष्मीकिल्बिषापहम् ॥९६॥ ततो भोजनवेलायां कुर्यान्मङ्गलदर्शनम् । तेषां प्रति-
क्षणं नित्यमायुर्धर्मविवर्धनम् ॥ ९७ ॥ लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुता-
शनः । हिरण्यं सर्पिरादित्यः स्त्रियो राजा तथाष्टमः ॥ ९८ ॥ पादुकारोहणं कुर्यात्पूर्वं
भोजनतः परम् । पादरोगहरं वृष्यं चक्षुष्यं चायुषे हितम् ॥ ९९ ॥ शरीरे जायते
नित्यं वाञ्छा नृणां चतुर्विधा । बुभुक्षा च पिपासा च सुषुप्सा सुरतस्पृहा ॥१००॥ भो-
जनेच्छाविघातात्स्यादङ्गमर्दोऽरुचिः श्रमः । तन्द्रा लोचनदौर्बल्यं धातुदाहो बलक्षयः
॥१०१॥ विघातेन पिपासायाः शोषः कण्ठास्ययोर्भवेत् । श्रवणस्यावरोधश्च रक्तशोषो
हृदि व्यथा ॥१०२॥ निद्राविघाततो जृम्भा शिरोलोचनगौरवम् । अङ्गमर्दस्तथा त-
न्द्रा स्यादन्नापाक एव च ॥ १०३ ॥ बुभुक्षितो न योऽश्नाति तस्याहारेन्धन-
क्षयात् । मन्दीभवति कायाग्निर्नाग्निर्वर्धेन्निरिन्धनः ॥ १०४ ॥ आहारं पचति शिखी दो-
षानाहारवर्जितः पचति । दोषक्षये च धातून् पचति च धातुक्षये प्राणान् ॥ १०५ ॥
आहारः प्रीणनः सद्यो बलकृद्देहधारणः । स्मृत्यायुःशक्तिवर्णौजःसत्वशोभाविवर्धकः
॥ १०६ ॥ यथोक्तगुणसंपन्नमुपसेवीत भोजनम् । विचार्य देशकालादीन्कालयोरुभयो-
रपि ॥ १०७ ॥ सायं प्रातर्मनुष्याणामशनं श्रुतिबोधितम् । नान्तरा भोजनं कुर्यादग्नि-
होत्रसमो विधिः ॥१०८॥ याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत् । याममध्येऽ-
रसोत्पत्तिर्यामयुग्माद्बलक्षयः ॥१०९॥ क्षुत्संभवति पक्वेषु रसदोषमलेषु च । काले वा
यदि वाकाले सोऽन्नकाल उदाहृतः ॥ ११० ॥

## ॥ अथ रसादीनां पाकलक्षणमाह ॥

उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः । लघुता क्षुत् पिपासा च जीर्णाहारस्य लक्षणम् ॥ १ ॥ आहारं तु रहः कुर्यान्निर्हारमपि सर्वदा । उभाभ्यां लक्ष्म्युपेतः स्यात् प्रकाशे हीयते श्रिया ॥ २ ॥ ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु । श्लेष्मक्षये प्रवृद्धोष्मा बलवाननलस्तदा ॥ ३ ॥ आहारनिर्हारविहारयोगाः सदैव सद्भिर्विजने विधेयाः । हीनदीनक्षुधार्तानां पापपाखण्डरोगिणाम् । कुक्कुटानां शुनां दृष्टिर्भोजने नैव शोभना ॥ ४ ॥ पितृमातृसुहृद्वैद्यपाककृद्धंसबर्हिणाम् । सारसस्य चकोरस्य भोजने दृष्टिरुत्तमा ॥ ५ ॥ दोषहृद् दृष्टिदं पथ्यं हैमं भोजनभाजनम् । रौप्यं भवति चक्षुष्यं पित्तहृत् कफवातकृत् ॥ ६ ॥ कांस्यं बुद्धिप्रदं रुच्यं रक्तपित्तप्रसादनम् । पैत्तलं वातकृद्रूक्षमुष्णं कृमिकफप्रणुत् ॥ ७ ॥ आयसे कान्तपात्रे च भोजनं सिद्धिकारकम् । शोथपाण्डुहरं बल्यं कामलापहमुत्तमम् ॥ ८ ॥ शैलजे मृण्मये पात्रे भोजनं श्रीनिवारणम् । दारुद्रवे विशेषेण रुचिदं श्लेष्मकृत्तथा ॥ ९ ॥ पात्रं पत्रमयं रुच्यं दीपनं विषपापनुत् । जलपात्रं तु ताम्रस्य तदभावे मृदो हितम् ॥ १० ॥ पात्रं पवित्रं शीतं च घटितं स्फटिकेन यत् । काचेन रचितं तद्वत्तथा वैदूर्यसंभवम् ॥ ११ ॥ भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम् । अग्निसंदीपकं रुच्यं जिह्वाकण्ठविशोधनम् ॥ १२ ॥ अन्नं ब्रह्मा रसो विष्णुर्भोक्ता देवो महेश्वरः । इति संचिन्त्य यो भुङ्क्ते दृष्टिदोषो न बाधते ॥ १३ ॥ अञ्जनीगर्भसंभूतं कुमारं ब्रह्मचारिणम् । दृष्टिदोषविनाशाय हनुमन्तं स्मराम्यहम् ॥ १४ ॥ अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् ॥ मध्येऽम्ललवणौ पश्चात् कटुतिक्तकषायकान् ॥ १५ ॥ फलान्यादौ समश्नीयाद्दाडिमादीनि बुद्धिमान् । विना मोचफलं तद्वद्वर्जनीया च कर्कटी ॥ १६ ॥ मृणालबिसशालूककन्देक्षुप्रभृतीन्यपि । पूर्वमेव हि भोज्यानि न तु भुक्त्वा कदाचन ॥ १७ ॥ प्रियालजम्बूबदरीफलानि गाङ्गेरिकोदुम्बरतिन्तिडीकम् ॥ तालीफलानागरनारिकेलसारं च भक्ष्यं तिलमिश्रमाम्रम् । अङ्कोलरम्भाफलसावलानां फलानि वर्ज्यानि सदा प्रभाते ॥ १८ ॥ गुरु पिष्टमयं द्रव्यं लड्डुकान् पृथुकानपि । न जातु भुक्तवान्खादेन्मात्रां खादेद्बुभुक्षितः ॥ १९ ॥ घृतपूर्वं समश्नीयात्कठिनं प्राक् ततो मृदु । अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ॥ २० ॥ यद्यत्स्वादुतरं तद्धि विदध्यादुत्तरोत्तरम् । भुक्त्वा यत्प्रार्थ्यते भूयस्तदुक्तं स्वादुभोजनम् ॥ २१ ॥ सौमनस्यं बलं पुष्टिमुत्साहं रसनासुखम् । स्वादु संजनयत्यन्नमस्वादु च विपर्ययम् ॥ २२ ॥ अत्युष्णान्नं बलं हन्ति शीतं शुष्कं च दुर्जरम् । अतिक्लिन्नं ग्लानिकरं युक्तियुक्तं हि भोजनम् ॥ २३ ॥ मधुराद्वर्धते रक्तमम्लान्मज्जाप्रवर्धनम् । लवणाद्वर्धते त्वस्थि तिक्तान्मेदः प्रवर्धते ॥ २४ ॥ कटुकाद्वर्धते मांसं कषायाद्वर्धते रसः । अन्नाच्च वर्धते शुक्रं षड्रसा धातुवर्धनाः ॥ २५ ॥ अतिद्रुताशिताहारो गुणान्दोषान्न विन्दति । भोज्यं शीतमहृद्यं च स्याद्विलम्बितमश्नतः ॥ २६ ॥ मन्दानलो नरो द्रव्यमात्रां गुर्वीं विवर्ज-

येत् । स्वभावतश्च गुरु यत् तथा संस्कारतो गुरु ॥ २७ ॥ मात्रागुरुस्तु मुद्गादिर्माषादिः प्रकृतेर्गुरुः । संस्कारगुरु पिष्टान्नं प्रोक्तमित्युपलक्षणम् ॥ २८ ॥ आहारं षड्विधं चोष्यं पेयं लेह्यं तथैव च । भोज्यं भक्ष्यं तथा चर्व्यं गुरुं विद्याद्यथोत्तरम् ॥ २९ ॥ गुरूणामर्धसौहित्यं लघूनां नातितृप्तता । द्रवो द्रवोत्तरश्चापि न मात्रागुरुरिष्यते ॥ ३० ॥ द्रवाढ्यमपि शुष्कं तु सम्यगेवोपपद्यते । विशुष्कमन्नमभ्यस्तं न पाकं साधु गच्छति ॥ ३१ ॥ पिण्डीकृतमसंक्लिन्नं विदाहमुपगच्छति । शुष्कं विरुद्धं विष्टम्भि वह्निव्यापदमावहेत् ॥ ३२ ॥ न भुक्त्वा न रदैश्छित्त्वा न निशायां न वा बहून् । न जलान्तरितान्द्विः सक्तूनद्यान्न केवलान् ॥ ३३ ॥ पुनर्दानं पृथक् पानं सामिषं पयसा निशि । दन्तच्छेदनमुष्णं च सप्त सक्तुषु वर्जयेत् ॥ ३४ ॥ बहु स्तोकमकाले वा ज्ञेयं तद्विषमाशनम् ॥ आलस्यगौरवाटोपशब्दांश्च कुरुते गदान् । हीनमात्रं तनोः कार्श्यं करोति च बलक्षयम् ॥ ३५ ॥ अप्राप्तकाले भुञ्जानो ह्यसमर्थतनुर्नरः । तांस्तान् व्याधीनवाप्नोति मरणं चाधिगच्छति ॥ ३६ । कालेऽतीतेऽश्नतो जन्तोर्वायुनापहतेऽनले । कृच्छ्राद्विपच्यते भुक्तं न स्याद्भोक्तुं पुनः स्पृहा ॥ ३७ ॥ कुक्षेर्भागद्वयं भोज्यैस्तृतीये वारि पूरयेत् । वायोः संचरणार्थाय चतुर्थमवशेषयेत् ॥ ३८ ॥ रसेनान्नस्य रसना प्रथमेनोपतर्पिता । न तथा स्वादुतामेति ततः सेव्याम्बुनान्तरा ॥ ३९ ॥ अत्यम्बुपानान्न विपच्यतेऽन्नं निरम्बुपानाच्च स एव दोषः । तस्मान्नरो वह्निविवर्धनाय मुहुर्मुहुर्वारि पिबेदभूरि ॥ ४० ॥ भुक्तस्यादौ जलं पीतं कार्श्यमन्दाग्निदोषकृत् । मध्येऽग्निदीपनं श्रेष्ठमन्ते स्थौल्यकफप्रदम् ॥ समस्थूलकृशा भुक्तमध्यान्तप्रथमाम्बुपाः ॥ ४१ ॥ तृषितस्तु न चाश्नीयात्क्षुधितो न पिबेज्जलम् । तृषितस्तु भवेद्गुल्मी क्षुधितस्तु जलोदरी ॥ ४२ ॥ अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् । मध्येऽम्ललवणौ पश्चात्कटुतिक्तकषायकान् ॥ ४३ ॥ एवं भुक्त्वा समाचामेद्रूक्षं ग्रहणपूर्वकम् । भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ॥ ४४ ॥ दन्तान्तरगतं चान्नं शोधनेनाहरेच्छनैः । कुर्यादनिर्हृतं तद्धि मुखस्यानिष्टगन्धताम् ॥ ४५ ॥ दन्तलग्नमनिर्हार्यं लेपमन्ये तु दन्तवत् । न तत्र बहुशः कुर्याद्यत्नं निर्हरणं प्रति ॥ ४६ ॥ आचम्य जलयुक्ताभ्यां पाणिभ्यां चक्षुषी स्पृशेत् । भुक्त्वा पाणितले घृष्ट्वा चक्षुषोर्यदि दीयते* ॥ भुक्त्वा च संस्मरेन्नित्यमगस्त्यादीन्सुखावहान् ॥ ४७ ॥ आदौ सूपाज्यभक्तं सकथिकमुदितं पायसं वाथ रम्यं पक्वान्नं मध्यमध्ये बहुविधपललं व्यञ्जनान्यत्र भोज्ये । अन्ते दुग्धं सिताढ्यं शृतमतुलरसं सान्नमत्यन्तमिष्टं दध्यन्नं वा यथेच्छापरिकलितमिदं देशरीत्या विदध्यात् ॥ ४८ ॥ आदिमध्यावसानेषु भोजने पयसा युते । कार्श्यं साम्यं तथा स्थौल्यमिति स्युः क्रमशो गुणाः ॥ ४९ ॥ आदौ द्रवं समश्नीयात्तत्राम्बु न पिबेद्बहु । मध्ये तु कठिने भक्ष्ये यथेष्टं शस्यते जलम् ॥ ५० ॥ तथा च भोजनस्यान्ते पीतमम्बु बलप्रदम् । द्रवप्रधानभुक्तान्ते किन्तु तन्मात्रया पिबेत् ॥ ५१ ॥

* जातरोगा विनश्यन्ति तिमिराणि तथैव च ।

विष्णुरन्नं तथैवान्नपरिणामश्च वै यथा । सत्येन तेन मद्भुक्तं जीर्यत्वन्नमिदं तथा ॥ ५२ ॥ अगस्तिरग्निर्वडवानलश्च भुक्तं ममान्नं जरयन्त्वशेषम् । सुखं ममैतत्परिणामसंभवं यच्छत्वरोगं मम चारुदेहम् ॥ ५३ ॥ अङ्गारकमगस्तिं च पावकं सूर्यमश्विनौ । यश्चैतान्संस्मरेन्नित्यमन्नं तस्याशु जीर्यति ॥ ५४ ॥ अगस्तिं कुम्भकर्णं च शनिं च वडवानलम् । आहारपरिपाकार्थे स्मरामि च वृकोदरम् ॥ ५५ ॥ इत्युच्चार्य स्वहस्तेन परिमार्ज्य तथोदरम् । अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥ ५६ ॥ जीर्णेऽन्ने वर्धते वायुर्विदग्धे पित्तमेधते । भुक्तमात्रे कफश्चापि क्रमोऽयं भोजनोपरि ॥ ५७ ॥ धूमे वा रोगं हृद्यैर्वा कटुतिक्तकषायकैः । पूगकर्पूरकस्तूरीलवङ्गसुमनःफलैः ॥ ५८ ॥ फलैः कटुकषायैर्वा मुखवैशद्यकारिभिः । ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥ ५९ ॥ रते सुप्तोत्थिते स्नाते भुक्ते वान्ते च संगरे । सभायां विदुषां राज्ञां कुर्यात्ताम्बूलचर्वणम् ॥ ६० ॥ प्रत्युषसि भुक्तसमये युवतीनां च संगमे विरमे । विद्वद्राजसभायां ताम्बूलं यो न खादयेत्स पशुः ॥ ६१ ॥ ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं वातघ्नं कृमिनाशनं कफहरं दुर्गन्धिनिर्नाशनम् । वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसंदीपनं ताम्बूलस्य सखे त्रयोदश गुणाः स्वर्गेऽपि ते दुर्लभाः ॥ ६२ ॥ ताम्बूलमुक्तं तीक्ष्णोष्णं रोचनं तुवरं सरम् । तिक्तं क्षारोषणं कामरक्तपित्तकरं लघु ॥ ६३ ॥ वश्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् । मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् ॥ ६४ ॥ तच्च दन्तमलध्वंसि जिह्वेन्द्रियविशोधनम् । मुखप्रसेकशमनं गलामयविनाशनम् ॥ ६५ ॥ नवं तदेव मधुरं कषायानुरसं गुरु । बलासजननं प्रायः पत्रशाकगुणं स्मृतम् ॥ ६६ ॥ वङ्गदेशोद्भवं पर्णं परं कटुरसं सरम् । पाचनं पित्तजनकमुष्णं कफहरं मतम् ॥ ६७ ॥ पर्णं पुराणमकटु शुष्कं सनु पाण्डुरम् । विशेषाद्गुणवद्भेद्यमन्यद्धीनगुणं मतम् ॥६८॥ पूगं गुरु हिमं रूक्षं कषायं कफपित्तनुत् । मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् ॥ ६९ ॥ पूगं स्याद् दृढमध्यं यत् स्विन्नं चापि त्रिदोषनुत् । सरसं गुर्वभिष्यन्दि तद्भृशं वह्निनाशनम् ॥ ७० ॥ खदिरः कफपित्तघ्नश्चूर्णं वातबलासनुत् । संयोगतस्त्रिदोषघ्नं सौमनस्यं करोति च ॥ ७१ ॥ पूगाधिकं प्रभाते स्यान्मध्याह्ने खादिराधिकम् । चूर्णाधिकं निशायां तु ताम्बूलं भक्षयेत्सदा ॥ ७२ ॥ तस्मादग्रं तथा मूलं मध्यं पर्णस्य वर्जयेत् । पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसंभवः ॥ ७३ ॥ चूर्णपत्रं हरत्यायुः शिरा बुद्धिविनाशिनी । आयुरग्रे यशो मूले लक्ष्मीर्मध्ये व्यवस्थिता ॥ ७४ ॥ आद्यं विषोपमं पीतं द्वितीयं मेहि दुर्जरम् । तृतीयादि तु पातव्यं सुधातुल्यं रसायनम् ॥ ७५ ॥ आलस्यविद्रध्युपजिह्विकानां सतालुदन्तार्बुदरोगिणां च । गलास्यगण्डापचितालुशोषश्लेष्मामयानां तदतिप्रशस्तम् ॥ ७६ ॥ न नेत्रकोपे न च रक्तपित्ते क्षते न दाहे न विषे न शोषे । मदात्यये नापि न मोहमूर्छाश्वासेषु ताम्बूलमुशन्ति वैद्याः ॥ ७७ ॥ ताम्बूलं नातिसेवेत विरिक्तो न बुभुक्षितः । देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः ॥ ७८ ॥ शोषपित्तानिलास्रं स्यादतिताम्बूलभक्षणात् । ताम्बूलं न हितं दन्तदुर्बले-

व्रणरोगिणाम् ॥ विषमूर्छामदार्तानां क्षतिनां रक्तपित्तिनाम् ॥ ७९ ॥ भुक्त्वा शतपदं गच्छेच्छनैस्तेन तु जायते । अन्नसंघातशैथिल्यं ग्रीवाजानुकटीसुखम् ॥ ८० ॥ भुक्त्वोपविशतस्तुन्दं शयानस्य तु पुष्यति । आयुश्चंक्रममाणस्य मृत्युर्धावति धावतः ॥ ८१ ॥ श्वासानष्टौ समुत्तानस्तान् द्विः पार्श्वे तु दक्षिणे । ततस्तद्विगुणान् वामे पश्चात्स्वप्याद्यथासुखम् ॥८२॥ वामदिशायामनलो नाभेरूर्ध्वोऽस्ति जन्तूनाम् । तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम् ॥ ८३ ॥ त्रिदोषशमनी खट्वा तूली वातकफापहा । भूशय्या बृंहणी वृष्या काष्ठपट्टी तु वातला ॥ ८४ ॥ भूशय्या वातलातीवरूक्षा पित्तास्रनाशिनी । सुशय्याशयनं हृद्यं पुष्टिनिद्राधृतिप्रदम् ॥ ८५ ॥ श्रमानिलहरं वृष्यं विपरीतमतोऽन्यथा । संवाहनं मांसरक्तत्वक्प्रसादकरं परम् ॥ ८६ ॥ प्रीतिनिद्राकरं वृष्यं कफवातश्रमापहम् । प्रवातं रौक्ष्यवैवर्ण्यस्तम्भकृद्दाहपित्तनुत् ॥ ८७ ॥ स्वेदमूर्छापिपासाघ्नमप्रवातमतोऽन्यथा । सुखं प्रवातं सेवेत ग्रीष्मे शरदि चोत्तरम् ॥ ८८ ॥ निर्वातमायुषे सेव्यमारोग्यं यत्र सर्वदा । पूर्वोऽनिलो गुरुः सोष्णः स्निग्धः पित्तास्रदूषकः ॥ ८९ ॥ विदाही वातलः श्रान्तिकफशोषवतां हितः । स्वादुः पटुरभिष्यन्दी त्वग्दोषार्शोविषक्रिमीन् ॥ ९० ॥ सन्निपातज्वरश्वासमामवातं प्रकोपयेत् । दक्षिणः पवनः स्वादुः पित्तरक्तहरो लघुः ॥ ९१ ॥ वीर्येण शीतलो बल्यश्चक्षुष्यो न च वातलः । पश्चिमः पवनस्तीक्ष्णः शोषणो बलहृल्लघुः ॥ ९२ ॥ मेदपित्तकफध्वंसी प्रभञ्जनविवर्धनः । उत्तरो मारुतः शीतः स्निग्धो दोषप्रकोपकृत् ॥ ९३ ॥ क्लेदनः प्रकृतिस्थानबलदो मधुरो लघुः । आग्नेयो दाहकृद्रूक्षो नैर्ऋतो न विदाहकृत् ॥ ९४ ॥ वायव्यस्तु भवेत्तिक्त ऐशानः कटुकः स्मृतः । विष्वग्वायुरनायुष्यः प्राणिनां बहुरोगकृत् ॥ ९५ ॥ अतस्तं नैव सेवेत सेवितः स्यान्न शर्मणे । व्यजनस्यानिलो दाहस्वेदमूर्छाश्रमापहः ॥ ९६ ॥ तालवृन्तभवो वातस्त्रिदोषशमको मतः । वंशव्यजनजस्तूष्णो रक्तपित्तप्रकोपनः ॥ ९७ ॥ चामरो वस्त्रसंभूतो मायूरो वेत्रजस्तथा । एते दोषजितो वाताः स्निग्धा हृद्याः सुपूजिताः ॥ ९८ ॥ दिवा स्वापं न कुर्वीत यतोऽसौ स्यात् कफावहः । ग्रीष्मवर्जेषु कालेषु दिवा स्वापो निषिध्यते ॥ ९९ ॥ उचितो हि दिवा स्वापो नित्यं चैषां शरीरिणाम् । वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा ॥ १०० ॥ भोजनात् प्राग्दिवा स्वापः पाषाणमपि जीर्यति । भोजनान्ते दिवा स्वापाद्वातपित्तकफोद्भवः ॥ १०१ ॥ व्यायामप्रमदाध्ववाहनरतान् क्लान्तानतीसारिणः शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान् । क्षीणान् क्षीणकफान् शिशून्मदहतान्वृद्धान् रसाजीर्णिनो रात्रौ जागरितान्नरान् निरशनान् कामं दिवा स्वापयेत् ॥ १०२ ॥ दिवा वा यदि वा रात्रौ निद्रा सात्मीकृता तु यैः । न तेषां स्वपतां दोषो जाग्रतां चोपजायते ॥ १०३ ॥ भोजनानन्तरं निद्रा वातं हरति पित्तहृत् । कफं करोति वपुषः पुष्टिं सौख्यं तनोति हि ॥ १०४ ॥ शयनं पित्तनाशाय वातनाशाय मर्दनम् । वमनं कफनाशाय ज्वरनाशाय लङ्घनम् ॥ १०५ ॥

शब्दान्स्पर्शांश्च रूपाणि रसान् गन्धान् मनःप्रियान् । भुक्तवानपि सेवेत तेनान्नं साधु तिष्ठति ॥ १०६ ॥ शब्दः स्पर्शस्तथा रूपं रसो गन्धो जुगुप्सितः । भुक्तमप्रयतं चान्नमतिहास्यं च वामयेत् ॥१०७॥ शयनं चाशनं चाति न भजेन्न द्रवाधिकम् । नाग्न्यातपौ न प्लवनं न यानं नापि वाहनम् ॥ १०८ ॥ व्यायामं च व्यवायं च धावनं पानमेव च । युद्धं गीतं च पाठं च मुहूर्तं भुक्तवांस्त्यजेत् ॥ १०९ ॥ अत्यम्बुपानाद्विषमाशनाच्च संधारणात्स्वप्नविपर्ययाच्च । कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ॥ ११० ॥ अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते । प्राग् भुक्ते त्वनले मन्दे द्विरह्नो न समाहरेत् ॥ पूर्वभुक्तेऽविदग्धेऽन्ने भुञ्जानो हन्ति पावकम् ॥ १११ ॥ भवेद्यदि प्रातरजीर्णशङ्का तदाभयानागरसैन्धवानाम् ॥ विचूर्णितं शीतजलेन भुक्त्वा मुक्तामशङ्को मितमन्नमद्यात् ॥ ११२ ॥ अध्वा वर्णकफस्थौल्यसौकुमार्यविनाशनः । यत्तु चङ्क्रमणं नाति देहपीडाकरं भवेत् ॥ ११३ ॥ तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम् । उष्णीषं कान्तिकृत् केश्यं रजोवातकफापहम् ॥ ११४ ॥ पादाभ्यामनुपानद्भ्यां सदा चङ्क्रमणं नृणाम् । अनारोग्यमनायुष्यमिन्द्रियघ्नमदृष्टिदम् ॥ ११५ ॥ छत्रस्य धारणं वर्षातपवातरजोपहम् । हिमघ्नं हितमक्ष्णोश्च माङ्गल्यमपि कीर्तितम् ॥ ११६ ॥ सत्त्वोत्साहबलस्थैर्यधैर्यवीर्यविवर्धनम् । अवष्टम्भकरं चापि भयघ्नं दण्डधारणम् ॥ ११७ ॥ ऊर्ध्वाच्छादनसंयुक्ता शिबिका सर्ववल्लभा । तस्यामारोहणं नृणां त्रिदोपशमकं मतम् ॥ ११८ ॥ वातश्लेष्मगदार्तानामहिता श्रमकृत्तरिः । पित्तानिलकरो हस्ती लक्ष्म्यायुःपुष्टिवर्धनः ॥ ११९ ॥ घोटकारोहणं वातपित्ताग्निश्रमकृन्मतम् । मेदोवर्णकफघ्नं च हितं तद्बलिनां परम् ॥ १२० ॥ आतपः स्वेदमूर्छास्रपित्ततृष्णाक्लमश्रमान् । दाहं विवर्णतां कुर्यादेतांश्छाया व्यपोहति ॥ १२१ ॥ वृष्टिर्वृष्या हिमा बल्या निद्रालस्यविवर्धनी । भयावहा मोहकरी कुहतिः कफवातला ॥ १२२ ॥ अग्निर्वातकफस्तम्भशीतवेपथुनाशनः । आमाभिष्यन्दशमनो रक्तपित्तप्रकोपनः ॥ १२३ ॥ सद्यः श्लेष्मकरो धूमो नेत्रयोरहितो भृशम् । शिरोगौरवकृच्चापि वातपित्तं च कोपयेत् ॥ १२४ ॥ मैत्रीं सद्भिरसद्भिश्च कुर्यात्सतस्तु तु सर्वथा । संसर्गः साधुभिः कुर्यादसत्संगं परित्यजेत् ॥१२५॥ सेवेत देवभूदेववृद्धवैद्यनृपातिथीन् । विमुखान्नार्थिनः कुर्यान्नावमन्येत कानपि ॥ १२६॥ गुरूणां सन्निधौ तिष्ठेत् सदैव विनयान्वितः । पादप्रसारणादीनि तत्र नैव समाचरेत् ॥ १२७ ॥ अपकारपरोऽपि स्यादुपकारपरः पुमान् । आत्मवत्सकलान्पश्येद्वैरिणो दूरतो वसेत् ॥ १२८ ॥ न कश्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम् । प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः ॥ १२९ ॥ नात्मानमुदके पश्येन्न नग्नः प्रविशेज्जलम् । तथा नाज्ञातगाम्भीर्यं न हिंस्रप्राणिसेवितम् ॥ १३० ॥ काले हितं मितं सत्यं संवादे मधुरं वदेत् । भुञ्जीत मधुरं प्रायः स्निग्धं काले हितं मितम् ॥ १३१ ॥ न रात्रौ दधि भुञ्जीत न च निर्लवणं तथा । नामुद्गसूपं नाक्षौद्रं न चाप्यघृतशर्करम् ॥१३२॥ जनस्याशयमालक्ष्य यो यथा परितुष्यति । तं तथैवानुवर्तेत पराराधनपण्डितः ॥१३३॥

नैकः सुखी न सर्वत्र विश्वस्तो न च शङ्कितः । नोद्यमाद्विरमेत्क्वापि हेतावीर्ष्येत्फले न तु ॥ १३४॥ वेगान्न धारयेत्किञ्चिन्मनोवेगान्विधारयेत् । न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत् ॥१३५॥ वर्षातपादिषुच्छत्री दण्डी रात्र्यटवीषु च । सोपानत्कस्तनुं रक्षन्विचरेद्युगमात्रदृक्* ॥ १३६ ॥ नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत् । संदिग्धनावं वृक्षं च नारोहेद्दुष्टयानवत् ॥ १३७ ॥ नासंवृतमुखः कुर्यात्सभायां सुविचक्षणः । कासं हासं तथोद्गारं जृम्भणं क्षवथुं तथा ॥ १३८ ॥ नासिकां न विकुष्णीयान्नासीतोत्कटकः क्वचित् । नोर्ध्वजानुश्चिरं तिष्ठेन्न नखैर्विलिखेद्भुवम् ॥ १३९ ॥ संमार्जनीरजो नैव देहे दध्यात्कदाचन । न नखेन तृणं छिन्द्यान्नोच्छिष्टो ब्राह्मणं स्पृशेत् ॥ १४० ॥ नोपरक्तं न चोद्यन्तं नास्तं यान्तं दिवाकरम् । सर्वथा तु समीक्षेत न जले प्रतिबिम्बितम् ॥ १४१ ॥ नेक्षेत प्रततं सूक्ष्मं दीप्तामेध्याप्रियाणि च । पौरन्दरं धनुर्नैव दर्शयेत्कमपि क्वचित् ॥ १४२॥ रिपोरन्नं न भुञ्जीत गणिकान्नमपि क्वचित् । प्रतिभूर्न भवेत्क्वापि न च साक्षी वृथा वदेत् ॥१४३॥ स्थगीन्न धारयेज्जातु द्यूतं दूरात्परित्यजेत् । विश्वासं नाचरेत्स्त्रीणां ताःस्वतन्त्राश्च नाचरेत् ॥१४४॥ रक्षणीया सदा पत्नी यौवने तु विशेषतः । न भिन्नशयने स्वप्यान्न चैको विवरे बिले ॥ नैको देवालये नैव रात्रौ तरुतले न च ॥१४५॥ एवं दिनानि गमयेत्सदाचारपरः सदा । ततो रात्रिप्रयुक्तानि कुर्यात्कर्माणि मानवः ॥ १४६ ॥ इत्याचारं समासेन भाषितं यः समाचरेत् । स विन्दत्यायुरारोग्यं प्रीतिं धर्मं धनं यशः ॥१४७॥ एतानि पञ्च कर्माणि सन्ध्यायां वर्जयेद्बुधः । आहारं मैथुनं निद्रां संपाठं गतिमध्वनि ॥१४८॥ भोजनाज्जायते व्याधिर्मैथुनाद्गर्भवैकृतम् । निद्राया निःस्वता पाठादायुर्हानिर्गतेर्भयम् ॥ १४९ ॥

## ॥ अथ रात्रिचर्या ॥

ज्योत्स्ना शीता स्मरानन्दप्रदा तृट्पित्तदाहहृत् । ततो हीनगुणः कुर्यादवश्यायोऽनिलं कफम् ॥ १ ॥ तमो भयावहं मोहदिङ्मोहजननं भवेत् । पित्तहृत्कफकृत्कामवर्धनं क्लमकृच्च तत् ॥ २ ॥ रात्रौ तु भोजनं कुर्यात् प्रथमप्रहरान्तरे । किञ्चिदूनं समश्नीयाद्दुर्जरं तत्र वर्जयेत् ॥ ३ ॥ शरीरे जायते नित्यं देहिनां सुरतस्पृहा । अव्यवायान्मेहमेदोवृद्धिः शिथिलता तनौ ॥ ४ ॥ बलिनो मनसो रोधात् क्रोधाद्वा ब्रह्मचर्यतः । नारीणामरसज्ञत्वात् क्षीणं शुक्रं भवेन्नृणाम् ॥ ५ ॥ दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं भ्रमः । क्लैब्यं शुक्रविसर्गश्च क्षीणशुक्रस्य लक्षणम् ॥ ६ ॥ संबन्धिन्यरिवल्लभा नृपवधूर्मित्राङ्गना रोगिणी शिष्यब्राह्मणवल्लभातिपतितोन्मत्ता महापापिनी । पिङ्गा प्रव्रजिता सती गुरुवधूर्वृद्धा तथा गर्भिणी म्लेच्छा कृष्णतमा तथापरिचिता त्याज्या इमा योषितः ॥ ७ ॥ सेवनं योषितां कुर्याद्बुधो बुद्ध्वा रतिक्रमम् । बालामुग्धाधिरूढानामनुरागविभावनात् ॥ ८ ॥ बालेति गीयते नारी यावद्वर्षाणि षोडश । ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि ॥ ९ ॥ तदूर्ध्वमधिरूढा स्या-

* युगमात्रदृक् = अग्रतो हस्तचतुष्टयमितां भूमिं पश्यन् ।

त्पञ्चाशद्वत्सरावधि । वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्जिता ॥ १० ॥ निदाघशरदोर्बाला हिता विषयिणे मता । तरुणी शीतसमये प्रौढा वर्षावसन्तयोः ॥११॥ नित्यं बाला सेव्यमाना नित्यं वर्धयते बलम् । तरुणी ह्रासयेच्छक्तिं प्रौढोद्रासयते जराम् ॥ १२ ॥ सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम् । घृतमुष्णोदकस्नानं सद्यःप्राणकराणि षट् ॥ १३ ॥ पूतिमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ १४ ॥ वृद्धोऽपि तरुणीं गत्वा तरुणत्वमवाप्नुयात् । वयोऽधिकां स्त्रियं गत्वा तरुणः स्थविरायते ॥ १५ ॥ आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विताः । स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः ॥ १६ ॥ सेवेत कामतः कामं बलाद्वाजीकृतो हिमे । प्रकामं तु निषेवेत मैथुनं शिशिरागमे ॥ १७ ॥ त्र्यहाद्वसन्तशरदोः पक्षाद्वृष्टिनिदाघयोः । शीते रात्रौ दिवा ग्रीष्मे वन्सते तु दिवा निशि ॥ १८ ॥ वर्षासु वारिदध्वाने शरत्सु सरसः स्मरः । त्रिभिस्त्रिभिरहोभिर्हि समेयात्प्रमदां नरः ॥ १९ ॥ सर्वेष्वृतुषु धर्मेषु पक्षात्पक्षाद्व्रजेद्बुधः । आयुःक्षयभयाद्विद्वान्नाह्नि सेवेत कामिनीम् ॥ २० ॥ अवशो यदि सेवेत तदा ग्रीष्मवसन्तयोः । आस्यावर्णकफस्थौल्यसौकुमार्यसुखप्रदाम् ॥ २१ ॥ नोपेयात्पुरुषो नारीं सन्ध्ययोर्न च पर्वसु । गोसर्गे चार्धरात्रे च तथा संध्यादिनेऽपि च॥२२॥ काम्यस्योदग्रवयसो वाजीकरणसेविनः । सर्वेष्वृतुष्वहरहो व्यवायो न निवार्यते ॥ २३ ॥ घृतक्षीराशिनो निर्भीर्निर्व्याधिर्नित्यगो युवा । विहारं भार्यया कुर्याद्देशेऽतिशयसंवृते ॥ २४ ॥ रम्ये श्राव्याङ्गनागाने सुगन्धिसुखमारुते । देशे गुरुजनासन्नेऽनिभृतेऽतित्रपाकरे ॥ २५ ॥ श्रूयमाणव्यथाहेतुवचने च रमेत न । स्नातश्चन्दनलिप्ताङ्गः सुगन्धसुमनोऽन्वितः ॥ २६ ॥ भुक्तवृष्यः सुवसनः सुवेषः समलङ्कृतः । ताम्बूलवदनः पत्न्यामनुरक्तोऽधिकस्मरः ॥ २७ ॥ पुत्रार्थी पुरुषो नारीमुपेयाच्छयने शुभे । अत्याशितोऽधृतिः क्षुद्वान् सव्यथाङ्गः पिपासितः ॥२८॥ बालो वृद्धोऽन्यवेगार्तस्त्यजेद्रोगी च मैथुनम् । भार्यां तुल्यगुणोपेतां तुल्यशीलां कुलोद्भवाम् ॥ २९ ॥ अधिकामोऽभिकामां च हृष्टो हृष्टामलङ्कृताम् । सेवेत प्रमदां युक्त्या वाजीकरणबृंहितः ॥ ३० ॥ सीमन्ताक्ष्यधरे कपोलगलके कुक्षौ कुचोरःस्थले नाभिश्रोणिवराङ्गजानुषु तथा गुल्फे पदाङ्गुष्ठके । वामाङ्गे हरिणीदृशां मनसिजो मासस्य पक्षद्वये शुक्लश्यामविभागतः सुविहरत्यूर्ध्वाध एवं क्रमात् ॥ ३१ ॥ सीमन्ते नखरं सुचुम्बनविधिं नेत्रे कपोलेऽधरे दन्ताग्रं विदधीत किञ्च नखरं कुक्षौ सुकण्ठेऽपि च । मन्दं वक्षसि ताडनं कुचयुगे श्रोणौ दृढं मर्दनं नाभौ किञ्च चपेटिकां स्मरगृहे मातङ्गलीलायितम् ॥ ३२ ॥ गुल्फजानुपदाङ्गुष्ठसमये घ्रातनानि च । इष्टचन्द्रकलास्पर्शाद्द्रावयेदम्बुजेक्षणाम् ॥ ३३ ॥ रजस्वलामकामां च मलिनामप्रियां तथा । वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीडिताम् ॥३४॥ हीनाङ्गीं गर्भिणीं द्वेष्यां योनिरोगसमन्विताम् । सगोत्रां गुरुपत्नीं च तथा प्रव्रजितामपि ॥ ३५ ॥ नाभिगच्छेत्ततो

नारीं भूरिविगुण्यशङ्क्या । रजस्वलां गतवतो नरस्यासंयतात्मनः ॥ ३६ ॥ दृष्ट्या-युस्तेजसां हानिरधर्मश्च ततो भवेत् । लिङ्गिनीं गुरुपत्नीं च सगोत्रामथ पर्वसु ॥ ३७ ॥ वृद्धां च संध्ययोश्चापि गच्छतो जीवनक्षयः । गर्भिण्यां गर्भपीडा स्याद्व्याधितायां बलक्षयः ॥ ३८ ॥ हीनाङ्गीं मलिनां द्वेष्यां क्षामां वन्ध्यामसंवृते । देशेऽभिगच्छतो रेतः क्षीणं म्लानं मनो हरेत् ॥ ३९ ॥ क्षुधितः क्रुद्धचित्तश्च मध्याह्ने तृषितोऽबलः । स्थितस्य हानिं शुक्रस्य वायोः कोपं च विन्दति ॥ ४० ॥ व्याधितस्य रुजा प्लीहा मूर्छा मृत्युश्च जायते । प्रत्युषस्यर्धरात्रे च वातपित्ते प्रकुप्यतः ॥४१॥ तिर्यग्योनावयोनौ वा दुष्टयोनौ तथैव च । उपदंशस्तथा वायोः कोपः शुक्रसुख-क्षयः ॥ ४२ ॥ उच्चारिते मूत्रिते च रेतसश्च विधारणे । उत्ताने च भवेच्छीघ्रं शुक्राश्मर्यास्तु सम्भवः ॥ ४३ ॥ सर्वमेतत्त्यजेत्तस्माद्यतो लोकद्वये हितम् । शुक्रं तू-पस्थितं मोहान्न संधार्यं कदाचन ॥४४॥ स्नानानुलेपनहिमानिलखण्डखाद्यशीताम्बुदुग्धरसपूपसुराः प्रसन्नाः । सेवेत चानुदिवसं विरतौ रतस्य तस्यैवमाशु वपुषः पुनरेति धाम ॥ ४५ ॥ स्नानं सशर्करं क्षीरं भक्ष्यमैक्षवसंस्कृतम् । ततो मांसरसः स्वप्नो व्यवा-यान्ते हिता अमी ॥ ४६ ॥ अतिव्यवायाज्जायन्ते रोगाश्चाक्षेपकादयः । शूलकास-ज्वरश्वासकार्श्यपाण्ड्वामयक्षयाः ॥ ४७ ॥ रात्रौ जागरणं रूक्षं कफदोषविषार्तिजित् । निद्रा तु सेविता काले धातुसाम्यमतन्द्रितम् ॥ पुष्टिवर्णबलोत्साहवह्निदीप्तिं करोति च ॥ ४८ ॥ यो लेढि शयनसमये मधुमिश्रं बीजपूरदलचूर्णम् । स व्रीडाकरवात-प्रसरनिरोधात्सुखं स्वपिति॥४९॥सवितुरुदयकाले प्रसृतीः सलिलस्य पिबेदष्टौ । रोग-जरापरिमुक्तो जीवेद्वत्सरशतं साग्रम् ॥५०॥ अनुदिनं त्वरुणे रविमण्डले पिबति तोय-मनुज्झितमूत्रविट् । अनिलपित्तकफानलदोपहृच्छतसमा रमते तरुणीशतम् ॥ ५१ ॥ विगतघननिशीथे प्रातरुत्थाय नित्यं पिबति खलु नरो यो घ्राणरन्ध्रेण वारि । स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो वलिपलितविहीनः सर्वरोगैर्विमुक्तः ॥ ५२ ॥ अर्शः-शोथग्रहण्यो ज्वरजठरजराकोष्ठमेदोविकारा मूत्राघातास्रपित्तश्रवणगलशिरःश्रोणि-शूलाक्षिरोगाः । ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-स्तांस्तानभ्यासयोगादपहरति पयः पीतमन्ते निशायाः ॥ ५३ ॥ स्नेहपीते क्षतेऽशुद्धावाध्माने स्तिमितोदरे । हिक्कायां कफवातोत्थे व्याधौ तद्वारि वारयेत् ॥५४॥ नरो दिनादिचर्याभिर्यो न वर्तेत नित्यशः । स एव लभते रोगं ततः पथ्यं समाच-रेत् ॥ ५५ ॥ इति दिनरात्रिचर्या ॥

## ॥ अथ ऋतुचर्यामाह ॥

शिशिरः पुष्पसमयो ग्रीष्मो वर्षाः शरद्धिमः । माघादिमासयुग्मैः स्युर्ऋतवः षट् क्रमादमी ॥ १ ॥ उत्तरायणमत्राद्यैः परैः स्याद्दक्षिणायनम् । आद्यमुष्णं बलहरं ततोऽन्यद्बलदं हिमम् ॥ २ ॥ शिशिरः शीतलोऽतीव रूक्षो वाताग्निवर्धनः । वस-न्तो मधुरः स्निग्धः श्लेष्मवृद्धिकरश्च सः ॥ ३ ॥ ग्रीष्मो रूक्षोऽतिकटुकः पित्तकृत्क-

फनाशनः । वर्षाः शीतविदाहिन्यो वह्निमान्द्यानिलप्रदाः ॥ ४ ॥ शरदुष्णा पित्तकर्त्री नृणां मध्यबलावहा । हेमन्तः शीतलः स्निग्धः स्वादुर्जठरवह्निकृत् ॥ ५ ॥ चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु । वर्षादिषु च पित्तस्य श्लेष्मणः शिशिरादिषु ॥ ६ ॥ चयकोपशमान् दोषा विहाराहारसेवनैः । समानैर्यान्त्यकालेऽपि विपरीतैर्विपर्ययम् ॥ ७ ॥ स्वस्थानस्थस्य दोषस्य वृद्धिः स्यात्स्तब्धकोष्ठता । पीतावभासता वह्निमन्दता चाङ्गगौरवम् ॥ ८ ॥ आलस्यं चयहेतौ तु द्वेषश्च चयलक्षणम् । संचयेऽपहृता दोषा लभन्ते नोत्तरा गतीः ॥ ते तूत्तरासु गतिषु भवन्ति बलवत्तराः ॥ ९ ॥

## ॥ अथ वर्षासु हिताहितमाह ॥

वर्षासु प्रबलो वायुस्तस्मान्मिष्टादयस्त्रयः । रसाः सेव्या विशेषेण पवनस्योपशान्तये ॥ १ ॥ भवेद्वर्षासु वपुषि क्लिन्नत्वं यद्विशेषतः । तत्क्लेदशान्तये सेव्या अपि कट्वादयस्त्रयः ॥ २ ॥ स्वेदनं मर्दनं सेव्यं दध्युष्णं जाङ्गलामिषम् । गोधूमाः शालयो माषा जलं कौपं दिवश्च्युतम् ॥ ३ ॥ न भजेत्पूर्वपवनं वृष्टिं घर्मं हिमं श्रमम् । नदीनीरं दिवा स्वापं रूक्षं नित्यं च मैथुनम् ॥ ४ ॥

## ॥ अथ शरदि हिताहितमाह ॥

सर्पिः स्वादुकषायतिक्तकरसा यच्छीतलं यल्लघु क्षीरं स्वच्छसितेक्षवः पटुरसः स्वल्पः पलं जाङ्गलम् । गोधूमा यवमुद्गशालिसहिता नादेयमंशूदकं चन्द्रश्चन्दनमिन्दुरादिरजनी माल्यं पटो निर्मलः ॥ १ ॥ विश्रामः सुहृदां गणेषु मधुरा वाचः सरःक्रीडनं पित्तानां च विरेचनं बलवतो युक्तं शिरामोक्षणम् । एतान्यत्र घनावसानसमये पथ्यानि मुञ्चेद्दधि व्यायामाम्लकटूष्णतीक्ष्णदिवसस्वप्नं हिमं चातपम् ॥ २ ॥ दिवा रविकरैर्जुष्टं निशि शीतकरांशुभिः । ज्ञेयमंशूदकं नाम स्निग्धं दोषत्रयापहम् ॥ ३ ॥ इक्षवः शालयो मुद्गाः सरोऽम्भः क्वथितं पयः । शरद्येतानि पथ्यानि प्रदोषे चेन्दुरश्मयः ॥ ४ ॥

## ॥ अथ हेमन्ते हिताहितमाह ॥

प्रातर्भोजनमम्लपिष्टलवणानभ्यङ्गघर्मश्रमान् गोधूमैक्षवशालिमाषपिशितं पिष्टं नवान्नं तिलान् । कस्तूरीं वरकुङ्कुमागुरुयुतामुष्णाम्तु शौचेऽनलं स्निग्धं स्त्रीस्वसुखं गुरूष्णवसनं सेवेत हेमन्तके ॥ १ ॥

## ॥ अथ शिशिरे हिताहितमाह ॥

शिशिरे शीतमधिकं रौक्ष्यं चादानकालजम् । विशेषतस्तु तत्रैव हेमन्तस्य मतो विधिः ॥ १ ॥

## ॥ अथ वसन्ते हिताहितमाह ॥

वान्तिं नस्यमथाभयां च मधुना व्यायाममुद्वर्तनं संसेवेत मधौ कफघ्नकवलं मांसं

तथा जाङ्गलम् । गोधूमान्बहुभेदशालिसहितान्मुद्गान्यवान्षष्टिकान्लेपं चन्दनकुङ्कुमागुरुकृतं रूक्षं कटूष्णं लघु ॥ १ ॥ मिष्टमम्लं दधि स्निग्धं दिवा स्वप्नं च दुर्जरम् । अवश्यायमपि प्राज्ञो वसन्ते परिवर्जयेत् ॥ २ ॥

## ॥ अथ ग्रीष्मे हिताहितमाह ॥

स्वादु स्निग्धहिमं लघु द्रवमयं द्रव्यं रसालां सितां सक्तुक्षीरदशाङ्कुलानि सितया शालिं रसं मांसजम् । शीतांशुं स्वपनं दिवा मलयजं शीतं पयः पानकं सेवेतोष्णदिने त्यजेत्तु कटुकक्षाराम्लघर्मश्रमान् ॥ १ ॥ ऋतुष्वेषु य एतैस्तु विधिभिर्वर्तते नरः । दोषानृतुकृतान्नैव लभते स कदाचन ॥ २ ॥ तप्तं तप्तांशुकिरणैः शीतं शीतांशुरश्मिभिः । समन्तादप्यहोरात्रमगस्त्योदयनिर्विषम् ॥ ३ ॥ शुचि हंसोदकं नाम निर्मलं मलजिज्जलम् । नाभिष्यन्दि न वा रूक्षं पानादिष्वमृतोपमम् ॥ ४ ॥

## ॥ अथ जलगुणाः ॥

पानीयं शीतलं रूक्षं हन्ति पित्तविषभ्रमान् । दाहाजीर्णश्रमच्छर्दिमोहमूर्छामदात्ययान् ॥ १ ॥ मूर्छापित्तोष्मदाहेषु विषे रक्ते मदात्यये । भ्रमक्लमातिसारेषु मार्गोत्थवमथौ तथा ॥ ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ २ ॥

## ॥ अथोष्णवारिगुणाः ॥

यत्क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं भवेत् । अर्धावशिष्टं भवति तदुष्णोदकमुच्यते ॥ १ ॥ कफमेदोनिलामघ्नं दीपनं बस्तिशोधनम् । कासश्वासज्वरहरं पथ्यमुष्णोदकं सदा ॥ २ ॥ तप्तं पाथः पादभागेन हीनं पथ्यं प्रोक्तं वातजातामयघ्नम् । अर्धांशोनं नाशयेद्वातपित्तं पादप्रायं तत्तु दोषत्रयघ्नम् ॥ ३ ॥ तप्तायःपिण्डसंसिक्तं लोष्ठनिर्वापितं जलम् । सर्वदोषहरं पथ्यं सदा नैरुज्यकारकम् ॥ ४ ॥ उष्णोदकं श्रेष्ठतमं वदन्ति विश्वायवानीसहितं क्रमेण । कफे च वाते न च पित्तरोगे सर्वेषु रोगेषु न शीतलाम्बु ॥ ५ ॥

## ॥ अथ ऋतुविशेषे जलक्वाथनियमः ॥

शारदं चार्धपादोनं पादहीनं तु हैमतम् । शिशिरे च वसन्ते च ग्रीष्मे चार्धावशेषितम् ॥ विपरीते ऋतौ तद्वत्प्रावृष्यष्टावशेषितम् ॥ १ ॥

## ॥ अथ रात्रिसेवितोष्णोदकगुणाः ॥

भिनत्ति श्लेष्मसंघातं मारुतं चापकर्षति । अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि ॥ १ ॥

## ॥ अथ निषिद्धमुष्णोदकम् ॥

दिवा शृतं तु यत्तोयं रात्रौ तद्गुरुतां व्रजेत् । रात्रौ शृतं दिवा तद्वद्गुरुत्वमधिगच्छति ॥ १ ॥

## ॥ अथोष्णोदकप्रयोगः ॥

पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे । आध्माने स्तिमिते कोष्ठे सद्यः शुद्धे नवज्वरे ॥ हिक्कायां स्नेहपीते च शीताम्बु परिवर्जयेत् ॥ १ ॥

## ॥ अथोष्णवारिमन्दाचरणम् ॥

अरोचके प्रतिश्याये प्रसेके श्वयथुक्षये । मन्दाग्नावुदरे कोष्ठे ज्वरे नेत्रामये तथा ॥ व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ १ ॥

## ॥ अथ शृतशीतगुणाः ॥

गुल्मार्शोग्रहणीक्षयेषु जठरे मन्दानलाध्मानके शोफे पाण्डुगलग्रहे व्रणगदे मेहे च नेत्रामये । वातारुच्यतिसारके कफयुते कुष्ठे प्रतिश्यायके उष्णं वारि सुशीतलं शृतहिमं स्वल्पं प्रदेयं जलम् ॥ १ ॥

## ॥ अथोष्णजलविधिः ॥

आमं जलं जीर्यति याममात्रं तदर्धमात्रं शृतशीतलं च । तदर्धमात्रं तु शृतं कदुष्णं पयःप्रपाके त्रय एव कालाः ॥१॥ जलाधिक्यान्मनुष्याणामामवृद्धिः प्रजायते । आमवृद्ध्या तु मन्दाग्निर्मन्दाग्नौ चाप्यजीर्णता ॥२॥ अजीर्णेन ज्वरोत्पत्तिर्ज्वराद्वै धातुनाशनम् । धातुनाशात्सर्वरोगा जायन्ते चोत्तरोत्तरम् ॥ ३ ॥ शर्करासहितं नीरं कफकृत्पवनापहम् । सितासितोपलायुक्तं शुक्रलं दोषनाशनम् ॥ ४ ॥ सगुडं मूत्रकृच्छ्रघ्नं पित्तश्लेष्मकरं भवेत् । स्निग्धं स्वादु हिमं हृद्यं दीपनं बस्तिशोधनम् । वृष्यं पित्तपिपासाघ्नं नारिकेलोदकं लघु ॥ ५ ॥ इति जलगुणाः ॥

## ॥ अथ दुग्धगुणाः ॥

दीप्तानले कृशे पुंसि बाले वृद्धे रतिप्रिये । मतं हिततमं यस्मात्सद्यः शुक्रकरं पयः ॥१॥ जीर्णज्वरे मूत्रकृच्छ्रे रक्तपित्ते मदात्यये । कासे श्वासे प्रशंसन्ति गव्यं क्षीरं भिषग्वराः ॥ २ ॥ गोक्षीरं मधुरं शीतं गुरु स्निग्धं रसायनम् । बृंहणं स्तन्यकृद्बल्यं जीवनं वातपित्तनुत् ॥ ३ ॥ गव्यं माहिषमाजं च कारभं स्त्रैणमाविकम् । ऐभमैकशफं चेति क्षीरमष्टविधं मतम् ॥ ४ ॥

## ॥ अथ तत्र वर्णभेदाः ॥

कृष्णगव्या वरं क्षीरं वातपित्तकफप्रणुत् । पीताया वातपित्तघ्नं रक्ताया वातहृत्परम् ॥ १ ॥ चित्रायास्तद्वदाख्यातं श्वेतायाः श्लेष्मलं गुरु । बालवत्साविवत्सानां गवां क्षीरं त्रिदोषकृत् ॥ २ ॥ बष्कयण्यास्त्रिदोषघ्नं तर्पणं बलकृत्पयः । पिण्याकाद्यशनाज्जातं क्षीरं गुरु कफावहम् ॥ ३ ॥ निद्रारेतोबलस्थौल्यवह्निमन्द्यकरं हिमम् । कृष्णगव्या पयःफेनो ह्यजानां चातिशस्यते ॥ ४ ॥ मन्दाग्नीनां कृशानां च विशे-

षादतिसारिणाम् ॥ उत्साहदीपनं बल्यं मधुरं वातनाशनम् ॥ ५ ॥ सद्यो बलकरं दण्डतप्तक्षीरं विलोडितम् । क्षीणे ज्वरातिसारे च सामे च विषमे ज्वरे ॥ मन्दाग्नौ कफमाश्रित्य पयःफेनः प्रशस्यते ॥ ६ ॥

## ॥ अथ माहिषम् ॥

माहिषं मधुरं गव्यं स्निग्धं गुरु बलप्रदम् । निद्राशुक्रकरं शीतमभिष्यन्द्यग्निमान्द्यकृत् ॥ ११ ॥

## ॥ अथाजम् ॥

आजं गव्यगुणं ग्राहि विशेषाद्दीपनं लघु । हन्ति क्षयार्शोऽतिसारत्रिदोषास्रभ्रमज्वरान् ॥ १ ॥ अजानामल्पकायत्वात्कटुतिक्तनिषेवणात् । नात्यम्बुपानाद्व्यायामात्त्रिदोषघ्नमजापयः ॥ २ ॥

## ॥ अथाविकम् ॥

आविकं मधुरं केश्यं स्निग्धं वातकफापहम् । गुरुकालेऽनिलोद्भूते केवले चानिले वरम् ॥ १ ॥

## ॥ अथौष्ट्रम् ॥

औष्ट्रं स्वादु पयो रूक्षं लवणं लघुदीपनम् । क्रिमिकुष्ठकफानाहशोफोदरहरं परम् ॥ १ ॥

## ॥ अथैभम् ॥

हस्तिन्या दुर्जरं दुग्धं वातश्लेष्मकरं गुरु । मधुरं पित्तनुद्बल्यं शीतं श्रमवतां हितम् ॥ १ ॥

## ॥ अथाश्वम् ॥

आश्वमुष्णं पयो रूक्षं बल्यं श्वासानिलापहम् । अम्लं पटु लघु स्वादु सर्वमैकशफं तथा ॥ १ ॥

## ॥ अथ गार्दभम् ॥

श्वासवातहरं साम्लं लवणं रुचिदीप्तिकृत् । कफकासहरं बालरोगघ्नं गर्दभीपयः ॥ १ ॥

## ॥ अथ मानुषम् ॥

नार्या लघु पयः शीतं दीपनं वातपित्तजित् । चक्षुःशूलाभिघातघ्नं नस्याश्चोतनयोर्हितम् ॥ १ ॥ प्रलापमूर्च्छाभ्रमदाहयुक्ते तृषान्विते दोषसमूहमूर्तौ । पयोऽङ्गनानां पिबतां नराणाम् प्रागेव जूर्तिः प्रशमं प्रयाति ॥ २ ॥ स्तन्यं रुद्राक्षसंयुक्तं आहारार्थं प्रयोजयेत् । दोषज्वरेऽतिसारे च शूले च ग्रहणीगदे ॥ ३ ॥ पाण्डुरोगे क्षये चा-

१ (ग० ) क्षीरम् । २ ( ग० ) अल्पाम्बुपानात् । ३ ( ङ० ) सर्वव्याधिहरम् । ४ ( ग०घ०ङ० ) भ्रमवताम् । ५ (ग० ) चार्तिः ।

र्शःशोफे मन्दाग्निकेऽरुचौ । प्रसेके च प्रतिश्याये क्रमिरोगे भगन्दरे ॥ उदावर्ते विषूच्यां च स्तन्यपानं प्रशस्यते ॥ ४ ॥ मानुष्यं मधुरं स्तन्यं कषायानुरसं हिमम् । नस्याश्चोतनपथ्यं च जीवनं लघु दीपनम् ॥ ५ ॥

## ॥ अथ धारोष्णगुणाः ॥

धारोष्णं शस्यते गव्यं धाराशीतं तु माहिषम् । शृतोष्णमाविकं पथ्यं शृतशीतमजापयः ॥ १ ॥ पित्तघ्नं माहिषं क्षीरं वातघ्नं चाविकं पयः । वातपित्तहरं गव्यं त्रिदोषघ्नमजापयः ॥ २ ॥ धारोष्णं पवनप्रकोपशमनं दुग्धं गवां पुष्टिकृत्पाण्डुं कामलकां निहन्ति तरसा क्षीणोर्जकृच्छ्रीकरम् । दाहं देहगतं कराङ्घ्रिनयनज्वालां च पित्तोन्नतिं दुष्टास्रं कृशतां कृशानुजनितां कृच्छ्रांश्च रोगाञ्जयेत् ॥ ३ ॥

## ॥ अथापक्वदुग्धगुणाः ॥

आमं क्षीरमभिष्यन्दि गुरु श्लेष्मामवर्धनम् । तदपथ्यं भवेत्सर्वं गव्यमाहिषवर्जितम् ॥ १ ॥

## ॥ अथ क्वथितदुग्धगुणाः ॥

शृतोष्णं कफवातघ्नं शृतशीतं तु पित्तनुत् । अर्धोदकं क्षीरशिष्टमामाल्लघुतरं हितम् ॥ १ ॥ अक्वथितं दशघटिकाः क्वथितं द्विगुणाश्च ताः पयः पथ्यम् । उपसि रसाढ्यं यावत्तावद्दुविकृतपयः प्राश्यम् ॥ २ ॥ जीर्णज्वरे किन्तु कफे विलीने स्याद्दुग्धपानं तु सुधासमानम् । तदेव पीतं तरुणज्वरे च निहन्ति हालाहलवन्मनुष्यम् ॥ ३ ॥ चतुर्थभागं सलिलं निधाय यत्नाद्यदावर्तितमुत्तमं तत् । सर्वामयघ्नं बलपुष्टिकारि ओजःप्रदं क्षीरमतिप्रशस्तम् ॥ ४ ॥ बल्यं बृंहणमग्निवृद्धिजननं पूर्वाह्णकाले पयो मध्याह्ने बलदायकं रुचिकरं कृच्छ्राश्मरीच्छेदनम् । बाल्येष्वग्निकरं क्षये बलकरं वृद्धस्य रेतःप्रदं रात्रौ क्षीरमनेकदोपशमनं सेव्यं सदा प्राणिनाम् ॥ ५ ॥ नवज्वरे च मन्दाग्नौ ह्यामदोषेषु कुष्ठिनाम् । शूलिनां कफदोषेषु कासिनामतिसारिणाम् ॥ ६ ॥ पयःपानं न कुर्वीत विशेषात्क्रिमिदोषदम् । शर्करासहितं क्षीरं कफकृत्पवनापहम् ॥ ७ ॥ सितासितोपलायुक्तं शुक्रलं दोषनाशनम् । सगुडं मूत्रकृच्छ्रघ्नं पित्तश्लेष्मकरं तथा ॥ ८ ॥ क्षीरं न भुञ्जीत कदाप्यतप्तं तप्तं च नैतल्लवणेन सार्धम् । पित्तेन सन्धानकषायमुद्गकोशातकीकन्दफलादिकैश्च ॥ ९ ॥

## ॥ अथ क्षीरमित्राणि ॥

सहकारफलं चैव गोस्तनी माक्षिकं घृतम् । नवनीतं शृङ्गवेरं पिप्पली मरिचानि च ॥ १ ॥ सितापृथुकसिन्धूत्थं पटोलं नागराभयाः । क्षीरेण सह शस्यन्ते वर्गेषु मधुरादिषु ॥ २ ॥ आम्लेष्वामलकं पथ्यं शर्करा मधुरेषु च । पटोलं शाकवर्गेषु कटुकेष्वार्द्रकं भवेत् ॥ कषायेषु यवाश्चैव लवणेषु च सैन्धवम् ॥ ३ ॥

## ॥ अथ क्षीरामित्राणि ॥

मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः । शाकजाम्बवसुरादिसेवितं

मारयत्यबुधमाशु सर्पवत् ॥ १ ॥ नैकध्यं पयसाश्नीयात्सर्वं चोष्णं द्रवाद्रवम्। मूलकाद्या हरीतक्यास्तैलपिण्याकसर्षपाः ॥ २ ॥ कपित्थं जम्बु जम्बीरं पनसं मातुलिङ्गकम्। वांशं करीरं बदरं कदलीं चाम्लदाडिमम् ॥ ३ ॥ फलमीदृग्विधं चान्यत्तद्वद्बिल्वफलान्यपि। क्षीरे विरुद्धं नैकध्यं सह वै भुज्यते यदि ॥ ४ ॥ बाधिर्यमान्ध्यं वैवर्ण्यं मूकत्वं चाथ मारणम् ॥

## ॥ अथ सन्तानिकागुणाः ॥

सन्तानिका स्वानुरूपा शृतदुग्धोपरि स्थिता। सन्तानिका गुरुः शीता वृष्या पित्तास्रवातनुत् ॥ १ ॥

## ॥ अथ दधिगुणाः ॥

गव्यं दध्युत्तमं बल्यं पाके स्वादु रुचिप्रदम्। पवित्रं दीपनं स्निग्धं पुष्टिकृत्पवनापहम् ॥ १ ॥ माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत्। स्वादुपाकमभिष्यन्दि वृष्यं गुर्वस्रदूषणम् ॥ २ ॥ आजं दध्युत्तमं ग्राहि लघु दोषत्रयापहम्। शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनम् ॥ ३ ॥

## ॥ अथ निःसारदुग्धदधिगुणाः ॥

असारं दधि संग्राहि कषायं वातलं लघु। विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम् ॥ १ ॥

## ॥ अथ मन्ददधिगुणाः ॥

विदाहि सृष्टविण्मूत्रं मन्दजातं त्रिदोषजित्। सशर्करं दधि श्रेष्ठं तृष्णापित्तास्रदाहजित् ॥ १ ॥ मन्दं दुग्धवदव्यक्तरसं किञ्चिद्घनं भवेत्। मन्दं स्यात्सृष्टविण्मूत्रं दोषत्रयविदाहकृत् ॥ २ ॥ सगुडं वातनुद्वृष्यं बृंहणं तर्पणं गुरु। न रात्रौ दधि सेवेत न चाप्यघृतशर्करम् ॥ ३ ॥ नामुद्गसूपं नाक्षौद्रं नोष्णं नामलकैर्विना। शस्यते दधि नो रात्रौ शस्तं चाम्बुघृतान्वितम् ॥ ४ ॥ रक्तपित्तकफोत्थेषु विकारेषु हितं न तत्। मूत्रकृच्छ्रे प्रतिश्याये शीतगे विषमज्वरे ॥ ५ ॥ अतिसारेऽरुचौ कार्श्ये दिवा च दधि शस्यते। हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ॥ ६ ॥ शरद्ग्रीष्मवसन्तेषु प्रायशस्तद्विगर्हितम्। दध्नस्तूपरि यत्तोयं तन्मस्तु परिकीर्तितम् ॥ ७ ॥ मस्तु क्लमहरं बल्यं लघु भक्ताभिलाषकृत्। स्रोतोविशोधनाल्हादि कफतृष्णानिलापहम् ॥ अवृष्यं प्रीणनं शीघ्रं भिनत्ति मलसंग्रहम् ॥ ८ ॥

## ॥ अथ सरगुणाः ॥

दध्नस्तूपरि भागो यो घनः स्नेहसमन्वितः। लोके सर इति ख्यातो दध्नो वीरि तु मस्त्विति ॥ १ ॥ सरः स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशनः। बस्तेर्विधमनश्चाम्लपित्तश्लेष्मविवर्धनः ॥ २ ॥ इति दधिगुणाः ॥

---

१ ( ख० ग० ड० ) पित्तास्रदूषणम्। २ ( ख० ) मण्डस्तु भण्यते।

## ॥ अथ तक्रगुणाः ॥

घोलं मथितमुदश्वित्तक्रं चतुर्विधं ज्ञेयम् ॥ ससरं निर्जलं घोलं मथितं सरंवर्जितम् । तक्रं पादजलं प्रोक्तमुदश्विच्चार्धवारिकम् ॥ १ ॥ दिवोदासप्रभृतयस्तक्रमर्धजलं जगुः । पादतोयं विनिगदन्त्युदश्विदपि तत्तथा ॥ २ ॥ वातपित्तहरं घोलं मथितं कफपित्तनुत् । तक्रं त्रिदोषशमनं मुदश्वित्कफदं स्मृतम् ॥ ३ ॥ गव्यं तु दीपनं तक्रं मेध्यमर्शस्त्रिदोषनुत् । हितं गुल्मातिसारेषु प्लीहार्शोग्रहणीगदे ॥ ४ ॥ माहिषं श्लेष्मलं तक्रं सान्द्रं शोफकरं गुरु । सुस्निग्धं छागलं तक्रं लघु दोषत्रयापहम् ॥ ५ ॥ गुल्मार्शोग्रहणीशोफपाण्ड्वामयविनाशनम् । वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम् ॥ ६ ॥ पिबेत्तक्रं कफे रूक्षं व्योषक्षारसमन्वितम् । मूत्रकृच्छ्रे तु सगुडं पाण्डुरोगे सचित्रकम् ॥ ७ ॥ हिङ्गुजीरयुतं घोलं सैन्धवेनावधूलितम् । तद्भवेदतिवातघ्नमर्शोऽतीसारनाशनम् ॥ ८ ॥ सुरुच्यं पुष्टिदं बल्यं बस्तिशूलविनाशनम् । शीतकालेऽग्निमान्द्ये च कफवातामयेषु च ॥ ९ ॥ अरुचौ स्रोतसां रोधे तक्रं स्यादमृतोपमम् । नैव तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले ॥१०॥ न मूर्छाभ्रमदाहेषु न रोगे रक्तपित्तजे । तक्रं तल्लवणोपेतं दीपनं ग्रहणीगदे ॥ तक्रं लवणहीनं यद्ग्रहण्यर्शोविकारकृत् ॥ ११ ॥ क्षुद्वर्धनं नेत्ररुजापहं च प्राणप्रदं शोणितमांसदं च । आमाभिघातं कफवातहन्तृ त्वष्टौ गुणा वै कथिता हि तक्रे ॥ १२ ॥

## ॥ अथ क्वथिततक्रगुणाः ॥

तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च । पीनसश्वासकासादौ पक्वमेव विशिष्यते ॥ १ ॥ न तक्रसेवी व्यथते कदाचिन्न तक्रदग्धाः प्रभवन्ति रोगाः । यथा सुराणाममृतं निधानं तथा नराणां भुवि तक्रमाहुः ॥२॥ तक्राल्लघुतरो मन्थः कूर्चिका दधितक्रवत् । गोऽजाविमहिषीतक्रं तद्वद्दधिगुणाः पृथक् ॥ ३ ॥ कैलासे यदि तक्रमस्ति गिरिशः किं नीलकण्ठो भवेद्वैकुण्ठे यदि कृष्णतामनुभवेदद्यापि किं केशवः । इन्द्रो दुर्भगतां क्षयं द्विजपतिर्लम्बोदरत्वं गणः कुष्ठित्वं च कुबेरको दहनतामग्निश्च किं विन्दति ॥ ४ ॥ इति तक्रगुणाः ॥

## ॥ अथ नवनीतम् ॥

नवनीतं हिमं गव्यं वृष्यं वर्णबलाग्निकृत् । संग्राहि वातपित्तार्शःक्षयेष्वर्दितकासजित् ॥ १ ॥ तद्धितं बालके वृद्धे विशेषादमृतं शिशोः । माहिषं नवनीतं तु वातश्लेष्मकरं गुरु ॥ २ ॥ दाहपित्तश्रमहरं मेदःशुक्रविवर्धनम् । आजं त्रिदोषशमनं नवनीतं तयोर्वरम् ॥ ३ ॥ क्षीरोत्थं तदतिस्निग्धं चक्षुष्यं रक्तपित्तनुत् । वृष्यं बलकरं ग्राहि मधुरं शीतलं परम् ॥ ४ ॥ नवनीतं तु सद्यस्कं स्वादु ग्राहि हिमं लघु । मेध्यं किञ्चित्कषायाम्लमीषत्तक्रांशसंक्रमात् ॥ ५ ॥

---

१ (ख०) रसवर्जितम् । २ (ख० ग० घ० ङ०) प्रधानम् ।

## ॥ अथ चिरन्तननवनीतगुणाः ॥

सक्षारकटुकाम्लत्वाच्छर्द्यर्शःकुष्ठकोपनम् । श्लेष्मलं गुरु मेदस्यं नवनीतं चिरन्तनम् ॥ २ ॥ इति नवनीतगुणाः ॥

## ॥ अथ घृतगुणाः ॥

धीकान्तिस्मृतिकारकं बलकरं मेधाकरं शुद्धिकृद्वातघ्नं श्रमनाशनं स्वरकरं पित्तापहं पुष्टिदम् । वह्नेर्वृद्धिकरं विपाकमधुरं वृष्यं वपुःस्थैर्यदं सेव्यं गव्यघृतोत्तमं बहुगुणं सद्यः समावर्तितम् ॥ १ ॥ सर्पिर्गवां चामृतकं विषघ्नं चक्षुष्यमारोग्यकरं च वृष्यम् । रसायनं मन्दमतीवमेध्यं स्नेहोत्तमं चेति बुधाः स्तुवन्ति ॥ २॥ इति गव्यम् ॥

## ॥ अथ माहिषम् ॥

सर्पिर्माहिषमुत्तमं धृतिकरं सौख्यप्रदं कान्तिदं वातश्लेष्मनिवर्हणं बलकरं वर्णप्रसादक्षमम् । दुर्नामग्रहणीविकारशमनं मन्दानलोद्दीपनं चक्षुष्यं नवगव्यतः परमिदं हृद्यं मनोहारि च ॥ १ ॥

## ॥ अथ आजम् ॥

आजं घृतं दीपनं च चक्षुष्यं बलवर्धनम् । कासे श्वासे क्षये वापि पथ्यं पानेषु तल्लघु ॥ १ ॥

## ॥ अथाविकम् ॥

आविकं घृतमतीवगुरुत्वाद्वर्ज्यमेव सुकुमारनराणाम् । सद्य एव बलपुष्टिकरं स्यादौष्ट्रिकं श्वयथुनाशकरं च ॥ १ ॥ इत्याविकमौष्ट्रं च ॥

## ॥ अथ नूतनघृतगुणाः ॥

योजयेन्नवमेवाज्यं भोजने तर्पणे श्रमे । बलक्षये पाण्डुरोगे कामलानेत्ररोगयोः ॥ १ ॥

## ॥ अथ पुराणघृतम् ॥

सर्पिः पुराणं विज्ञेयं दशवर्षं स्थितं तु यत् । सर्पिः पुरातनं श्रेष्ठं त्रिदोषतिमिरापहम् ॥ १ ॥ मूर्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् । दशसंवत्सरादूर्ध्वमाज्यमुक्तं रसायनम् ॥ २ ॥ शतवर्षस्थितं यत्तु कुम्भसर्पिस्तदुच्यते । रक्षोघ्नं कुम्भसर्पिः स्यात् परतस्तु महाघृतम् ॥ ३ ॥ पेयं महाघृतं भूतैः सर्वतोऽपि गुणाधिकम् । यथा यथा जरां याति गुणवत्स्यात्तथा तथा ॥ ४ ॥ भक्षणात् कालरोगघ्नमञ्जनान्नेत्ररोगजित् । शिरोऽभ्यङ्गादूर्ध्वजत्रुरोगघ्नं तत्पुरातनम् ॥ ५ ॥

## ॥ अथ रोगविशेषे घृतनिषेधः ॥

राजयक्ष्मणि बाले च वृद्धे श्लेष्माश्रये गदे । रोगे सामे विषूच्यां च विबन्धे च मदात्यये ॥ ज्वरे मन्दानले मेहे न सर्पिर्बहु मन्यते ॥ १ ॥ इति घृतगुणाः ॥

## ॥ अथ तैलगुणाः ॥

सर्वं वातहरं तैलं विशेषात्तिलसंभवम् । तैलं संयोगसंस्कारात् सर्वरोगहरं स्मृतम् ॥ १ ॥ तिलतैलमलङ्करोति केशान्मधुरं तिक्तकषायमुष्णतीक्ष्णम् । बलकृत्कफवातजन्तुखर्जूव्रणकण्डूतिहरं च कान्तिदायि ॥ २ ॥ कण्डूहरं कान्तिविवर्धनं च वर्चोविवृद्धिं व्रणरोपणं च । तिलस्य जातं खलु यच्च तैलं बालेषु वृद्धेष्वपि पथ्यमेतत् ॥ ३ ॥ न पित्तरोगे न च शोणिते च पथ्यं महावातविकारसंघे । तिलोद्भवं तैलमुदाहरन्ति वाताश्रितान् हन्ति समस्तदोषान् ॥ ४ ॥ इति तिलतैलम् ॥

## ॥ अथैरण्डतैलम् ॥

तैलमेरण्डजं बल्यं गुरूष्णं मधुरं सरम् । तिक्तोष्णं पित्तलं विस्रं रक्तैरण्डोद्भवं भृशम् ॥ १ ॥ एरण्डतैलं कृमिनाशनं च सर्वत्र शूलघ्नमरुत्प्रणाशम् । कुष्ठापहं चापि रसायनं च पित्तप्रकोपानिलशोधनं च ॥ २ ॥ वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम् । वातशूलगजेन्द्राणामेरण्डस्नेहकेसरी ॥ ३ ॥ इत्येरण्डतैलम् ॥

## ॥ अथ सार्षपतैलम् ॥

सार्षपं कृमिनुत्तैलं कुष्ठकण्डूहरं लघु । पित्तास्रदूषणं हन्ति मेदःकर्णशिरोग्रहान् ॥ १ ॥

## ॥ अथ कुसुम्भतैलम् ॥

कुसुम्भतैलं विष्टम्भि पाके च कटुकं गुरु । विदाहि च विशेषेण सर्वदोषप्रकोपणम् ॥ १ ॥

## ॥ अथ राजिकातैलम् ॥

सार्षपेण समं तैलं राजिकायाश्च कृच्छ्रजित् । कण्डूपामाहरं कुष्ठकृमिनुत्तीक्ष्णकं पुनः ॥ १ ॥

## ॥ अथ क्षौमादितैलगुणाः ॥

क्षौमं तैलमचक्षुष्यं पित्तकृद्वातनाशनम् । अक्षजं कफवातघ्नं केश्यं दृक्श्रोत्रतर्पणम् ॥ १ ॥ इत्यतसीविभीतकतैलम् ॥

ज्योतिष्मतीभवं तैलं पित्तलं स्मृतिबुद्धिदम् । निम्बतैलं जयेत्कुष्ठव्रणमेहमहाकृमीन् ॥ २ ॥

## ॥ अथ धान्यतैलम् ॥

सर्वधान्यसमावर्तजातानि फलजानि च । तैलवन्ति[1] तल्लेपः खर्जूकण्डूविनाशनः ॥ १ ॥ इति तैलानि ॥

---

१ ( ख० ग० घ० ङ० ) श्यामापहम् ।

## ॥ अथ मधुगुणाः ॥

त्रिदोषघ्नं मधु प्रोक्तमन्यत्स्यात्सन्निपातहम् । हिक्काश्वासकृमिच्छर्दिमोहतृष्णाविषापहम् ॥ १ ॥ माक्षिकं भ्रामरं क्षौद्रं पौतिकं छात्रमेव च । आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥ २ ॥ माक्षिकं तैलसंकाशं भ्रामरं स्फटिकोज्ज्वलम् । क्षौद्रं कपिशवर्णं च पौतिकं तैलसन्निभम् ॥ ३ ॥ छात्रं तत्पीतकपिलमार्घ्यं श्वेतपिशङ्गकम् । औद्दालं पीतकपिलं नानावर्णं तु दालकम् ॥ ४ ॥ माक्षिकं मधुकं श्रेष्ठं नेत्रामयहरं लघु । पौतिकं लघु संग्राहि कफघ्नं वातपित्तकृत् ॥ ५ ॥ क्षौद्रं माक्षिकवज्ज्ञेयं विशेषान्मेहनाशनम् । भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरं गुरु ॥ ६ ॥ नवीनं मध्वभिष्यन्दि स्निग्धं श्लेष्महरं सरम् । पुराणं ग्राहि तद्रूक्षं मेदोघ्नमतिलेखनम् ॥ ७ ॥ त्रिदोषशोषज्वरनाशनं च श्वासं प्रमेहं व्रणशोधनं च । पित्तं च तृष्णां नयने जलं च रक्तं च गुल्मं कृमिशूलकुष्ठम् ॥ ८ ॥ शस्त्राभिघातं ह्युरसोऽभिघातं क्षयं प्रमेहं ह्युदरं च हिक्काम् । पित्तातिसारं ग्रहणीगदं च सर्वांश्च रोगान्विनिहन्ति क्षौद्रम् ॥ ९ ॥

## ॥ अथ विशिष्टगुणाः ॥

क्षये माक्षिकमुद्दिष्टं भ्रामरं रक्तपित्तनुत् । क्षौद्रं मेहहरं प्राहुर्व्रणे पौतिकमुत्तमम् ॥ १ ॥ छात्रं सर्वत्र शस्तं स्यादार्घ्यं चक्षुष्यमुत्तमम् । औद्दालकं कुष्ठहरं रुचिकृद्दालमीरितम् ॥ २ ॥ एते विशिष्टाः कथिता मधुनो मुनिभिर्गुणाः । प्रस्थं च मधुनः क्षीरं गवां च कुडवद्वयम् ॥ ३ ॥ निशाभयारजो दद्यात्प्रत्येकं च पलं पलम् । मध्वावसानं विपचेन्मधुपाके त्वयं विधिः ॥ ४ ॥ इति मधुगुणाः ॥

## ॥ अथेक्षुगुणाः ॥

इक्षुः स्वादुर्गुरुः शीतो वृष्यः स्निग्धो बलप्रदः । जीवनो वातपित्तघ्नः कुर्यान्मूत्रकफक्रिमीन् ॥ १ ॥ स मूले मधुरोऽत्यर्थं मध्ये मधुर एव च । अग्रे ग्रन्थिषु विज्ञेयो लवणो रसतस्तथा ॥ २ ॥ इति सामान्येक्षुः ॥

लोहितेक्षुर्गुरुः शीतो दाहपित्तास्रकृच्छ्रजित् । पौण्ड्रकः शीतलः स्निग्धो बृंहणः कफकृत्सरः ॥ १ ॥ कृष्णेक्षुस्तद्गुणैर्ज्ञेयो विशेषाद्दाहनाशनः । वंशेक्षुरीषत्कफकृद् वृष्यः स्निग्धो विबन्धनुत् ॥ २ ॥ कृत्वा पौण्ड्रकखण्डकान्सुरुचिरांश्चन्द्रांशुभिर्भाविता, न्प्रत्यूषेऽथ यथाबलं भजति यो युक्त्या ज्वरार्तश्चिरम् । मुक्तः स्यादचिरेण शीतकसुखाज्जीर्णज्वराद्यक्ष्मतः पित्तं याति शमं प्रयाति वपुषः पुष्टिं बलं पावकः ॥ ३ ॥ वृष्यो रक्तास्रपित्तश्रमशमनपरः शीतलः श्लेष्मदोऽल्पः स्निग्धो हृद्यश्च रुच्यो रचयति स मुदं मूत्रशुद्धिं विधत्ते । कान्तिं देहस्य धत्ते बलमपि कुरुते बृंहणस्तृप्तिदायी दन्तैर्निष्पीड्य काण्डे मृदु यदि रसितो भक्षितश्चेक्षुदण्डः ॥ ४ ॥ अभुक्ते पित्तहन्तारो भुक्ते पित्तप्रकोपणाः । भुक्तिमध्ये गुरुतमा इतीक्षूणां गुणास्त्रयः ॥ ५ ॥

## ॥ अथ फाणितम् ॥

फाणितं गुर्वभिष्यन्दि दोषलं मूत्रशोधनम् ॥ १ ॥

## ॥ अथ गुडः ॥

गुडः समधुरक्षारो गुरूष्णः कफवातनुत् । अहितः पित्तरक्ते च जीर्णश्चैव रसायनः ॥ १ ॥

## ॥ अथ जीर्णगुडगुणाः ॥

पित्तघ्नः पवनापहो रुचिकरो हृद्यस्त्रिदोषार्तिनुत् संयोगेन विशेषतो ज्वरहरः संतापशान्तिप्रदः। विण्मूत्रामयनाशनोऽग्निजननः पाण्डुप्रमेहापहः स्निग्धः स्वादुरसो लघुः श्रमहरः पथ्यः पुराणो गुडः ॥ १ ॥

## ॥ अथ शर्करागुणाः ॥

सितोपला सरा गुर्वी वातपित्तहरा हिमा । वृष्या श्रमक्लमच्छर्दिदाहमूर्छामदापहा ॥ १ ॥ इति शर्करा ॥

## ॥ अथ रायपुरी ॥

रुच्या पुष्टिप्रदा स्निग्धा मोहदाहमदभ्रमान् । निहन्ति खण्डशिशिरो गुरुः पित्तसमीरजित् ॥१॥ अथातिश्वेतशर्करा* । सिता हिमा सरा वृष्या बलतृप्तिकरा लघुः । तृट्क्लमश्रमपित्तास्रदाहमोहानिलापहा ॥ २ ॥ माधवी शर्करा रूक्षा कफपित्तास्रजिद्गुरुः ॥ इति मधुशर्करा ॥

## ॥ अथ मूत्राष्टकम् ॥

माहिषाजाविगोऽश्वानां खराणामुष्ट्रहस्तिनाम् । मूत्राष्टकमिति ख्यातं सर्वशास्त्रेषु संमतम् ॥ १ ॥

गोमूत्रं कटु तिक्तोष्णं सक्षारं लेखनं सरम् । लघ्वग्निदीपनं मेध्यं पित्तलं कफवातजित् ॥ २ ॥

शूलगुल्मोदरानाहविकारे स्थापनादिषु । मूत्रप्रयोगसारेषु गव्यं मूत्रं प्रयोजयेत् ॥३॥

कासश्वासापहं शोफकामलापाण्डुरोगजित् । छागं रूक्षोष्णकटुकमीषन्मारुतकोपनम् ॥ ४ ॥

प्लीहोदरश्वासकासशोफवर्चोग्रहे हितम् । सक्षारकटुकं तिक्तमुष्णवातघ्नमाविकम् ॥ ५ ॥

दुर्नामोदरशूलेषु कुष्ठमेहविषूचिषु । आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम् ॥ ६ ॥

सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम् । तीक्ष्णं क्षारं किलासे च गजमूत्रं प्रयोजयेत् ॥ ७ ॥

---

* सिता मत्स्यण्डिका पक्षीति मदनपालनिघण्टुः

दीपनं कटु तीक्ष्णोष्णं वातरोगविकारनुत् । आश्वं कफहरं रूक्षं कृमिदद्रुविनाशनम् ॥ ८ ॥

औष्ट्रं कुष्ठोदरोन्मादशोफार्शःकृमिवातनुत् । गरचेतोविकारघ्नं तीक्ष्णं जठररोगजित् ॥ ९ ॥

दीपनं गार्दभं मूत्रं कृमिवातकफापहम् । कषायतिक्तमेतेषु हिक्काश्वासहरं परम् ॥ १० ॥

पित्तरक्तक्रिमिहरं रेचनं कफवातजित् । तिक्तं मेदोहरं मूत्रं मानुषं तु विषापहं ॥ ११ ॥ इत्यष्ट मूत्राणि ॥

## ॥ अथ त्रिफला ॥

एका हरीतकी योज्या द्वौ च योज्यौ विभीतकौ । चत्वार्यामलकान्येव त्रिफलैषा प्रकीर्तिता ॥ १ ॥ त्रिफला शोथमेहघ्नी नाशयेद्विषमज्वरान् । दीपनी श्लेष्मपित्तघ्नी कुष्ठहन्त्री रसायनी ॥ सर्पिर्मधुभ्यां संयुक्ता सैव नेत्रामयाञ्जयेत् ॥ २ ॥

## ॥ अथ त्रिकटु ॥

पिप्पली मरिचं शुण्ठी त्रयमेतद्विमिश्रितम् । त्रिकटु त्र्यूषणं व्योषं कटुत्रिकमथोच्यते ॥ दीपनं रुचिदं वातश्लेष्ममन्दाग्निशूलनुत् ॥ १ ॥

## ॥ अथ पञ्चकोलम् ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः । एकत्र मिश्रितैरेभिः पञ्चकोलकमुच्यते ॥ १ ॥ पञ्चकोलं त्रिदोषघ्नं रुच्यं दीपनपाचनं । स्वरमेदोहरम्[1] चैव शूलगुल्मार्तिनाशनम् ॥ २ ॥ इति पञ्चकोलम् ॥

## ॥ अथ षडूषणम् ॥

पञ्चकोलं समरिचं षडूषणमुदीर्यते । पञ्चकोलगुणं तत्तु विशेषाद्वह्निवर्धनम् ॥ १ ॥ इति षडूषणम् ॥

## ॥ अथ चतुरूषणम् ॥

त्र्यूषणं ग्रन्थिकयुतं जायते चतुरूषणम् । चतुरूषणमाख्यातं गुणैस्त्र्यूषणवद्बुधैः ॥ कफाग्निमान्द्यविष्टम्भारुचिपीनसकासनुत् ॥ १ ॥

## ॥ अथ चातुर्जातम् ॥

त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । नागकेसरसंयुक्तं चातुर्जातकमुच्यते ॥ १ ॥ स्वरभेदश्वासकासमुखदोषविनाशनम् । वृष्यं बल्यं च योगार्हं चातुर्जातं रसायनम् ॥ २ ॥

## ॥ अथ दशमूलम् ॥

बिल्वोऽग्निमन्थः स्योनाकः काश्मरी पाटला स्थिरा । त्रिकण्टकः पृश्निपर्णी ।

---

१ (ख० ग० क०) मोहहरम् । २ (ख०) विष्टम्भ ।

बृहती कण्टकारिका । दशमूलमिदं श्वाससन्निपातज्वरापहम् ॥ १ ॥ शालिपर्णी पृश्निपर्णी बृहती कण्टकारिका । तथा गोक्षुरसंयुक्तं पञ्चमूलमिदं लघु ॥ २ ॥ बिल्वोऽग्निमन्थः स्योनाकः काश्मरी चाथ पाटला । ज्ञेयं महत्पञ्चमूलं दशमूलमुभे युते ॥ ३ ॥ पञ्चमूलं त्रिदोषघ्नं वातघ्नं दशमूलकम् । ज्वरकासश्वासशूलमन्दाग्न्यरुचिनाशनम् ॥ ४ ॥ इति दशमूलगुणाः ॥

## ॥ अथ मध्यमपञ्चमूलानि ॥

बलापुनर्नवैरण्डसूर्यपर्णीद्वियेन च । मध्यमं कफवातघ्नं नातिपित्तकरं परम् ॥१ ॥

## ॥ अथ पञ्चवल्कलानि ॥

न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । सर्वैरेकत्र मिलितैः पञ्चवल्कलमुच्यते ॥१॥ रसे कषायशीतं च वर्ण्यं दाहतृषापहम् । योनिदोषं कफं शोफं हन्तीदं पञ्चवल्कलम् ॥ २ ॥

## ॥ अथ पञ्चभृङ्गगुणाः ॥

देवदाली शमी भृङ्गी निर्गुण्डी शमकं तथा । रोगार्ते स्नानपानार्हं पञ्चभृङ्गमितिस्मृतम् ॥ १ ॥

## ॥ अथाम्लपञ्चकम् ॥

बीजपूरकजम्बीरं नारिङ्गं साम्लवेतसम् । फलपञ्चाम्लकं ख्यातं तिन्तिडीसहितं परम् ॥ पञ्चाम्लकं समुद्दिष्टं तथोक्तं चापि पञ्चकम् ॥ १ ॥

## ॥ अथ पञ्चाङ्गानि ॥

त्वक्पत्रफलमूलानि पुष्पाण्येकस्य शाखिनः । पञ्चाङ्गमिति बोद्धव्यं प्राज्ञैरेकत्र मिश्रितम् ॥ १ ॥

## ॥ अथ संतर्पणगुणाः ॥

द्राक्षादाडिमखर्जूरैर्मर्दिताम्बु सशर्करम् । लाजाचूर्णं सुमध्वाढ्यं संतर्पणमुदाहृतम् ॥ १ ॥ तर्पणं शीतलं पाने नेत्ररोगविनाशनम् । बल्यं रसायनं हृद्यं वीर्यवृद्धिकरं परम् ॥ २ ॥

## ॥ अथ यक्षकर्दमगुणाः ॥

कुङ्कुमागुरुकर्पूरकस्तूरीचन्दनानि च । महासुगन्ध इत्युक्तो नामतो यक्षकर्दमः ॥ १ ॥ यक्षकर्दम एवं स्याच्छीतस्त्वग्दोषहृच्च यः । सुगन्धिः कान्तिदश्चैव शिरोऽर्तिविषनाशनः ॥ २ ॥

## ॥ अथ केशरनामगुणाश्च ॥

ज्ञेयं कुङ्कुममग्निशेखरमसृक्काश्मीरजं पीतकं काश्मीरं रुचिरं वरं च पिशुनं[1]

---

१ ( ख० ग० घ० ङ० ) मानार्हम् ।

रक्तं शठं शोणितम् । बाल्हीकं घुसृणं वरेण्यमसृणं कालेयकं जागुडं कान्तं वह्निशिखं च केशरवरं गौरीवराक्षीरितम् ॥ १ ॥ कुङ्कुमं सुरभितिक्तकटूष्णं कासवातकफकण्ठरुजाघ्नम् । मूर्धशूलविषदोषविमोचं रोचनं च तनुकान्तिकरं च ॥ २ ॥ वसन्तकाले घुसृणेन युक्तः कस्तूरिकाचन्दनचारुलेपः । आवासितश्चेन्नवमल्लिकाभिस्त्रिदोषजिन्मन्मथजन्मभूमिः ॥ ३ ॥

## ॥ अथ पञ्चसुगन्धिकगुणाः ॥

कक्कोलकं पूगफलं लवङ्गकुसुमानि च । जातीफलानि कर्पूरमेतत्पञ्चसुगन्धिकम् ॥ १ ॥ सुगन्धिपञ्चकं शीतं रक्तपित्तविनाशनम् । हन्त्याशु मुखवैगन्ध्यं पीनसं वा कफास्रजित् ॥ २ ॥

## ॥ अथ षड्रसाः ॥

कटुस्तिक्तः कषायश्च लवणोऽम्लस्तु पञ्चमः । मधुरेण समायुक्ताः कथिताः षड्रसा अमी ॥ १ ॥

## ॥ अथ मधुरत्रिकम् ॥

घृतं गुडोऽथ मांक्षीकं विज्ञेयं मधुरत्रयम् । ज्ञेयं त्रिमधुरं चैव प्रोक्तं च मधुरत्रयम् ॥ १ ॥

## ॥ अथ समत्रिकम् ॥

हरीतकी नागरं च गुडं चैकत्र मिश्रितम् । त्रिसमं भाष्यते प्राज्ञैस्तथा चापि समत्रिकम् ॥ १ ॥

## ॥ अथ क्षारत्रयम् ॥

सर्जिक्षारो यवक्षारष्टङ्कणक्षार एव च । क्षारत्रयं समाख्यातं त्रिक्षारं च प्रकीर्तितम् ॥ १ ॥

## ॥ अथ क्षारपञ्चकम् ॥

पलाशतिलमुष्काणां क्षाराः स्वर्जियवाग्रजैः । समांशमिलिताः पञ्च क्षारपञ्चकमादिशेत् ॥ १ ॥

## ॥ अथ क्षाराष्टकम् ॥

अपामार्गपलाशार्कतिलमुष्कयवाग्रजम् । सर्जिटङ्कणसंयुक्तं क्षाराष्टकमुदाहृतम् ॥ १ ॥

## ॥ अथ क्षारद्वयम् ॥

स्वर्जिका यावशूकश्च क्षारद्वयमुदाहृतम् । ज्ञेयौ वह्निसमौ क्षारौ स्वर्जिकायावशूकजौ ॥ १ ॥ क्षाराश्चान्येऽपि गुल्मार्शोग्रहणीरुक्छिदः सराः । पाचनाः कृमिपुंस्त्वघ्नाः शर्कराश्मरिनाशनाः ॥ २ ॥ इति क्षारौ ॥

---

१ (ख० ग० घ०) जाकुडम्। २ (घ०) सर्जिका।

## ॥ अथ लवणत्रयम् ॥

सैन्धवं रुचकं चैव बिडं च लवणत्रयम् । एतत्रिलवणं प्रोक्तं नामतः शास्त्रकोविदैः ॥ १ ॥

## ॥ अथ लवणपञ्चकम् ॥

सौवर्चलं सैन्धवं च बिडमौद्भिदमेव च । सामुद्रेण समायुक्तं ज्ञेयं लवणपञ्चकम्॥१॥ एकद्वित्रिचतुःपञ्चलवणानि क्रमाद्विदुः । मधुरं सृष्टविण्मूत्रं स्निग्धं सूक्ष्मं बलापहम् ॥ वीर्योष्णं दीपनं तीक्ष्णं कफहृत्पित्तवर्धनम् ॥ २ ॥

## ॥ अथ लवणषट्कम् ॥

सामुद्रं सिन्धुरुचकं बिडं रोमकपांशवम् । षडेते च समाख्याता लवणाः शास्त्रकोविदैः ॥ १ ॥

## ॥ अथ चन्दनम् ॥

स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितम् । ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते ॥ १ ॥ चन्दनं शीतलं रूक्षं तिक्तमाल्हादनं लघु । हृद्यं वर्ण्यं विषश्लेष्मतृष्णापित्तास्रदाहजित्॥२॥ कालीयकं रक्तगुणं विशेषाद्रोगनाशनम् । कृष्णागुरूष्णं कर्णाक्षिरोगनुच्छीतलं लघु ॥ ३ ॥

## ॥ अथ गुडूचीसत्त्वगुणाः ॥

छिन्नासत्त्वं हरति सकलं दुस्तरं तीव्रतापं काले चोक्तं भवति च नृणां यौवनेषु ज्वरेषु । दाहं मेहं ज्वरमरुचितृट्श्वासपाण्डुर्शहिक्काः स्त्रीणां रक्तप्रदरजनिते रोगराजेऽपि युक्तम्॥ १ ॥

## ॥ अथ स्वरसादयः ॥

अथात्र स्वरसः कल्कः क्राथश्च हिमफाण्टकौ । ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् ॥ १ ॥

## ॥ अथ स्वरसकल्पना ॥

आहतात्तत्क्षणात्कृष्टाद् द्रव्यात्क्षुण्णात्समुद्भवेत् । वस्त्रनिष्पीडितो यः स्यात्स्वरसो रस उच्यते ॥१॥ कुडवं चूर्णितं द्रव्यं क्षिप्तं च द्विगुणे जले । अहोरात्रं स्थितं तस्माद्भवेद्वा रस उत्तमः ॥ २ ॥ आदाय शुष्कं द्रव्यं वा स्वरसानामसम्भवे । जलेऽष्टगुणिते साध्यं पादशिष्टं च गृह्यते ॥ ३ ॥ स्वरसस्य गुरुत्वाच्च पलमर्धं प्रयोजयेत् । निःशोषितं चाग्निसिद्धं पलमात्रं रसं पिबेत् ॥ ४ ॥ मधुश्वेतागुडक्षाराञ्जीरकं लवणं तथा । घृतं तैलं च चूर्णादीन् कोलमात्रान्रसे क्षिपेत् ॥ ५ ॥ स यथा । अमृताया रसः क्षौद्रयुक्तः सर्वप्रमेहजित् । हरिद्राचूर्णयुक्तो वा रसो धात्र्याः समाक्षिकः ॥ ६ ॥

---

१ (ख० ग०) आहतात्तत्क्षणात्कृष्टात् ।

## ॥ अथ पुटपाककल्पना ॥

पुटपाकस्य मात्रेयं लेपस्याङ्गारवर्णता । लेपं च द्व्यङ्गुलं स्थूलं कुर्याद्वाङ्गुष्ठमात्रकम् ॥ १ ॥ काश्मरीवटजम्ब्वादिपत्रैर्वेष्टनमुत्तमम् । पलमात्रो रसो ग्राह्यः कर्षमात्रं मधु क्षिपेत् ॥ कल्कचूर्णद्रवाद्यास्तु देयाः स्वरसवद्बुधैः ॥२॥ स यथा । तत्कालाकृष्टकुटजत्वचं तण्डुलवारिणा । पिष्टां चतुष्पलमितां जम्बूपल्लववेष्टिताम् ॥ ३ ॥ सूत्रबद्धां च गोधूमपिष्टेन परिवेष्टिताम् । लिप्तां च घनपङ्केन गोमये वह्निना दहेत् ॥ ४ ॥ अङ्गारवर्णां च मृदं दृष्ट्वा वह्नेः समुद्धरेत् । ततो रसं गृहीत्वा च शीतं क्षौद्रयुतं पिबेत् ॥ जयेत्सर्वानतीसारान्दुस्तरान्सुचिरोत्थितान् ॥ ५ ॥

## ॥ अथ कल्कः ॥

द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलं भवेत् । प्रक्षेपावापकल्कास्ते तन्मात्रा कर्षसंमिता ॥ १ ॥ कल्के मधु घृतं तैलं देयं द्विगुणमात्रया । सितां गुडं समं दद्याद्द्रवा देयाश्चतुर्गुणाः ॥२॥ स यथा । त्रिवृद्ध्या पञ्चवृद्ध्या वा सप्तवृद्ध्याथवा कणाः । पिबेत् पिष्ट्वा दशदिनं तास्तथैवापकर्षयेत् ॥ ३ ॥ एवं विंशद्दिनं सिद्धं पिप्पलीवर्धमानकम् । अनेन पाण्डुवातास्रकासश्वासारुचिज्वराः ॥ उदरार्शःक्षयश्लेष्मवाता नश्यन्त्युरोग्रहाः ॥ ४ ॥

## ॥ अथ क्वाथः ॥

पानीयं षोडशगुणं क्षुण्णे द्रव्यपले क्षिपेत् । मृत्पात्रे क्वाथयेद्ग्राह्यमष्टमांशावशेषितम्॥१॥तज्जलं पाययेद्धीमान्कोष्णं मृद्वग्निसाधितम् । शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते ॥ २ ॥ आहाररसपाके च संजाते द्विपलोन्मितम् । वृद्धवैद्योपदेशेन पिबेत्क्वाथं सुपाचितम् ॥३॥ क्वाथे क्षिपेत्सितामंशैश्चतुर्थाष्टमषोडशैः । पित्तवातकफातङ्के विपरीतं मधु स्मृतम् ॥ ४ ॥ जीरकं गुग्गुलुं क्षारं लवणानि शिलाजतु । हिङ्गु त्रिकटुकं चैव क्वाथे शाणमितं क्षिपेत् ॥ ५ ॥ क्षीरं घृतं तैलमूत्रं चान्यद्द्रव्यं तथा क्षिपेत् । कल्कचूर्णादिकं क्वाथे निक्षिपेत्कर्षसंमितम् ॥ ६ ॥ स यथा । गुडूचीधान्यकारिष्टपद्मकारक्तचन्दनैः । गुडूच्यादिरयं क्वाथः सर्वज्वरहरः स्मृतः ॥ ७ ॥

## ॥ अथ हिमकल्पना ॥

क्षुण्णद्रव्यपलं सम्यक् षड्भिर्नीरपलैः प्लुतम् । निःशोषितं हिमः स स्यात्तथा शीतकषायकः ॥ तन्मानं फाण्टवज्ज्ञेयं सर्वत्रैवैष निश्चयः ॥ १ ॥ स यथा । आम्रं जम्बूं च ककुभं चूर्णीकृत्य जले क्षिपेत् । हिमं तस्य पिबेत्प्रातः सक्षौद्रं रक्तपित्तजित् ॥ २ ॥

## ॥ अथ फाण्टकल्पना ॥

क्षुण्णद्रव्यपले सम्यग् जलमुष्णं विनिक्षिपेत् । मृत्पात्रे कुडवोन्मानं ततस्तु

---

१ ( ख० ग० ) पाण्डुरोगा । २ ( ख० ग० ) पानीये षोडशगुणे क्षुण्याद्द्रव्यं पले क्षिपेत् । ३ ( ख० ग० घ० ) शाणमितान् ।

स्रावयेत्पटात् ॥ १ ॥ स स्याच्चूर्णद्रवः फाण्टस्तन्मानं द्विपलोन्मितम् । मधुश्वेतागुडाद्यैश्च क्वाथवत्तत्र निक्षिपेत् ॥ २ ॥ स यथा । मधूकपुष्पं मधुकं चन्दनं सारुकषकम् । मृणालं कमलं लोध्रं गम्भारी नागकेसरम् ॥ ३ ॥ त्रिफलासारिवाद्राक्षालाजान्कोष्णजले क्षिपेत् । सितामधुयुतः पेयः फाण्टो वासौ हिमोऽथवा ॥ ४ ॥ वातपित्तज्वरं दाहं तृष्णामूर्च्छारतिभ्रमान् । रक्तपित्तं मदं हन्यान्नात्र कार्या विचारणा ॥ ५ ॥

## ॥ अथ चूर्णकल्पना ॥

अत्यन्तशुष्कं यद्द्रव्यं सुपिष्टं वस्त्रगालितम् । तत्स्याच्चूर्णं रजः क्षोदस्तन्मात्रा कर्षसंमिता ॥ १ ॥ चूर्णे गुडः समो देयः शर्करा द्विगुणा भवेत् । चूर्णेषु भर्जितं हिङ्गु जीरकं चेति केचन ॥ २ ॥

## ॥ अथ वटककल्पना ॥

वटका अत्र कथ्यन्ते तन्नाम गुटिका वटी । मोदको वटिका पिण्डी गुडो वर्तिस्तथोच्यते ॥ १ ॥ लेहवत्साध्यते वह्नौ गुडो वा शर्करा वा । गुग्गुलुर्वा क्षिपेत्तत्र तच्चूर्णं निर्मिता वटी ॥ २ ॥ कुर्यादवह्निसिद्धेन क्वचिद्गुग्गुलुना वटीं । द्रवेण मधुना वापि गुटिकां कारयेद्बुधः ॥ ३ ॥ सिता चतुर्गुणा देया वटीषु द्विगुणो गुडः । सर्वचूर्णसमः कार्यो गुग्गुलुर्मधु तत्समम् ॥ ४ ॥ द्रवं च द्विगुणं देयं मोदकेषु भिषग्वरैः । कर्षप्रमाणां तन्मात्रां बलं दृष्ट्वा प्रयोजयेत् ॥ ५ ॥

## ॥ अथावलेहः ॥

क्वाथादेर्यत्पुनः पाकाद्घनत्वं सरसं च यत् । सोऽवलेहश्च लेहश्च तन्मात्रा स्यात्पलोन्मिता ॥ १ ॥ सिता चतुर्गुणा कार्या चूर्णाच्च द्विगुणो गुडः । द्रवं चतुर्गुणं दद्यादिति सर्वत्र निश्चयः ॥ २ ॥ दुग्धमिक्षुरसो यूषः पञ्चमूलकषायकः । वासाक्वाथो यथायोग्यमनुपानं प्रशस्यते ॥ ३ ॥

## ॥ अथ स्नेहपाकविधिः ॥

आदौ संचारयेत्क्वाथं दुग्धं कल्कं ततः क्रमात् । ततोऽन्यत्सुरभि द्रव्यमेष स्नेहविधिः क्रमात् ॥ १ ॥ तैलं कृत्वा कटाहे दृढतरविमले मन्दमन्दानले तत् पक्वं निःफेनभावं गतमिह हि यदा शैत्यभावं समेत्य । मञ्जिष्ठारात्रिलोध्रैर्जलधरतनुकैः सामलैः साक्षपथ्यैः सूचीपुष्पाङ्घ्रिनीरैरुपहितमथ तैस्तैलगन्धं जहाति ॥२॥ तैलस्येन्दुकलांशकेन विकसा ग्राह्या तु मूर्च्छाविधौ ये चान्ये त्रिफलापयोदरजनीह्रीबेरलोध्रान्विताः । सूचीपुष्पवटावरोहनलिकास्तस्याथ पादांशकाः पाच्यास्तैलजगन्धदोषहृतये कल्कीकृतास्तद्विदैः ॥३॥ आम्रजम्बूकपित्थानां बीजपूरकबिल्वयोः । शोधनं तिलतैलस्य पल्लवानां तु पञ्चकम् ॥४॥ कल्काच्चतुर्गुणः स्नेहः स्नेहा-

त्क्वाथं चतुर्गुणम् । क्वाथाच्चतुर्गुणं वारि क्वाथः क्वाथ्यसमो मतः ॥ ५ ॥ मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं जलम् । कठिनात्कठिने द्रव्ये वारि षोडशभागिकम् ॥६॥ कर्षादितः पलं यावद्वारिषोडशकं क्षिपेत् । तदूर्ध्वं कुडवं यावत्क्षिपेदष्टगुणं जलम् ॥ ७ ॥ प्रस्थादितः क्षिपेन्नीरं खारी यावच्चतुर्गुणम् । शब्दहीनोऽग्निनिक्षिप्तः स्नेहः सिद्धो भवेत्तदा ॥ ८ ॥ यदा फेनोद्गमस्तैले फेनशान्तिश्च सर्पिषि । वर्णगन्धरसोत्पत्तिः स्नेहसिद्धिस्तदा भवेत् ॥ ९ ॥ अकल्कद्रव्ययोगानां कठिनानां विचारतः । क्वाथो विधीयतेऽन्येषां कल्क एव भिषग्मतः ॥ १० ॥ ईषत्पिष्टो भवेत्कल्कः क्वाथोऽग्निक्वथितो मतः । स्नेहपाकस्त्रिधा प्रोक्तो मृदुर्मध्यः खरस्तथा ॥ ११ ॥ ईषत्सरसकल्कस्तु स्नेहपाको मृदुर्भवेत् । मध्यपाकश्च सिद्धश्च कल्के नीरसकोमले ॥ १२॥ ईषत्कठिनकल्कश्च स्नेहपाको भवेत्खरः । तदूर्ध्वं दग्धपाकः स्याद्दाहकृन्निष्प्रयोजकः ॥ १३ ॥ आमपाकश्च निर्वीर्यो वह्निमान्द्यकरो गुरुः । नस्यार्थं स्यान्मृदुः पाको मध्यमः सर्वकर्मसु ॥ १४ ॥ अभ्यङ्गार्थं खरः प्रोक्तो युञ्ज्यादेवं यथोचितम् । घृततैलगुडादींश्च साधयेन्नैकवासरे ॥ प्रकुर्वन्त्युषिताश्चैते विशेषाद्गुणसंचयम् ॥ १५ ॥ तैलं संस्थाप्य पात्रे विधिवदथ पचेद्वासराद्ग्निमानात् क्वाथैर्दुग्धैश्च कल्कैस्तदनु सुरभिभिः शोधनीयैर्विशुद्धैः । कस्तूरीचन्दनग्लौजलजलदसटीरक्तपाटीरकुष्ठत्वग्मञ्जिष्ठातुरुष्कागुरुनखरदलैः पीतकङ्कोलमुख्यैः ॥ १६ ॥ इति स्नेहपाकविधिः ॥

## ॥ अथ लाक्षारसविधिः ॥

दशांशं लोध्रमादाय तद्दशांशां च सर्जिकाम् । किञ्चिच्च बदरीपत्रं वारि षोडशधा स्मृतम् ॥ वस्त्रपूतो रसो ग्राह्यो लाक्षायाः पादशेषितः ॥ १ ॥

## ॥ अथासवारिष्टः ॥

द्रवेषु चिरकालस्थं द्रव्यं यत्संधितं भवेत् । आसवारिष्टभेदैस्तत्प्रोच्यते भेषजोचितम् ॥ १ ॥ यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः । अरिष्टः क्वाथसिद्धः स्यात्तयोर्मानं पलोन्मितम् ॥ २ ॥ अनुक्तमानारिष्टेषु द्रवद्रोणे गुडात्तुलाम् । क्षौद्रं क्षिपेद्गुडादर्धं प्रक्षेपं दशमाषकम् ॥३॥ ज्ञेयः शीतरसः शीधुरपक्वमधुरद्रवैः । सिद्धपक्वरसः सीधुः संपक्वमधुरद्रवैः ॥ ४ ॥ परिपक्वान्नसन्धानसमुत्पन्नां सुरां जगुः । सुरामण्डः प्रसन्ना स्यात्ततः कादम्बरी घना ॥ ५ ॥ तदधो जगलो ज्ञेयो मेदको जङ्गलो घनः । पक्वं संहृतसारं स्यात्सुराबीजं च किण्वकम् ॥ ६ ॥ यत्तालखर्जूररसैः साधितं स्याद्धि वारुणी । कन्दमूलफलादीनि सस्नेहलवणानि च ॥७॥ यत्र द्रवेऽभिधीयन्ते तत्सुक्तमभिधीयते । विनष्टमम्लतां यातं मद्यं वा मधुरद्रवः ॥ ८ ॥ विनष्टः साधितो यस्तु तत्सुक्तमभिधीयते । गुडाम्बुना सतैलेन कन्दशाकफलैस्तथा ॥ ९ ॥ साधितं चाम्लतां

१ (ख० ग० घ० ङ०) द्रव्य । २ (ख०) गुडो । ३ (ग०) सीधुः । ४ (ख०) प्रपन्नः । (ग०) प्रपन्ना । (घ० प्रसन्नः ।

५ जिलानन्दो.

यातं गुडडक्तं प्रचक्षते । एवमेवेक्षुसुक्तं स्यान्मृद्वीकासम्भवं तथा ॥ १० ॥ तुषाम्बुसंधितैर्ज्ञेयं माषैर्विदलितैर्यवैः । यवैः मुनिस्तुषैः पक्कैः सौवीरं सन्धितं भवेत् ॥ ११ ॥ तुषाम्बुधान्यमण्डादिसंधितं काञ्जिकं विदुः । सण्डाकी सन्धिता ज्ञेया मूलकैः सर्षपादिभिः ॥ १२ ॥

## ॥ अथ शिलाजतुकरणम् ॥

मुख्यं शिलाजतु शिलां सूक्ष्मखण्डां प्रकल्पयेत् । निक्षिप्यात्युष्णपानीये यामैकं स्थापयेत्सुधीः ॥ १ ॥ मर्दयित्वा ततो नीरं गृह्णीयाद्वस्त्रगालितम् । स्थापयित्वा च मृत्पात्रे धारयेदातपे बुधः ॥ २ ॥ उपरिस्थं घनं यत्स्यात्तन्निक्षिपेदन्यपात्रके । धारयेदातपे तस्मादुपरिस्थं घनं नयेत् ॥ ३ ॥ एवं पुनः पुनर्नीत्वा द्विमासाभ्यां शिलाजतु । भूयात्कार्यक्षमं वह्नौ क्षिप्तं लिङ्गोपमं भवेत् ॥ ४ ॥ निर्धूमं च ततः शुद्धं सर्वकार्येषु योजयेत् । अधःस्थितं च यच्छेषं तस्मान्नीरं विनिक्षिपेत् ॥ ५ ॥ इति शिलाजतुकरणम् ।

## ॥ अधुना धात्वादीनां लक्षणशोधनमारणगुणानाह ॥

स्वर्णताराऱताम्राणि नागवङ्गौ च तीक्ष्णकम् । धातवः सप्त विज्ञेया अष्टमः क्वापि पारदः ॥ १ ॥ स्वर्णं तारं च ताम्रं च वङ्गो नागस्तु पञ्चमः । रीतिका च तथा घोषो लोहं चेत्यष्ट धातवः ॥ २ ॥ तैले तक्रे गवां मूत्रे काञ्जिके च कुलत्थके । सप्तधा तप्तनिर्वापात्सर्वलोहं विशुध्यति ॥ ३ ॥

## ॥ अथ सप्तधातुवर्णाः ॥

स्वर्णं चम्पकवर्णाभं कृष्णत्वं तारताम्रयोः ॥ कांस्यं धूसरवर्णं स्यान्नागः पारावतप्रभः ॥ १ ॥ वङ्गं शुभ्रत्वमायाति तीक्ष्णं जम्बूफलोपम् । अभ्रकं चेष्टिकाभं स्याद्धातूनां वर्णनिर्णयः ॥ २ ॥

## ॥ अथ सर्वधातुसामान्यमारणम् ॥

शिलार्कदुग्धगन्धकैर्युताश्च सप्त धातवः । पुटैश्च द्वादशैः परं व्रजन्ति भस्मतां सदा ॥ १ ॥

## ॥ अथ स्वर्णम् ॥

दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम् । तारशुल्बोज्झितं स्निग्धं मृदु हेम गुरूत्तमम् ॥१॥ श्वेताङ्गं कठिनं रूक्षं विवर्णं समलं दलम् । दाहे छेदे सितं श्वेतं कषे लघु च तत्त्यजेत् ॥ २ ॥ इति लक्षणम् ॥

## ॥ अथ शोधनम् ॥

सुवर्णमुत्तमं वह्नौ विद्रुतं निक्षिपेत्त्रिशः । काञ्चनारद्रवैः शुद्धं काञ्चनं जायते भृशम् ॥

---

१ ( ख० ग० घ० ङ० ) तस्मिन् ।

## ॥ अथ मारणम् ॥

काञ्चने गलिते नागं षोडशांशेन निक्षिपेत् । चूर्णयित्वा तथाम्लेन घृष्ट्वा कृत्वा च गोलकम् ॥ १ ॥ गोलकेन समं गन्धं दत्वा चैवाधरोत्तरम् । शरावसम्पुटे धृत्वा पुटेद्विंशद्वनोत्पलैः ॥ २ ॥ एवं सप्तपुटैर्हेम निरुद्धं भस्म जायते । स्वर्णपत्रसमं नागभस्म निम्बूविलेपितम् ॥ ३ ॥ त्रिवारं वै गजपुटे सुवर्णं भस्मतां व्रजेत् । पारावतमलैर्लेपादथवा कुक्कुटोद्भवैः ॥४॥ हेमपत्राणि लेपार्थं प्रदद्यादुत्तरोत्तरम् । गन्धचूर्णं समं कृत्वा शरावयुगसंपुटे ॥ ५ ॥ प्रदद्यात्कुक्कुटपुटं पञ्चभिर्गोमयोपलैः । एवं नवपुटं दद्याद्दशमं च महापुटम् । त्रिंशद्वनोपलैर्देयं जायते हेमभस्म तु ॥ ६ ॥

## ॥ अथ गुणाः ॥

स्वर्णं शीतं पवित्रं क्षयवमिकसनश्वासमेहास्रपित्त—क्षैण्यक्ष्वेडक्षतास्रप्रदरगदहरं स्वादुतिक्तं कषायम् । वृष्यं मेधाग्निकान्तिप्रदमधुरसरं कार्श्यहारि त्रिदोषोन्मादापस्मारशूलज्वरजयि वपुषो बृंहणं नेत्रपथ्यम् ॥ १ ॥ एतद्भस्म सुवर्णजं कटु घृतोपेतं द्विगुञ्जोन्मितं लीढं हन्ति नृणां क्षयाग्निसदनं श्वासं च कासारुची । ओजोधातुविवर्धनं बलकरं पाण्ड्वामयध्वंसनं पथ्यं सर्वविषापहं गदहरं दुष्टग्रहण्यादिहृत् ॥ २ ॥ बलं च वीर्यं हरते नराणां रोगव्रजान्पोषयतीह काये । असौख्यकार्येव सदैव हेमापक्वं सदोषं मरणं करोति ॥ ३ ॥

## ॥ अथ शुद्धस्वर्णदलगुणाः ॥

शुद्धं स्वर्णदलं समस्तविषहृच्छूलाम्लपित्तापहं हृद्यं पुष्टिकरं क्षयव्रणहरं कार्याग्निमान्द्यं जयेत् । हिक्कानाहहरं परं कफहरं नृणां हितं सर्वदा तत्तद्रोगहरानुपानसहितं सर्वामयध्वंसनम् ॥ १ ॥ इति स्वर्णम् ॥

## ॥ अथ रौप्यम् ॥

गुरु स्निग्धं मृदु श्वेतं दाहे छेदे च यत्क्षमम् । वर्णाढ्यं चन्द्रवत्स्वच्छं तारमत्र गुणान्वितम् ॥ १ ॥ कृत्रिमं कठिनं रूक्षं रक्तपीतदलं लघु । दाहे छेदे च यन्नष्टं रूप्ये दोषा दश स्मृताः ॥ २ ॥

## ॥ अथ शोधनम् ॥

पत्रीकृतं तु रजतं संतप्तं जातवेदसि । निर्वापितमगस्त्यस्य रसे वारत्रयं शुचि ॥ १ ॥

## ॥ अथ मारणम् ॥

तारपत्राणि सूक्ष्माणि कृत्वा तत्तुल्ययोः पृथक् । सूतगन्धकयोस्तुल्यतालयोः

१ (ख०ग०) वनोपलैः । २ (ग०) निरुत्थम् । ३ (ग०) सांख्य । ४ (ख०ग०घ०ङ०) गुणा नव ।

खल्वसंस्थयोः ॥ १ ॥ कल्कं कृत्वा कुमार्यद्भिस्तेन तानि प्रलेपयेत् । शरावसंपुटे रुद्धं त्रिंशद्वन्योपलैः पुटेत् । एवं रजतमाप्नोति मृतिं वारद्वयेन वै ॥ २ ॥ अन्यच्च । विधाय पिष्टं सूतेन रजतस्याथ मेलयेत् । तालगन्धसमं पश्चान्मर्दयेन्निम्बुकद्रवैः ॥ द्वित्रैः पुटैर्भवेद्भस्म योज्यमेतद्रसादिपु ॥ ३ ॥ अन्यच्च । माक्षिकं दरदनिम्बुजप्लुतं सूक्ष्मरौप्यदलसंचयं पुटेत् । द्वित्रिवारमथ भस्मतां व्रजेत्पातकौघ इव शङ्करस्मृतेः ॥ ४ ॥ इति रौप्यमारणम् ॥

## ॥ अथ तद्गुणाः ॥

तारं शीतकपायमम्लमधुरं दोषत्रयच्छेदनं स्निग्धं दीपनमक्षिकुक्षिगदजिद्दाहं विषार्दिं हरेत् । मेदोवृद्धि मदात्ययात्यपकरं कान्त्यायुरारोग्यकृच्चक्ष्मापस्मृतिशूलपाण्डुपलितप्लीहज्वरघ्नं सरम् ॥ १ ॥ अशुद्धं रजतं कुर्यात्पाण्डुकण्डूगलग्रहान् । विबन्धं[1] वीर्यनाशं च बलहानिं शिरोरुजम् ॥ २ ॥ इति रजतम् ॥

## ॥ अथ ताम्रम् ॥

न विषं विषमित्याहुस्ताम्रं तु विषमुच्यते । एको दोषो विषे ताम्रे त्वष्टौ दोषाः प्रकीर्तिताः ॥ १ ॥ भ्रमो मूर्छा विदाहश्च स्वेदक्लेदनवान्तयः । अरुचिश्चित्तसंताप एते दोषा विषोपमाः ॥ तस्मात्संशोधयेत्ताम्रं तद्दोषविनिवृत्तये ॥ २ ॥

## ॥ अथ शोधनम् ॥

वज्रिदुग्धैः सलवणैस्ताम्रपत्रं विलेपयेत् । अग्नौ संताप्य निर्गुण्डीरसैः संसेचयेत्रिशः ॥ स्नुह्यर्कक्षीरसेचैर्वा शुल्बशुद्धिः प्रजायते ॥ १ ॥ अन्यच्च । गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना । साम्लक्षारेण संशुद्धिस्ताम्रं प्राप्नोति सर्वथा ॥ २ ॥ इति शोधनम् ॥

## ॥ अथ मारणम् ॥

चूर्णं शुद्धस्य ताम्रस्य समसूतं विमर्दयेत् । खल्वे जम्बीरनीरेण तयोस्तुल्यं तु गन्धकम् ॥ दिनं गजपुटे पाच्यं ताम्रभस्म प्रजायते ॥ १ ॥ अन्यच्च । तिलपर्णीरसैस्ताम्रपत्राणि परिलेपयेत् । शुभ्रवर्णं भवेत्क्षिप्रं नात्र कार्या विचारणा ॥ २ ॥

## ॥ अथान्यच्च त्रपुताम्रम् ॥

शुद्धताम्रस्य पत्राणि शुक्तिद्वयमितानि च । त्रपु शुक्तिमितं तेन वेष्टयित्वाथ तानि तु ॥ १ ॥ यामं पचेद्घटीयन्त्रे यदा त्रपुमयं तदा । तत्स्वाङ्गशीतं निष्कास्य भक्षयेद्वल्लसंमितम् ॥ २ ॥ शृङ्गवेरयवक्षारशोषणैस्तन्निहन्ति च । कफामयारुचिप्लीहत्रपुताम्रमिदं क्षणात् ॥ ३ ॥

## ॥ अथ सोमनाथताम्रम् ॥

शुल्बतुल्येन सूतेन बलिना तत्समेन च । तदर्धांशेन तालेन शिलया च तदर्ध-

---

१ ( ख० ग० ) पिवन्धम् ।

या ॥ १ ॥ विधाय कज्जलीं श्लक्ष्णां सूक्ष्मकज्जलसंनिभाम् । कज्जल्या ताम्रपत्राणि पर्यायेण विलेपयेत् ॥ २ ॥ यन्त्राध्यायविनिर्दिष्टवालुकायन्त्रगं पचेत् । प्रपचेद्युगयामं तु स्वाङ्गशीतं समुद्धरेत् ॥ ३ ॥ तत्तद्रोगहरानुपानसहितं ताम्रं द्विवल्लोन्मितं तल्लीढं परिणामशूलमुदरं शूलं च पाण्डुज्वरम् । गुल्मप्लीहक्षयाग्निसादसदनं श्वासं च कासं तथा दुष्टां च ग्रहणीं हरेद्ध्रुवमिदं तत्सोमनाथाभिधम् ॥ ४ ॥ इति सोमनाथताम्रम् ॥ अन्यच्च । योगरत्नसमुच्चये पाठान्तरम् । नेपालं समरुद्रबीजमसुरस्तुल्यस्तयोस्तालकस्तस्यार्धार्धशिला विधाय विधिना श्लक्ष्णां परां कज्जलीम् । लिप्त्वा ताम्रदलान्यधोर्ध्वमनया भाण्डे पचेद्यामकं यन्त्राध्यायसमुक्तशास्त्रविधिना तत्स्वाङ्गशीतं हरेत् ॥ १ ॥

## ॥ अथ सामान्यताम्रगुणाः ॥

ताम्रं शीतं निहन्याद्व्रणकृमिजठरानाहसंप्लीहपाण्डुश्वासश्लेष्मास्रवातक्षयपवमगदं शूलयुग्मं च गुल्मम् ॥ कुष्ठान्यष्टादशापि स्मरबलरुचिकृद्रक्तमेदोऽम्लपित्तच्छेदि प्रोक्तं त्वशुद्धं कृमिमुदरगदाध्मानकुष्ठादि कुर्यात् ॥ १ ॥ इति ताम्रम् ॥

## ॥ अथ रीतिकांस्ये ॥

रीतिका द्विविधा ज्ञेया तत्राद्या राजरीतिका । काकतुण्डी द्वितीया सा तयोराद्या गुणाधिका ॥ १ ॥ संतप्ता काञ्जिके क्षिप्ता ताम्रा स्याद्राजरीतिका । काकतुण्डी तु कृष्णा स्यान्नासौ सेव्या विजानता ॥ २ ॥ कांस्यं च द्विविधं प्रोक्तं पुष्पतैलिकभेदतः । पुष्पं श्वेततमं तत्र तैलिकं कपिशप्रभम् ॥ ३ ॥ एतयोः प्रथमं श्रेष्ठं संसेव्यं रोगशान्तये । राजरीतिस्तथा घोषं ताम्रवच्छोधयेद्भिषक् ॥ ४ ॥ ताम्रवन्मारणं चापि तयोरुक्तं भिषग्वरैः । रीतिकायुगुलं रूक्षं सतिक्तं लवणं रसम् ॥ शोधनं पाण्डुरोगघ्नं कृमिघ्नं लेखनं हिमम् ॥ ५ ॥ कांस्यं कषायं तिक्तोष्णं लेखनं विशदं सरम् । रूक्षं गुरु च चक्षुष्यं कफपित्तहरं परम् ॥ ६ ॥ इति रीतिकांस्यमारणगुणाः ॥

## ॥ अथ लोहम् ॥

मुण्डं तीक्ष्णं तथा कान्तमिति लोहं त्रिधा स्मृतम् । मुण्डाच्छताधिकं तीक्ष्णं तीक्ष्णात्कान्तं शताधिकम् ॥ १ ॥ मुण्डं तु वर्तुलं भूमौ पर्वतेषु च जायते । गजबल्यादि तीक्ष्णं स्यात्कान्तं चुम्बकसंभवम् ॥ २ ॥ यत्राङ्कं दृश्यते लोहे तीक्ष्णं लोहं तदुत्तमम् । कासीसामलकल्काक्ते लोहेऽङ्कं दृश्यते मुखम् ॥ ३ ॥

## ॥ अथ कान्तलक्षणम् ॥

यत्पात्रस्थः प्रसरति जले तैलबिन्दुर्न दत्तो हिङ्गुर्गन्धं विसृजति निजं तिक्ततां निम्बकल्कः । पाच्यं दुग्धं भवति शिखराकारकं नैति भूमिं दग्धाङ्गाः स्युः सजलचणकाः कान्तलोहं तदुक्तम् ॥ १ ॥

## ॥ अथ शोधनम् ॥

शशरक्तेन संलिप्तं किञ्चार्कपयसायसः । दलं हुताशने ध्मातं सिक्तं त्रैफलवारिणा । एवं त्रिशः कृते लोहं शुद्धिमाप्नोत्यसंशयम् ॥ १ ॥ अन्यच्च । क्वाथ्यमष्टगुणे तोये त्रिफलाषोडशं पलम् । तत्क्वाथे पादशेषे तु लोहस्य पलपञ्चकम् ॥ २ ॥ कृत्वा पत्राणि तप्तानि सप्तवारं निषेचयेत् । एवं प्रलीयते धातुर्गिरिजो लोहसम्भवः॥ ३ ॥ इति शोधनम् ॥

## ॥ अथ मारणम् ॥

लोहानां मारणं श्रेष्ठं सर्वेषां रसभस्मना । मध्यमं मूलिकाभिश्च कनिष्ठं गन्धकादिभिः ॥ १ ॥ शुद्धस्य सूतराजस्य भागो भागद्वयं बलेः । द्वयोः समं सारचूर्णं मर्दयेत्कन्यकाम्बुना ॥ २ ॥ यामद्वयं तस्य गोलं संवेष्टचैरण्डजैर्दलैः । ततः सूत्रेण संबध्य स्थापयेत्ताम्रसम्पुटे ॥ ३ ॥ मुद्रयेद्वदनं तस्य मृदा संशोष्य तत्पुनः । त्रिदिनं धान्यराशिस्थं तत उद्धृत्य मर्दयेत् ॥ ४ ॥ रजस्तद्वस्त्रगलितं नीरे तरति हंसवत् । सोमामृताभिधमिदं लोहभस्म प्रकीर्तितम् ॥ ५ ॥ अन्यच्च । द्वादशांशेन दरदं तीक्ष्णचूर्णस्य मेलयेत् । कन्यानीरेण संमर्द्य यामयुग्मं तु तत्पुनः ॥ ६ ॥ शरावसम्पुटे कृत्वा पुटेद्गजपुटेन वै । सप्तधैवं कृतं लोहरजो वारितरं भवेत् ॥ ७ ॥ अन्यच्च । लोहचूर्णं पलं खल्वे सोरकस्य पलं तथा । अश्वगन्धापलं चापि सर्वमेकत्र मर्दयेत् ॥ ८ ॥ कुमार्याद्विर्दिनं पश्चाद्गोलकं रुबुपत्रकैः । संवेष्टय च मृदा लिप्त्वा पुटेद्गजपुटे पचेत् ॥ ९ ॥ स्वाङ्गशीतं समुद्धृत्य सिन्दूराभमयोरजः । मृतं वारितरं ग्राह्यं सर्वकार्यकरं परम् ॥ १० ॥ अन्यच्च । दाडिमीपत्रजरसैर्लोहचूर्णं च भावितम् । आतपे सप्तधा तेन पुनर्गजपुटद्वयम् ॥ ११ ॥ इत्थं कृतं च तद्भस्म शुद्धं वारितरं भवेत् । योजयेत्सर्वरोगेषु सत्यं गुरुवचो यथा ॥ १२ ॥ अन्यच्च । गृहीत्वा तीक्ष्णजं चूर्णं तथैव च गवां दधि । एकत्र कारयेद्भाण्डे यावच्छोषत्वमाप्नुयात् ॥ १ ॥ उद्धृत्य गालयेदग्नौ त्रिफलायाः पुटत्रयम् । देयं वारितरं सद्यो जायते नात्र संशयः ॥ २ ॥ अन्यच्च । एकभागं लोहचूर्णं तत्समो नवसागरः । किञ्चित्तप्तोदकं ग्राह्यं सर्वं वस्त्रे निबध्य च ॥१॥ यामान्ते घर्षयेत्पाणौ सद्यो वारितरं भवेत् । योजयेत्सर्वरोगेषु सर्वरोगापनुत्तये ॥ २ ॥

## ॥ अथ निरुत्थानम् ॥

सर्वमेतन्मृतं लोहं ध्मातव्यं मित्रपञ्चकैः । इत्येवं स्यान्निरुत्थानं सेव्यं वारितरं भवेत् ॥ १ ॥ रक्तिकाघृतं लाक्षया युतं क्षौद्रमिश्रितं टङ्कणान्वितम् । ऊर्णया तथा ध्माततां गताः सप्त धातवो यान्ति जीवताम् ॥ २ ॥ गन्धकं चोत्थितं लोहं तुल्यं खल्वे विमर्दयेत् । दिनैकं कन्यकाद्रावै रुद्ध्वा गजपुटे पचेत् ॥ इत्येवं सर्वलोहानां कर्तव्यं तन्निरुत्थितम् ॥ ३ ॥

१ (ख० ग० घ० ङ०) बलिम् ।

## ॥ अथ गुणाः ॥

कान्तं तु शीतं मधुरं कषायमायुःकरं धातुविवर्धनं च । हन्यात्रिदोषव्रणमेहकुष्ठप्लीहोदरग्रन्थिविषक्रिमींश्च ॥ १ ॥ पाण्डुं पीडयति क्षयं क्षपयति क्लैण्यं क्षिणोति क्षणात्कासं नाशयति भ्रमं शमयति श्लेष्मामयान् खादति । अस्रं गुल्मसशूलपीनसवमिश्वासप्रमेहारुचीराशून्मूलयति प्रकम्पनहरं लोहं हिमं चाक्षुषम् ॥ २ ॥ शुद्धं पित्तकफानिलमोहं हन्ति हितं शिवशक्त्या लोहम् । पाण्डुगदामयशूलविनाशि प्रोक्तमशुद्धं रोगविकासि ॥ ३ ॥ ये गुणा मृतरूप्यस्थे ते गुणाः कान्तभस्मनः । कान्ताभावे प्रदातव्यं रूप्यमित्याह भैरवः ॥४॥ कूष्माण्डं तिलतैलं च माषान्नं राजिकां तथा। मद्यमम्लरसं चैव त्यजेल्लोहस्य सेवकः ॥५॥ मत्स्यजीवककवार्ताकमाषं च कारवेल्लकम् । व्यायामं तीक्ष्णकं सद्यस्तैलाम्लं दूरतस्त्यजेत् ॥ ६ ॥

## ॥ अथानुपानानि ॥

वल्लं वल्लार्धमाषं च यथायोगेन योजयेत् । त्रिफलालोहचूर्णं च वलीपतलिनाशनम्॥१॥ व्योषं भार्गी च मधुना लोहं धातुरुजापहम् । कज्जलीमधुकृष्णाभ्यां श्लेष्मरोगनिवारणम् ॥२॥ शर्करा च चतुर्जातं रक्तपित्तरुजापहम्। पुनर्नवा च गोक्षीरैर्बलवृद्धिकरं परम् ॥३॥ पुनर्नवारसेनैव पाण्डुरोगनिषूदनम्। हरिद्रा लोहचूर्णं च पिप्पली मधुना सह । विंशतिं च प्रमेहानां नाशयेन्नात्र संशयः ॥ ४ ॥ शिलाजतुसमायुक्तं मूत्रकृच्छ्रनिवारणम् । वासकः पिप्पली द्राक्षा लोहं च मधुना सह ॥ ५ ॥ गुटिकां भक्षयेत् प्रातः पञ्चकासनिवारणम् । ताम्बूलेन समायुक्तं भक्षयेल्लोहमुत्तमम् ॥ ६ ॥ अग्निदीप्तिकरं वृष्यं देहकान्तिविवर्धनम् । किमत्र बहुनोक्तेन देहलोहकरं मतम्॥ ७ ॥ अल्पौषधैस्तोकपुटैर्हीनं गन्धकपारदैः । अपक्वं लोहजं चूर्णमायुःक्षयकरं नृणाम् ॥८॥ इति लोहम् ॥

## ॥ अथ मण्डूरकरणम् ॥

शताब्दमुत्तमं किट्टं मध्यं चाशीतिवार्षिकम् । अधमं षष्टिवर्षीयं ततो हीनं विषोपमम् ॥ १ ॥ अक्षाङ्गारैर्धमेत्किट्टं लोहजं तद्द्रवां जलैः ॥ सेचयेदक्षपात्रान्तः सप्तवारं पुनः पुनः ॥ २ ॥ चूर्णयित्वा ततः क्वाथैर्द्विगुणैस्त्रिफलोद्भवैः । आलोड्य भर्जयेद्वह्नौ मण्डूरं जायते वरम् ॥ ३ ॥ मण्डूरं शिशिरं रुच्यं पाण्डुश्वयथुशोषजित् । हलीमकं कामलां च प्लीहानं कुम्भकामलाम् ॥ ४ ॥ इति मण्डूरम् ॥

## ॥ अथ वङ्गम् ॥

खुरकं मिश्रकं चेति द्विविधं वङ्गमुच्यते । खुरं तत्र गुणैः श्रेष्ठं मिश्रकं न हितं मतम् ॥ १ ॥ धवलं मृदुलं स्निग्धं द्रुतद्रावं सगौरवम् । निःशब्दं खुरवङ्गं स्यान्मिश्रकं श्यामशुभ्रकम् ॥ २ ॥

---

१ ( ग० ) मम्लरसम् । २ ( ग० ) वल्लार्धगानम् ।

## ॥ अथ वङ्गशोधनम् ॥

द्रावयित्वा निशायुक्ते क्षिप्तं निर्गुण्डिकारसे । विशुध्यति त्रिवारेण खुरवङ्गं न संशयः ॥ १ ॥

## ॥ अथ मारणम् ॥

शाणमात्रं भवेद्वङ्गं भुजङ्गो रक्तिकामितः । खर्परे गलितं सर्वं लोहदर्व्या विघर्षयेत् ॥ १ ॥ महराज्जायते भस्म भिन्नकज्जलसन्निभम् । शुक्लतां याति तद्भस्म तीव्रखर्परवह्निना ॥२॥ अन्यच्च । पलाशद्रवयुक्तेन वङ्गं पत्राणि लेपयेत् । तालेन पुटितं भस्म त्रिवारं जायते ध्रुवम् ॥ १ ॥ अन्यच्च । भल्लाततैलसंलिप्तं वङ्गं वस्त्रेण वेष्टितम् । चिञ्चापिप्पलपालाशकाष्ठाग्नौ याति पञ्चताम् ॥ १ ॥ अन्यच्च । मृत्पात्रे द्राविते वङ्गे चिञ्चाश्वत्थत्वचो रजः । क्षिप्त्वा क्षिप्त्वा चतुर्थांशं लोहदर्व्या विचालयेत् । ततो द्वियाममात्रेण वङ्गभस्म प्रजायते ॥ १॥ अथ भस्मसमं तालं क्षिप्त्वाम्लेन प्रमर्दयेत् । ततो गजपुटे पक्त्वा पुनरम्लेन मर्दयेत् ॥ २ ॥ तालेन दशमांशेन याममेकं ततः पुटेत् । एवं दशपुटैः पक्वं वङ्गं तु म्रियते ध्रुवम् ॥ ३ ॥

## ॥अथ गुणाः॥

वङ्गं तिक्तोष्णकं रूक्षमीषद्वातप्रकोपणम् । मेहश्लेष्मामयघ्नं च मेदोघ्नं कृमिनाशनम् ॥ १ ॥ अशुद्धममृतं वङ्गं प्रमेहादिगदप्रदम् । गुल्महृद्रोगशूलार्शःकासश्वासवमिप्रदम् ॥ २ ॥ इति वङ्गम् ॥

## ॥ अथ नागम् ॥

द्रुतद्रावं महाभारं छेदे कृष्णं समुज्ज्वलम् । पूतिगन्धं बहिःकृष्णं शुद्धं सीसमतोऽन्यथा ॥ १ ॥

## ॥ अथ नागशोधनम् ॥

नागो द्रुतोऽग्निसंयोगाद्रविदुग्धे निपातितः । सच्छिद्रहण्डिकासंस्थं त्रिवारं शुद्धिमाप्नुयात् ॥ १ ॥

## ॥ अथ मारणम् ॥

अश्वत्थचिञ्चात्वग्भस्म नागस्य चतुरंशतः । क्षिपेन्नागं पचेत्पात्रे चालयेल्लोहचाटुना ॥ १ ॥ यामाद्भस्म तदुद्धृत्य भस्मतुल्या मनःशिला । जम्बीरैरारनालैर्वा पिष्ट्वा रुद्ध्वा पुटे पचेत् ॥ २ ॥ स्वाङ्गशैत्यं पुनः पिष्ट्वा विंशत्यंशशिलायुतम् । आम्लेनैव तु यामैकं पूर्ववत्पाचयेत्पुटे ॥ एवं षष्टिपुटैः पक्वो नागः स्यात्सुनिरुत्थितः ॥ ३ ॥ अन्यच्च । मनःशिलागन्धयुताटरूषपरिप्लुतं नागदलं विमृष्टम् । पुटैस्त्रिभिः कुम्भमितैः प्रयाति भस्मत्वमेतत्प्रवदन्ति तज्ज्ञाः ॥ ४ ॥ अन्यच्च । ताम्बूलीरससंपिष्टशिलालेपात्पुनः पुनः । द्वात्रिंशद्भिः पुटैर्नागो निरुत्थो जायते ध्रुवम् ॥ ५ ॥

## ॥ अथ गुणाः ॥

अत्युष्णं सीसकं स्निग्धं तिक्तं वातकफापहम् । प्रमेहतोयदोषघ्नं दीपनं चामवात-नुत् ॥ १ ॥ अशुद्धः कुरुते नागः प्रमेहक्षयकामलाः । तस्मात् संशुद्ध एवायं मारणीयो भिषग्वरैः ॥ २ ॥ इति नागः ॥

## ॥ अथोपधातवः ॥

अभ्रकं माक्षिकं तालं शिलानीलाञ्जनं तथा । तुत्थकं रसकं चैव प्रोक्ताः सप्तोपधातवः ॥ १ ॥

## ॥ अथाभ्रकम् ॥

शुक्लं रक्तं तथा पीतं कृष्णं चैव यथाक्रमम् । पिनाकं दर्दुरं नागं वज्रं चेति चतुर्विधम् ॥१॥ दलानि मुञ्चत्यनिले[1] पिनाकं भेकं स्वरावं कुरुतेऽनलस्थम् । फूत्काररावं भुजगः करोति ह्यविक्रियं वह्निगतं सुवज्रम् ॥ २ ॥ पिनाकं कुरुते कुष्ठं दर्दुरं मृत्युदायकम् । नागं भगन्दरं कुर्याद्वज्राभ्रं गदवृन्दजित् ॥ ३ ॥

## ॥ अथाभ्रकशोधनम् ॥

प्रतप्तं सप्तवाराणि निक्षिप्तं काञ्जिकेऽभ्रकम् । निर्दोषं जायते नूनं प्रक्षिप्तं वापि गोजले ॥ त्रिफलाक्वथिते वापि गवां दुग्धे विशेषतः ॥१॥ अन्यच्च । कृष्णाभ्रकं धमेद्वह्नौ ततः क्षीरे विनिक्षिपेत् । भिन्नपत्रं ततः कृत्वा तण्डुलीयाम्लयोर्द्रवैः ॥ २ ॥ भावयेदष्टयामं तु ह्येवं शुध्यति चाभ्रकम् ॥ ३ ॥

## ॥ अथ धान्याभ्रकम् ॥

पादांशशालिसंयुक्तमभ्रं बद्ध्वाथ कम्बले । त्रिरात्रं स्थापयेन्नीरे तत्क्लिन्नं मर्दयेत्करैः ॥ १ ॥ कम्बलाद्गलितं सूक्ष्मं वालुकासदृशं च यत् । तद्धान्याभ्रमिति प्रोक्तमथ मारणसिद्धये ॥ २ ॥

## ॥ अथाभ्रमारणम् ॥

कृत्वा धान्याभ्रकं तच्च शोषयित्वाथ मर्दयेत् । अर्कक्षीरैर्दिनं खल्वे चक्राकारं च कारयेत् ॥ १ ॥ वेष्टयेदर्कपत्रैश्च सम्यग्गजपुटे पचेत्[2] । पुनर्मर्द्य पुनः पाच्यं सप्तवारं पुनः पुनः ॥ २ ॥ ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयम् । म्रियते नात्र संदेहः सर्वरोगेषु योजयेत् ॥ ३ ॥ तुल्यं घृतं मृताभ्रेण लोहपात्रे विपाचयेत् । घृते जीर्णे तदभ्रं तु सर्वरोगेषु योजयेत् ॥ ४ ॥ धान्याभ्रकं रविक्षीरै रविमूलद्रवेण वा । पिष्ट्वा पिष्ट्वा पुटेत्तं पाकात् सप्तधा म्रियतेऽभ्रकः ॥ ५ ॥ अन्यच्च । धान्याभ्रं मेघनादैः कदलिघनजलैष्टङ्कणाङ्कोलतोयैः खल्वे संमर्द्य गाढं तदनु गजपुटान् द्वादशैवं प्रदद्यात् । मीनाक्षीभृङ्गतोयैस्त्रिफलजलयुतैर्मर्दयेत्सप्तवारं गन्धं तुल्यं च दत्वा प्रवरगजपुटात् पञ्चतां याति मेघः ॥६॥ अन्यच्च । दुग्धत्रयं कुमार्यम्बु गजमूत्रं नृमूत्र-

---

१ ( ग० ) मुञ्चत्यनले । २ ( ख० ग० ) पचेत् ।

कम्। वटभृङ्गमजारक्तमेभिरभ्रं सुमर्दितम्॥ शतधा पुटितं भस्म जायते पद्मरागवत् ॥ ७ ॥ अन्यच्च। धान्याभ्रकं समादाय मुस्ताक्वाथैः पुटत्रयम्। तद्वत्पुनर्नवानीरैः कासमर्दरसैस्तथा॥ ८ ॥ नागवल्लीदलैः सर्पिःक्षीरैर्देयं पृथक् पृथक्। दिने दिने मर्दयित्वा क्वाथैर्वटजटोद्भवैः॥ ९ ॥ दत्वा पुटत्रयं पश्चात्रिपुटं मुसलीद्रवैः त्रिर्गोक्षुरकषायेण त्रिः पुटेद्वानरीरसैः॥ १० ॥ मोचकन्दरसैः पाच्यं त्रिवारं कोकिलाक्षजैः। रसैः पुटेत् ततो धेनुक्षीरादेकं पुटं मृदु॥ ११ ॥ दध्ना घृतेन मधुना स्वच्छया सितया तथा। एकमेकं पुटं दद्यादभ्रस्यैवं मृतिर्भवेत्॥ १२ ॥ अन्यच्च। धान्याभ्रकस्य भागैकं द्वौ भागौ टङ्कणस्य च। पिष्ट्वा तदन्धमूषायां रुद्ध्वा तीव्राग्निना पचेत्॥ स्वभावशीतलं चूर्णं सर्वरोगेषु योजयेत्॥१३॥ इति मारणम्॥

## ॥ अथ गुणाः ॥

निश्चन्द्रकं भजेत्तत्तु शुद्धदेहे रसायनम्। सचन्द्रं विषमं ज्ञेयं मृत्युकृद्व्याघ्ररोमवत्॥१॥ वराम्बु गोघृतं चाभ्रं कलाषड्दिकुसमांशकम्। मृद्वग्निना पचेल्लेह्यममृतीकरणं त्विदम्॥२॥ वेल्लव्योषसमन्वितं घृतयुतं वल्लोन्मितं सेवितं दिव्याभ्रं क्षयपाण्डुरुग्ग्रहणिकाशूलामकोष्ठामयान्। आर्तिश्वासगदं प्रमेहमरुचिं कासामयं दुर्धरं मन्दाग्निं जठरव्यथां विजयते खं हन्ति सर्वामयान्॥ ३ ॥ गौरीतेजः परमममृतं वातपित्तक्षयघ्नं प्रज्ञाबोधि प्रशमितजरं वृष्यमायुष्यमग्र्यम्। बल्यं स्निग्धं रुचिदमकफं दीपनं शीतवीर्यं तत्तद्योगैः सकलगदहृद्व्योम सूतेन्द्रवद्धिं॥४॥ क्षाराम्लं विदलं कोलं कर्कटी कारवेल्लकम्। वृन्ताकं च करीरं च तैलं चाभ्रे विवर्जयेत्॥ ५ ॥

## ॥ अथाभ्रकानुपानानि ॥

अभ्रकं च निशायुक्तं पिप्पलीमधुनासह। विंशतिं च प्रमेहानां नाशयेन्नात्र संशयः॥ १ ॥ अभ्रकं हेमसंयुक्तं क्षयरोगविनाशनम्। रौप्यहेमाभ्रकं चैव धातुवृद्धिकरं परम्॥ २ ॥ अभ्रकं च हरीतक्या गुडेन सह योजितम्। एलाशर्करया युक्तं रक्तपित्तविनाशनम्॥ ३ ॥ त्रिकटु त्रिफलां चैव चातुर्जातं सशर्करम्। मधुना लेहयेत्प्रातः क्षयार्शःपाण्डुनाशनम्॥ ४ ॥ गुडूचिसत्वखण्डाभ्यां मिश्रितं मेहनाशनम्। एलागोक्षुरभूधात्रीसितागव्येन मिश्रितम्॥ ५ ॥ प्रातः संसेवनान्नित्यं मेहकृच्छ्रनिवारणम्। पिप्पलीमधुसंयुक्तं भ्रमजीर्णज्वरापहम्॥ ६ ॥ मधु त्रिफलया युक्तं दृष्टिपुष्टिकरं मतम्। मूर्वासत्वयुतं व्योम व्रणानां च विनाशनम्॥ ७ ॥ गोक्षीरक्षीरकन्दाभ्यां बलवृद्धिकरं परम्। भल्लातकयुतं व्योम त्वर्शोदोषनिवारणम्॥ ८ ॥ नागरं पौष्करं भार्गीं गगनं मधुना सह। अश्वगन्धायुतं खादेद्वातव्याधिनिवारणम्॥ ९ ॥ चातुर्जातं सिता चाभ्रं पित्तरोगनिवारणम्। कट्फलं पिप्पली क्षौद्रं श्लेष्मरोगनिवारणम्॥ १० ॥ सर्वक्षारयुतं चाभ्रमग्निवृद्धिकरं परम्। मूत्राघातं मूत्रकृच्छ्रमश्मरीमपि नाशयेत्॥ ११ ॥

१ (क०) वन्धि। २ (ख० ग० घ० ङ०) भार्ङ्गी।

विजयारससंयुक्तं शुक्रस्तम्भकरं परम् । लवङ्गमधुसंयुक्तं धातुवृद्धिकरं परम् ॥ ॥ १२ ॥ गोक्षीरंशर्करायुक्तं पित्तरोगविनाशनम् । अभ्रकं विधिसंयुक्तं पथ्ययोगेन योजितम् ॥ १३ ॥ वेल्लव्योषसमन्वितं घृतयुतं वल्लोन्मितं सेवितं दिव्याभ्रं क्षयपाण्डुसङ्ग्रहणिकाशूलं च कुष्ठामयम् । सर्वश्वासगदं प्रमेहमरुचिं कासामयं दुर्धरं मन्दाग्निं जठरव्यथां परिहरेच्छेषामयान्निश्चितम् ॥ १४ ॥ वलीपलितनाशः स्याज्जीवेच्च शरदां शतम् । नातः परतरं किञ्चिज्जरामृत्युविनाशनम् ॥ १५ ॥ इति सहस्रपुटाभ्रकानुपानानि ॥

## ॥ अथ स्वर्णमाक्षिकम् ॥

स्वर्णवर्णं गुरु स्निग्धमीषन्नीलच्छविच्छटम् । कषे कनकवद्घृष्टं तद्वरं हेममाक्षिकम् ॥ १ ॥ अशुद्धं माक्षिकं कुर्यादान्ध्यं कुष्ठं क्षयं कृमीन् । शोधनीयं प्रयत्नेन तस्मात् कनकमाक्षिकम् ॥ २ ॥

## ॥ अथ शोधनम् ॥

त्रिभागं माक्षिकं ग्राह्यं चतुर्थांशेन सैन्धवम् । जम्बीरजरसैर्वापि बीजपूरद्रवैः पचेत् ॥ १ ॥ घर्षितं लोहपात्रे च याति पात्रं च रक्तताम् । ततः शुद्धत्वमायाति स्वर्णमाक्षिकमीदृशम् ॥ २ ॥

## ॥ अथान्यप्रकारः ॥

एरण्डतैललुङ्गाम्बुसिद्धं[1] शुध्यति माक्षिकम् । शुद्धं वा कदलीकन्दतोयेन घटिकाद्वयम् ॥ तप्तं क्षिप्तं वराक्वाथे शुद्धिमायाति माक्षिकम् ॥ १ ॥ अन्यच्च । अगस्तिपत्रनिर्यासैः शिग्रुमूलं सुपेषितम् । तन्मध्ये पुटितं शुद्धं निम्बूजाम्लेन पाचितम् ॥ २ ॥ इति शोधनम् ॥

## ॥ अथ मारणम् ॥

माक्षिकस्य चतुर्थांशं दत्वा गन्धं विमर्दयेत् । उरुबूकस्य तैलेन ततः कार्या सुचक्रिका ॥ १ ॥ शरावसंपुटे कृत्वा पुटेद्गजपुटेन च । धान्यस्य तुषमूर्ध्वाधो दत्वा शीतं समुद्धरेत् ॥ सिन्दूराभं भवेद्भस्म माक्षिकस्य न संशयः ॥ २ ॥ अन्यच्च । अजामूत्रे ऽथवा तैले कषाये वा कुलत्थजे[2] । तक्रे वा घर्षितं पक्वं म्रियते स्वर्णमाक्षिकम् ॥ १ ॥ इति मारणम् ॥

## ॥ अथ गुणाः ॥

माक्षिकं तिक्तमधुरं मेहार्शःक्षयकुष्ठनुत् । कफपित्तहरं शीतं योगवाहि रसायनम् ॥ १ ॥ माक्षिको रजतहाटकप्रभः शोधितोऽतिगुणदः सुसेवितः । मेहकुष्ठकृमिशोफपाण्डुतापस्मृतीर्हरति सोऽश्मरीं जयेत् ॥ २ ॥ मन्दानलत्वं बलहानिमुग्रां विष्टम्भतामन्यगदांश्च दुष्टान् । करोति मालां व्रणपूर्विकां च माक्षीकधातुर्गुरुरप्यपक्वः ॥ ३ ॥

---

१ ( ख० ग० घ० ङ० ) सिद्धम् । २ ( ख० ग० घ० ङ० ) कुलित्थ ।

माक्षीकधातुः सकलामयघ्नः प्राणो रसेन्द्रस्य परं हि वृष्यः । दुर्मेललोहद्वयमेलकश्च गुणोत्तरः सर्वरसायनाढ्यः ॥ ४ ॥ इति स्वर्णमाक्षिकम् ॥

## ॥ अथ तारमाक्षिकम् ॥

कांस्यवत्तारमाक्षिक्यं कषे घृष्टं तु रूप्यवत्। गुरु स्निग्धं सितं यत्तच्छ्रेष्ठं स्यात्तारमाक्षिकम् ॥ १ ॥ स्वर्णमाक्षिकवद्दोषा विज्ञेयास्तारमाक्षिके । अतस्तद्दोषशान्त्यर्थं शोधनं कथ्यते यथा ॥ २ ॥

## ॥ अथ शोधनम् ॥

कर्कोटीमेषशृङ्गीजे रसैर्जम्बीरजैर्दिनम् । आतपे भावना देया शुद्धं स्यात्तारमाक्षिकम् ॥ १ ॥ इति शुद्धिः ॥

## ॥ अथ तन्मारणम् ॥

स्वर्णमाक्षिकवज्ज्ञेयं तारमाक्षिकमारणम् । विमलाया गुणाः किञ्चिन्न्यूनाः कनकमाक्षिकात् ॥ १ ॥

## ॥ अथ तालकविधिः ॥

अशुद्धं तालमायुर्हृत्कफमारुतमेहकृत् । तापस्फोटाङ्गसंकोचान्कुरुते तेन शोधयेत् ॥ १ ॥

## ॥ अथ शोधनम् ॥

तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके क्षिपेत् । दोलायन्त्रेण यामेकं ततः कूष्माण्डजद्रवैः ॥ १ ॥ तिलतैले पचेद्यामं यामं च त्रिफलाजले । चूर्णोदके च यामैकं पक्वं शुध्यति तालकम् ॥ २ ॥

## ॥ अथ मारणम् ॥

सदलं तालकं शुद्धं पुनर्नव्या रसेन तु । खल्वे विमर्दयेद्दिनं पश्चाद्विशोषयेत् ॥ १ ॥ संशोष्य गोलकं तस्य कुर्यात्तच्च विशोषयेत् । ततः पुनर्नवाक्षारैः स्थाल्यर्धं तु प्रपूरयेत् ॥ २ ॥ तत्र तद्गोलकं कृत्वा पुनस्तेनैव पूरयेत् । आकण्ठं पिठरं तस्य पिधानं धारयेन्मुखे ॥ ३ ॥ स्थालीं चुल्यां समारोप्य क्रमाद्वह्निं विवर्धयेत् । दिनान्यन्तरशून्यानि पञ्च वह्निं प्रदापयेत् ॥ ४ ॥ एवं तु म्रियते तालं मात्रा तस्यैव रक्तिका । अनुपानान्यनेकानि यथायोग्यं प्रयोजयेत् ॥ ५ ॥

## ॥ अथ गुणाः ॥

हरितालं कटु स्निग्धं कषायोष्णं हर्[1]द्धिदम् । कण्डूकुष्ठास्यरोगास्रवातपित्तकफव्रणान् ॥ १ ॥ तालकं हरते रोगान्कुष्ठं मृत्युजरापहम् । शोधितं कुरुते वीर्यं कान्तिं वृद्धिं तथायुषः ॥ २ ॥ ॥

---

१ ( घ० ) दुर्मद ।

## ॥ अथ मनःशिला ॥

मनःशिला मन्दबलं करोति जन्तुं ध्रुवं शोधनमन्तरेण । मलस्य बन्धं किल मूत्ररोगं सशर्करं कृच्छ्रगदं च कुर्यात् ॥ १ ॥

## ॥ अथ तच्छोधनविधिः ॥

पचेत्त्र्यहमजामूत्रे दोलायन्त्रे मनःशिलाम् । भावयेत्सप्तधा मूत्रैरजायाः शुद्धिमृच्छति ॥ १ ॥ अन्यच्च । अगस्तिपत्रतोयेन भाविता सप्तवारकम् । शृङ्गबेररसे वापि विशुध्यति मनःशिला ॥ १ ॥

## ॥ अथ गुणाः ॥

मनःशिला गुरुर्वर्ण्या रसोष्णा लेखनी कटुः । तिक्तस्निग्धा विषश्वासकासभूतविषास्रनुत् ॥ १ ॥ इति मनःशिला ॥

## ॥ अथ स्रोतोऽञ्जनम् ॥

स्रोतोऽञ्जनं द्विधा प्रोक्तं श्वेतकृष्णप्रभेदतः । त्रिफलावारिणा स्वेद्यं तद्द्वयं शुद्धिमृच्छति ॥ १ ॥

## ॥ अथ गुणाः ॥

सौवीरं ग्राहि मधुरं चक्षुष्यं कफपित्तजित् । हिध्माक्षयास्रनुच्छीतं स्रोतोऽञ्जनमपीदृशम् ॥ १ ॥

## ॥ अथ तुत्थम् ॥

विष्ठया मर्दयेत्तुत्थं मार्जारककपोतयोः । दशांशं टङ्कणं दत्वा पचेल्लघुपुटे ततः ॥ पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थं विशुध्यति ॥१॥ अन्यच्च । ओतोर्विशा समं तुत्थं सक्षौद्रं टङ्कणाङ्घ्रियुक् । त्रिधैवं पुटितं शुद्धं वान्तिभ्रान्तिविवर्जितम् ॥ १ ॥

## ॥ अथ गुणाः ॥

तुत्थकं कटुकं क्षारं कषायं विषदं लघु । लेखनं भेदि चक्षुष्यं कण्डूकृमिविषापहम् ॥ कफास्रपित्तकुष्ठघ्नं मेहमेदोविनाशनम् ॥ १ ॥ इति तुत्थम् ॥

## ॥ अथ खर्परम् ॥

नृमूत्रे वाथ गोमूत्रे सप्ताहं रसकं पचेत् । दोलायन्त्रेण शुद्धं स्यात्ततः कार्येषु योजयेत् ॥ १ ॥ खर्परं कटुकं क्षारं कषायं वामकं लघु । लेखनं भेदनं शीतं चक्षुष्यं कफपित्तनुत् । विषास्रकुष्ठकण्डूनां नाशनं परमं मतम् ॥ २ ॥ इति धातूपधातुशोधनमारणगुणाः ॥

## ॥ अथ पारदः ॥

रसो विप्रः सितो रक्तः क्षत्रियः पीत ऊरुजः । शूद्रः कृष्ण इति प्रोक्तो वर्णभे-

---

१ ( घ० ) ओतोर्विशासमम् । २ ( क० ) स्वेदनम् ।

षाखतुर्विधः ॥ १ ॥ ब्राह्मणः कल्प्यते कल्पे गुटिकायां च बाहुजः । धातुवादे तथा वैश्यः शूद्रश्चेतरकर्मणि ॥ २ ॥ अन्तः सुनीलो बहिरुज्ज्वलाङ्गो मध्याह्नचन्द्रप्रतिमप्रकाशः । शस्तोऽथ धूम्रः परिपाण्डुरश्च चित्रो न योज्यो रसकर्मसिद्ध्यै ॥ ३ ॥ पूर्वैर्दोषा रसेन्द्रस्य ये च प्रोक्ता मनीषिभिः । अतस्तेषां प्रशान्त्यर्थं प्रोच्यते कर्म साम्प्रतम् ॥ ४ ॥ यथा । मलशिखिविषनामानो रसस्य नैसर्गिकास्त्रयो दोषाः । मूर्छां मलेन कुरुते शिखिना दाहं विषेण मृत्युं च ॥ ५ ॥ अन्यच्च । मलेन मूर्छां दहनेन दाहं विषेण मृत्युं वितनोति सूतः । मलादिदोषत्रयमेतदत्र नैसर्गिकं शुद्धिमतोऽभिधास्ये ॥ १ ॥ नागो वङ्गो मलो वह्निश्चाञ्चल्यं च गिरिर्विषम् । पारदे कञ्चुकाः सप्त सन्ति नैसर्गिका इमे ॥ २ ॥ रक्तेष्टिकानिशाधूमसारोर्णाभिस्मचूर्णकैः । जम्बीरद्रवसंयुक्तैर्नागदोषापनुत्तये ॥ ३ ॥ विशालाङ्कोलमूलानां रजसा काञ्जिकेन च । शनैः शनैः स्वहस्तेन वङ्गदोषविमुक्तये ॥ ४ ॥ राजवृक्षस्य मूलोत्थचूर्णेन सह कन्यका[1] । मलदोषापनुत्त्यर्थं चित्रको वह्निदूषणम् ॥ ५ ॥ चाञ्चल्यं कृष्णधत्तूरो गिरिं हन्ति कटुत्रयम् । त्रिफला विषनाशाय कन्यका• सप्त कञ्चुकान् ॥ ६ ॥

## ॥ अथान्यप्रकारः ॥

आरग्वधो हन्ति मलं प्रयत्नात्कुमारिका सप्त हि कञ्चुकांश्च । अङ्कोलमूलं च विषं निहन्याद्रसस्य वह्निः किल पावकं च ॥ १ ॥ प्रत्येकं सप्तवारं च मर्दितः पारदो भवेत् । तदा विशुद्धतां याति सर्वयोगार्हितो भवेत् ॥ २ ॥ अन्यच्च । कुमारीत्रिफलाव्योषचित्रकं निम्बुकं रसम् । दिनैकं मर्दितं धृत्वा शुद्धो भवति पारदः ॥ १ ॥ अथ च । आरनालेन चोष्णेन क्षालयेत्प्रतिमर्दनम्[2] । रसं तत्र प्रयातं तु शोषयित्वाथ पातयेत् ॥ १ ॥ गृहीत्वा प्रक्षिपेत्सूते स्यादेवं पारदः शुचिः । पारदात्षोडशांशं तु मिलित्वा सकलं भिषक् ॥ २ ॥ चूर्णं प्रदेयं च पलं मर्दने तप्तखल्वके । अजाशकृत्तुषाग्निं च खनित्वा भूमिमावपेत् ॥ ३ ॥ तस्योपरि स्थितं खल्वं तप्तखल्वं जगुर्बुधाः ॥ एतन्मर्दनमाख्यातं रससंशुद्धये बुधैः ॥ ४ ॥ इति मर्दनम् ॥ त्र्यूषणं त्रिफला वन्ध्या कन्दक्षुद्राद्वयान्वितम्[3] । चित्रकेण निशाक्षारकन्यार्ककनकद्रवैः ॥ १ ॥ सूतं कृतेन क्वाथेन वारान्सप्त विमर्दयेत् । इत्थं संमूर्छितः सूतो जह्यात्सप्तापि कञ्चुकान् ॥ २ ॥ इति मूर्छनम् ॥

## ॥ अथोत्थापनम् ॥

तत उत्थापयेत्सूतमातपे निम्बुकार्दितम् । उत्थापनं विशिष्टं तु चूर्णपातनपञ्चके । धृत्वाग्ना ऊर्ध्वभाण्डातं संग्रहेत्पारदः शुचिः ॥ १ ॥ इत्युत्थापनम् ।

## ॥ अथ स्वेदनम् ॥

रसं चतुर्गुणे वस्त्रे रसोनकशरावके । नियन्त्र्य दोलायन्त्रे तु प्रकल्प्य दिवसं पचेत्

---

१ ( ख० ग० ) दन्ति । २ ( ख० ग० घ० ङ० ) कन्यया । ३ ( ख० ग० ) प्रतिमुर्दयेत् ( घ० प्रतिमर्दने । ४ ( ख० ग० घ० ) क्षुद्राद्वयान्वितः ।

॥ १ ॥ सव्योषत्रिफलावह्निकन्याकल्के तुषाम्बुनि । शेषदोषापनुत्त्यर्थमिदं स्वेदनमीरितम् ॥ २ ॥ इति स्वेदनम् । पलादूनस्य सूतस्य शतपल्यधिकस्य च । न संस्कारः प्रकर्तव्यः संस्कारः स्यात्ततोऽपरः ॥ १ ॥ शुभेऽहनि प्रकर्तव्य आरम्भो रसशोधने एकान्ते धामनि शुभे पुराभ्यर्च्यो हि भैरवः ॥ २ ॥ इति रसशोधनप्रकारः ।

## ॥ अथ गुणागुणाः ॥

सूतोऽशुद्धतया गुणं न कुरुते कुष्ठाग्निमान्द्यक्रिमिच्छर्दारोचकजाड्यदाहमरणं धत्ते नृणां सेवनात् । शुद्धः स्यात्सकलामयौघशमनो यो योगवाहो मृतो युक्त्या षड्गुणगन्धयुग्गदहरो योगेन धात्वादिभुक् ॥ १ ॥ मूर्च्छातो गदहृत्तथैव खगतिं दत्ते निबद्धोऽर्थदस्तद्भस्मामयवार्धकादिहरणं दृक्पुष्टिकान्तिप्रदम् । वृष्यं मृत्युविनाशनं बलकरं कान्ताजनानन्ददं शार्दूलातुलसत्वकृत्क्रमभुजां योगानुसारि स्फुटम् ॥ २ ॥ अन्यच्च । मूर्च्छां गतो यो हरते च रोगान् बद्धो यदा खेचरतामुपैति । लीनो भवेत्सर्वसमृद्धिदायी विराजतेऽसौ नितरां रसेन्द्रः ॥ १ ॥ मूर्छित्वा हरति रुजम्बन्धनमनुभूय मुक्तिदो भवति । अमरीकरोति हि मृतः कोऽन्यः करुणाकरः सूतात् ॥ २ ॥ अर्थाः सहाया निखिलं च शास्त्रं हस्तक्रियाकर्मणि कौशलं च । नित्योद्यमस्तत्परता च वह्निरेभिर्गुणैः सिध्यति सूतकेन्द्रः ॥ ३ ॥ अथवा दरदाकृष्टं खिन्नं लवणाम्बुभाजि दोलायाम् । रसमादाय यथेच्छं कर्तव्यस्तेन भिषजो योगः ॥ ४ ॥ निम्बूरसेन संपिष्टं प्रहरं दरदं दृढम् । ऊर्ध्वपातनयन्त्रेण सङ्ग्राह्यो निर्मलो रसः ॥ ५ ॥ इति दरदाकृष्टिः ॥

## ✓ ॥ अथ रसस्य मुखकरणम् ॥

अथ षड्बिन्दुकीटैश्च रसो मर्द्यस्त्रिवासरम् । लवणाम्लैर्मुखं तस्य जायते धातुभक्षकम् ॥ १ ॥ अन्यच्च । सार्षपो रसः स्यात्पटुशिग्रुतुल्यैः सराजिकैः शोषणकैस्त्रिवारम् पिष्टस्ततःखिन्नतनुः सुवर्णमुख्यानथं खादति सर्वधातून् ॥ १ ॥ इति मुखकरणम् ।

## ॥ अथ षड्गुणगन्धकजारणम् ॥

तप्तखल्वे रसं क्षिप्त्वा अधश्चुल्ल्यास्तुषाग्निभिः । स्तोकं स्तोकं क्षिपेद्गन्धमेवं वै षड्गुणं चरेत् ॥ १ ॥ अथवा कच्छपयन्त्रेण गन्धकजारणम् । मृत्कुण्डे निक्षिपेन्नीरं तन्मध्ये च शरावकम् । मृत्कुण्डे च पिधानाभं मध्ये मेखलया युतम् ॥ १ ॥ क्षिप्त्वा च मेखलामध्ये संशुद्धं रसमुत्तमम् । रसस्योपरि गन्धस्य रजो दद्यात्समांशकम् ॥ २ ॥ दत्वोपरि शरावं च भस्ममुद्रां प्रदापयेत् । तस्योपरि पुटं दद्याच्चतुर्भिर्गोमयोपलैः ॥ ३ ॥ एवं पुनः पुनर्गन्धं षड्गुणं जार्यते बुधैः । गन्धे जीर्णे भवेत्सूतस्तीक्ष्णाग्निः सर्वकर्मसु ॥ ४ ॥ इति गंन्धकजारणम् ।

---

१ (क०) रात्रम् ।

## ॥ अथ तद्गुणाः ॥

समे गन्धे तु रोगघ्नो द्विगुणे राजयक्ष्मनुत् । जीर्णे तु त्रिगुणे गन्धे कामिनीदर्पनाशनः ॥ १ ॥ चतुर्गुणे तु तेजस्वी सर्वशास्त्रविशारदः । भवेत्पञ्चगुणे सिद्धः षड्गुणे मृत्युनाशनः ॥२॥ इति षड्गुणगन्धकजारणम् ॥ दिनमेकं रसेन्द्रस्य यो ददाति हुताशनम् । द्रवन्ति तस्य पापानि कुर्वन्नपि न लिप्यते ॥ इति शिवागमोक्तम् ।

## ॥ अथ रसबन्धनम् ॥

रम्भा वीरस्नुही चैव क्षीरकञ्चुकिरेव च । दिनारिश्चैव गोरम्भा मीनाक्षी काचमाचिका ॥ एभिस्तु मर्दितः सूतः पुनर्जन्म न विद्यते ॥ १ ॥ अन्यच्च । पुष्पितमनोजमन्दिरमध्ये सूतो नियोजितो युक्त्या । बद्धो भवति कियद्भिर्दिवसैः पुष्पप्रभावेण ॥ २ ॥ अन्यच्च । भूलताशीवरीमूलं वारिणा मर्दयेद्दृढम् । तन्मूषां लेपयेन्मध्ये तन्मध्ये निक्षिपेद्रसम् ॥ ३ ॥ पञ्चटङ्कप्रमाणं तां मूषामङ्गारके क्षिपेत् । एवं बद्धो भवेत्सूतो मूषान्तःस्थो दृढो भवेत् ॥ ४ ॥ मुखमध्यगतस्तिष्ठेन्मुखरोगविनाशनः । शरीरे क्रमिते[1] सूते जरापलितजित्वरः ॥ ५ ॥ स्तम्भयेच्छस्त्रसंघातं कामोत्पादनकारकः । पुनर्नवं वयः कुर्यात्साधकानां न संशयः ॥ ६ ॥ इति रसबन्धनम् ।

## ॥ अथ रसमारणम् ॥

अपामार्गस्य बीजानां मूषायुग्मं प्रकल्पयेत् । तत्सम्पुटे न्यसेत्सूतं मेलयद्दुग्धमिश्रितम् ॥१॥ द्रोणपुष्पीप्रसूनानि विडङ्गमरिमेदकः । एतच्चूर्णमधश्चोर्ध्वं दत्वा मुद्रां प्रदापयेत् ॥ २ ॥ तं गोलं मुद्रयेत्सम्यग् मृन्मूषासंपुटे सुधीः । मुद्रां दत्वा शोषयित्वा ततो गजपुटे पचेत् । एवमेकपुटेनैव जायते सूतभस्मकम् ॥ ३ ॥ अन्यच्च । शुद्धसूतं समं गन्धं वटक्षीरैर्विमर्दयेत् ॥ पाचयेन्मृत्तिकापात्रे वटकाष्ठैर्विघट्टयेत् ॥ १ ॥ लघ्वग्निना दिनं पाच्यं भस्मसूतं भवेद्ध्रुवम् । द्विगुञ्जं पर्णखण्डेन पुष्टिमग्निं च वर्धयेत् ॥ २ ॥ इति रसमारणम् ।

## ॥ अथ रससिन्दूरः ॥

पलद्वयं शुद्धरसं पलार्धं शुद्धगन्धकम् । कर्षार्धं नवसारं च जम्बीरेण विमर्दयेत् ॥ १ ॥ काचकुप्यां क्षिपेच्चैव सप्तधा मृदकर्पटैः । विलेप्य काचकूपीं तामातपे शोषयेद्दृढम् ॥ २ ॥ छिद्रभाण्डे ततः कूपीं न्यसेत्सिकतयान्वितके । कूपिकां कण्ठमानेन पूजयेदिष्टदेवताः ॥ ३ ॥ पञ्च पूज्याः कुमार्यश्च ततश्चुल्यां विनिक्षिपेत् । पचेद्यामाष्टकं चैव कूपिकां च क्षणे क्षणे ॥ ४ ॥ संशोध्य पाचयेद्यन्त्रे स्वाङ्गशीतं समुद्धरेत् । ग्राह्यं च दरदाकारं देवदानवदुर्लभम् ॥ ५ ॥ सेवयेद्रोगनाशाय तत्तद्रोगानुपानतः । वल्लं वा वल्लयुग्मं वा कणया मधुना सह ॥ ६ ॥ सेवितं कामिनीकामं दर्शयेद्रतिकौतुकम् । वीर्यबन्धकरं शीघ्रं योषामदविनाशनम् ॥ ७ ॥ सिन्दूरं

---

१ (ख० ग० घ० ङ०) क्रामिते । २ (ख० ग०) मर्दयेत् ।

हरवीर्यसम्भवमिदं रूक्षाग्निमान्द्यापहं यक्ष्मादिक्षयपाण्डुशोफमुदरं गुल्मप्रमेहापहम्। शूलप्लीहविनाशनं ज्वरहरं दुष्टव्रणान्नाशयेदर्शांसि ग्रहणीभगन्दरहरं छर्दित्रिदोषापहम् ॥ ८ ॥ इति रससिन्दूरः ॥ अन्यच्च। सूतः पञ्चपलः स्वदोषरहितस्तत्तुल्यभागो बलिर्द्वौटङ्कौ नवसारपादकलितौ संमर्द्य कूप्यां न्यसेत्। तां यन्त्रे सिकताख्यके तलबिले पक्त्वाऽर्कयामं हिमं भित्त्वा कुङ्कुमपिञ्जरं रसवरं भस्मादिदेवेश्वराद् ॥ १ ॥ वाते सक्षौद्रपिप्पल्यपि च कफरुजि त्र्यूषणं साग्निचूर्णं पित्ते सैला सिता स्याद्व्रणवति बृहती नागराद्रामृताम्बु। पुष्टौ साज्यत्रियामा हरनयनफला शाल्मलीपुष्पवृन्तं किंवा कान्ताललाटाभरणरसपतेः स्यादनूपानमेतत् ॥ २ ॥ अन्यच्च। भागो रसस्य त्रय एव भागा गन्धस्य माषः पवनाशनस्य। संमर्द्य गाढं सकलं सुभाण्डे कज्जलीं काचकृते निदध्यात् ॥१॥ संरुध्य मृत्कर्पटकैर्वटीनां मुखे सचूर्णां गुटिकां च दत्वा। क्रमाग्निना त्रीणि दिनानि पक्त्वा तां वालुकायन्त्रगतां ततः स्यात् ॥ २ ॥ बन्धूकपुष्पारुणेभं रसस्य भस्म प्रयोज्यं च किलामयेषु। निजानुपानैर्मरणं जरां च हन्त्यस्य वल्लः क्रमसेवनेन ॥ ३ ॥ अपहरति रोगवृन्दं द्रढयति कायं महद्बलं कुरुते। शुक्रशतानि च सूते सिन्दूराख्यो रसः पुंसाम् ॥ ४ ॥ निखिलक्षयभक्षणदक्षतरं व्रणकुष्ठभगन्दरमेहहरम्। बलदीधितिशुक्रसमृद्धिकरं रसभस्म समस्तगदापहरम् ॥ ५ ॥ अन्यच्च। पलमात्रं रसं शुद्धं तावन्मात्रं तु गन्धकम्। विधिवत्कज्जलीं कृत्वा न्यग्रोधाङ्कुरवारिणा ॥ १ ॥ भावनात्रितयं दत्वा स्थालीमध्ये निधापयेत्। विधाय काच्छपं यन्त्रं वालुकाभिः प्रपूरयेत् ॥ २ ॥ दद्यात्तदनु मन्दाग्निं भिषग्यामचतुष्टयम्। जायते रससिन्दूरं तरुणारुणसन्निभम् ॥ ३ ॥ अनुपानविशेषेण करोति विविधान् गुणान्। क्षयकुष्ठमरुत्प्लीहमेहघ्नं पाण्डुनाशनम् ॥ ४ ॥

## ॥ अथ विशिष्टानुपानानि ॥

यथा जलगतं तैलं तत्क्षणादेव सर्पति। एवमौषधमङ्गेषु प्रसर्पत्यनुपानतः ॥ १ ॥ पिप्पलीमधुना सार्धं वातमेहं हिनस्ति च। त्रिफलाशर्करासार्धं पित्तमेहहरः स्मृतः ॥२॥ पिप्पली मरिचं शुण्ठी भार्गी च मधुना सह। कासश्वासप्रशमनः शूलस्य च विनाशनः ॥ ३ ॥ हरिद्राशर्करासार्धं रुधिरस्य विकारनुत्। त्र्यूषणं त्रिफला वासा कामलापाण्डुमान्द्यहृत् ॥४ ॥ पिप्पली चित्रकं पथ्या तथा सौवर्चलं क्षिपेत्। अग्निमान्द्यबद्धकोष्ठहृद्व्यथानाशनं परम् ॥५॥ शिलाजतु तथैला च सितोपलसमन्वितम्। मूत्रकृच्छ्रे प्रशस्तोऽयं सत्यं नागार्जुनोदितम् ॥ ६ ॥ लवङ्गं कुङ्कुमं पत्री हिङ्गुलं करहाटिका। पिप्पली विजया चैव समानीमानि कारयेत् ॥ ७॥ कर्पूरादहिफेनं च नागाद्भागार्धकं [illegible] सर्वमेकत्र संमर्द्य धातुवृद्धौ प्रदापयेत् ॥ ८ ॥ सौवर्चलं लवङ्गं च भूनिम्बश्च

१ (क० ) ह० ग० ) तदा शीतम् ( घ० क० ) शीतं भित्वा। २ ( ख० ग० घ० क० ) भारसस्य मीश- ख० ग० घ० क० ) पित्त। ४ ( ख० ग० घ० क० ) दहिफेनाच।

हरीतकी । अस्यानुपानयोगेन सर्वज्वरविनाशनः ॥ ९ ॥ तथा रेचकरः प्रोक्तः सौवर्चलपलत्रिकः । लवङ्गं कुङ्कुमं चैव दरदेन च संयुतः ॥ १० ॥ ताम्बूलेन समं भक्ष्यो धातुवृद्धिकरः परः । विदारीचूर्णयोगेन धातुवृद्धिकरो मतः ॥ विजयादीप्यसंयुक्तो वमनस्य विकारभुत् ॥ ११ ॥ सौवर्चलं हरिद्रा च विजया दीप्यकस्तथा । अनेनोदरपीडां च सद्योजातां विनाशयेत् ॥ १२ ॥ चतुर्वल्लं पलाशस्य बीजाच्च द्विगुणं गुडात् । अस्यानुपानयोगेन कृमिदोषविनाशनः ॥ १३ ॥ अहिफेनं लवङ्गं च दरदं विजया तथा । अस्यानुपानतः सद्यः सर्वातीसारनाशनः ॥ १४ ॥ सौवर्चलेन दीप्येन चाग्निमान्द्यहरः परः । क्षुद्बोधजनकश्चैव सिद्धनागेश्वरोदितम् ॥ १५ ॥ गुडूचीसत्वयोगेन सर्वपुष्टिकरः स्मृतः । युक्तानुपानसहितः सर्वान् रोगान्विनाशयेत् ॥ १६ ॥

## ॥ अथ रसेन्द्रस्य पथ्यापथ्यानि ॥

सैन्धवामृतधान्याकजीरकार्द्रकसंयुतम् । तण्डुलीयकवार्ताकपटोलालाजसाधितम् ॥ १ ॥ गोधूमजीर्णशाल्यन्नं गव्यं क्षीरं घृतं दधि । हंसोदकं मुद्गरसं रसेन्द्रे च हितं विदुः ॥ २ ॥ ग्रन्थान्तरे । अभ्यङ्गं मलिने योज्यं तैलैर्नारायणादिभिः । अबला शीततोयेन मस्तके परिषेचयेत् ॥ १ ॥ तृष्णायां नारिकेलाम्बु मुद्गयूषं सशर्करम् । द्राक्षादाडीमखर्जूरकदलीनां फलं भजेत् ॥ २ ॥ बृहतीबिल्वकूष्माण्डं वंशाग्रं कारवेल्लकम् । माषान् मसूरनिष्पावं कुलत्थाँल्लवणं तिलान् ॥ ३ ॥ लङ्घनोद्वर्तनं स्नानं ताम्रभाण्डे सुरासवम् । अनूपमांसं धान्याम्लं भोजनं कदलीदले ॥ ४ ॥ कांस्यके गुरु विष्टम्भि तीक्ष्णं चोष्णं भृशं तथा । अपथ्यं सूतराजस्य पुरा प्रोक्तं महर्षिभिः ॥ ५ ॥ कूष्माण्डं कर्कटी कोलं कलिङ्गं करमर्दकम् । करीरं चेति षट्कादीन् रसभुग्वर्जयेज्जनः ॥ ६ ॥

## ॥ अथ गन्धकः ॥

चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः । रक्तो हेमक्रियायुक्तः पीतश्चैव रसायने ॥ व्रणादिलेपने श्वेतः श्रेष्ठः कृष्णः सुदुर्लभः ॥ १ ॥ सदुग्धभाण्डस्य पटस्थितो ऽयं शुद्धो भवेत्कूर्मपुटेन गन्धः । आभ्यां कृता कज्जलिकानुपानैः सर्वामयघ्नी रसगन्धकाभ्याम् ॥ २ ॥ इति गन्धकशोधनम् । गन्धकः कटुकस्तिक्तो वीर्योष्णस्तुवरः सरः । पित्तलः कटुकः पाके कण्डूविसर्पजन्तुजित् ॥ १ ॥ हन्ति कुष्ठक्षयप्लीहकफवातान् रसायनम् । अशोधितो गन्ध एष कुष्ठसन्तापकारकः । शुक्रौजःक्षयमाबल्यं करोति च रुचिप्रणुत् ॥ २ ॥ इति गन्धकः ॥

## ॥ अथ हिङ्गुलः ॥

दरदस्त्रिविधः प्रोक्तश्चर्मारः शुकतुण्डकः । हंसपादस्तृतीयस्तु गुणवानुत्तरोत्तरम् ॥ १ ॥ चर्मारस्त्वतिरक्तः स्यात्किञ्चित्पीतः शुकास्यकः । श्वेतरेखः प्रवालाभो हंसपादः स उच्यते ॥ २ ॥ अशुद्धो दरदः कुर्यादान्ध्यं क्षैण्यं क्लमं भ्रमम् । मोहं मेहं च संशोध्यः क्रमाद्वैद्यैस्तु हिङ्गुलः ॥ ३ ॥ मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम् । सप्तवारं प्रपत्नेन शुद्धिमायाति निश्चितम् ॥ ४ ॥ इति शोधनम् ॥

## ॥ अथ मारणम् ॥

वल्लमात्रं तालपिष्टं शरावे स्थापयेत्ततः । तस्मिन्कर्षसमं देयं शकलं दरदस्य च ॥ १ ॥ पूरयेदार्द्रकरसं द्विगुणं तत्र बुद्धिमान् । पुष्पाणि माषमात्राणि परितः स्थापयेत्ततः ॥ २ ॥ शरावसम्पुटे दत्वा चुल्यां मध्याग्निना पचेत् । घटिकात्रयपर्यन्तं तत उत्तार्य पेषयेत् ॥ ३ ॥ ताम्बूले गुञ्जमात्रं तु देयं पुष्टिकरं मतम् । पाण्डौ क्षये च शूले च सर्वरोगेषु योजयेत् ॥ ४ ॥ इति दरदमारणम् ॥

## ॥ अथ रत्नानां शोधनमारणे ॥

## ॥ अथ वज्रम् ॥

व्याघ्रीकन्दगतं वज्रं दोलायन्त्रेण पाचयेत् । सप्ताहं कोद्रवक्वाथैः कुलिशं विमलं भवेत् ॥ १ ॥ इति शोधनम् ॥

## ॥ अथ मारणम् ॥

त्रिवर्षारूढकार्पासीमूलमादाय पेषयेत् । त्रिवर्षनागवल्ल्या वा निजद्रावैः प्रपेषयेत् ॥ १ ॥ तद्गोलके क्षिपेद्वज्रं रुद्ध्वा गजपुटे पचेत् । एवं सप्तपुटैर्नूनं कुलिशं मृतिमृच्छति ॥ २ ॥ अन्यच्च । त्रिसप्तकृत्वः सन्तप्तं खरमूत्रेण सेचितम् । मत्कुणैस्तालकं पिष्ट्वा तद्गोले कुलिशं क्षिपेत् ॥ १ ॥ प्रध्मातं वाजिमूत्रेण सिक्तं पूर्वक्रमेण वै । भस्मीभवति तद्वज्रं शङ्खशीतांशुसुन्दरम् ॥ २ ॥ अन्यच्च । हिङ्गुसैन्धवसंयुक्तक्वाथे कौलत्थजे क्षिपेत् । तप्तं तप्तं पुनर्वज्रं भूयाच्चूर्णं त्रिसप्तधा ॥ १ ॥ मण्डूकं कांस्यजे पात्रे निगृह्य स्थापयेत्सुधीः । स भीतो मूत्रयेत्तत्र तन्मूत्रे वज्रमावपेत् ॥ तप्तं तप्तं च बहुधा वज्रस्यैवं मृतिर्भवेत् ॥ २ ॥ इति मारणम् ॥ वज्रं समीरकफपित्तगदान्निहन्ति वज्रोपमं च कुरुते वपुरुत्तमाग्निं । शोषक्षयभ्रमभगन्दरमेहमेदःपाण्डूदरश्वयथुहारि च षण्ढपाण्ड्यम् ॥ १ ॥ इति गुणाः ॥

## ॥ अथ वैक्रान्तम् ॥

वैक्रान्तं वज्रवच्छोध्यं नीलं वा लोहितं तथा । हयमूत्रेण सिञ्चेत तप्तं तप्तं द्विसप्तधा ॥ १ ॥ ततस्तु मेषदुग्धैस्तु पञ्चाङ्गे गोलकं क्षिपेत् । पुटेन्मूषापुटे रुद्ध्वा कुर्यादेवं च सप्तधा । वैक्रान्तं भस्मतां याति वज्रस्थाने नियोजयेत् ॥ २ ॥ इति मारणम् ॥ वातपित्तानिलध्वंसि षड्रसं देहदार्ढ्यकृत् । पाण्डूदरज्वरश्वासकासयक्ष्मप्रमेहनुत् ॥ १ ॥ इति वैक्रान्तम् ॥

## ॥ अथ शेषरत्नशोधनमारणानि ॥

शुध्यत्यम्लेन माणिक्यं जयन्त्या मौक्तिकं शुचि । विद्रुमं क्षारवर्गेण तार्क्ष्यं गोदुग्धतः शुचि ॥ १ ॥ पुष्परागं च कौलत्थक्वाथयोगेन शुध्यति । रोचनाभिश्च गोमेदं वैडूर्यं त्रिफलाजलैः ॥ नीलं नीलीरसैर्वज्रं विना शुध्यति दोलया ॥ २ ॥ इति

---

१ ( स० ग० घ० ङ० ) संपुटम् ।

रसरत्नाकरात् । अन्यच्च । स्वेदयेद्दोलिकायन्त्रे जयन्त्याः स्वरसेन च । मणिमुक्ताप्रवालानि यामैकं शोधनं भवेत् ॥ १ ॥ इति शार्ङ्गधरात् ।

## ॥ अथ मारणम् ॥

लकुचद्रावसंपिष्टैः शिलातालकगन्धकैः । वज्रं विनान्यरत्नानि म्रियन्तेऽष्टपुटैः खलु ॥ १ ॥ अन्यच्च । कुमार्या तण्डुलीयेन स्तन्येन च निषेचयेत् । प्रत्येकं सप्तवेलं च तप्ततप्तानि कृत्स्नशः ॥१॥ मौक्तिकानि प्रवालानि तथा रत्नान्यशेषतः । क्षणाद्विविधवर्णानि म्रियन्ते नात्र संशयः ॥२॥ उक्तमाक्षिकवन्मुक्ताप्रवालानि च मारयेत् । वज्रवत्सर्वरत्नानि शोधयेन्मारयेत्तथा ॥ ३ ॥ इति शार्ङ्गधरात् । इति मारणम् । अथ गुणाः । रत्नानि चोपरत्नानि चक्षुष्याणि सराणि च । शीतलानि कषायाणि मधुराणि शुभानि च ॥१॥ वृष्याणि मङ्गलान्यायुस्तुष्टिपुष्टिकराणि च । ग्रहालक्ष्मीविपक्षैण्यपापसन्तापनानि च ॥२॥ यक्ष्मपाण्डुप्रमेहार्शःकासश्वासभगन्दरान् । ज्वरविसर्पकुष्ठानि शूलकृच्छ्रव्रणामयान् ॥ घ्नन्ति पुष्टिं यशः कान्तिं पुण्यानि च नृणां भृशम् ॥ ३ ॥ इति गुणाः ॥

## ॥ अथ शिलाजतु ॥

निदाघे घर्मसंतप्ता धातुसारं धराधराः । निर्यासवत्प्रमुञ्चन्ति तच्छिलाजतु कीर्त्यते ॥ १ ॥

## ॥ अथ शोधनम् ॥

अथोष्णकाले रवितापयुक्ते व्यभ्रे निवाते समभूमिभागे । चत्वारि पात्राण्यसितायसानि न्यस्यातपे दत्तमनोऽवधानः ॥ १ ॥ शिलाजतु श्रेष्ठमवाप्य पात्रे प्रक्षिप्य तोयं द्विगुणं ततोऽस्मात् । उष्णं तदर्धं शृतमत्र दत्वा विशोषयेत्तन्मृदितं यथावत् ॥२॥ ततस्तु कृष्णं समुपैति चोर्ध्वं सन्तानिकावद्रविरश्मियोगात् । पात्रात्तदन्यत्र ततो निदध्यात् तस्यान्तरे चोष्णजलं निधाय ॥ ३ ॥ ततश्च तस्मादपरत्र पात्रे तस्माच्च पात्रादपरत्र तत्र । पुनस्ततोऽन्यत्र निधाय कृष्णं यत्संहृतं तत्पुनराहरेच्च ॥ ४ ॥ यदा विशुद्धं जलमच्छमूर्ध्वं प्रसन्नभावान्मलमेत्यधस्तात् । तदा त्यजेत्तत्सलिलं मलं च शिलाजतु स्याज्जलशुद्धमेवम् ॥ ५ ॥ इति शोधनम् ।

## ॥ अथ शुद्धशिलाजतुपरीक्षा ॥

वह्नौ क्षिप्तं तु निर्धूमं यत्तु लिङ्गोपमं भवेत् । तृणाग्रेणाम्भसि क्षिप्तमधो गलति तन्तुवत् ॥ गोमूत्रगन्धि मलिनं शुद्धं ज्ञेयं शिलाजतु ॥ १ ॥ शिलाजतुरसायनं कटुकतिक्तमुष्णं क्रिमिक्षयोदरभिदश्मरीश्वयथुपाण्डुकण्डूहरम् । प्रमेहवमिकुष्ठजित्कफसमीरदुर्नामहृद्वलीपलितमानसानपि सकासकृच्छ्रप्रणुत् ॥ २ ॥ अशुद्धं दाहमूर्छाय भ्रमपित्तास्रशोषतः । शिलाजतु प्रकुरुते मान्द्यमग्नेश्च विड्ग्रहम् ॥ ३ ॥ इति शिलाजतु ।

## ॥ अथ सिन्दूरम् ॥

सिन्दूरं निम्बुकद्रावैः पिष्ट्वा वह्नौ विशोषयेत् । ततस्तण्डुलतोयेन तथाभूतं विशुध्यति ॥ १ ॥ सिन्दूरमुक्तं विसर्पकुष्ठकण्डूविषापहम् । भग्नसन्धानजननं व्रणशोधनरोपणम् ॥ २ ॥

## ॥ अथ समुद्रफेनः ॥

समुद्रफेनश्चक्षुष्यो लेखनः शीतलः सरः । कर्णस्रावरुजागुल्महरः पाचनदीपनः ॥ १ ॥ अशुद्धः स करोत्यङ्गभङ्गं तस्माद्विशोधयेत् । समुद्रफेनः सम्पिष्टो निम्बुतोयेन शुध्यति ॥ २ ॥

## ॥ अथ गैरिकम् ॥

गैरिकं किञ्चिदाज्येन भृष्टं शुद्धं प्रजायते । कायकान्तिवयःस्थैर्यबलौजोवृद्धिकारकम् ॥ १ ॥ प्रमेहकुष्ठपिटकासर्वव्रणविषापहम् । स्वर्णगैरिकमन्यत्तु श्रेष्ठं सामान्यगैरिकात् ॥ २ ॥

## ॥ अथैरण्डबीजशुद्धिः ॥

गन्धर्वहस्तबीजानि नारिकेलोदकेन च । याममात्राद्भवेच्छुद्धिर्दन्तीबीजं पचेद्यथा ॥

## ॥ अथ मरिचशुद्धिः ॥

मरीचं चाम्लतक्रेण भावितं घटिकात्रयम् । मरीचं निस्तुषं कृत्वा शुद्धं भवति निश्चितम् ॥ १ ॥

## ॥ अथ पिप्पलीशुद्धिः ॥

वैदेही चित्रकरसैरातपे तु भवेत्पुटे । सम्यक् शुद्धा भवत्यत्र रसयोगेषु योजयेत् ॥ १ ॥ इति पिप्पलीशुद्धिः ।

## ॥ अथ हिङ्गुशुद्धिः ॥

पद्मपत्ररसे याममातपे भावितं विदुः । रामठं शुद्धिमाप्नोति रसयोगेषु योजयेत् ॥ १ ॥

## ॥ अथ शङ्खः ॥

शङ्खक्षारो हिमो ग्राही ग्रहणीरेकनाशनः । नेत्रपुष्पहरो वर्ण्यस्तारुण्यपिटकाप्रणुत् ॥ अशुद्धो गुणदो नैष शुद्धोऽम्लैः स गुणप्रदः ॥ १ ॥ दक्षिणावर्तशङ्खस्तु त्रिदोषघ्नः शुचिर्निधिः । ग्रहालक्ष्मीक्षयक्ष्वेडक्षामतिक्तक्षयाक्षमी[1] ॥ २ ॥

## ॥ अथ भूनागसत्वमयूरपक्षसत्वगुणाः ॥

ताम्रभूभवभूनागांस्त्रिंशत्[3] पिष्यन्समेन तान्[2] । पुरलाक्षोर्णनाभिः स्यान्मत्स्यापि-

---

१ ( ख० ग० ) क्षयाक्षर्या ( घ० ङ० ) क्षुयक्षयी । २ ( ख० ग० ) भूनागम् ( घ० ङ० ) भूनागा । ३ ( ख० ग० ) त्रिशत् ( घ० ङ० ) त्रिंशा ।

ण्याकटङ्कणैः ॥ १ ॥ द्रवमेतैश्च संयोज्य मर्दयित्वा धमेत्सुखम् । मुञ्चन्ति ताम्रवर्णसत्वं तत्पक्षा अपि बर्हिणाम् ॥ २ ॥ भूनागसत्वं शिशिरं सर्वकुष्ठव्रणप्रणुत् । तत्स्पृष्टजलपानेन स्थावरं चापि जङ्गमम् ॥ ३ ॥ विषं नश्यति तत्पात्रगतः सूतोऽग्निगो दृढः । एवं मयूरपक्षोत्थसत्वस्यापि गुणो मतः ॥ ४ ॥

## ॥ अथ कर्पूरशुद्धिः ॥

गोदुग्धे त्रिफला क्वाथे भृङ्गद्रावे समांशके । मर्दयेद्याममात्रं तु कर्पूरं शुद्धिमाप्नुयात् ॥ १ ॥

## ॥ अथ टङ्कणशोधनम् ॥

अशुद्धष्टङ्कणो वान्तिभ्रान्तिकारी प्रयोजितः । अतस्तं शोधयेदेवं गोमयेनावृतः शुचिः ॥ १ ॥ टङ्कणो वह्निकृत्स्वर्णरूप्ययोः शोधनः सरः । विषदोषहरो हृद्यो वातश्लेष्मविकारनुत् ॥ २ ॥

## ॥ अथ विषम् ॥

कालकूटो वत्सनाभः शृङ्गकश्च प्रदीपनः । हालाहलो ब्रह्मपुत्रो हरिद्रः सक्तुकस्तथा ॥ सौराष्ट्रिक इति प्रोक्ता विषभेदा अमी नव ॥ १ ॥ ब्राह्मणः पाण्डुरस्तेषु क्षत्रियो रक्तवर्णकः । वैश्यः पीतप्रभः शूद्रः कृष्णाभः स तु निन्दितः ॥ २ ॥ रसायने विषं विप्रं देहपुष्टौ तु बाहुजम् । कुष्ठनाशे प्रयुञ्जीत वैश्यं शूद्रं तु धातुषु ॥ ३ ॥ विषं प्राणहरं युक्त्या प्राणकृच्च रसायनम् । योगवाहि परं श्लेष्मवातहृत्सन्निपातजित् ॥ ४ ॥

## ॥ अथ विषशोधनम् ॥

विषं तु खण्डशः कृत्वा वस्त्रखण्डेन बन्धयेत् । गोमूत्रमध्ये निक्षिप्य स्थापयेदातपे त्र्यहम् ॥ १ ॥ गोमूत्रं तु प्रदातव्यं नूतनं प्रत्यहं बुधैः । त्र्यहेऽतीते तदुद्धृत्य शोषयेन्मृदु पेषयेत्[2] ॥ शुध्यत्येवं विषं सेव्यं योग्यं भवति चार्तिजित् ॥ २ ॥ अन्यच्च । खण्डीकृत्य विषं वस्त्रपरिबद्धं तु दोलया । अजापयसि संस्विन्नं यामतः शुद्धिमाप्नुयात् ॥ अजादुग्धाभावतस्तु गव्यक्षीरेण भावयेत् ॥ १ ॥ अन्यच्च । विषग्रन्थिं मले न्यस्य माहिषे दृढमुद्रितम् । करीषाग्नौ पचेद्यामं वस्त्रपूतं विषं शुचि ॥ १ ॥ अन्यच्च । कणशो वत्सनागं च कृत्वा बद्ध्वा च कर्पटे । दोलायन्त्रे जलक्षीरे प्रहराच्छुद्धिमृच्छति ॥ १ ॥

## ॥ अथ विषमारणम् ॥

तुल्येन टङ्कणेनैव द्विगुणेनोषणेन च । विषं संयोजितं शुद्धं मृतं भवति सर्वथा ॥ १ ॥

## ॥ अथ गुणाः ॥

विषं रसायनं बल्यं वातश्लेष्मविकारनुत् । कटुतिक्तकषायं च मदकारि सुखप्र-

---

१ (ग०) तद्वत्पक्षापि । २ (ख० ग० घ० ङ०) शोधयेत् ।

दम् ॥ १ ॥ व्यवायि शीतनुद्दाहि कुष्ठवातास्रनाशनम् । अग्निमान्द्यश्वासकासप्लीहोदर-भगन्दरान् ॥ गुल्मपाण्डुव्रणार्शांसि नाशयेत्क्रमशो नृणाम् ॥ २ ॥ इति विषम् ॥

## ॥ अथ गौरीपाषाणभेदः ॥

गौरीपाषाणकः प्रोक्तो द्विविधः श्वेतरक्तकः । श्वेतः शङ्खसदृग्रक्तो दाडिमाभः प्रकीर्तितः ॥ १ ॥ श्वेतः कृत्रिमकः प्रोक्तो रक्तः पर्वतसम्भवः । विषरूपधरौ तौ हि रसकर्मणि पूजितौ ॥ २ ॥ नामान्याह । गौरीपाषाणकश्चान्यो विकटो रक्तचूर्णकः ॥ १ ॥ गुणानाह । रसबन्धकरः स्निग्धो दोषघ्नो रसवीर्यकृत् ॥ १ ॥ शुद्धिमाह । घननादरसान्विते च मल्लः परिपाच्यः किल दोलकाह्वयन्त्रे । शुभवह्निरथो दिनं च मन्दः परिदेयः परिजायते स शुद्धः ॥ १ ॥ अन्यच्च । उल्लीपाषाणसंशुद्धिर्वक्ष्यते शास्त्रसंमतम् । चूर्णीकृतं पटे बद्ध्वा शिल्लाक्षारोदकेन च ॥ १ ॥ दोलायन्त्रे दिनैकं तु पाचितः शुद्धिमाप्नुयात् । विकटं पोटलीं बद्ध्वा दोलायन्त्रेण काञ्जिके ॥ २ ॥ टङ्कणे वा गवां दुग्धे पाचयेद्घटिकाद्वयम् । आजमांसरसे वापि शुद्धो भवति निश्चयात् ॥ ३ ॥ उल्लीपाषाणमल्लं च केचिन्नामान्तरं विदुः । वाते कफे तथा शीते योजयन्ति चिकित्सकाः ॥ ४ ॥

## ॥ अथोपविषाण्याह ॥

अर्कक्षीरस्नुहीक्षीरलाङ्गलीकरवीरकाः । गुञ्जाहिफेनधत्तूराः सप्तोपविषजातयः ॥ १ ॥

## ॥ अथ मतान्तरम् ॥

अर्कस्नुग्लाङ्गलीगुञ्जाहयारिविषमुष्टयः । धूर्तोऽहिफेनजैपालौ नवोपविषजातयः ॥ १ ॥ अर्कद्वयं सरं वातकुष्ठकण्डूविषापहम् । निहन्ति प्लीहगुल्मार्शोयकृच्छ्लेष्मोदरक्रिमीन् ॥ २ ॥

## ॥ अथ स्नुक् ॥

सेहुण्डो रेचनस्तीक्ष्णो दीपनः कटुको गुरुः । शूलमष्ठीलकाध्मानगुल्मशोफोदरानिलान् ॥ १ ॥ हन्ति दोषान्यकृत्प्लीहकुष्ठोन्मादांश्च पाण्डुताम् । अर्कसेहुण्डयोर्दुग्धं तरस्वयं शुद्धमुच्यते ॥ २ ॥

## ॥ अथ लाङ्गलीमाह ॥

कलिकारी सरा कुष्ठशोफार्शोव्रणशूलजित् । तीक्ष्णोष्णा कृमिनुल्लघ्वी पित्तला गर्भपातिनी ॥ लाङ्गली शुद्धिमायाति दिनं गोमूत्रसंस्थिता ॥ १ ॥

## ॥ अथ गुञ्जामाह ॥

गुञ्जा लघुर्हिमा रूक्षा भेदनी श्वासकासजित् । कोष्णा वृष्या कुष्ठकण्डूश्लेष्मपित्तव्रणापहा । गुञ्जा काञ्जिकसंस्विन्ना शुद्धिमायाति यामतः ॥ १ ॥

## ॥ अथ हयारिमाह ॥

करवीरद्वयं नेत्ररोगकुष्ठव्रणापहम् । लघूष्णं क्रमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥ हयारिर्विषवच्छोध्यो गोदुग्धे दोलकेन तु ॥ १ ॥

## ॥ अथ विषतिन्दुकमाह ॥

विषमुष्टिस्तिक्तकटुस्तीक्ष्णोष्णः श्लेष्मवातहा । सारमेयविषोन्मादहरो मेदोहरः स्मृतः ॥ १ ॥ विषमुष्ट्यारनालेन सप्ताहं शुद्धिमाप्नुयात् । किं वा चाज्येन संभृष्टो विषमुष्टिर्विशुध्यति ॥ २ ॥

## ॥ अथ जैपालमाह ॥

जैपालोऽग्नि गुरुस्तिक्तो वान्तिकृज्ज्वरकुष्ठनुत् । उष्णः सरो व्रणश्लेष्मकण्डू-क्रिमिविषापहः ॥ १ ॥

## ॥ अथ शुद्धिमाह ॥

जैपालं रहितं त्वगङ्कुररसज्ञाभिर्मले माहिषे निक्षिप्तं त्र्यहमुष्णतोयविमलं खल्वे सवासोर्दितम् । लिप्तं नूतनखर्परेषु विगतस्नेहं रजःसन्निभं निम्बूकाम्बुविभावितं च बहुशः शुद्धं गुणाढ्यं भवेत् ॥ १ ॥ अन्यच्च । जैपालं निस्तुषं कृत्वा दुग्धे दोला-युतं पचेत् । अन्तर्जिह्वां परित्यज्य युञ्ज्याच्च रसकर्मणि ॥ १ ॥ अन्यच्च । वस्त्रे बद्ध्वा तु जैपालं गोमयस्योदके न्यसेत् । पाचयेद्याममात्रं तु जैपालः शुद्धतां व्रजेत् ॥ १ ॥

## ॥ अथोन्मत्तमाह ॥

धत्तूरो मदवर्णाग्निवातकृज्ज्वरकुष्ठनुत् । उष्णो गुरुर्व्रणश्लेष्मकण्डूक्रिमिविषापहः ॥ १ ॥ धत्तूरबीजं गोमूत्रे चतुर्यामोषितं पुनः । कथितं निस्तुषं कृत्वा शुद्धं योगेषु योजयेत् ॥ २ ॥

## ॥ अथाहिफेनमाह ॥

अफुकं शोषणं ग्राहि श्लेष्मघ्नं वातपित्तलम् । मदतृड्दाहकृच्छ्रुक्रस्तम्भनायासमो-हकृत् ॥१॥ अतिसारे ग्रहण्यां च हितं दीपनपाचनम् । सेवितं दिवसैः कैश्चिद्भ्रम-यत्यन्यथार्तिकृत् ॥ २ ॥ अहिफेनं शृङ्गबेररसैर्भाव्यं त्रिसप्तधा । शुध्यत्युक्तेषु यो-गेषु योजयेत्तद्विधानतः ॥ ३ ॥ नवभिर्मर्दितः सूतश्छिन्नपक्षः प्रजायते । मुखं च जायते तस्य धातूंश्च ग्रसतेतराम् ॥ ४ ॥ भङ्गिका पित्तला तिक्ता तीक्ष्णोष्णा ग्राहिणी लघुः । कर्षणी दीपनी रुच्या मदकृत् कफवातहृत् ॥ ५ ॥ बब्बूलत्वक्कषा-येण भङ्गां संस्वेद्य शोषयेत् । गोदुग्धभावनां दत्त्वा शुष्कां सर्वत्र योजयेत् ॥ ६ ॥

## ॥ अथ सर्वविषे गरुडमन्त्रमाह ॥

ॐनमः प्रचण्डगरुडाय पक्षिराजाय विष्णुवाहनाय विनतासुताय हे गरुड कश्यपसुत वैनतेय तार्क्ष्य स्वर्णवज्र चञ्चुवज्र तुण्डनखप्रहरणाय अनन्तवासुकितक्षक-कर्कोटकपद्ममहापद्मशङ्खपालकुलिकजयविजय अष्टमहानागकाल उच्चाटनीमूषक-विषप्रहरणावहनधूनन शीघ्रकम्प २ आवेश २ ढण्ढेर हे श्रीगरुडायनमः

---

१ (ख० ग० घ० ङ०) सरः। २ (ग० ङ०) कण्डूतम् । ३ (घ०) वज्रनख । ४ (घ०) ढढंर ।

। मन्त्रेणानेन मन्त्रज्ञो जलं चुलकमात्रकम् । सप्तवाराभिजप्तं तु पाययेद् ग्रस्तचेतनम्॥१॥सर्पादिविषवेगेन सद्यो निर्विषमाप्नुयात् । त्रिवारमेवं पानीयं पातव्यं न पिबेदपि ॥ २ ॥ मुखमध्ये तदाक्षेपः कर्तव्यस्तज्जलेन हि । अथवा मस्तके तस्य तर्जन्या ताडयेद्बुधः । त्रिवारं मन्त्रपूर्वं तु निर्विषो भवति क्षणात् ॥ ३ ॥ इति विषोपविषविधिः ॥

## ॥ अथाभ्रसत्वपातनविधिः ॥

भावयेच्चूर्णितं त्वभ्रं दिनैकं काञ्जिकेन च । रम्भासूरणजैर्नीरैर्मूलकैश्च सुमेलयेत् ॥ १ ॥ तुर्यांशटङ्कणेनैव क्षुद्रमत्स्यैः समं पुनः । महिषीमलसंमिश्रान्विधायास्याथ गोलकान् ॥ २ ॥ खराग्निना धमेद्गाढं सत्वं मुञ्चति कांस्यवत् । मारितं ताम्रवत्त्वभ्रपारदाभ्यां निषेवयेत् ॥ ३ ॥ सत्वमभ्रस्य शिशिरं त्रिदोषघ्नं रसायनम् । विशेषात् पुंस्त्वजननं वयसस्तम्भनं परम् ॥ ४ ॥ इत्यभ्रसत्वम् । अगस्त्यपत्रनिर्यासमर्दितं सूरणस्थितम् । अभ्रं गोष्ठगतं मासं जायते पारदोपमम् ॥ ५ ॥ इत्यभ्रकद्रुतिः ॥

## ॥ अथ तालकसत्वम् ॥

लाक्षाराजितिलाञ्शिग्रु टङ्कणं लवणं गुडम् । तालकार्धेन संमिश्रं मृषायां स्थिरभाजने ॥ रुद्ध्वा पुटेदधोयन्त्रे सत्वं मुञ्चति सर्वथा ॥ १ ॥ इति तालकसत्वम् ॥

## ॥ अथ क्षारकल्पना ॥

क्षारवृक्षस्य काष्ठानि शुष्काण्यग्नौ प्रदीपयेत् । नीत्वा तद्भस्म मृत्पात्रे क्षिप्त्वा नीरे चतुर्गुणे ॥ १ ॥ विमर्द्य धारयेद्रात्रौ प्रातरुत्थं जलं नयेत् । तन्नीरं क्वाथयेद्वह्नौ यावत्सर्वं विशुष्यति ॥ २ ॥ ततः पात्रात्समुद्धृत्य क्षारो ग्राह्यः सितप्रभः । चूर्णाभः प्रतिसार्यः स्यात्तेजसः क्वाथवत्स्थितः ॥ इति क्षारद्वयं धीमान् युक्तकार्येषु योजयेत् ॥ ३ ॥ इति क्षारकल्पना ॥ इति रसोपरसविषोपविषाभ्रतालकसत्वक्षारकल्पनाकथनम् ॥

## ॥ अथाभाववर्गः ॥

सत्त्वाभावे गुडूच्यास्तु अमृताया रसः स्मृतः । चित्रकाभावतो दन्तीक्षारः शिखरिजो मतः ॥ १ ॥ अभावे धन्वयासस्य प्रक्षेप्याऽथ दुरालभा । तगरस्याप्यभावे तु कुष्ठं देयं भिषग्वरैः ॥ २ ॥ मूर्वाभावे त्वचो ग्राह्या लिङ्गिनीप्रभवा बुधैः । अहिंस्राया अभावे तु मानकन्दः प्रशस्यते ॥ ३ ॥ लक्ष्मणाया अभावे तु नीलकण्ठ इति स्मृतः । बकुलाभावतो देयं कल्हारोत्पलपङ्कजम् ॥४॥ नीलोत्पलस्याभावे तु कुमुदं तत्र दीयते । कमलस्याप्यभावे तु कमलाक्ष इति स्मृतः ॥५॥ बकुलस्याप्यभावे तु आभात्वक् तत्र दीयते । जातीपत्रं न यत्रास्ति लवङ्गं तत्फलं स्मृतम् ॥६॥ अर्कपर्णादिपयसो ह्यभावे तद्रसो मतः । पौष्कराभावतः कुष्ठं तथैरण्डजटा मता ॥ ७ ॥ स्थौणेयकस्याभावे

तु भिषग्भिर्दीयते गदः । चविकागजपिप्पल्यौ पिप्पलीमूलवत्स्मृते ॥ ८ ॥ अभावे सोमराज्यास्तु प्रपुन्नाट इति स्मृतः । यत्र न स्याद्दारुनिशा तदा देया निशा बुधैः ॥ ९ ॥ रसाञ्जनस्याभावे तु सम्यग्दार्वी प्रयुज्यते । सौराष्ट्र्यभावतो ज्ञेयं स्फुटिकं तद्गुणं भवेत्॥ १० ॥ तालीसपत्रका... ...ताली प्रशस्यते । भार्ग्यभावे तु तालीसं कण्टकारीजटाथवा ॥ ११ ॥ रुचकाभावतो दद्याल्लवणं पांसुपूर्वकम् । लवणानामभावे च सैन्धवं तत्र दीयते ॥ १२ ॥ अभावे मधुयष्ट्यास्तु धातकीं च प्रयोजयेत् । अम्लवेतसकाभावे चुक्रं दातव्यमिष्यते ॥१३ ॥ तदभावे तु सर्वत्र जम्बीरादिरसः स्मृतः । द्राक्षा यदि न लभ्यन्ते प्रदेयं काश्मरीफलम् ॥ १४ ॥ तयोरभावे कुसुमं मधुकस्य मतं बुधैः । लवलीकुसुमं देयं नखस्याभावतः पुनः ॥ १५ ॥ वरी विदारी मुसली जीरकं च निशाद्वयम् । दीप्यकं देवदारुश्चाभावे त्वेकं प्रयोजयेत्॥१६॥ कण्टकारीयुगं चैव धावनीयुगमेव च । शतपुष्पाद्वयं चैव उशीरयुगलं तथा ॥१७ ॥ मुद्गपर्णीमाषपर्णीयुग्मं चैव ततो भवेत् । तर्कारीयुगलं चैव सर्वत्रेति विनिश्चयः ॥ १८ ॥ पृथक् पृथग् द्वन्द्वमध्येऽभावे तत्र प्रयोजयेत् । परस्परस्याभावे तु एकं तत्र प्रयोजयेत् ॥ १९ ॥ कस्तूर्यभावे कक्कोलं देयं तत्र भिषग्वरैः । कक्कोलस्याप्यभावे तु जातीपुष्पं प्रदीयते ॥ २० ॥ अथवा मालतीपुष्पं पत्रं वा दीयते बुधैः । कर्पूराभावतो देयं सुगन्धि मुस्तकं तथा ॥ २१ ॥ कर्पूराभावतो देयं ग्रन्थिपर्णं विशेषतः । कुङ्कुमाभावतो दद्यात्कुसुम्भकुसुमं नवम्॥२२॥श्रीखण्डचन्दनाभावे कर्पूरं देयमिष्यते । अभावे च ततो वैद्यः प्रक्षिपेद्रक्तचन्दनम् ॥२३॥ रक्तचन्दनकाभावे नवोशीरं विदुर्बुधाः । निर्गन्धं च सगन्धं द्विविधं रक्तचन्दनम् ॥२४॥ अन्योऽन्यस्याप्यभावे तु योजयेन्मतिमान्भिषक् । परस्परस्याभावे तु योजयेच्चन्दनत्रयम् ॥ २५ ॥ सुरता चातिविषाभावे देया तत्र शिवा मता । अभावे च हरीतक्या मता कर्कटशृङ्गिका ॥२६॥ अभावे नागपुष्पस्य पद्मकेसरमिष्यते । भल्लातकस्याभावे तु नदीभल्लातको मतः ॥ २७ ॥ मेदाजीवककाकोली-ऋद्धिवृद्धिद्वयोऽसति । वरी विदार्यश्वगन्धावाराहीश्च क्रमात् क्षिपेत् ॥ २८ ॥ वाराह्याश्च तथाभावे चर्मकारालुको मतः । वाराहीकन्दकः प्रोक्तः पश्चिमे गृष्टिसंज्ञकः ॥ २९ ॥ क्षीरान्विता मूलकतुल्यकन्दा सप्ताग्रपत्रा सितरक्तकाण्डा । बिभर्ति या पल्लवमब्दशब्दात्साकुक्षुकी श्वेतवपूर्वरेण्या ॥ ३० ॥ श्यावकर्कशवाराहवृषणामानकन्दकाः । ताम्बूलवल्ली छदनावल्ली वाराहकुष्टिका॥३१॥ भल्लाताभावतश्चित्रं नलश्चेक्षोरभावतः । कुशस्य चाप्यभावे तु काशो ग्राह्यः प्रयत्नतः ॥ ३२ ॥ बिल्वकाश्मर्यतर्कारीपाटलाटिण्टुकैर्महत् । ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैर्भवेत्॥३३॥एतेषां दशमूलानामेकमूलं प्रयोजयेत् । अभावे तद्गुणं मूलं योज्यं वैद्यविशारदैः ॥३४॥ मधु यत्र न लभ्येत तत्र जीर्णगुडो मतः । मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तराः॥३५॥मत्स्यण्ड्यभावतो देयं खण्डं च परिकीर्तितम् । तदभावे सिता योज्या बुधैः सर्वत्र निश्चयः ॥ ३६ ॥ निर्गुण्ड्याश्चाप्यभावे तु सुरसा दीयते बुधैः । तुलस्या अप्यभावे तु निर्गुण्डीं योजयेत्ततः ॥३७॥ कुठेरिकायाश्चाभावे तुलसीं

तत्र योजयेत् । पुनर्नवायाश्चाभावे रक्ता सा च प्रकीर्तिता ॥ ३८ ॥ रास्ना यदि न लभ्येत कोलाञ्जनमिति स्मृतम् । सुवर्णस्याप्यभावे तु स्वर्णमाक्षिकमुच्यते ॥ ३९ ॥ तारमाक्षिकमायोज्यं तदभावे तु यत्नतः । माक्षिकस्याप्यभावे तु प्रदद्यात्स्वर्णगैरिकम् ॥ ४० ॥ शुद्धो रसो हाटकादि मृतं यत्र न लभ्यते । तत्र लोहेन कर्माणि भिषक् कुर्यात्प्रयत्नतः ॥ ४१ ॥ कान्ताभावे तीक्ष्णलोहं योजयेद्वैद्यसत्तमः । अभावे मौक्तिकस्यापि मुक्ताशुक्तिं प्रयोजयेत् ॥ ४२ ॥ वैदूर्यादीनि रत्नानि न लभ्यन्ते ऽत्र धीमता । तत्र मुक्तादिभूतिं च योजयेच्च भिषग्वरः ॥ ४३ ॥ अभावे रसभूत्याश्च सिन्दूरं रसपूर्वकम् । तदभावे तु दरदं योजयेत्तत्र बुद्धिमान् ॥ ४४ ॥ अलाभे यच्च तद्द्रव्यं प्रत्याम्नायेन योजयेत् । गोक्षीराभावतश्छागं पयः सर्वत्र दीयते ॥४५॥ गोघृतस्याप्यभावे तु चाजं सर्वत्र दीयते । अत्र प्रोक्तानि वस्तूनि तानि तेषु च योजयेत् ॥ ४६ ॥ क्षीराभावे रसो मौद्गो मासूरो वा प्रयुज्यते । उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् ॥ त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः ॥ ४७ ॥ इति वाग्भटोक्तिः ॥ आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत् । फेनीभूतं कफं यातं विदाहादम्लतां ततः ॥ अग्निना शोषितं पक्वं पिण्डितं कटु मारुतात् ॥ १ ॥ चरकाचार्यस्तु—तीक्ष्णं रूक्षं लघु स्निग्धं मृदूष्णं गुरु शीतलम् वीर्यमष्टविधं केचिद् द्विविधं प्राहुरत्रयः ॥ १ ॥ रसवीर्यविपाकाद्यैः समं द्रव्यं विचिन्त्य च । युञ्ज्यात्तद्विधमन्यच्च द्रव्याणां च रसादिकम् ॥ २ ॥ कुठेरिकायाः स्वरसेन सम्यक् स्वर्णादिकानां च भवेच्च भस्म । वान्त्यादिदोषं न करोति तत्तु वन्योपलाभिर्गजसंज्ञकं पुटम् ॥ ३ ॥ वमनं रेचनं नस्यं कर्णपूरणमेव च । रक्तस्रुतिः समासेन कथ्यते नातिविस्तरम् ॥ ४ ॥

## ॥ अथ वमनम् ॥

शरत्काले वसन्ते च प्रावृट्काले च देहिनाम् । वमनं रेचनं चैव कारयेत्कुशलो भिषक् ॥ १ ॥ बलवन्तं कफव्याप्तं हृल्लासादिनिपीडितम् । तथा वमनसात्म्यं च धीरचित्तं च वामयेत् ॥ २ ॥ विषदोषे स्तन्यरोगे मन्दाग्नौ श्लीपदेऽर्बुदे । हृद्रोगकुष्ठविसर्पमेहाजीर्णभ्रमेषु च ॥ ३ ॥ विदारिकापचीकासश्वासपीनसवृद्धिषु । अपस्मारे ज्वरोन्मादे तथा रक्तातिसारिषु ॥ ४ ॥ नासाताल्वोष्ठपाके च कर्णस्रावेऽधिजिह्वके । गलशुण्ड्यामतीसारे पित्तश्लेष्मगदे तथा ॥ ५ ॥ मेदोदोषेऽरुचौ चैव वमनं कारयेद्भिषक् । न वामनीयस्तिमिरी न गुल्मी नोदरी कृशः ॥ ६ ॥ नातिवृद्धो गर्भिणी च न स्थूलो न क्षतातुरः । सुकुमारं कृशं बालं वृद्धं भीरुं न वामयेत् ॥ ७ ॥ वमने चापि वेगाः स्युरष्टौ पित्तान्त उत्तमाः । षड्वेगा मध्यमा वेगाश्चत्वारस्त्ववरा मताः ॥ ८ ॥ कृष्णाराठफलं सिन्धुं कफे कोष्णजलैः पिबेत् । पटोलवासानिम्बैश्च पित्ते शीतजलं पिबेत् ॥ ९ ॥ सश्लेष्मवातपीडायां सक्षीरं मदनं पिबेत् । अजीर्णे कोष्णपानीयं सिन्धुं पित्वा वमेत्सुधीः ॥ १० ॥

## ॥ अथ ग्रन्थान्तरे ॥

पटोलनिम्बसलिलं चाम्लपित्ते च वान्तिकृत् । लवणं घृतयुक्तं च वमनार्थं सुखावहम् ॥ १ ॥ हृत्कण्ठशिरसां शुद्धिर्दीप्तमग्निं च लाघवम् । कफपित्तविनाशश्च सम्यग्वान्तस्य चेष्टितम् ॥ २ ॥ ततोऽपराह्णे दीप्ताग्निं मुद्गषष्टिकशालिभिः । हृद्यैश्च जाङ्गलरसैः कृत्वा यूषं च भोजयेत् ॥ ३ ॥ अजीर्णं शीतपानीयं व्यायामं मैथुनं तथा । स्नेहाभ्यङ्गं प्रकोपं च दिनैकं वर्जयेत्सुधीः ॥ ४ ॥ इति वमनविधिः ॥

## ॥ अथ विरेचनम् ॥

स्निग्धस्विन्नाय वान्ताय दद्यात्सम्यग्विरेचनम् । अवान्तस्य त्वधः स्रस्तो ग्रहणीं छादयेत्कफः ॥ १ ॥ मन्दाग्निं गौरवं कुर्याज्जनयेद्वा प्रवाहिकाम् । अथवा पाचनेनैव बलासं चापि पाचयेत् ॥ २ ॥ स्निग्धस्य स्नेहनैः कार्यं स्वेदैः स्विन्नस्य रेचनम् । शरदृतौ वसन्ते च देहशुद्धौ विरेचयेत् ॥ ३ ॥ अन्यदात्ययिके कार्ये स्वेदनं शीलयेद्बुधः । पित्ते विरेचनं युञ्ज्यादामोद्भूते गदे तथा ॥ ४ ॥ उदरे च तथाध्माने कोष्ठशुद्धौ विशेषतः । दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः ॥ ५ ॥ ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः । बालवृद्धावतिस्निग्धः क्षतक्षीणो भयान्वितः ॥६॥ श्रान्तस्तृषार्तः स्थूलश्च गर्भिणी च नवज्वरी । नवप्रसूता नारी च मन्दाग्निश्च मदात्ययी ॥ ७ ॥ शल्यार्दितश्च रूक्षश्च न विरेच्या विजानता । जीर्णज्वरी गरव्याप्तो वातरक्ती भगन्दरी ॥ ८ ॥ अर्शःपाण्डूदरग्रन्थिहृद्रोगारुचिपीडितः । योनिरोगप्रमेहार्तो गुल्मप्लीहव्रणार्दितः ॥ ९ ॥ विद्रधिच्छर्दिविस्फोटविषूचीकुष्ठसंयुताः । कर्णनासाशिरोवक्त्रगुदमेढ्रामयान्विताः ॥ १० ॥ प्लीहशोफाक्षिरोगार्ताः कृमिक्षारानलार्दिताः । शूलिनो मूत्रघातार्ता विरेकार्हा नरा मताः ॥ ११ ॥

## ॥ अथ रेचनम् ॥

एरण्डतैलं त्रिफलाक्वाथेन द्विगुणेन च । युक्तं पीत्वा पयोभिर्वा न चिरेण विरिच्यते ॥ १ ॥ त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् । समृद्वीकारसं क्षौद्रं वर्षाकाले विरेचनम् ॥ २ ॥ त्रिवृदुरालभा मुस्ता शर्करा दिव्यचन्दनम् । द्राक्षाम्बुना सयष्ट्याह्वं शीतलं च घनात्यये ॥ ३ ॥ पिप्पलीनागरं सिन्धुश्यामां च त्रिवृता सह । लिहेत्क्षौद्रेण शिशिरे वसन्ते च विरेचनम् ॥ त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ॥४॥ अथ ग्रन्थान्तरे । एरण्डतैलं पवने विरेचनं द्राक्षा पयश्चाम्बु घृतं च पित्ते । क्वाथः कफे त्रैफलको गुडेन दुग्धाभया सर्वमलं तथैव ॥ १ ॥ अन्यच्च । पिप्पली पिप्पलीमूलमभयाद्विगुणोत्तरम् । चूर्णमुष्णाम्बुना पेयं स्वस्थे सुखविरेचनम् ॥ १ ॥ अन्यच्च । पादमदकर्णहस्तैः पथ्या त्रिवृतं च नागरं लवणम् । निष्कथितपीतसारं नरपतियोग्यं विरेचनं भवति ॥ १ ॥ अन्यच्च । प्रपथ्यासैन्धवकणाचूर्णमुष्णाम्बुना सह । एतन्नाराचकं ख्यातं रेचनं च हितावहम् ॥ १ ॥ अन्यच्च । वराम्बुना देशसमाख्यबीजं सुवर्णमित्रं कुसुमाभिधानम् । विचित्रविद्याधरनामकोऽयं मलं विना मुञ्चति चाममेव ॥ १ ॥

## ॥ अथ मेघनादरेचनरसः ॥

दरदं टङ्कणं चैव सैन्धवं च कटुत्रयम् । त्रिफला हारहूरा च क्रमिघ्नं रामठं तथा ॥ १ ॥ दस्युदीप्यं समानं च दन्ती सर्वार्धभागिका । जम्बीरवारा संमर्द्य चणकस्य प्रमाणतः ॥ २ ॥ उष्णोदकानुपानेन क्रम्यामान्तं विरेचनम् । तस्योपरि हितं देयं पथ्यं दध्योदनं परम् ॥ ३ ॥ उदरे पाण्डुशोफे च शोफोदरजलोदरे । सर्वज्वरे च विषमे मेघनादः प्रशस्यते ॥ ४ ॥ इति मेघनादरेचनम् । पीत्वा विरेचनं शीतजलैः संसिच्य चक्षुषी । सुगन्धि किञ्चिदाघ्राय ताम्बूलं शीलयेद्वरम् ॥ १ ॥ न वातस्थो न वेगांश्च धारयेन्न स्वपेत्तथा । शीताम्बु न स्पृशेत्क्वापि कोष्णं नीरं पिबेन्नरः ॥ २ ॥ इन्द्रियाणां बलं बुद्धेः प्रसादं वह्निदीप्तताम् । धातुस्थैर्यं वयःस्थैर्यं भवेद्रेचनसेवनात् ॥ ३ ॥ प्रवातसेवा शीताम्बु स्नेहाभ्यङ्गमजीर्णताम् । व्यायामं मैथुनं चैव न सेवेत विरेचितः ॥ ४ ॥ शालिषष्टिकमुद्गाद्यैर्यवागूं भोजयेत्कृताम् । जाङ्गलैर्विष्किराणां वा रसैः शाल्योदनं हितम् ॥ ५ ॥ विरेकस्यातिवेगेन मूर्छा भ्रंशो गुदस्य च । शूलं कफातियोगः स्यान्मांसधावनसंनिभम् ॥ ६ ॥ मेदोनिभं जलाभासं रक्तं वापि विरिच्यते । तस्य शीताम्बुभिः सिक्त्वा शरीरं तण्डुलाम्बुभिः ॥ ७ ॥ सहकारत्वचा कल्को दध्ना सौवीरकेण वा । पिष्ट्वा नाभिप्रलेपेन हन्त्यतीसारमुल्बणम् ॥ ८ ॥ इति विरेचनविधिः ॥

## ॥ अथ नस्यम् ॥

नस्यं विधेयं गुडनागरेण जलेन वा सैन्धवपिप्पलीभ्याम् । घ्राणास्यमन्याहनुबाहुपृष्ठशिरोऽक्षिकण्ठश्रवणामयेषु ॥ १ ॥ भुक्तवत्यथवा स्नाते नस्यं योज्यं न कर्हिचित् । कृते नस्ये शिरःस्नानं रोगादींश्च वियोजयेत् ॥ २ ॥ इति नस्यम् ॥

## ॥ अथ कर्णपूरणम् ॥

रसाद्यैः पूरणं कर्णे भोजनात्प्राक् प्रशस्यते । तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥ १ ॥ स्वेदयेत्कर्णदेशं तु परिवर्तनशायिनः । मूत्रैः स्नेहै रसैः कोष्णैः पूरयेच्च ततो भिषक् ॥ २ ॥ स्वस्थस्य पूरणे स्नेहैर्मात्राशतमवेदने । शतत्रयं श्रोत्रगदे शिरोरोगे तथैव च ॥ ३ ॥ कर्णं प्रपूरयेत्सम्यक् स्नेहाद्यैर्मात्रयोक्तया । नोच्चैःश्रुतिर्न बाधिर्यं स्यान्नित्यं कर्णपूरणात् ॥ ४ ॥

## ॥ अथ मात्रा ॥

दक्षजानुकरावर्तच्छोटिका वाङ्गुलिद्वयात् । निमिषोन्मेषकालो वा वस्तौ मात्रा कृता बुधैः ॥ १ ॥ इति प्रयोगपारिजातात्कर्णपूरणमात्राविधिः ॥

## ॥ अथ रक्तस्रुतिः ॥

शरत्काले स्वभावेन कुर्याद्रक्तस्रुतिं नरः । त्वग्दोषग्रन्थिशोथाद्या न स्यू रक्तसृजो[1]ऽतः ॥ १ ॥ इन्द्रगोपनिभं ज्ञेयं प्रकृतिस्थमसंहतम् । शोथे दाहेऽङ्गपाके च रक्तवर्णेऽ-

---

१ ( ख० ग० घ० ङ० ) प्रवास ।

सृजः स्रुतौ ॥ २ ॥ वातरक्ते तथा कुष्ठे सपीडे दुर्जयानिले । पाणिरोगे श्लीपदे च विषदुष्टे च शोणिते ॥ ३ ॥ ग्रन्थ्यर्बुदापचीक्षुद्ररोगरक्ताधिमन्थिषु । विदारीस्तनरोगेषु गात्राणां सादगौरवे ॥ ४ ॥ रक्ताभिष्यन्दतन्द्रायां पूतिघ्राणास्यदाहके । यकृत्प्लीहविसर्पेषु विद्रधौ पिटकोद्गमे ॥ ५ ॥ कर्णौष्ठघ्राणवक्त्राणां पाके दाहे शिरोरुजि । उपदंशे रक्तपित्ते रक्तस्रावः प्रशस्यते ॥ ६ ॥ गोशृङ्गेण जलौकाभिरलाबुभिरपि त्रिधा । वातपित्तकफैर्दुष्टं शोणितं स्रावयेद्बुधः ॥ ७ ॥ द्विदोषाभ्यां च संदुष्टं त्रिदोषैरपिदूषितम् । शोणितं स्रावयेद्युक्त्या शिरामोक्षैः पदैस्तथा ॥ ८ ॥ गृह्णाति शोणितं शृङ्गं दशाङ्गुलमितं बलात् । जलूका हस्तमात्रं तु तुम्बी च द्वादशाङ्गुलम् ॥ ९ ॥ पदमङ्गुलमात्रं स्याच्छिरा सर्वाङ्गशोधिनी । शीतोपचारैः कुपिते स्रुतरक्तस्य मारुते ॥ १० ॥ कोष्णेन सर्पिषा शोथं शनकैः परिषेचयेत् । क्षीणस्यैणशिशोरभ्रहरिणच्छागमांसजः ॥ ११ ॥ रसः समुचितः पाने क्षीरं वा षष्टिका हिताः । व्यायाममैथुनक्रोधशीतस्नानप्रवातकान् ॥ १२ ॥ एकासनं दिवा निद्रां क्षाराम्लकटुभोजनम् । शोकं वाद्मजीर्णं च त्यजेद्यावद्बलं भवेत् ॥ १३ ॥ इति रक्तस्रुतिः । इति वमनरेचनादिकथनम् ॥

## ॥ अथ शब्दपरिभाषाकथनम् ॥

अथ सहेतुकान् सलक्षणान् कतिचिद्विकारानाह । सुश्रुते तन्द्रालक्षणम् । इन्द्रियार्थेष्वसंप्राप्तिर्गौरवं जृम्भणं क्लमः । निद्रार्तस्येव यस्यैते तस्य तन्द्रां विनिर्दिशेत् ॥ १ ॥

## ॥ अथ जृम्भालक्षणम् ॥

पीत्वैकमनिलोच्छ्वासमुद्वमेद्विवृताननः । यं मुञ्चति सनेत्राश्रु स जृम्भ इति संज्ञितः ॥ १ ॥

## ॥ अथ क्लमः ॥

योऽनायासश्रमो देहे प्रवृद्धः श्वासवर्जितः । क्लमः स इति विज्ञेय इन्द्रियार्थप्रबोधकः ॥ १ ॥

## ॥ अथ क्षवथुः ॥

प्राणोदानौ समौ स्यातां मूर्ध्नि स्रोतःपथे स्थितौ । नस्तः प्रवर्तते शब्दः क्षवथुं तं विनिर्दिशेत् ॥ १ ॥

## ॥ अथालस्यम् ॥

सुखस्पर्शप्रसङ्गित्वं दुःखद्वेषेऽप्यलोलता । शक्तस्य चाप्यनुत्साहः कर्मस्वालस्यमुच्यते ॥ १ ॥

---

१ (ख० ) देहके । २ (ख० ग० घ० ङ० ) द्वेषणं ।

## ॥ अथोत्क्लेशः ॥

उत्क्लिश्यान्नं न निर्गच्छेत्प्रसेकष्ठीवनेरितम् । हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत् ॥ १ ॥

## ॥ अथ ग्लानेर्लक्षणम् ॥

वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः । न चान्यदभिकाङ्क्षेत ग्लानिं तस्य विनिर्दिशेत् ॥ १ ॥

## ॥ अथ गौरवम् ॥

आर्द्रचर्मावनद्धं च यो गात्रं मन्यते नरः । तथा गुरु शिरोऽत्यर्थं गौरवं तद्विनिर्दिशेत् ॥ १ ॥

## ॥ अथ हृल्लासलक्षणम् ॥

हृल्लासो हृदयादीपद्व्यथः पद्वम्बुनिर्गमः ॥ १ ॥

## ॥ अथ हेमाद्रौ ज्वरादिरोगोद्देशः ॥

ज्वरातिसारौ ग्रहणी ह्यर्शो जीर्णविषूचिकाः । सालसा च विलम्बी च कृमिरुक्पाण्डुकामलाः ॥ १ ॥ हलीमकं रक्तपित्तं राजयक्ष्मा क्षतक्षयः । कासो हिक्का तथा श्वासः स्वरभेदस्त्वरोचकः ॥ २ ॥ छर्दिस्तृष्णा च मूर्छा च तथा पानात्ययादयः । दाहाख्यश्च तथोन्मादो ह्यपस्मारोऽनिलामयः ॥ ३ ॥ वातरक्तमुरुस्तम्भ आमवातोऽथ शूलरुक् । पक्तिजं शूलमानाह उदावर्तोऽथ गुल्मरुक् ॥ ४ ॥ हृद्रोगो मूत्रकृच्छ्रं च मूत्राघातस्तथाश्मरी । प्रमेहो मधुमेहश्च पिटिकाश्च प्रमेहजाः ॥ ५ ॥ मेदोदोपोदरं शोथो वृद्धिश्च गलगण्डकः । गण्डमालापचीग्रन्थिरर्बुदं श्लीपदं तथा ॥ ६ ॥ विद्रधिर्व्रणशोथश्च द्वौ व्रणौ भग्ननाडिकौ । भगन्दरोपदंशौ च शूकदोषस्त्वगामयः ॥ ७ ॥ शीतपित्तमुदर्दश्च स्फोटकश्चाम्लपित्तकम् । विसर्पश्च सविस्फोटस्तथैव च मसूरिका ॥ ८ ॥ क्षुद्रास्यकर्णनासाक्षिशिरःस्त्रीबालकामयाः । विषं चेत्येवमुद्देशः सङ्ग्रहेऽस्मिन्प्रकीर्तितः ॥ ९ ॥

## ॥ तत्र क्रमप्राप्तं प्रथमं ज्वरलक्षणम् ॥

दक्षापमानसंक्रुद्धरुद्रनिश्वाससम्भवः । ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः ॥ १ ॥ ज्वरस्य सम्प्राप्तिमाह । मिथ्याहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः । अकाले चातिमात्रं च ह्यसात्म्यं दुष्टभोजनम् ॥ २ ॥ विषमान्नं च यद्भुक्तं मिथ्याहारः स उच्यते । आहारस्य रसः सारो यो न पक्वोऽग्निलाघवात् ॥ ३ ॥ आमसंज्ञां स लभते बहुव्याधिसमाश्रयः । अशक्तः कुरुते कर्म शक्तो नैतत् करोति हि ॥ ४ ॥ मिथ्याविहार इत्युक्तः सदा चैनं विवर्जयेत् । बहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगाः ॥ ५ ॥ श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः । इच्छाद्वेषौ मुहुश्चा-

---

१ ( ख० ग० ) शुकदोष । २ ( ख० ग० घ० ङ० ) त्वयमुद्देशः ।

पि शीतवातातपादिषु ॥ ६ ॥ जृम्भाङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः । अप्रहर्षश्च शीतं च भवन्त्युत्पित्सति ज्वरे ॥ ७ ॥ सामान्यतो विशेषेण जृम्भात्यर्थं समीरणात् । पित्तान्नयनयोर्दाहः कफान्नान्नाभिनन्दनम् ॥ ८ ॥ सर्वलिङ्गसमावायः सर्वदोषप्रकोपजे । रूपैरन्यतराभ्यां तु संसृष्टैर्द्वन्द्वजं विदुः ॥ ९ ॥ स्वेदावरोधः सन्तापः सर्वाङ्गग्रहणं क्रमः । युगपद्यत्र रोगे तु स ज्वरो व्यपदिश्यते ॥ १० ॥ इति सामान्यज्वरः ॥

## ॥ अथ वातज्वरलक्षणम् ॥

वेपथुर्विषमो वेगः कण्ठोष्ठपरिशोषणम् । निद्रानाशः क्षवस्तम्भो गात्राणां रौक्ष्यमेव च ॥ १ ॥ शिरोहृद्गात्ररुग्वक्त्रवैरस्यं बद्धविट्कता । शूलाध्माने जृम्भणं च भवन्त्यनिलजे ज्वरे ॥ २ ॥

## ॥ अथ पित्तज्वरलक्षणम् ॥

वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः । कण्ठोष्ठमुखनासानां पाकः स्वेदश्च जायते ॥ १ ॥ प्रलापो वक्त्रकटुता मूर्च्छा दाहो मदस्तृषा । पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च ॥ २ ॥

## ॥ अथ श्लेष्मज्वरलक्षणम् ॥

स्तैमित्यं स्तिमितो वेग आलस्यं मधुरास्यता । शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च ॥ १ ॥ गौरवं शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता । स्रोतोरोधस्त्ववेगरुपत्वं प्रसेको बहुमूत्रता ॥ २ ॥ नात्युष्णगात्रता छर्दिरग्निसादोऽविपाकता । प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता ॥ ३ ॥

## ॥ अथ वातपित्तज्वरलक्षणम् ॥

तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा । कण्ठास्यशोषो वमथु रोमहर्षोऽरुचिस्तमः ॥ पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ॥ १ ॥

## ॥ अथ वातश्लेष्मज्वरलक्षणम् ॥

स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च । शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्तनम् ॥ संतापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ १ ॥

## ॥ अथ पित्तश्लेष्मज्वरलक्षणम् ॥

लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा । मुहुर्दाहो मुहुः शीतं पित्तश्लेष्मज्वराकृतिः ॥ १ ॥

## ॥ अथ सन्निपातज्वरलक्षणम् ॥

विरोधिकैरन्नपानैरजीर्णाभ्यसनेन च । व्यामिश्रसेवनाच्चापि सन्निपातः प्रकुप्यति ॥ १ ॥ क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा । सस्रावे कलुषे रक्ते निर्भुग्ने

१ (ख० ग० घ० ङ०) गाढ । २ (ख०) निद्राल्पत्वम् । ३ (ङ०) सास्रावे ।

चापि लोचने ॥ २ ॥ सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः । तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ॥ ३ ॥ तद्वच्छीतं महानिद्रा दिवा जागरणं निशि । सदा वा नैव वा निद्रा महास्वेदोऽथ नैव वा ॥ ४ ॥ गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम् । परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम् ॥ ५ ॥ ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च । शिरसो लोटनं तृष्णा निद्रानाशो हृदि व्यथा ॥ ६ ॥ स्वेदमूत्रपुरीषाणां चिरादर्शनमल्पशः । कृशत्वं चापि गात्राणां सततं कण्ठकूजनम् ॥ ७ ॥ कोष्ठानां श्यावरक्तानां मण्डलानां च दर्शनम् । मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ॥ चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥ ८ ॥ इति सन्निपातज्वरलक्षणम् ॥

## ॥ अथ सन्निपातभेदाः ॥

अम्लस्निग्धोष्णतीक्ष्णैः कटुमधुरसुरातापसेवाकषायैः स्वादुक्रोधातिरूक्षैर्गुरुतरपिशिताहारसौहित्यशीतैः । शोकव्यायामचिन्ताग्रहगणवनितात्यन्तसङ्गप्रसङ्गैः प्रायः कुप्यन्ति पुंसां मधुसमयशरद्वर्षणे सन्निपाताः ॥ १ ॥ तेषां तन्त्रान्तरे नामानि । सन्धिकश्चान्तकश्चैव रुग्दाहश्चित्तविभ्रमः । शीताङ्गस्तन्द्रिकश्चैव कण्ठकुब्जश्च कर्णकः ॥ २ ॥ विख्यातो भग्ननेत्रश्च रक्तष्ठीवी प्रलापकः । जिह्वकश्चेत्यभिन्यासः सन्निपातास्त्रयोदश ॥ ३ ॥ तेषां दिनमर्यादामाह । सन्धिके वासराः सप्त चान्तके दश वासराः । रुग्दाहे विंशतिर्ज्ञेया तथाष्टौ चित्तविभ्रमे ॥ ४ ॥ पक्षमेकं तु शीताङ्गे तन्द्रिके पञ्चविंशतिः । विज्ञेया वासराश्चैव कण्ठकुब्जे त्रयोदश ॥ ५ ॥ कर्णके च त्रयो मासा भग्ननेत्रे दिनाष्टकम् । रक्तष्ठीविनि दिग्घस्राः प्रलापे स्युश्चतुर्दश ॥ ६ ॥ जिह्वके षोडशाहानि पक्षोऽभिन्यासलक्षणे । परमायुरिदं प्रोक्तं म्रियते तत्क्षणादपि ॥ ७ ॥ त्रयोदशानां पृथग्लक्षणान्याह । पूर्वरूपकृतशूलसंभवं शोषवातबहुवेदनान्वितम् । श्लेष्मतापबलहानिजागरं सन्निपातमिति सन्धिकं वदेत् ॥ ८ ॥ दाहं करोति परितापनमातनोति मोहं ददाति रुदतीति शिरःप्रकम्पम् । हिक्कां तनोति कसनं सततं विधत्ते जानीहि तं विबुधवर्जितमन्तकाख्यम् ॥ ९ ॥ इत्यन्तकस्यासाध्यत्वादौषधं नास्ति । प्रलापपरितापनप्रबलमोहमान्द्यश्रमः परिभ्रमणवेदनाव्यथितकण्ठमन्याहनुः । निरन्तरतृपाकरः श्वसनकासहिक्काकुलः स कष्टतरसाधनो भवति हन्त रुग्दाहकः ॥ १० ॥ यदि कथमपि पुंसो जायते कायपीडा भ्रममदपरितापो मोहवैकल्यभावः । विकलनयनहासो गीतनृत्यप्रलापोऽभिदधति तमसाध्यं केऽपि चित्तभ्रमाख्यम् ॥ ११ ॥ हिमसदृशशरीरो वेपथुश्वासहिक्काशिथिलितसकलाङ्गो खिन्ननादोऽस्ततापः । क्लमथुदवथुकासच्छर्द्यतीसारयुक्तस्त्वरितमरणहेतुः शीतगात्रप्रभावात् ॥ १२ ॥ इति शीताङ्गसन्निपातोऽसाध्यः । प्रभूता तन्द्रार्तिर्ज्वरकफपिपासाकुलतरो

१ ( ख० ग० घ० ङ० ) लोडनम् । २ ( ख० ग० घ० ङ० ) चाति । ३ ( ख० ग० घ० ङ० ) श्रोतसाम् । ४ ( ग० घ० ङ० ) काम । ५ ( ख० ग० घ० ङ० ) वन्ह्यष्टौ । ६ ( ख० ग० घ० ङ० ) कला । ७ ( ख० ग० घ० ङ० ) पूर्णरूप । ८ ( ख० ग० घ० ङ० ) कसनं च समाजुहोति ।

भवेच्छ्यामा जिह्वा पृथुलकठिना कण्टकवृता । अतीसारश्वासक्लमथुपरितापश्रुतिरुजो भृशं कण्ठे जाड्यं शयनमनिशं तन्द्रिकगदे ॥१३॥ शिरोऽर्तिकण्ठग्रहदाहमोहकम्पज्वरा रक्तसमीरणार्त्तिः । हनुग्रहस्तापविलापमूर्छाः स्यात्कण्ठकुब्जः किल कष्टसाध्यः॥१४॥ प्रलापश्रुतिह्रासकण्ठग्रहाङ्गव्यथाश्वासकासप्रसेकप्रभावम् । ज्वरोत्तापकर्णान्तिकग्रन्थिशोथं बुधाः कर्णकं कष्टसाध्यं वदन्ति ॥ १५ ॥ ज्वरे प्रथममुत्पन्ने चक्षुर्भ्यां नैव पश्यति । तन्द्रिकः सन्निपातो ऽयं कष्टसाध्यो भवेत्ततः ॥ १६ ॥ ज्वरबलोपचितिः स्मृतिशून्यताश्वसनभग्नविलोचनमोहितः । प्रलपनभ्रमकम्पनशूलवांस्त्यजति जीवितमाशु स भग्नदृक् ॥ १७ ॥ रक्तष्ठीवी ज्वरवमितृषामोहशूलातिसारा हिक्काध्मानभ्रमणवमथुश्वाससंज्ञाप्रणाशाः । श्यामा रक्ताधिकतरतनुर्मण्डलोत्थानरूपा रक्तष्ठीवी निगदित इह प्राणहन्ता प्रसिद्धः ॥ १८ ॥ प्रलापकलक्षणम् । कम्पप्रलापपरितापनगात्रपीडाप्रौढप्रभावपवमानपरोऽन्यचित्तः ॥ प्रज्ञाप्रणाशविकलः प्रचुरप्रवादः क्षिप्रं प्रयाति पितृपालपदं प्रलापी ॥ १९ ॥ जिह्वकलक्षणम् । श्वसनकासपरितापविह्वलः कठिनकण्टकवृतातिजिह्वकः । बधिरमूकबलहानिलक्षणो भवति कष्टतरसाध्यजिह्वकः ॥ २० ॥ दोषत्रये स्निग्धमुखत्वनिद्रावैकल्यनिश्चेतनकष्टवाग्मी । बलप्रणाशः श्वसनादिनिग्रहोऽभिन्यास उग्रो ननु मृत्युकल्पः ॥ २१ ॥ इति त्रयोदश सन्निपाताः ।

## ॥ अथ ज्वरनिदानम् ॥

श्वासः कासो भ्रमो मूर्छा प्रलापी मोहवेपथू । पार्श्वस्य वेदना जृम्भा कषायत्वं मुखस्य च ॥१॥ वातोल्बणस्य लिङ्गानि सन्निपातस्य लक्षयेत् । एष विस्फारको नाम्ना सन्निपातः सुदारुणः ॥ २ ॥ अतिसारो भ्रमो मूर्छा मुखपाकस्तथैव च । गात्रे च बिन्दवो रक्ता दाहोऽतीव प्रजायते ॥ ३ ॥ पित्तोल्बणस्य लिङ्गानि सन्निपातस्य लक्षयेत् । भिषग्भिः सन्निपातोऽयमाशुकारी प्रकीर्तितः ॥ ४ ॥ जडता गद्गदा वाणी रात्रौ निद्रा भवत्यपि । प्रस्तब्धे नयने चैव मुखमाधुर्यमेव च ॥ ५ ॥ कफोल्बणस्य लिङ्गानि सन्निपातस्य लक्षयेत् । मुनिभिः सन्निपातोऽयमुक्तः कम्पनसंज्ञकः ॥ ६ ॥ दोषे विवृद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः । सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥ ७ ॥ सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा । पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥८॥ सप्तमी द्विगुणा यावन्नवम्येकादशी तथा । एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ ९ ॥ पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात् । हन्ति विमुञ्चति पुरुषं त्रिदोषजो धातुमलपाकात् ॥ १० ॥ दोषप्रकृतिवैकृत्यं लघुता ज्वरदेहयोः । इन्द्रियाणां च वैमल्यं दोषाणां पाकलक्षणम् ॥ ११ ॥ अथ धातुपाकलक्षणम् ॥ नाभेरूर्ध्वं हृदोऽधस्तात्पीड्यते च व्यथा भवेत् । धातोः पाकं विजानीयादन्यथा तु मलस्य च ॥ १२ ॥ सन्निपातज्वरस्या-

१ (ख० ग० घ० ङ०) ज्वरस्तापकर्णान्तयोर्गलपीडा । २ (ख० ग० घ० ङ०) शोफवान । ३ (ख० ग० घ० ङ०) अधिकरता । ४ (ख० ग० घ० ङ०) शीर्षे । ५ (ङ०) वातोत्तरस्य । ६ (ङ०) पित्तोत्तरस्य रूपाणि ।

न्ते कर्णमूले सुदारुणः । शोफः संजायते तेन कश्चिदेव प्रमुच्यते ॥ १३ ॥ ज्वरस्य पूर्वं ज्वरमध्यतो वा ज्वरान्ततो वा श्रुतिमूलशोथः । क्रमादसाध्यः खलु कृच्छ्रसाध्यः सुखेन साध्यो मुनिभिः प्रदिष्टः ॥ १४ ॥ अभिचाराभिघाताभ्यामभिषङ्गाभिशापतः । आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥ १५ ॥ भूतादौषधिगन्धाच्च भयाच्छोकाद्विषेण च । कामक्रोधाच्च जातो यः सोऽभिषङ्गज्वर. स्मृतः ॥ १६ ॥ श्यावास्यता विषकृते तथातीसार एव च । भक्तारुचिः पिपासा च तोदश्च सह मूर्छया ॥ १७ ॥ औषधीगन्धजे मूर्छा शिरोरुग्वमथुस्तमः । कामजे चित्तविभ्रंशस्तन्द्रालस्यमरोचकम् ॥ १८ ॥ हृदये वेदना चास्यं गात्रं च परिशुष्यति । भयात्प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः ॥ १९ ॥ अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते । भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् ॥ २० ॥ कामशोकभयाद्वायुः क्रोधात्पित्तं त्रयो मलाः । भूताभिषङ्गात्कुप्यन्ति भूतसामान्यलक्षणाः ॥ २१ ॥ प्रशापाचाभिघातोत्थश्चेतनाप्रभवस्तु यः । रात्र्यह्नोः षट्सु कालेषु प्रेरितेषु यथा पुरा ॥ २२ ॥ प्रसह्य विषमोऽप्येति मानवं बहुधा ज्वरः । स चापि विषमो देहं न कदाचिद्विमुञ्चति ॥ २३ ॥ यस्माद्गौरववैवर्ण्यकार्श्येभ्यो न विमुञ्चति । वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते ॥ २४ ॥ शिरसो गौरवं ग्लानिर्नातिश्रद्धातिभोजने । माधुर्यमतिवैरस्यं तिक्तत्वमथवा पुनः ॥ २५ ॥ दोषमलधातुपाकलक्षणम् । शश्वद्धीन्द्रियपञ्चकस्य पटुता वह्नेश्च यत्र क्रमात्तृष्णादिप्रशमो ज्वरस्य मृदुता तं दोषपाकं वदेत् । हृन्नाभ्योरतिवेदनातिसरणं तीव्रो ज्वरस्तृट्क्लमः श्वासाधिक्यमरोचकोऽरतिरिति स्याद्धातुपाकाकृतिः ॥२६॥ वक्त्रस्य जायते यस्मात्प्रवेशो विगते सति । तस्मात्तु नियतो जुष्टे शरीरे विषमे ज्वरः ॥ २७ ॥ धात्वन्तस्थो नैं लीनत्वात्सूक्ष्मत्वादुपलभ्यते । अल्पदोषेन्धनः क्षीणः क्षीणेन्धन इवानलः ॥ २८ ॥ दोषोऽल्पोऽहितसंभूतो ज्वरोत्सृष्टस्य वा पुनः । धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥ २९ ॥ क्वचिदुष्णेन शीतेन क्वचिद्रात्रौ क्वचिद्दिवा । प्रशमं याति कोपं च ज्वरः स विषमः स्मृतः ॥ ३० ॥ यः स्यादनियते काले शीतोष्णाभ्यां तथैव च । वेगतश्चापि विषमः स ज्वरो विषमः स्मृतः ॥३१॥ सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकाः । पञ्चैते विषमाः ख्याताः सन्निपातोल्बणोद्भवाः ॥ ३२ ॥ सन्ततो रसधातुस्थो रक्तस्थः सततो मतः । ज्वरः समभवन्नृणां सोऽन्येद्युः पिशिताश्रितः ॥ ३३ ॥ मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जागतः पुनः । कुर्याच्चातुर्थकं घोरमन्तकं रोगसङ्करम् ॥ ३४ ॥ सप्ताहं वा दशाहं वा द्वादशाहमथापि वा । सन्तत्या यो विसर्गी स्यात्सन्ततः स निगद्यते ॥ ३५ ॥ अहोरात्रे सततको द्वौ कालावनुवर्तते । अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्तते ॥ ३६ ॥ तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः । इत्यादयस्तु विज्ञेया ज्वरा नानाविधा बुधैः ॥ ३७ ॥ यथा दोषप्रकोपं तु तथा मन्ये तु तं ज्वरम् । यथा वेगागमे वेलां छादयित्वा महोद-

१ ( ख० ग० घ० ङ० ) च्छोषा । २ ( ख० ग० घ० ङ० ) त्वन्तःस्थोऽतिलीनत्वात् ।

धेः ॥ ३८ ॥ वेगहानौ तदेवाम्भस्तत्रैवान्तर्विलीयते । दोषवेगोदये तद्वदुदीयेत ज्वरस्य तु ॥ ३९ ॥ वेगहानौ प्रशाम्येत तथाम्भः सागरे यथा । श्लेष्मप्रायस्तु पूर्वाह्णे प्रदोषे च प्रवर्तते ॥ ४० ॥ पित्तप्रायस्तु मध्याह्ने त्वर्धरात्रे प्रवर्तते । अपराह्णेऽनिलप्रायः प्रत्यूषे च प्रवर्तते ॥ ४१ ॥ नर्ते वातात्तु विषमो ज्वरः समुपजायते । कफपित्ते च निश्चेष्टे चेष्टयत्यनिलो यतः ॥ ४२ ॥ तस्मान्नर्तेऽनिलाद्रोगाः संभवन्ति ज्वरादयः । श्लेष्मप्रायस्तु विषमः शीतपूर्वः प्रजायते ॥ ४३ ॥ पित्तप्रायस्तु विषमो दाहपूर्वं प्रजायते । वातप्रायस्त्वनियते काले समुपजायते ॥ ४४ ॥ कृत्वा चिराद्धि देहस्य क्षिप्रवेपथुमुत्तमम् । श्लेष्मपित्ते विदह्येते रसस्थाने यदानिलः ॥ ४५ ॥ तस्मिन्काले मनुष्याणां विषमो जायते ज्वरः । श्वासो मूर्च्छारुचिच्छर्दितृष्णातीसारविड्ग्रहाः ॥ ४६ ॥ हिक्का कासोऽङ्गभेदश्च ज्वरस्योपद्रवा दश । तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ॥ ४७ ॥ क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवाञ्ज्वरः । आमज्वरस्य लिङ्गानि न दद्यात्तत्र भेषजम् ॥ ४८ ॥ भेषजं ह्यामदोषस्य भूयो जनयति ज्वरम् । शोधनं शमनीयं तु करोति विषमज्वरम् ॥ ४९ ॥ ज्वरवेगोऽधिका तृष्णा प्रलापः श्वसनं भ्रमः । मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ५० ॥ क्षुत्क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् । दोषप्रवृत्तिरुत्साहो निरामज्वरलक्षणम् ॥ ५१ ॥ प्रकाङ्क्षा लाघवं ग्लानिः स्वस्थता सुप्रसन्नता । उपद्रवनिवृत्तिश्च सम्यग्लङ्घितलक्षणम् ॥ ५२ ॥ निद्रा तन्द्रा क्लमो भ्रान्तिस्तृष्णा शोषो बलक्षयः । उपद्रवाश्च श्वासाद्याः संभवन्त्यतिलङ्घिते ॥ ५३ ॥ स्वेदो लघुत्वं शिरसः कण्डूः पाको मुखस्य च । क्षवथुश्चान्नकाङ्क्षा च ज्वरमुक्तस्य लक्षणम् ॥ ५४ ॥ विगतक्लममोहं च त्वत्यर्थं विमलेन्द्रियम् । युक्तं प्रकृतिसत्वैश्च तं विद्याद्विगतज्वरम् ॥ ५५ ॥ ज्वरमुक्तस्य यस्यापि शिरोरुङ्नैव मुञ्चति । अविमुक्तः स विज्ञेयो ज्वरः पुनरुपैति तम् ॥ ५६ ॥ इति संक्षेपतो ज्वरनिदानम् ॥

## ॥ अथ क्रमप्राप्तस्य ज्वरस्य चिकित्सा ॥

ज्वरादौ लङ्घनं पथ्यं ज्वरमध्ये तु पाचनम् । ज्वरान्ते रेचनं प्रोक्तमेतज्ज्वरचिकित्सितम् ॥ १ ॥ ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात् । क्षयानिलभयक्रोधकामशोकश्रमोद्भवात् ॥ २ ॥ आमाशयस्थो हत्वाग्निं सामो मार्गान्पिधाय च । विदधाति ज्वरं दोषस्तस्मात्कुर्वीत लङ्घनम् ॥ ३ ॥ अनवस्थितदोषाग्नौ लङ्घनं दोषपाचनम् । ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारणम् ॥ ४ ॥ प्राणाविरोधिना चैनं लङ्घयेन्नोपपादयेत् । बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥ ५ ॥ न लङ्घयेन्मारुतजे ज्वरे च क्षयोद्भवे च क्षुधिते च जन्तौ । न गुर्विणीदुर्बलबालवृद्धाभीतांस्तृषार्तानपि सोर्ध्ववातान् ॥ ६ ॥ दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता । न हि दोषक्षये कश्चित्सहते लङ्घनं महत् ॥ ७ ॥ वातजः सप्तरात्रेण दशरात्रे-

१ ( ख० ) दोषाग्नेः । २ ( ग० ) भीरून् ।

ण पित्तजः । श्लेष्मजो द्वादशाहेन ज्वरः पाकं प्रपद्यते ॥ ८ ॥ वाते द्वे पित्तजे चैकं कफे दिनचतुष्टयम् । सप्ताहं वातपित्ते च कफपित्ते दश स्मृताः । कफवाते द्वादशाहं त्रिदोषे चैकविंशतिः ॥ ९ ॥ आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः । मध्यं द्वादशरात्रं तु पुराणमत उत्तरम् ॥ १० ॥ सप्ताहेन तु पच्यन्ते सप्तधातुगता मलाः । निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि ॥ ११ ॥ सर्वज्वरेषु दातव्यः कषायः सप्तमेऽहनि । अथवा लङ्घयेत्तावद्यावदारोग्यदर्शनम् ॥ १२ ॥ न कषायं प्रशंसन्ति कदाचित्तरुणे ज्वरे । कषायेणाकुलीभूता दोषा जेतुं सुदुस्तराः ॥ १३ ॥ अत्र विदेहः । सर्वज्वरेषु सप्ताहे मात्रां च लघु भोजयेत् । वेगापायेऽन्यथा तद्धि ज्वरवेगं विवर्धयेत् ॥ १ ॥ क्षुत्सम्भवति पक्वेषु दोषधातुमलेषु च । काले वा यदि वाकाले सोऽन्नकाल उदाहृतः ॥२॥ अथ च वाग्भटः । ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु । श्लेष्मक्षये प्रवृद्धोष्मा बलवाननलस्तदा ॥१॥ यथोचितेऽथवा काले देशसात्म्यानुरोधतः । प्रागल्पवह्निर्भुञ्जानो न ह्यजीर्णेन पीड्यते ॥२॥ कषायपानपथ्यान्नैर्दशाह इति लङ्घिते । उष्मा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा विना ॥ ३ ॥ तस्मात्पित्तविरोधीनि त्यजेत्पित्ताधिकेऽधिकम् । स्नानाभ्यङ्गप्रदेहांश्च परिषेकांश्च वर्जयेत् ॥४॥ अजीर्णद्रवशूलाढ्ये सामे तीव्ररुजि ज्वरे । न पिबेदौषधं तद्धि भूय एवाममावहेत् ॥ ५ ॥ नवज्वरे मलस्तम्भात् कषायो विषमज्वरम् । कुरुतेऽरुचिहृल्लासहिध्माध्मानादिकानपि ॥ ६ ॥ सप्ताहादौषधं केचिदाहुरन्ये दशाहतः । केचिल्लघ्वन्नभुक्तस्य देयमामोल्बणे न तु ॥ ७ ॥ तीव्रज्वरपरीतस्य दोषवेगोदये यतः । दोषेऽथवातिनिचिते तन्द्रा स्तैमित्यकारिणी ॥ ८ ॥ अपच्यमानं भैषज्यं भूयो जनयति ज्वरम् । मृदुर्ज्वरो लघुर्देहश्चलितश्च मलो यदा । अचिरज्वरितस्यापि भेषजं योजयेत्तदा ॥ ९ ॥ अथ वृद्धवाग्भटः । षड्दशद्वादशाहेषु व्यतीतेषु क्रमेण वै । वातपित्तकफातङ्केष्वन्नकाला इमे त्रयः ॥१॥ द्वन्द्वजे सन्निपाते च व्याधावारोग्यदर्शने । सति यवागूयूषादि कल्पयेदतिनैपुणात् ॥ २ ॥ मुद्गान्मसूरांश्चणकान्कुलत्थान् मकुष्ठकान् पाचनयूषहेतून् । हिताहितानां विहितांश्च पेयान् दद्याद्यवागूमपि पाचनैः स्वैः ॥ ३ ॥ अथ चक्रदत्तात् । नवज्वरे दिवा स्वापस्नानभोजनमैथुनम् । क्रोधप्रवातव्यायामकषायांश्च विवर्जयेत् ॥ १ ॥ निर्वातभवनावासमुष्णवारिनिषेवणम् । अभूरिजल्पं निष्क्रोधकामशोकं च रोगिणम् ॥ २ ॥ कुर्यादारोग्यसंपन्नं शीघ्रं वैद्यो विचक्षणः । कफमेदोऽनिलामघ्नं दीपनं बस्तिशोधनम् ॥ ३ ॥ कासश्वासज्वरहरं पथ्यमुष्णोदकं सदा । यत्क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं भवेत् ॥ ४ ॥ अर्धावशिष्टं भवति तदुष्णोदकमुच्यते । तत्पादहीनं वातघ्नमर्धहीनं तु पित्तनुत् ॥ ५ ॥ त्रिपादहीनं श्लेष्मघ्नं पाचनं दीपनं लघु । द्वन्द्वजे सन्निपाते च ज्वरे पथ्यं तदा-

---

१ ( ख० ) तमुत्तमम् । २ (ख० ग० ) रसदोषमलेषु च । ३ (ख०) परिशेषं च लङ्घने । ४ (ख०) शूलघ्नम् । ५ ( ख० ) हितान् हितानाम् । ६ (ख० ) मेहा- ।

र्तिजित् ॥ ६ ॥ शरदि त्वर्धपादोनं पादहीनं तु हैमते । शिशिरे च वसन्ते च ग्रीष्मे चार्धावशेषितम् ॥ ७ ॥ विपरीते ऋतौ तद्वत् प्रावृष्यष्टावशेषितम् । भिनत्ति श्लेष्मसङ्घातं मारुतं चापकर्षति ॥ ८ ॥ अजीर्णे जरयत्याशु पीतमुष्णोदकं निशि । धारापातेन विष्टम्भि दुर्जरं पवनाहतम् ॥ ९ ॥ शृतशीतं त्रिदोषघ्नं बाह्यान्तर्भावशीतलम् । दिवा शृतं तु यत्तोयं रात्रौ तद्गुरुतां व्रजेत् ॥ १० ॥ रात्रौ शृतं तु दिवसे गुरुत्वमधिगच्छति । तप्तायःपिण्डसंसिक्तं लोष्ठनिर्वापितं जलम् ॥ ११ ॥ सर्वदोषहरं पथ्यं सदा नैरुज्यकारकम् । उष्णीकृतं जलं पथ्यं दोषवृद्कासजिल्लघु ॥ १२ ॥ शृतशीतं जलं पथ्यं त्रिदोषशमनं लघु । नवज्वरे प्रतिश्याये पार्श्वशूले गलग्रहे ॥ १३ ॥ सद्यः शुद्धौ तथाध्माने व्याधौ वातकफोद्भवे । अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ ॥ १४ ॥ हिक्कायां स्नेहपाने च पिबेदुष्णं जलं नरः । अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥ १५ ॥ मन्दाग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा । व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ १६ ॥ मूर्छापित्तोष्णदाहेषु विषमे च मदात्यये । भ्रमक्लमपरीतेषु मार्गोत्थे वमथौ तथा ॥ ऊर्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ १७ ॥ पानीयं* पानीयं शरदि वसन्ते च पानीयम् । नादेयं नादेयं शरदि वसन्ते च नादेयम् ॥ १८ ॥ उक्तं हि तत्रान्तरे । अमर्मोपहते देशे शिरासन्ध्यस्थिवर्जिते । वर्षावसन्तसमये कौपं वारि प्रशस्यते ॥ अम्भः शरदि ताडागं नादेयमृतुषु त्रिषु ॥ १ ॥ उत्तमस्य पलं मात्रा त्रिभिरक्षैश्च मध्यमा । जघन्यस्य पलार्धेन स्नेहक्वाथौषधेषु च ॥ २ ॥ कर्षश्चूर्णस्य कल्कस्य गुटिकानां च सर्वशः । द्रवशुक्त्यावलेह्यः पातव्यश्च चतुर्द्रवः ॥ ३ ॥ मात्रा मधुघृतादीनां क्वाथे स्नेहेषु चूर्णवत् । द्विचत्वारिंशता माषैरष्टादशकबद्धकैः ॥ ४ ॥ पलं द्वादशबद्धं स्याद्गुञ्जाषट्कसमन्वितम् । क्वाथ्यद्रव्यपलं वारि द्विरष्टगुणमिष्यते ॥ ५ ॥ चतुर्भागावशेषं तु पेयं पलचतुष्टयम् । दीप्तानलं महाकायं पाययेदञ्जलिं जलम् ॥ ६ ॥ अन्ये त्वर्धं परित्यज्य प्रसृतं तु चिकित्सकाः । क्वाथत्यागमनिच्छन्तस्त्वष्टभागावशेषितम् ॥ ७ ॥ पारम्पर्योपदेशेन वृद्धवैद्याः पलद्वयम् । पाययन्त्यातुरं सामे पाचनं सप्तमेऽहनि ॥ ८ ॥

## ॥ अथौषधाद्यजीर्णेऽन्नं न ग्राह्यम् ॥

तत्र विचारः । वीर्याधिकं भवति भेषजमन्नहीनं हन्यात्तथामयमसंशयमाशु चैव । तद्बालवृद्धयुवतीमृदवो निपीय ग्लानिं परां समुपयान्ति बलक्षयं च ॥ १ ॥ अनु-

---

१ ( ख० ) पिहिते ।

* अस्यार्थः—पानीयं जलं शरदि पानार्हं भवति निर्मलत्वात्त्रिदोषघ्नत्वाद्विशेषतः पित्तोपशान्तिहेतुत्वाच्च । वसन्ते च पुनरुक्तदेव पानीयं पानीयं रक्षणीयमल्पं पेयमिति भावः पा रक्षण इत्यस्य धातो रूपमेतत् । नदीभवं जलं नादेयं जलं शरदि न अदेयमिति न अपि तु देयं दातव्यमित्यर्थः । वसन्ते च नादेयं जलं नादेयं न ग्राह्यमिति वाक्यार्थः ।

क्षोमोऽनिलस्वास्थ्यं क्षुत्तृष्णा सुमनस्कता । लघुत्वमथ चोद्गारः शुद्धो जीर्णौषधाकृतिः ॥ २ ॥

## ॥ अथाजीर्णौषधलक्षणम् ॥

क्लमो दाहोऽङ्गसदनं भ्रमो मूर्छा शिरोरुजः । अरतिर्वमनं मोहो ह्यजीर्णौषधवैकृतिः ॥ १ ॥ औषधशेषे भुक्तं शेषेऽप्यन्ने तथौषधं पीतम् । न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥ २ ॥ शीघ्रं विपाकमुपयाति बलं न हन्यादन्नावृतं न च पुनर्वदनान्निरेति । प्राग्भुक्तसेवितमथौषधमेतदेव दद्याच्च भीरुशिशुवृद्धवराङ्गनाभ्यः ॥ ३ ॥ इति सर्वज्वरोपक्रमः ॥

## ॥ अथ ज्वरे पथ्यानि ॥

तण्डुलीयकवास्तूकबालमूलकपर्पटान् । पटोलं तिक्तशाकं च गुडूचीपल्लवान्यपि ॥१॥ कालशाकं निम्बपुष्पं मारीषं दार्विकादलम् । जीवन्ती चापि चाङ्गेरी सुनिषण्णकमार्विकैः ॥ २ ॥ पत्रशाकप्रियाणां तु ज्वरितानां प्रदापयेत् । मुद्गान्मसूरांश्चणकान्कुलित्थांश्च मकुष्ठकान् ॥ ३ ॥ यूषार्थं यूषसात्म्यानां ज्वरितानां प्रदापयेत् । लावान्कपिञ्जलानेणान्पृषतान्सरभाञ्शशान् ॥ ४ ॥ कालपुच्छान्कुरङ्गांश्च तथैव मृगमातृकान् । मांसार्थं मांससात्म्यानां ज्वरितानां प्रदापयेत् ॥ ५ ॥ सारसक्रौञ्चशिखिनस्तथा तित्तिरकुक्कुटाः । ज्वरितानां न शस्यन्ते इति केचिद्व्यवस्थिताः ॥ ६ ॥ वृन्ताकपीलुकर्कोटपटोलककर्कटिल्लकम् । फलशाककृते देयं सर्वं निःस्नेहमेव च ॥ ७ ॥ वत्सरोषितधान्यस्य तण्डुलान्धो ज्वरे हितम् । रोटिकार्थं प्रदातव्यं द्विवर्षोषितमल्पशः ॥ गोधूमादि यदा सात्म्यमन्यदप्यल्पमर्पयेत् ॥ ८ ॥ इति सुश्रुतात् ॥

## ॥ अथौषधग्रहणविचारः ॥

तत्रोपविश्य विश्रान्तः प्रसन्नवदनेक्षणः । औषधं हेमरजतमृद्भाजनपरिष्ठितम् ॥१॥ पिबेत्प्रसन्नवदनः पीत्वा पात्रमधो मुखम् । निक्षिप्य पात्रे सलिलं ताम्बूलाद्युपकल्पयेत् ॥ २॥ यमदूतपिशाचाद्या यक्षगन्धर्वराक्षसाः । ते घ्नन्त्यौषधवीर्याणि ततो गण्डूषवर्जनम् ॥ ३ ॥ क्वाथस्य कल्कस्य रसस्य यामं मासत्रयं चाञ्जनचूर्णवीर्यम् । षण्मासकाख्यं गुडलेहवीर्यं संवत्सरं तैलघृतस्य वीर्यम् ॥ ४ ॥*

## ॥ अथ ज्वरे पाचनम् ॥

यत्पचत्याममाहारं पचेदामं रसं च यत् । यदपक्वान्पचेद्दोषांस्तद्धि पाचनमुच्यते ॥ १ ॥ न शोधयति यद्दोषान्समान्नोदीरयत्यपि । समीकरोति संवृद्धांस्तत्संशमनमुच्यते ॥ २ ॥ तयोः संप्रदानकालं चाह । पाययेदातुरं सामं पाचनं सप्तमे दिने । शमनेनाथवा दृष्ट्वा निरामं समुपाचरेत् ॥ ३ ॥

---

* क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् । पूर्वस्यां शान्तवेगायां न क्रियासंकरो हितः ॥

## ॥ अथ वातज्वरे ॥

गुडूचीपिप्पलीमूलनागरैः पाचनं स्मृतम् । दद्याद्वातज्वरे नूनं लिङ्गे सप्तमवासरे ॥ १ ॥ इति गुडूच्यादिपाचनम् । किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरैः । सस्थिराकलशीविश्वैः क्वाथो वातज्वरापहः ॥२॥ इति किरातादिः । शालिपर्णी बला रास्ना गुडूची सारिवा तथा । आसां क्वाथं पिबेत्कोष्णं तीव्रवातज्वरच्छिदम् ॥ ३ ॥ इति शालिपर्ण्यादिः । काश्मरीसारिवाद्राक्षात्रायमाणामृतोद्भवः । कषायः सगुडः पीतो वातज्वरविनाशनः ॥ ४ ॥ इति काश्मर्यादिः । मरीचं रुचकं शुण्ठी किरातं च हरीतकी । पिप्पली कटुका चैव वातज्वरविनाशनम् ॥ ५ ॥ इति मरीचादिः । त्रिफलाव्योषगुडयुक् शर्करात्रिवृतार्धकम् । मोदकं भक्षयित्वा तु पिबेच्चोष्णं जलं पुनः ॥ पार्श्वशूलेऽरुचौ कासे ज्वरे चानिलसंभवे ॥ ६ ॥ इति त्रिफलाद्यो मोदकः ॥

## ॥ अथ पित्तज्वरे ॥

कट्फलेन्द्रयवाम्बष्ठातिक्तामुस्तैः शृतं जलम् । पाचनं दशमेऽह्नि स्यात्तीव्रे पित्तज्वरे नृणाम् ॥ १ ॥ इति कट्फलादिपाचनम् । दुरालभापर्पटकप्रियङ्गुभूनिम्बवासाकटुरोहिणीनाम् । क्वाथं पिबेच्छर्करयावगाढं तृष्णास्रपित्तज्वरदाहयुक्तः ॥ २ ॥ इति दुरालभादिः । द्राक्षाभयापर्पटकाब्दतिक्ताक्वाथं सशम्याकफलं विदध्यात् । प्रलापमूर्छाभ्रमदाहशोषतृषान्विते पित्तभवे ज्वरे च ॥ ३ ॥ इति द्राक्षादिः । एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः । किं पुनर्यदि युज्येत चन्दनोशीरधान्यकैः ॥ ४ ॥ इति पर्पटादिवृन्दात् । औदुम्बरस्य निर्यासः सितया दाहनाशनः । छिन्नासारः सितायुक्तः पित्तज्वरनिषूदनः ॥ ५ ॥ द्राक्षा चैव गुडूची च मुस्ता पर्पटकं तथा । कटुका च समैः क्वाथः पित्तज्वरविनाशनः ॥ ६ ॥ चन्दनं च सगन्धं च वालकोशीरपर्पटः । मुस्ताशुण्ठीसमायुक्तः पित्तज्वरनिषूदनः ॥ ७ ॥ अहो किमर्थं बहवः कषायाः पराशराद्यैर्मुनिभिः प्रदिष्टाः । पित्तज्वरध्वंसकृते न किं स्यात्क्वाथो गुडूच्यामलपर्पटानाम् ॥ ८ ॥ जलजलजलवाहरेणुविश्वौषधशिशिरैः शिशिरीकृतः कषायः । हर हर हरति ज्वरं प्रकृष्टं सवमि निदाघतृषं निपीयमानः ॥ ९ ॥ असीतवारिणा सितासितायुता तु रोहिणी । विदाहतृड्भ्रमान्वितं निहन्ति पित्तजज्वरम् ॥१०॥ निम्बपल्लवसम्भूतरसफेनप्रलेपनात् । तृड्दाहमोहाः प्रशमं यान्ति पित्तसमुद्भवाः ॥ ११ ॥ केसरं मातुलिङ्गस्य मधुसैन्धवसंयुतम् । जिह्वातालुगलक्लोमशोषे मूर्धनि दापयेत् ॥ १२ ॥

## ॥ अथ कफज्वरे ॥

बीजपूरशिफापथ्यानागरग्रन्थिकैःस्मृतम् । सक्षारं पाचनं श्लेष्मज्वरे द्वादशवासरे ॥ १ ॥ इति बीजपूरादिपाचनम् । भूनिम्बनिम्बपिप्पल्यः शटी शुण्ठी शतावरी । गुडूची बृहती चेति क्वाथो हन्यात्कफज्वरम् ॥ २ ॥ पटोलत्रिफलातिक्ताशटीवासा-

---

१ ( ग० ) द्राक्षा । २ ( ख० ) अशीत ।

मृतोद्भवः । क्काथो मधुयुतः पीतो हन्यात्कफकृतं ज्वरम् ॥ ३ ॥ निदिग्धिकाछिन्नरुहोपकुल्याविश्वौषधैः साधितमम्बु पीतम् । हन्ति ज्वरश्वासबलासकासशूलाग्निमान्द्यं जठरानिलं च ॥ ४ ॥ शृङ्गीकणाकट्फलपौष्कराणां क्षौद्रान्वितानां विहितोऽवलेहः । श्वासेन कासेन युतं बलासज्वरं जयेदत्र न कापि शङ्का ॥ ५ ॥ इति चातुर्भद्रावलेहिका । भार्ङ्गीगुडूचीघनदारुसिंहीशुण्ठीकणापुष्करजः कषायः । ज्वरं निहन्ति श्वसनं क्षिणोति क्षुधां करोति मरुचिं तनोति ॥ १ ॥

## ॥ अथ सर्वज्वरे ॥

आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः । सर्वज्वरभयातङ्कभेदी दीपनपाचनः ॥१॥ अमृतारिष्टकचन्दनपद्मकधान्योद्भवः क्काथः । ज्वरहृल्लासच्छर्दितृष्णादाहारुचीर्हन्यात् ॥ २ ॥ छिन्नोद्भवाम्बुधरधन्वयवासविश्वैर्दुःस्पर्शपर्पटकमेघकिराततिक्तैः । मुस्ताटरूषकमहौषधधन्वयासैः क्काथं पिबेदनिलपित्तकफज्वरेषु ॥ ३ ॥ धान्यचित्रकसिन्धूत्थयुक्तस्तक्रेण योऽन्वितः । भृष्टश्च हिङ्गुतैलाभ्यां स मण्डोऽष्टगुणः स्मृतः ॥ ४ ॥ दीपनः प्राणदो बस्तिशोधनो रक्तवर्धनः । ज्वरजित्सर्वदोषघ्नो मण्डोऽष्टगुण उच्यते ॥ ५ ॥ इत्यष्टगुणमण्डः ॥

## ॥ अथ वातपित्तज्वरे ॥

छिन्नोद्भवापर्पटवारिवाहभूनिम्बशुण्ठीजनितः कषायः । समीरपित्तज्वरजर्जराणां करोति भद्रं खलु पञ्चभद्रः ॥ १ ॥ पञ्चमूल्यमृतामुस्ताविश्वाभूनिम्बसाधितः । कषायः शमयत्याशु वातपित्तभवज्वरम् ॥ २ ॥ त्रिफलाकाश्मरीरास्नाराजवृक्षाटरूषकैः । शृतमम्बु हरेत्तूर्णं वातपित्तोद्भवं ज्वरम् ॥ ३ ॥ इति वृन्दात् ।

## ॥ अथ वातश्लेष्मज्वरे ॥

सिंहीयवानीछिन्नानां क्काथश्चपलया युतः । कफवातज्वरश्वासशूलपीनसकासजित् ॥ २ ॥ क्षुद्रामृतानागरपुष्कराह्वैः कृतः कषायः कफमारुतोत्तरे । सश्वासकासारुचिपार्श्वशूले ज्वरे त्रिदोषप्रभवेऽपि शस्यते ॥ २ ॥ आरग्वधकणामूलमुस्तातिक्ताभयाकृतः । क्काथः शमयति क्षिप्रं ज्वरं वातकफोद्भवम् ॥ ३ ॥ मुस्ता पर्पटकं शुण्ठी गुडूची सदुरालभा । कफवातारुचिच्छर्दिदाहशोषज्वरापहाः ॥ ३ ॥ भूनिम्बमुस्ताकटुकीगुडूचीदुरालभापर्पटनागराख्यैः । क्काथोऽनिलश्लेष्महरो वदन्ति सूर्यो यथा नाशयतेऽन्धकारम् ॥ ४ ॥

## ॥ अथ पित्तश्लेष्मज्वरे ॥

अमृतारिष्टकटुकामुस्तेन्द्रयवनागरैः । पटोलचन्दनाभ्यां च पिप्पलीचूर्णयुक् स्मृतम् ॥ १ ॥ अमृताष्टकमेतच्च पित्तश्लेष्मज्वरापहम् । छर्द्यरोचकहृल्लासदाहतृष्णानिवारणम् ॥ २ ॥ इत्यमृताष्टकम् । पटोलं चन्दनं मूर्वा पाठा तिक्तामृता कणा । पित्तश्लेष्मज्वरच्छर्दिदाहकण्डूविषापहाः ॥३॥ इति पटोलादिः । पटोलं पिचुमन्दं च त्रिफला

मधुकं बला । साधितोऽयं कषायः स्यात्पित्तश्लेष्मभवे ज्वरे ॥ ४ ॥ तिक्तोशीरबलाधान्यपर्पटाम्भोधरैः कृतः । क्वाथः पुनः समायातं ज्वरं शीघ्रं निवारयेत् ॥५॥ इति तिक्तादिः । कण्टकार्यमृताभार्ङ्गीनागरेन्द्रयवासकम् । भूनिम्बं चन्दनं मुस्ता पटोलं कटुरोहिणी ॥ ६ ॥ कषायं पाययेदेतं पित्तश्लेष्मज्वरापहम् । दाहतृष्णारुचीहिक्काकासहृत्पार्श्वशूलहृत् ॥ ७ ॥ लोहितचन्दनपद्मकधान्यच्छिन्नरुहापिचुमन्दकषायः । पित्तकफज्वरदाहपिपासावान्तिविनाशहुताशकरः स्यात् ॥ ८ ॥ लाजैर्वा तण्डुलैर्भृष्टैर्लाजामण्डः प्रकीर्तितः । श्लेष्मपित्तहरो ग्राही पिपासाज्वरजिन्मतः ॥ ९ ॥ इति लाजामण्डः । जीरकं कारवेल्लाम्बु शीतपूर्वज्वरे हितम् ॥ १० ॥

## ॥ अथ सन्निपाते ॥

संनिपातज्वरे पूर्वं कुर्यादामकफापहम् । पश्चाच्छ्लेष्मणि संक्षीणे शमयेपित्तमारुतौ ॥ १ ॥ लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा । अवलेहोऽञ्जनं चैव प्राक् प्रयोज्यं त्रिदोषजे ॥ २ ॥ त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा । लङ्घनं संनिपातेषु कुर्यादारोग्यदर्शनात् ॥ ३ ॥ दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता । कश्चिद्दोषविमुक्तो न लङ्घनं सहते नरः ॥ ४ ॥ रसस्थे रससंशुद्धी रक्तस्थे रक्तमोक्षणम् । मांसस्थे रेचनं शस्तं मेदःस्थे चासहिष्णुता ॥ ५ ॥ रेचनं वमनं स्वेदश्चास्थिस्थे स्वेदमर्दनम् । मज्जाशुक्रशयं[1] दृष्ट्वा तमसाध्यं ज्वरं वदेत् ॥ ६ ॥ क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत् । पूर्वस्यां शान्तवेगायां न क्रियासंकरो हितः ॥ ७ ॥ तप्तायोलाञ्छनं पञ्चताल्वादिषु त्रिदोषजे । रुद्राभिषेकभूदेवभोजनग्रहजाप्यतः ॥ मन्त्ररक्षादिभिः कार्या सन्निपातप्रतिक्रिया ॥ ८ ॥

## ॥ अथ पाचनम् ॥

कण्टकारिद्वयं शुण्ठी धान्यकं सुरदारु च । एभिः शृतं पाचनं स्यात्सर्वज्वरनिवारणम् ॥ १ ॥

## ॥ अथ वालुकास्वेदः ॥

खर्परभृष्टपटस्थितकाञ्जिकसंसिक्तवालुकास्वेदः । शमयति वातकफामयमस्तकशूलाङ्गभेदादीन् ॥ १ ॥ इति वालुकास्वेदः ॥

## ॥ अथ नस्यम् ॥

मातुलिङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम् । अन्यद्वा सिद्धविहितं नस्यं तीक्ष्णं प्रयोजयेत् ॥ १ ॥ तेन प्रभिद्यते श्लेष्मा प्रभिन्नस्तु प्रसिच्यते । शिरोहृदयकण्ठास्यपार्श्वरुक् चोपशाम्यति ॥ २ ॥ मधूकसारसिन्धूत्थवचोषणकणाः समाः । श्लक्ष्णं पिष्ट्वाम्भसा नस्यं कुर्यात्संज्ञाप्रबोधनम् ॥ ३ ॥ सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठपिप्पली । बस्तमूत्रेण पिष्टानां नस्यं तन्द्रानिवारणम् ॥ ४ ॥ इति नस्यम् ॥

---

1 (ख०) मज्जाशुक्राशयम् ।

## ॥ अथ निष्ठीवनम् ॥

आर्द्रकस्वरसोपेतं सैन्धवं सकटुत्रयम् । आकण्ठं धारयेच्चास्ये निष्ठीवेच्च पुनः पुनः ॥ १ ॥ तेनास्य हृदयाच्छ्लेष्मा मन्यापार्श्वशिरोगलात् । लीनो व्याकृष्यते शुष्को लाघवं चास्य जायते ॥ २ ॥ इति निष्ठीवनम् ॥

## ॥ अथाष्टाङ्गावलेहिका ॥

( अवलेहः ) कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह । श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकः ॥ १ ॥ कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी । श्लक्ष्णं चूर्णीकृतं चैतन्मधुना सह लेहयेत् ॥ २ ॥ एषावलेहिका हन्ति संनिपातं सुदारुणम् । हिक्कां श्वासं च कासं च कण्ठरोधं च घुर्घुरम् ॥ एतच्चोज्यं कफोद्रेके चूर्णमार्द्रकजै रसैः ॥ ३ ॥ इत्यष्टाङ्गावलेहिका । इत्यवलेहः ॥

## ॥ अथाञ्जननस्यम् ॥

शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः । अञ्जनं स्यात्प्रबोधाय सरसोनशिलावचैः ॥ १ ॥ कस्तूरी मरिचं वाजिलाला च मधुनाञ्जनम् । तन्द्रां निवारयत्याशु व्योषप्रधमनं तथा ॥ २ ॥ इत्यञ्जननस्यम् ॥

## ॥ अथाञ्जनोद्धूलने ॥

तुरङ्गलालासहिता मनःशिला निहन्ति तन्द्रां सकृदञ्जनेन । बब्बूलपत्राणि हरीतकी च संस्वेदिता स्वेदविकारहन्त्री ॥ १ ॥ भूनिम्बकटुकाकुष्ठं कारवीन्द्रयवः सटी । एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ २॥ प्रस्वेदे कण्ठरोधे च सन्धिमर्दनमिष्यते । एतदुद्धूलनं श्रेष्ठं सन्निपातहरं परम् ॥ ३ ॥ स्वेदोद्गमे भृष्टकुलत्थचूर्णैरुद्धूलनं शस्तमिति ब्रुवन्ति । जीर्णं शकृद्गोर्लवणस्य भाण्डं स्वेदापहं गुण्डनमुत्तमं हि ॥ ४ ॥ अथ वृद्धवाग्भटः । यवानिका वचा शुण्ठी पिप्पली कारवी तथा । एतैरुद्धूलनं शस्तं त्रिदोषोत्थे ज्वरे नृणाम् ॥ ५ ॥ किरातं कटुका पथ्या कणा कायफलं वचा । उद्धूलनं त्रिदोषे च सदा शैत्ये च शस्यते ॥ ६ ॥ विषभागो भवेदेको मरीचात्त्रिगुणो मतः । आरण्योपलजं भस्म षोडशांशसमन्वितम् ॥ ७ ॥ एकत्र मिलितं चूर्णं धूर्तस्वरसभावितम् । आतपे शोषितं तच्च शीतं स्वेदहरं परम् ॥ ८ ॥ अथवा चणका भृष्टा यवानीचूर्णमिश्रिताः । वचोषणरजोयुक्ताः स्वेदसंशोषणा मताः ॥ ९ ॥

## ॥ अथ सन्निपाते जिह्वायां लेपः ॥

उच्छुष्कां स्फुटितां जिह्वां द्राक्षया मधुपिष्टया । प्रलेपयेत्सघृतया संनिपातात्मके ज्वरे ॥ १ ॥ सुवर्णमुक्तारजतप्रवा[१]लैः कस्तूरिकाकुङ्कुमरोचनं च । वरालरुद्राक्षमधूकबिल्वं कुष्ठं च खर्जूरपुनर्नवा च ॥ २ ॥ द्राक्षा कणा नागरपुत्रजीवी सारङ्गशृङ्गं कत-

१ ( ख० ) प्रवाल- ।

कस्य बीजम् । एरण्डमूलं शरशीर्षकं च मयूरिका श्वेतपुनर्नवा च ॥ स्तन्येन पिष्ट्वा कुरु सन्निपाते लेपं सदा सर्वगदं निहन्ति ॥ ३ ॥ यवकोलकुलित्थानां मुद्गमूलकविश्वयोः । एकैकं मुष्टिमादाय पचेदष्टगुणे जले ॥ ४ ॥ पञ्चमुष्टिक इत्येष वातपित्तकफापहः । शस्यते गुल्मशूले च श्वासे कासे क्षये ज्वरे ॥ ५ ॥ इति पञ्चमुष्टिकः ॥

## ॥ अथ सप्तमुष्टिकयूषः ॥

कुलित्थयवकोलैश्च मुद्गैर्मूलकशुष्ककैः । शुण्ठीधान्यकयुक्तैश्च यूषः श्लेष्मानिलापहः ॥ सप्तमुष्टिक इत्येष संनिपातज्वराञ्जयेत् ॥ १ ॥

## ॥ अथ सिद्धार्थादिप्रलेपकः ॥

सिद्धार्थको वचा हिङ्गु करञ्जः सुरदारु च । मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रयम् ॥ २ ॥ प्रियङ्गुश्च शिरीषं च निशा दार्वी समांशतः । अजामूत्रेण संपिष्टो गोमूत्रैर्वाथ चूर्णितः ॥ सर्वज्वरं निहन्त्याशु सिद्धार्थादिप्रलेपकः ॥ ३ ॥ इति सिद्धार्थादिप्रलेपकः ॥

## ॥ अथ क्वाथः ॥

भार्ङ्गीभूनिम्बनिम्बैर्घनकटुकवचाव्योषवासाविशालारास्नानन्तापटोलीसुरतरुरजनीपाटलाटिण्टुकैश्च[1] । ब्राह्मीदार्वीगुडूचीत्रिवृदतिविषिकापुष्करत्रायमाणैर्व्याघ्रीसिंहीकलिङ्गैस्त्रिफलसटियुतैः कल्पितस्तुल्यभागैः ॥ १ ॥ क्वाथो द्वात्रिंशदाख्यस्त्र्यधिकदशमहासन्निपातान्निहन्याच्छूलं कासादिहिक्काकसनगुदरुजो ध्मानविध्वंसकारी । ऊरुस्तम्भान्त्रवृद्धिं गलगदमरुचिं सर्वसन्धिग्रहार्तिं मातङ्गं यो निहन्यान्मृगरिपुरिव चेद्रोगजालं तथैव ॥ २ ॥ भूनिम्बदारुदशमूलमहौषधाब्दतिक्तेन्द्रबीजधनिकेभकणाकषायः । तन्द्राप्रलापकसनारुचिदाहमोहश्वासादियुक्तमखिलज्वरमाशु हन्यात् ॥ ३ ॥ इत्यष्टादशाङ्गः । क्षुद्रापौष्करभूनिम्बगुडूचीविश्वभेषजैः । पञ्चतिक्तकनामायं क्वाथो हन्त्यष्टधा ज्वरम्॥४॥अथ च । दार्व्यम्बुदस्तिक्तफलत्रिकं च क्षुद्रा पटोली रजनी च निम्बः । क्वाथं विदध्याज्ज्वरसंनिपाते निश्चेतने पुंसि निबोधनार्थम् ॥ ५॥ ग्रन्थीन्द्रजामरतरुक्रिमिशत्रुभार्गीभृङ्गत्रिकट्वनलकट्फलपौष्कराणाम् । रास्नाभयाबृहतिकाद्वयदीप्यभूतकेशीकिरातकवचाचविकावृकीणाम्[2] ॥ ६ ॥ क्वाथो हन्यात्संनिपातान्समग्रान्बुद्धिभ्रंशस्वेदशैत्यप्रलापान् । शूलाध्मानं विद्रधिं श्लेष्मवाताल्न्वातव्याधीन्सूतिकानां च तद्वत् ॥ ७ ॥ अर्कानन्ताकिरातामरतरुरसनासिन्धुवारोग्रगन्धातर्कारीशिग्रुपञ्चोषणघुणदयितामार्कवाणां कषायः । सद्यस्तीव्रांस्त्रिदोषानपहरति धनुर्मारुतं दन्तबन्धं शैत्यं गात्रेषु गाढं श्वसनकसनकं सूतिकावातरोगान् ॥८॥ अथ च । अर्कग्रन्थिकशिग्रुदारुचविकानिर्गुण्डिकापिप्पलीरास्नाभङ्गपुनर्नवानलवचाभूनिम्बशुण्ठीकृतः । क्वाथः संहरति त्रिदोषमखिलं स्वापानिलं सूतिकानानामारुतशै-

---

१ ( ख० ) टुण्टुकाभिः । २ ( ख० ) रावकम् ।

त्यशान्तिकृदपस्मारस्मरत्र्यम्बकः ॥९॥ बिल्वोऽग्निमन्थः स्योनाकः काश्मरी पाटला स्थिरा । त्रिकण्टकः पृश्निपर्णी बृहती कण्टकारिका ॥१०॥ दशमूलमिदं श्वाससन्निपातज्वरापहम् । दशमूली शटी शृङ्गी पौष्करं सदुरालभम् ॥ ११ ॥ शुण्ठी कुटजबीजं च पटोलं कटुरोहिणी। अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः ॥ कासहृद्ग्रहपार्श्वार्तिश्वासहिक्कावमीहरः ॥१२॥ इति दशमूल्याद्यष्टादशाङ्गः । लशुनं तिक्तकं काण्डं भार्गी घातिविषा तथा । नरमूत्रेण च क्वाथः संनिपाते सुदारुणे ॥१३॥ इति लशुनादिः ।

## ॥ अथ सन्धिकादीनां चिकित्सा ॥

सन्धिस्थे हितमस्ति लङ्घनविधिस्वेदोपनाहादिकं रूक्षं कर्म समग्रमेव विहितं कुर्याद्यवागूरसम् । मूलीपञ्चककल्ककल्कितमिदं सन्मागधीमिश्रितं कौलत्थेन रसेन सैन्धवयुतं पेयं च विश्वौषधम् ॥ १ ॥ रास्नागुडूचीसटिवृद्धदारुसुराह्वविश्वात्रिफलाबरीभिः । क्वाथं पिबेद्गुग्गुलुसंप्रयुक्तं समस्तसन्धिग्रहसन्निपाते ॥ २ ॥ रास्नाशुण्ठीगुडूचीसहचरजलदैर्भीरुपथ्यासुराह्वैस्तिक्ताकर्चूरवासानिलरिपुसहितैः पञ्चमूलीद्वयेन । एभिर्द्रव्यैः कषायस्त्वरितमपहरेत्पीतमात्रः प्रभाते मन्यास्तम्भान्त्रवृद्धिं ज्वरपिटककटीसन्धिसर्वाङ्गपीडाः ॥ ३ ॥ अमृतोरुबूकविश्वामुरतरुरास्नाहरीतकीक्वाथः । सकलसमीरणरोगान्प्रातः सद्यो हरेत्पीतः ॥ ४ ॥ ग्रन्थिककलितरुपथ्याकृतमालशिवाटरूषकैर्विहितः । एरण्डतैलयुक्तः क्वाथो हन्यान्मरुन्मान्द्यम् ॥ ५॥ इति सन्धिकचिकित्सा ॥

॥ अथान्तकस्यासाध्यत्वादौषधं नास्ति ॥

## ॥ अथ रुग्दाहकस्य चिकित्सा ॥

जलधरमलयजनागरसवालकोशीरपर्पटैः क्वथितम् ।यः पिबति पयः शीतं शाम्यति रुग्दाहकस्तस्य ॥ १ ॥ बदरीपल्लवलेपः श्रीखण्डारिष्टफेनसंयुक्तः । दातव्यः पदतलयो रुग्दाहकसंनिपातघ्नः ॥ २ ॥ पर्युषितधान्यसलिलं प्रातः पीतं सशर्करं पुंसाम् । अन्तर्दाहं शमयति प्रवृद्धमपि तत्क्षणादेव ॥ ३ ॥ ब्राह्मीद्राक्षाजलधरवचोशीरशम्याकतिक्ता-पथ्याधात्रीकलितरुबलानिम्बकोशातकीभिः । भूनिम्बाद्यो भवति सहितः पञ्चमूलीद्वयेन पीतः क्वाथः सकलपवनव्याधिरुग्दाहहन्ता ॥ ४ ॥ अगुरुघनसारसल्लककररुहनतनीरचन्दनैर्युक्तः । रुग्दाहसन्निपातं निहन्ति मधुमिश्रितो धूपः ॥ ५ ॥ निर्गुण्डीपुरसहितः सिद्धार्थकनिम्बसंयुक्तः । सर्जरसेन समेतो धूपो रुग्दाहकं हन्ति ॥ ६ ॥ पयोधराभ्यां कुशलां सुरूपां नवयौवनाम् । प्रमदां स्वभुजाश्लेषैर्भजेद्रुग्दाहमूर्छितः ॥ ७ ॥ इति रुग्दाहकचिकित्सा ॥

## ॥ अथ चित्तविभ्रमचिकित्सा ॥

पथ्यापर्पटकटुकापृद्वीकादारुजलदभूनिम्बा—शम्याकपटोलशिवाक्वाथश्चित्तभ्रमं हन्ति ॥ १ ॥ हरीतकीपर्पटहारहूराशम्बूकंपुष्पी[3]कटुकापयोदैः । शम्याकदेवाह्वयभारतीभिश्चित्तभ्रमं हन्ति कृतः कषायः ॥ २ ॥ इति चित्तभ्रमचिकित्सा ॥

१ ( घ० ) सुदारुणः । २ ( ख० ) रजनी । ३ ( ख० ग० ) पुष्पैः ।

॥ शीताङ्गसंनिपातोऽसाध्यः ॥

## ॥ अथ तन्द्रिकचिकित्सा ॥

ज्वरे प्रथममुत्पन्ने चक्षुर्भ्यां नैव पश्यति। तन्द्रिकः संनिपातोऽयं कष्टसाध्यो भवेत्ततः ॥ १ ॥ भार्गीपुष्करपथ्यानिदिग्धिकानागरामृताक्वाथः। अपनयति तन्द्रिकमिमं निःसंशयं प्रगे पीतः ॥ २ ॥ रास्नामनःशिलैलाञ्जनमेतत्तन्द्रिकेऽपीष्टम्। अमृतापटोलवासाव्योषयुतस्तन्द्रिके क्वाथः ॥ ३॥ कुष्ठगवाक्षीनागरमरिचनिशाद्वयवचाकणायुक्तः। बस्तसलिलेन पिष्टं तन्द्रिकनिघ्नं भवेन्नस्यम् ॥४॥ इति तन्द्रिकचिकित्सा ॥

## ॥ अथ कण्ठकुब्जचिकित्सा ॥

त्रिकटुककलिङ्गकटुकाहरीतकीबिभीतकामलकैः। ध्वंसयति कण्ठकुब्जं वृषरजनीद्वयपुतः क्वाथः ॥ १ ॥ शृङ्गीवत्सकचेतकीघनसटीभूनिम्बभार्गीनिशातिक्तापुष्करचित्रकैः समरिचैर्व्याघ्रीवृषामिश्रितैः। धात्रीदारुबिभीतकैश्च चविकाविश्वाकणाकट्फलैः पीतः कृन्तति कण्ठकुब्जमचिरात्कोष्णः कषायस्त्विह ॥२॥ अपनयति कण्ठकुब्जं कृष्णापामार्गबीजजं नस्यम्। अथ हन्ति सलिलसहितं त्रिकटुककट्टुतुम्बिमीनस्यम् ॥ ३ ॥ इति कण्ठकुब्जचिकित्सा* ॥

## ॥ अथ कर्णग्रन्थिचिकित्सा ॥

रक्तस्रावो जलूकाभिर्घृतपानं च युज्यते। कर्णग्रन्थिविनाशार्थमायुर्वेदविदां वरः ॥ १ ॥ तत्र रक्तं हरेत्क्षिप्रं जलौकाभिरनन्तरम्। त्रिफलासर्पिषः पानं कार्यं जीर्णघृतस्य च ॥२॥ प्रदेहाः कफपित्तघ्नाः कार्याः संशमनानि च। मुद्गपर्णनिभा पृष्ठे रक्तवर्णा तथोदरे ॥ षडङ्गुलप्रमाणेन जलौका भद्रिका मता ॥ ३ ॥ रास्नाबृहतीपथ्याव्योषकटुकाघनपुष्कराह्वैश्च। शृङ्गीधाराभार्गीक्वाथः कर्णकरुजं हरेत्पानात् ॥ ४ ॥ मरीचदशमूलमगधाफलत्रयनिशामहौषधीतिक्ता—भूनिम्बसैन्धवयुतः कर्णकहन्ता भवेत्क्वाथः ॥ ५ ॥ हिङ्गुद्विनिशविशालासैन्धवसुरदारुकुष्ठरविदुग्धैः। दत्तः क्रमेण लेपो हन्ति महाकर्णकग्रन्थिम् ॥६॥ दशशतकरदुग्धारुष्करत्वक्समेतं दहनगुडनिकुम्भाकुष्ठकासीसयुक्तम्। अपनयति वितीर्णं लेपनं सप्तरात्राच्छ्वयथुहरणयुक्तं कर्णकग्रन्थिमेतत् ॥ ७ ॥ अशिशिरजलयुक्तं नावनं कर्णकार्तौ जनयति सुखसिद्धिं घ्राणरन्ध्रप्रवेशात्। लवणपरमकृष्णाचूर्णयुक्तं प्रभाते सकलमुनिभिरुक्तं व्याधिविध्वंसकारि ॥ ८ ॥ दन्तीचित्रकयोर्मूलं स्नुह्यर्कपयसो गुडः। भल्लातकास्थि कासीसं लेपो भवति कर्णके ॥ ९ ॥ सनागरं देवदारु रास्ना चित्रकपेषितम्। प्रलेपनमिदं श्रेष्ठं गलशोथविनाशनम् ॥१०॥ इति नागरादिलेपनम्। कुलत्थः कट्फलं शुण्ठी कारवी च समांशकैः। सुखोष्णं लेपनं कार्यं कर्णमूले मुहुर्मुहुः ॥११॥ इति कुलित्थादिलेपः।

---

१ ( ख० ) शिलातैलाञ्जन। २ ( ख० ग० ) के पिष्टम्। ३ ( ख० ) युतम्। ४ ( ख० ) गुडः।

* ज्वरपत्नी पिपासा स्याद्वदनेच्छा भगन्दरे॥ क्षुधा पत्नी च कुष्ठस्य निद्रा भार्या मृतस्य च ॥१॥

बीजपूरजमूलत्वग्वह्निमन्थस्तथैव च । शरपुङ्खाशिखीतुम्बीसकृष्णाविषमुष्टिभिः ॥ १२ ॥ प्रलेपो वा हिडम्बीभिः श्वयथौ कर्णमूलजे । वज्रमुष्टिभवः कन्दः शोथविध्वंसनक्षमः ॥१३॥ कर्कटस्य च मांसेन स्वेदनं बन्धनं तथा । कर्णमूलभवं शोथं नाशयत्यविलम्बितम् ॥१४॥ सिद्धार्थसैन्धववचाग्रहधूमविश्वैः पिष्टैर्जलेन निशया सहितश्च सूक्ष्मम् । लेपो हितो रुधिरनिष्क्रमणप्रतीतशोफव्रणस्य शमनः सरुजश्च कर्णे ॥ १५ ॥ इति कर्णग्रन्थिचिकित्सा ।

## ॥ अथ भग्ननेत्रचिकित्सा ॥

दार्व्यम्बुदातिक्तफलत्रिकं च क्षुद्रा पटोली रजनी सनिम्बा । क्वाथं विदध्याज्ज्वरसन्निपाते निश्चेतने पुंसि विबोधनार्थम् ॥ १ ॥ भूनिम्बमाक्षिकवचासहितं च कुर्याल्लेहं कणोषणरसोनसुराजिकाभिः । नेत्राञ्जनं च लवणोत्तमपिप्पलीभ्यां नस्यं वचामरिचहिङ्गुमधूकसारैः ॥ २ ॥ मरिचतुरगगन्धामागधीसिन्धुजातं लशुनमधुकसारैरुग्रगन्धार्द्रकाभ्याम् । छगलकजलपिष्टः संयुतः शास्त्रविद्भिः सपदि भवति नस्यो भग्ननेत्रप्रमाथी ॥ ३ ॥ इति भग्ननेत्रचिकित्सा ।

## ॥ अथ रक्तष्ठीविचिकित्सा ॥

पर्पटधन्वयवासकवासाभूस्तृणकैः कटुकीफलनस्यात् । शर्करया सहितोऽपि कषायो लोहितमास्यगतं विनिहन्ति ॥ १ ॥ जलदाह्वयपद्मकपर्पटकैर्मलयोद्भवजातिवरीमधुकैः । मधुनिम्बजलानलचन्दनकैः क्वथितं मुखरक्तहरं सलिलम् ॥ २ ॥ इति रक्तष्ठीविचिकित्सा ॥

## ॥ अथ प्रलापचिकित्सा ॥

तगरतुरगगन्धा पर्पटी शङ्खपुष्पी त्रिदशविटपितिक्ता भारती भूतकेशी । जलधरकृतमालश्वेतकीगोस्तनीभ्यां सह हरति कषायो मङ्क्षु पानात्प्रलापम् ॥ १ ॥ जलधरदशमूलं वारि शुण्ठीसमेतं मलयजकृतमालं वासकं पर्पटं च । समधरणधृतांशः क्वाथ एष प्रभाते शमयति समुदीर्णं पीतमात्रः प्रलापम् ॥२॥ इति प्रलापचिकित्सा ॥

## ॥ अथ जिह्वकचिकित्सा ॥

सिंहीनागरपुष्करैः सकटुकै रास्नागुडूचीयुतैर्भार्गीकर्कटशृङ्गिकाशटिसमैर्दुःस्पर्शवासाघनैः । पीतं जिह्वकहारि वारि भवति ब्राह्मीवचामिश्रितैः प्रोक्तं वैद्यवरेण वन्द्यमुनिभिर्भूनिम्बमिश्रं शृतम् ॥ १ ॥ सुरतरुकटुनिम्बैरक्षपथ्यापटोलीरजनियुगुलविश्वासिंहिकापुष्कराह्वैः । सलिलधरगुडूचीवासकैः सर्वमेभिः प्रशमयति कषायो जिह्वकं कष्टसाध्यम् ॥ २ ॥ तीक्ष्णद्रव्यैः सलवणैर्मातुलुङ्गरसप्लुतैः । जिह्वायां च सकृल्लेपः कटुतीक्ष्णेन संयुतैः ॥ ३ ॥ इति जिह्वकचिकित्सा ॥

## ॥ अथाभिन्यासः ॥

रामठनागरसहितं भृङ्गरसाम्लं विलेहयेत्प्रातः । अथ कटुतिक्तोपयुतं भवति सुखभे-

१ ( ख० ग० ) पूरक । २ ( ग० घ० ) मुख ।

बोधनं तस्य ॥१॥ मरिचलवणकृष्णाभूतकेशीमधूकैः कटुफलमधु कृत्वा कोष्णनीरेण नस्यः । प्रकटयति विकीर्णश्चाष्टभिर्वा चतुर्भिः सकलकरणबोधं बिन्दुभिर्दीयमानः ॥२॥ लशुनमरिचकृष्णामाणिमन्थोग्रगन्धाशुकतरुफलबीजैर्विश्वगोमूत्रपिष्टैः । कफपवनविकारे रक्तपित्तप्रभेदे गदितमगदविद्भिर्नेत्रयोरञ्जनं स्यात् ॥ ३ ॥ संज्ञा यस्य न जायते चरणयोर्द्वन्द्वं समादह्यते भाले लोहशलाकया संति कृते सर्वक्रियाकर्मणि । शृङ्गीधन्वयवासपुष्करजटाभार्गीशटीसिंहिकाक्काथः पानविधानतः कफहरोऽभिन्यासविध्वंसकः ॥ ४ ॥ त्रायन्तीदशमूलपुष्करजटावार्ताारिभिः कारवी भार्गी स्यादमृताटरूषकशटीगोमूत्रसंयोजितैः । शृङ्गीव्योषपुनर्नवाभिरचिरादुष्णः कषायो हरेत्सोऽभिन्यासगदं कफज्वरहरो निःसंशयं पानतः ॥ ५ ॥ मञ्जिष्ठाशिखिबालबिल्वकशटीशुण्ठीकरञ्जानिशात्रायन्तीबृहतीवृषोषणकणाक्काथस्तु पेपीयते । यैः प्रातः प्रणिधाय लक्षितगदैः सद्वैद्यराट्सन्निधौ तस्यापि प्रशमं व्रजन्ति सहसा सर्वाङ्गजा व्याधयः ॥ ६ ॥ सुरभिसलिलयुक्तः सिंहिकाश्रीफलाभ्यां प्रवरलवणयासाविश्वपाषाणभेदैः । पवनरिपुजटाभिः संयुतः क्काथ एष प्रतिदिनमपि पीतो हन्त्यभिन्यासशूलम् ॥ ७ ॥ यावच्च श्वसते जीवो यावत्क्रामति भेषजम् । तावत्क्रिया प्रकर्तव्या दैवस्य कुटिला गतिः ॥ ८ ॥ इति त्रयोदशसन्निपातचिकित्सा ॥

## ॥ अथागन्तुज्वरचिकित्सा ॥

अभिचाराभिशापोत्थौ ज्वरौ होमादिना जयेत् । दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीडने ॥ १ ॥ भूतविद्यासमुद्दिष्टैर्बन्धावेशनताडनैः । जयेद्भूताभिषङ्गोत्थं मनःशान्त्या च मानसम् ॥ २ ॥ मधूकसारं मरिचं सैन्धवं पिप्पली वचा । संज्ञाप्रबोधनं नस्यं देयं भूतज्वरे सदा ॥ ३ ॥ अभिघातज्वरी कुर्यात्क्रियामुष्णविवर्जिताम् । कषायान्मधुरान् स्निग्धान्यथादोषमथापि वा ॥४॥ अभिघातज्वरो नश्येत्पानाभ्यङ्गेन सर्पिषः । मेध्यैर्द्रवैश्च सात्म्यैश्च तथा मांसरसौदनैः ॥ ५ ॥ वधबन्धसमावेशभग्ननष्टसमुद्भवान् । ज्वरानुपाचरेत्पूर्वं मदिराक्षीरभोजनैः ॥ ६ ॥ औषधीगन्धविषजौ विषपित्तप्रसादनैः । जयेत्कषायैर्मतिमान् सर्वगन्धकृतैर्भिषक्* ॥७॥ क्रोधजे पित्तजित्काम्ये नार्यः सद्वाक्यमेव च । आश्वासनेष्टलाभेन वायोः प्रशमनेन च ॥८॥ हर्षेणच शमं यान्ति कामशोकभयज्वराः । व्याघ्रचित्रकघातार्तं स्थापयेज्जलमध्यगम् ॥९ ॥ अनया शीतक्रियया भयरोगः प्रशाम्यति । कामात् क्रोधज्वरो नाशं क्रोधात्कामसमुद्भवः ॥ याति ताभ्यामुभाभ्यां वा भयशोकसमुत्थितः ॥ १० ॥ इत्यागन्तुकज्वरचिकित्सा ॥

---

१ (ख०) मृदु । २ (ख०) लोहेन सन्दह्यते । ३ (ख०) शशि । ४ (ख० ग०) त्थमनुशान्त्या च मानवः (वम्) । ५ (ख०ग०) बन्ध०भ्रमावेश भ्रमावेश । ६ (ख०ग०) कृतं ज्वरम् । ७ (ख०) कार्या । ८ (ख०) नार्थाः ।

* चातुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् । लवङ्गसहितं चैव सर्वगन्धं विनिर्दिशेत् ॥

## ॥ अथ विषमज्वरः ॥

धातुमन्यतमं प्राप्य करोति विषमज्वरम् । शीतपूर्वः स विज्ञेयो दाहपूर्वो निरन्तरम् ॥ १ ॥ आतङ्कमुक्तौ कृशताश्रयाणां विमुक्तपथ्याद्युचितक्रियाणाम् । अल्पोऽपि दोषो विषमं विदध्याज्ज्वरं प्रवृद्धं प्रतिपक्षरुद्धम् ॥२॥ एकद्वित्रिचतुर्थः स्याद्विषमोऽन्यस्तु जीर्णकः । एते पञ्च ज्वराः पीडयन्त्येव बहुवासरम् ॥ ३ ॥ विषमज्वरनाशाय चिकित्सा वक्ष्यतेऽधुना । वातप्रधानं सर्पिर्भिर्बस्तिभिः सानुवासनैः ॥४॥ स्निग्धोष्णैरन्नपानैश्च शमयेद्विषमज्वरम् । विरेचनेन पयसा सर्पिषा संस्कृतेन च ॥ ५॥ विषमं तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत् । वमनं पाचनं रूक्षमन्नपानं च लङ्घनम् ॥ ६ ॥ कषायोष्णं च विषमज्वरे शस्तं कफोत्तरे । त्रायन्तीकटुकानन्तासारिवाभिः शृतं जलम् ॥७॥ सन्तताख्ये ज्वरे देयं वातादीनां निवृत्तये । षोडशाष्टचतुर्भागं वातपित्तकफार्तिषु ॥८॥ क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा । वासापटोलत्रिफलाद्राक्षाशम्याकनिम्बतः ॥ समधुः सशितः क्वाथो हन्यादैकाहिकं ज्वरम् ॥९॥ इति वासादिः । उलूकदक्षिणः पक्षः सितसूत्रेण वेष्टितः । धारणाद्वामकर्णे तु हरत्यैकाहिकं ज्वरम्॥१०॥द्राक्षापटोलनिम्बाब्दशक्राह्वत्रिफलामृता ॥ जलजं तु पिबेच्छीतमन्येद्युर्ज्वरशान्तये ॥ ११ ॥ इति द्राक्षादिः ॥ सशिशिरः सघनः समहौषधः समलदः सकणः सपयोधरः । समधुशर्कर एष कषायको जयति बालमृगाक्षि तृतीयकम् ॥ १ ॥ ऊर्णनाभिस्थजालेन कज्जलं ग्राहयेत्ततः। अञ्जयेन्नेत्रयुगुलं त्र्याहिकं तु ज्वरं जयेत् ॥ २ ॥ वासाधात्रीस्थिरादारुधान्यनागरसाधितम् । सितामधुयुतं कुर्याच्चातुर्थिकनिवारणम् ॥ ३ ॥ पथ्यास्थिरानागरदेवदारुधात्रीवृषैरुत्क्वथितः कषायः । सितोपलामाक्षिकसंप्रयुक्तश्चातुर्थिकं हन्त्यचिरेण पीतः ॥ ४ ॥ चातुर्थिको गच्छति रामठस्य घृतेन जीर्णेन युतस्य नस्यात् । लीलावतीनां नवयौवनानां मुखावलोकादिव साधुभावः ॥ ५ ॥ अखण्डितशरत्कालकलानिधिसमानने । चातुर्थिकहरं नस्यं मुनिद्रुमदलाम्बुना ॥ ६ ॥ कल्कः शिरीषपुष्पस्य रजनीद्वयसंयुतः । नस्ये सर्पिःसमायोगाज्ज्वरं चातुर्थिकं जयेत् ॥ ७ ॥ विवस्त्रेण धृता देवी मूलिका कर्णबन्धनात् । चातुर्थिकं ज्वरं हन्ति द्रोणपुष्पीरसाञ्जनात् ॥ ८ ॥ कन्याकर्तितसूत्रेण त्वपामार्गस्य मूलिका । रवौ बद्धा ज्वरं हन्ति तृतीयकचतुर्थकम् ॥ ९ ॥ काकजङ्घा बला श्यामा भृङ्गराजोपमार्गकः । एकैकं पुष्पयोगेन बद्ध्वा चातुर्थिकं हरेत् ॥ १० ॥ कृष्णाम्बरे दृढं बद्धो गुग्गुलूलूकपुच्छकः । धूपश्चातुर्थिकं हन्यात्तमः सूर्य इवोदितः ॥ ११ ॥ कुमारीमूलकर्षैकं पीत्वा कोष्णजलैर्वमेत् । विषमं तु ज्वरं हन्ति वमनेन चिरन्तनम् ॥ १२ ॥भवति विषमहन्त्री चेतकी क्षौद्रयुक्ता भवति विषमहन्त्री पिप्पली वर्धमाना । विषमरुजमजाजी हन्ति युक्ता गुडेन प्रशमयति तथाग्र्या सेव्यमाना गुडेन ॥ १३ ॥ त्रिभिरथ परिवृद्धं पञ्चभिः सप्तभिर्वा दशभिरथ विवृद्धं पिप्पली वर्धमाना । अनुपिबति

१ (ख० ) बध्वा । २ ( ग० ) पुष्य ।

पयो यस्तस्य न श्वासकासज्वरजठरगुदार्शोवातरक्तक्षयाः स्युः ॥ १४ ॥ क्षीरेण पिप्पलीं भुक्त्वा क्षीरान्नं भुज्यते यतः। दशाहं पञ्चवृद्धिः स्यादपकर्षस्तथैव च ॥१५॥ इति वर्धमानपिप्पलीयोगः । सर्पिःक्षौद्रं शृतं क्षीरं पिप्पल्यः सितशर्करा। पिबेत्खजेन मथितं पञ्चसारमितिस्मृतम् । विषमज्वरहृद्रोगश्वासकासक्षयापहम् ॥ ॥१७॥ इति पञ्चसारम् ॥ निदिग्धिकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम्। जीर्णज्वरारोचककासशूलश्वासाग्निमान्द्यार्दितपीनसेषु ॥२॥ पटोलयष्टीमधुतिक्तरोहिणीघनाभयाभिर्विषमज्वरघ्नः। कृतः कषायस्त्रिफलामृतावृषैः पृथक्पृथग्वा विषमज्वरापहः ॥ ३ ॥ इति पटोलपञ्चकं वा त्रिफलादित्रयम्। द्राक्षालवङ्गशुण्ठीत्वग्धनिका च हरीतकी। मिसी मुस्तामृता चैव कृतमालकषायकः ॥ १ ॥ वातपित्तज्वरं हन्ति पाचनो लघुदीपनः । दशभिश्चौषधैरेतैः सर्वज्वरविनाशनः॥ २ ॥ ग्रन्थान्तरे—भार्ग्यब्दपर्पटकधन्वयवासविश्वभूनिम्बकुष्ठकणसिंह्यमृताकषायः । जीर्णज्वरं सततसन्ततकौ निहन्यादन्येद्युकं सहतृतीयचतुर्थकौ च ॥ १॥ धान्यनागरगोक्षूरत्वचां क्वाथः सशर्करः। अन्येद्युष्कं तृतीयं च ज्वरं हन्ति न संशयः॥२॥ भार्गीपर्पटविश्ववासककणाभूनिम्बनिम्बामृतामुस्ताधन्वयभेषजैस्तु दशभिर्हन्तीह सर्वज्वरान्। जीर्णान् धातुगतांस्तथा च विषमान् सोपद्रवान् दारुणान् क्वाथोऽयं यदि योगवासरमितं दत्तो यमाद्रक्षति ॥३ ॥ इति भार्ग्यादिः । वाङ्माधुर्यजितामृतेऽमृतलतालक्ष्मीशिवाभेशिवा विश्वं विश्ववरे घनं घनकुचे सिंही च सिंहोदरी। एभिः पञ्चभिरौषधैर्मधुकणायुक्तः कषायः कृतः पीतश्चेद्विषमज्वरः किमु तदा तन्वङ्गि न क्षीयते॥१॥ अबले कृतकामबले चपले चलदृक्कमले खलु रत्नकले। अमृताब्दशिवं मधुमद्विषमे विषमेषु विलासविलासरते ॥२॥ द्राक्षामृतानागरतोयमुष्णं कृष्णाविपाकं बहुरोगनिघ्नम्। श्वासं च शूलं कसनं च मान्द्यं जीर्णज्वरं चैव जलेन तृष्णाम्॥ ३ ॥ दुःस्पर्शोशीरसिंहीघनमधुकशिवाजाजिविश्वाटरूपच्छिन्नारेणूकषायः समधुमगधको वापितश्चाष्टमांशम्। दाहं स्वेदं च शोषं क्रिमिमथ रुधिरं शैत्यमुद्भ्रान्तचित्तं श्वासं शूलं च तृष्णामहरहरसमं हन्ति चातुर्थिकाद्यम् ॥४॥ मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः । पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति॥५॥ दार्वीदारुकलिङ्गलोहितलताशम्याकपाठाशटीशौण्डीवीरकिरातवारणकणात्रायन्तिकापञ्चकैः।उग्राधान्यकनागराब्दसरलैः शिग्रुत्वगम्भःशिवाव्याघ्रीपर्पटदर्भमूलकटुकानन्तामृतापौष्करैः ॥ ६ ॥ धातुस्थं विषमं त्रिदोषजनितं चैकाहिकं द्व्याहिकं क्वाथो हन्ति तृतीयकज्वरभयं चातुर्थिकं भूतजम् ॥ ७ ॥ इत्यारोग्यदर्पणतो दार्व्यादिः। शृङ्गीरामठरामसेनरजनीरुग्रेणुकारोहिणीरास्नैरण्डरसोनदारुरजनीराजद्रुराजीफलैः । त्रायन्तीत्रिवृताहुताशननतानन्तामृतामुद्रितादन्तीतुम्बुरुचित्रतण्डुलतृटीत्वक्तिक्तनक्तञ्चरैः ॥१॥ वासावत्सकबीजयासवसुराबल्यावरीवह्निजं ब्राह्मीब्राह्मणयष्टिवारणकणाविश्वावयस्थावृषैः। मूर्वामालविकासमूलमगधामुस्ताजमोदाह्वयैर्मिश्रेयागुरुचन्दनेन्द्रचविकास्फोतावचाकट्फलैः ॥२॥ इत्येतैर्दशमूलयुग्मनिगदितः क्वाथश्चतुःष-

१ (ख०) चातुर्थकम्। २ (ग०) जस्थापितः साष्टमांशः।

ष्टिकः शृङ्गयादिर्मदनाहिसिंहभिषजासर्वामयोन्मूलने। पुंसामष्टविधज्वरार्तिशमने वाताग्निसंधुक्षणे सर्वाङ्गेषु समीरणद्विपघटे शार्दूलविक्रीडितम्॥३॥इति चतुःषष्टिशृङ्ग्यादिः। क्षुद्रानागरमुस्तपर्पटधनाभूनिम्बनिम्बामृताभार्गीचन्दनपुष्कराह्वकुलकैस्तिक्ताटरूषान्वितैः। पद्मास्थेन्द्रयवान्वितैश्च रचितः क्वाथो निपीतः प्रगे शीताद्यं ज्वरमुच्छ्रितं तु विषमं त्रिद्व्येकवस्रोद्भवम् ॥१॥ इति क्षुद्रादिः। अथ दुर्जलजनितज्वरचिकित्सा। हरीतकी निम्बपत्रं नागरं सैन्धवोऽनलः॥ एषां चूर्णं सदा खादेद्दुर्जलज्वरशान्तये॥१॥ भोजनादौ नरैर्भुक्तं शुण्ठीराज्यभयोत्थितम्॥ कल्कं तु सहते नित्यं नानादेशोद्भवं जलम् ॥२॥शक्राह्वदन्तुघ्नविषामृतानां निर्गुण्डिकाभृङ्गमहौषधानाम्। क्षुद्रायवानीसहितः कषायः शीतज्वरारण्यहिरण्यरेताः ॥३॥ रसोनकल्कं तैलेन सर्पिषा वा तिलैरपि। सेवितं विषमं हन्ति वातश्लेष्मगदानपि॥४॥इति रसोनकल्कम्। रास्नानागरकृष्णानां कल्कमुष्णाम्बुना पिबेत्। श्वासकासाग्निमान्द्यं च शीतज्वरहरं भवेत्॥५॥जीरकं लशुनं व्योषं पाठां पिष्ट्वोष्णवारिणा। शीतज्वरस्यागमने पिबेद्गुडयुतेन च ॥ २ ॥ पीतो मरीचचूर्णेन तुलसीपत्रजो रसः। द्रोणपुष्पीरसो वापि निहन्ति विषमज्वरान् ॥ ३ ॥ इति स्वरसः। ज्वरेऽञ्जनं निशातैलकृष्णामरिचसैन्धवैः। वचाहरीतकीसर्पिर्धूपः स्याद्विषमज्वरे ॥ १ ॥ इत्यञ्जनधूपौ ॥ अजायाश्चर्मरोमाणि वचा कुष्ठं पलङ्कषा निम्बपत्राणि मधु च धूपनं ज्वरनाशनम्॥१॥ इति धूपनम्॥ सर्पत्वचा सर्षपहिङ्गुनिम्बपत्राण्यमीषां समचूर्णधूपः। विनिग्रहं राक्षसडाकिनीनां करोति रक्षां विषमज्वरस्य ॥ २ ॥ इति द्वितीयधूपः। पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी। सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥ १ ॥ इत्यष्टाङ्गधूपः। कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिण्डीतकत्वङ्मांसीवृषदंशविण्नखवचाकेशाहिनिर्मोचनैः। नागेन्द्रद्विजशृङ्गहिङ्गुमरिचैस्तुल्यैः कृतं धूपनं स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नं परम् ॥ १ ॥ इति माहेश्वरधूपः।

## ॥ अथ चूर्णानि ॥

धान्यं लवङ्गं त्रितयं च शुण्ठी कोष्णाम्बु पीतं तरुणज्वरापहम्। तेभ्यः शृतं वारि तथाग्निमान्द्यं श्वासाद्यजीर्णं विषमं च वातम् ॥ १ ॥ गोरोचनं च मरिचं रास्ना कुष्ठं च पिप्पली। उष्णोदकेन पीतं च सर्वज्वरविनाशनम् ॥ २ ॥ भार्ङ्गी कर्कटशृङ्गी च चव्यं तालीसपत्रकम्। मरीचं मागधीमूलं प्रत्येकं द्विपलं भवेत् ॥३॥ षट्पलं शृङ्गबेरं च द्विपलं पिप्पलीद्वयम्। चातुर्जातमुशीरं च पलमेकं पृथक् पृथक् ॥ ४ ॥ चातुर्जातसमा शुभ्रा शर्करा समयोजिता। ज्वरमष्टविधं हन्ति कासं श्वासं च दारुणम् ॥ ५ ॥ शोफशूलोदराध्मानदोषत्रयहरं परम्। अनन्ता वालकं मुस्ता नागरं कटुरोहिणी ॥ ६ ॥ सुखाम्बुना प्रागुदयात्पिबेदक्षसमं रवेः। एतत्सद्यो ज्वरान् हन्ति दीपयत्याशु चानलम् ॥ ७ ॥ द्राक्षामृता सटी शृङ्गी मुस्तकं रक्तचन्दनम् नागरं कटुका पाठा भूनिम्बः सदुरालभः ॥ ८ ॥ उशीरं पद्मकं धान्यं वालकं क-

ण्टकारिका । पुष्करं पिचुमन्दं च दशाष्टाङ्गमिदं स्मृतम् ॥ जीर्णज्वरारुचिश्वासकासश्वयथुनाशनम् ॥९॥ इति द्राक्षादि ॥ धात्रीशिवासैन्धवचित्रकाणां कणायुतानां समभागचूर्णम्। जीर्णज्वरारोचकवह्निमान्द्ये विड्ग्रहे शस्तमिति प्रतिज्ञा॥१॥ इत्यामलक्यादिचूर्णम् । तालीसं मरिचं शुण्ठी पिप्पली वंशरोचना । एकद्वित्रिचतुःपञ्चकर्षैर्भागान्प्रकल्पयेत् ॥१॥ एलात्वचोस्तुकर्षार्धं प्रत्येकं भागमावहेत् । द्वात्रिंशत्कर्षतुलिता प्रदेया शर्करा बुधैः ॥ २ ॥ तालीसाद्यमिदं चूर्णं रोचनं पाचनं स्मृतम् । कासश्वासज्वरहरं छर्द्यतीसारनाशनम् ॥ ३ ॥ शोफाध्मानहरं प्लीहग्रहणीपाण्डुरोगजित् । पक्त्वा वा शर्करां चूर्णं क्षिपेत्सा गुटिका भवेत् ॥ ४ ॥ इति तालीसाद्यं चूर्णम् । सितोपलाषोडशः स्यादष्टौ स्याद्वंशरोचना । पिप्पली स्याच्चतुःकर्षा एला च स्याद्विकर्षिका ॥ १ ॥ एककर्षस्त्वचः कार्यश्चूर्णयेत्सर्वमेकतः ॥ सितोपलादिकं चूर्णं मधुसर्पिर्युतं लिहेत् ॥२॥ श्वासकासक्षयहरं हस्तपादाङ्गदाहजित् । मन्दाग्निं सुप्तजिह्वं च पार्श्वशूलमरोचकम् ॥ ज्वरमूर्ध्वगतं रक्तपित्तमाशु व्यपोहति ॥३॥ इति सितोपलादिचूर्णम् । कासश्वासज्वरहरा पिप्पली त्रिफलायुता । चूर्णिता मधुना लीढा भेदनी चाग्निबोधिनी ॥ १ ॥ इति त्रिफलापिप्पली ॥ कट्फलं मुस्तकं तिक्ता सटी शृङ्गी च पौष्करम् । चूर्णमेषां च मधुना शृङ्गबेररसेन वा ॥ १ ॥ लिहेज्ज्वरहरं कण्ठ्यं कासश्वासारुचीर्जयेत् । वायुं शूलं तथा छर्दिं क्षयं चैव व्यपोहति ॥२॥ इति कट्फलादिचूर्णम् ॥

## ॥ अथ योगरत्नसमुच्चये लघुसुदर्शनचूर्णम् ॥

गुडूची पिप्पलीमूलं कणा तिक्ता हरीतकी । नागरं देवकुसुमं निम्बत्वक् चन्दनं तथा ॥ १ ॥ सर्वचूर्णस्य चार्धांशं कैरातं प्रक्षिपेत्सुधीः । एतत्सुदर्शनं नाम्ना लघु दोषत्रयापहम् ॥ ज्वरांश्च निखिलान्हन्यान्नात्र कार्या विचारणा ॥ २ ॥ इति लघुसुदर्शनचूर्णम् ॥

## ॥ अथ भेडादिप्रणीतं सुदर्शनचूर्णम् ॥

तालीसत्रिफलात्रुटीत्रिकटुकं त्वक्त्रायमाणात्रिवृन्मूर्वाग्रन्थिनिशायुगं शटिबलारुक्कण्टकारीयुगम् । मुस्तापर्पटनिम्बपुष्करजटाभार्गीयवानीहिमं चव्यं चित्रकपुण्डरीक[1]तगरं सेव्यं विडङ्गं वचा ॥ १ ॥ यासो वत्सककुण्डलीन्द्रयवकं देवद्रुमं वालकं बीजं शिग्रुभवं पटोलकटुकापद्माह्वपत्रं विषा । काकोली मधु कुङ्कुमं च सतवक्षीरीलवङ्गं पृथक्पर्णीशैलजशालिपर्णिसहितं शामन्तकीपुष्पकम् ॥ २ ॥ सर्वं समं चूर्णतदर्धभागं कैरातकं श्रेष्ठतमं हि चूर्णम् । सुदर्शनं नाम मरुद्बलासामयोद्भवान्हन्ति पृथक्कृताञ्ज्वरान् ॥ ३ ॥ संसर्गजान्सकलजान्विषमान्निहन्याद्धातूद्भवान्विषकृतानभिघातजांश्च । सौमान्समानसकृतानतिदाहयुक्तांश्छीतांस्तृतीयकचतुर्थविपर्ययांश्च ॥ ४॥

1 (ख०) तमर्थं० ।

ऐकाहिकान्द्व्याहिकसन्निपातनानाविधान्पाक्षिकमासजातान् । तृड्दाहमोहभ्रमदैन्यतन्द्राश्वासकासारुचिपाण्डुरोगान् ॥ ५ ॥ हलीमकं कामलपार्श्वशूलं पृष्ठोद्भवं जानुभवं तथैव । त्रिकग्रहं वातविकारजातं विनाशयत्येव शिरोग्रहं च ॥ ६ ॥ नानाप्रदेशोद्भववारिदोषान्दूषीविषादिप्रभवान्विकारान् । स्त्रीणां रजोदोषसमुद्भवांश्च विनाशयेदुष्णजलेन पीतम् ॥ ७ ॥ शीताम्बुना पित्तभवान्विकारान्नानामुनीन्द्रैर्गदितं जगद्धितम् । सुदर्शनं दानवनाशनं यथा सुदर्शनं रोगविनाशनं तथा ॥ ८ ॥ इति भेडादिप्रणीतं सुदर्शनं चूर्णम् । अथ शार्ङ्गधरात् । त्रिफला रजनीयुग्मं कण्टकारीयुगं सटी । त्रिकटुग्रन्थिकं मूर्वा गुडूची धन्वयासकः ॥ १ ॥ कटुका पर्पटो मुस्ता त्रायमाणा च वालकम् । निम्बः पुष्करमूलं च मधुयष्टी च वत्सकः ॥२ ॥ यवानीन्द्रयवा भार्गी शिग्रुबीजं सुराष्ट्रजा । वचात्वक् पद्मकोशीरचन्दनातिविषा बला ॥ ३ ॥ शालिपर्णी पृश्निपर्णी विडङ्गं तगरं तथा । चित्रको देवदारुश्च चव्यं पत्रं पटोलजम् ॥ ४ ॥ जीवकर्षभकौ चैव लवङ्गं वंशलोचना । पुण्डरीकं च काकोली पत्रजं जातिपत्रकम् ॥ ५ ॥ तालीसपत्रं च तथा समभागानि चूर्णयेत् । सर्वचूर्णस्य चार्धांशं कैरातं प्रक्षिपेत्सुधीः ॥ ६ ॥ एतत्सुदर्शनं नाम चूर्णं दोषत्रयापहम् । ज्वरांश्च निखिलान्हन्यान्नात्र कार्या विचारणा ॥ ७ ॥ पृथग्द्वन्द्वागन्तुजांश्च धातुस्थान्विषमज्वरान् । संनिपातोद्भवांश्चापि मानसानपि नाशयेत् ॥ ८ ॥ जीर्णज्वरैकाहिकादीन्मोहं तन्द्रां भ्रमं तृषाम् । श्वासं कासं च पाण्डुं च हृद्रोगं हन्ति कामलाम् ॥ ९ ॥ त्रिकपृष्ठकटीजानुपार्श्वशूलनिवारणम् । शीताम्बुना पिबेद्धीमान्सर्वज्वरनिवृत्तये ॥१०॥ सुदर्शनं यथा चक्रं दानवानां विनाशनम् । तद्वज्ज्वराणां सर्वेषामिदं चूर्णं प्रणाशनम् ॥ ११ ॥

## ॥ अथ लवङ्गादिचूर्णम् ॥

लवङ्गजातीफलपिप्पलीनां भागं प्रकल्प्याक्षसमानमेषाम् । पलार्धमेकं मरिचस्य दद्यात्पलानि चत्वारि महौषधस्य ॥१॥ सितासमं चूर्णमिदं प्रगृह्य रोगांश्च वातप्रभवान्निहन्ति । कासज्वरारोचकमेहगुल्मश्वासाग्निमान्द्यग्रहणीप्रदोषान् ॥२॥ इति लवङ्गादिचूर्णम् ॥

## ॥ अथ [1]कुरण्टकादिनामा लेहः ॥

कुरण्टकं समूलं च कुठारच्छेदक्षुण्णकम् । पानीयमष्टप्रस्थं वा क्वाथमष्टावशेषकम् ॥ १ ॥ शेषक्वाथं भाण्डमध्ये पुनः क्वाथ्याग्निना पचेत् । क्वाथे त्रिभागपचिते चूर्णद्रव्याणि निक्षिपेत् ॥२॥ एला लवङ्गं त्रिफला चव्यं पत्रककेसरम् । द्विभार्गी ग्रन्थिकं पाठा मागधी चित्रकुष्ठकम् ॥ ३ ॥ कोलाञ्जनं चाजमोदा वज्रवल्ली विडङ्गकम् । जीरद्वयं चेन्द्रयवं मुस्तादीप्यकसैन्धवम् ॥४॥ कटुकातिविषा मूर्वा करञ्जस्त्वरलूम्रक-

---

१ ( स० ) शीत० ।

म् । एतच्चूर्णं सूक्ष्मचूर्णं पूर्वकाथेन संयुतम् ॥ ५ ॥ लेहपाकं च विधिवद्धात्रीफलस-मानंकम् । उष्णोदकानुपानेन सेवयेद्दिनविंशतिम् ॥ ६ ॥ द्वन्द्वज्वरं पुराणं च त्वग्नि-मान्द्यमरोचकम् । त्वग्गतास्थिगतौ रक्तगतं मांसगतं ज्वरम् ॥ ७ ॥ सन्धिज्वरं च ह्यत्युग्रं रात्रिज्वरमथो हरेत् । त्रिदोषजं ज्वरं हन्ति श्वासकासज्वरापहः ॥ ८ ॥ गलरोगोपशमनो विषमज्वरनाशनं । कुरण्टकादिनामायं लेहो रोगाहितः सदा ॥९॥

## ॥ अथ घृतानि ॥

अथ पञ्चतिक्तकं घृतम् । ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः । रूक्षस्य ये न शाम्यन्ति तेषां सर्पिर्भिषग्जितम् ॥ १ ॥ सर्पिर्दद्यात्कफे मन्दे वातपित्तोत्तरे ज्वरे । पक्केषु दोषेष्वमृतं तद्विषोपममन्यथा ॥ २ ॥ वृषनिम्बामृताव्याघ्रीपटोलानां शृतेन च । कल्केन पक्वं सर्पिस्तु निहन्याद्विषमज्वरान् । पाण्डुं कुष्ठं विसर्पं च कृमीनर्शां-सि नाशयेत् ॥ ३ ॥ इति पञ्चतिक्तकं घृतम् ॥ अथामृताद्यं घृतम् । अमृतात्रिफला-पटोलयासैः सपयस्कं विधिवद्घृतं विपक्कम् । विषमज्वरनाशनप्रधानं क्षयगुल्मारु-चिकामलापहारि ॥ १ ॥ इत्यमृताद्यं घृतम् ॥ अथ षट्पलं घृतम् । पिप्पलीपिप्पली-मूलं चव्यचित्रकनागरैः । ससैन्धवैश्च पलिकैर्घृतप्रस्थं विपाचयेत् ॥ १ ॥ क्षीरं चतुर्गुणं दद्यात्तद्घृतं प्लीहनाशनम् । विषमज्वरमन्दाग्निहरं रुचिकरं परम् ॥ २ ॥ इति षट्पलं घृतम् ॥ अथ महाषट्पलं घृतम् । पूतीकाग्निकपञ्चकोलरुचकैः साजाजि-युग्मोद्भिदैः सक्षारैः सबिडैः सहिङ्गुहपुषासिन्धूद्भवैः कल्कितैः । मुक्तेनार्द्रकसम्भवेन च रसेनैतन्महाषट्पलं सर्पिः पक्कमरोचकाग्निसदनप्लीहज्वरश्वासजित् ॥ १ ॥ इति महाषट्पलं घृतम् ॥

## ॥ अथ तैलानि ॥

अथाश्वगन्धादितैलम् । अश्वगन्धाबलालाक्षाप्रस्थं प्रस्थं पृथक् पृथक् । जलद्रो-णे विपक्तव्यं चतुर्भागावशेषितम् ॥ १ ॥ तैलं त्रिमानकं दद्याद्दधिमस्तु चतुर्गुणम् । अश्वगन्धानिशादारुकौन्तीकुष्ठाब्दचन्दनैः ॥ २ ॥ निशा तिक्ता शताह्वा च लाक्षा-मूर्वा समूलकैः । सुरदारु च मञ्जिष्ठा मधुकोशीरसारिवाः ॥ ३ ॥ समभागानि कुर्वीत कल्कीकृत्य विपाचयेत् । सर्वज्वरं हरत्याशु सर्वधातुविवर्धनम् ॥ एतदभ्यञ्जनेनाशु क्षयरोगं विमुञ्चति ॥ ४ ॥ इत्यश्वगन्धादितैलम् । सुवर्चिकानागरकुष्ठमूर्वालाक्षा-निशालोहितयष्टिकाभिः । तैलं ज्वरे षड्गुणतक्रसिद्धमभ्यञ्जनाच्छीतविदाहनुत्स्यात् ॥ १ ॥ दध्नः ससारकस्य स्यात्षट्तक्रे तक्रमुत्तमम् ॥ २ ॥ इति षट्तक्रतैलम् । लाक्षाहरिद्रामञ्जिष्ठाकल्कैस्तैलं विपाचयेत् । षड्गुणेनारनालेन दाहशीतज्वरापहम् ॥ १ ॥ इति लघुलाक्षादितैलम् । तैलं लाक्षारसं क्षीरं पृथक्प्रस्थं समं पचेत् । चतुर्गुणै-रिति क्वाथ्यद्रव्यैरेतैः पलोन्मितैः ॥ १ ॥ लोध्रकट्फलमञ्जिष्ठामुस्तकेसरपद्मकैः ।

---

१ (ख०) प्रमाणकम् । २ (ख० ग०) युग्मौ । ३ (ख०) चतुर्गुणैरिति क्वाथे ।

चन्दनोत्पलयष्ट्याह्वैस्तैलं गण्डूषधारणात् ॥ २ ॥ दन्तरोगाः प्रणश्यन्ति लेपात्सर्वज्वराञ्जयेत् । एतल्लाक्षादिकं तैलं बलपुष्टिप्रदायकम् ॥ ३ ॥ इति बृहल्लाक्षादितैलम् लाक्षामधुकमञ्जिष्ठामूर्वाचन्दनसारिवा—तैलं षट्चरणं नाम त्वभ्यङ्गाज्ज्वरनाशनम् ॥ १ ॥ इति षट्चरणं तैलम् । लाक्षा मूर्वा हरिद्रे द्वे मञ्जिष्ठा चेन्द्रवारुणी। बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी ॥ २ ॥ आरनालाढकेनात्र तैलप्रस्थं विपाचयेत् । तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम् ॥ ३ ॥ इत्यङ्गारकतैलम् । तैलं प्रस्थमितं चतुर्गुणजतुक्काथं चतुर्मस्तुरुग्यष्टीदारुनिशाब्दमूर्वकटुकामिस्यश्च कौन्तीहिमैः । रास्नाह्वैः पिचुसंमितैः कृतमिदं शस्तं तु जीर्णज्वरे सर्वस्मिन्विषमेऽपि यक्ष्मणि शिशौ वृद्धे सुगर्भासु च ॥ १[1]॥ इति मध्यमलाक्षादितैलम् ॥

## ॥ अथ चन्दनबलालाक्षादि तैलम् ॥

चन्दनं च बलामूलं लाक्षा लामज्जकं तथा । पृथक् पृथक् प्रस्थमात्रं द्रोणे च सलिले पचेत् । चतुर्भागावशेषेऽस्मिंस्तैलं प्रस्थद्वयं क्षिपेत् ॥ १ ॥ चन्दनोशीरमधुकशताह्वा कटुरोहिणी । देवदारुनिशाकुष्ठमञ्जिष्ठागुरुवालकम् ॥ २ ॥ अश्वगन्धा बला दार्वी मूर्वा मुस्ता समूलकाः । एला त्वङ्नागकुसुमं रास्ना लाक्षा सुगन्धिका ॥ ३ ॥ चम्पकं पीतसारं च सारिवा रोचकद्वयम् । कल्कैरेतैः समायुक्तं क्षीराढकसमन्वितम् ॥४॥ तैलमभ्यञ्जने श्रेष्ठं सप्तधातुविवर्धनम् । कासश्वासक्षयहरं सर्वच्छर्दिनिवारणम् ॥ ५ ॥ असृग्दरं रक्तपित्तं हन्ति पित्तकफामयम् । कान्तिकृद्दाहशमनं कण्डूविस्फोटनाशनम् ॥ ६ ॥ शिरोरोगं नेत्रदाहमङ्गदाहं च नाशयेत् । वातामयहतानां च क्षीणानां क्षीणरेतसाम् ॥ ७ ॥ बालमध्यमवृद्धानां शस्यते शोफकामलाम्[2] । पाण्डुरोगे विशेषेण सर्वज्वरविनाशनम् ॥८॥ इति चन्दनबलालाक्षादितैलम् ॥ इति तैलानि ॥

## ॥ अथ पाकाः ॥

अथ सेवन्तीपाकः । श्वेतपुष्पसहस्राणि घृतप्रस्थे विपाचयेत् । घृतपक्वे कृते तस्मिन्निक्षिपेदेतदौषधम् ॥ १ ॥ सितोपला चतुर्भागा चातुर्जातं पलं पलम् । मृद्वीकाषट्पलं चैव क्षिपेन्मधुपलाष्टकम् ॥ २ ॥ धारासत्वं चार्धपलं सर्वमेकत्र कारयेत् । कर्षप्रमाणं तत्सेव्यं सततं च गदातुरैः ॥ ३ ॥ जीर्णज्वरे क्षये कासे चाग्निमान्द्ये प्रमेहके । प्रदरं रक्तजान्रोगान्कुष्ठार्शांसि विनाशयेत् ॥ नेत्ररोगान् सुदुःसाध्यांस्तथा सर्वान्मुखोत्थितान् ॥ ४ ॥ इति सेवन्तीपुष्पपाकः ॥ अथ पिप्पलीपाकः पिप्पलीप्रस्थमादाय क्षीरेणैवानुपेषयेत् । अर्धाढकं घृतं गव्यं शुद्धं खण्डाढकं तथा ॥ १ ॥ पचेन्मृद्वग्निना तावद्यावत्पाकमुपागतम् । शीतीभूते क्षिपेत्तस्मिंश्चातुर्जातं पलत्रयम् ॥ २ ॥ योजयेन्मात्रया युक्तं दोषधात्वग्निसाम्यतः । बल्यं वृष्यं तथा हृद्यं तेजोवृद्धिकरं तथा ॥ ३ ॥ जीर्णज्वरे क्षतक्षीणमश्रान्तं[3] चैव बृंहयेत् । छर्दि-

---

१ ( ख० ) चन्दनोशीर । २ ( ख० ग० ) कामला । ३ ( ख० ) घृते ।

स्तृण्णारुचिश्वासशोषहिक्काः स कामलाम्॥४॥ हृद्रोगं पाण्डुरोगं च कण्ठरोगं त्रिदोषजम् । वातरक्तं प्रतिश्यायमामवातं विनाशयेत् ॥ संवत्सरप्रयोगेण वलीपलितवर्जितः ॥ ५ ॥ इति पिप्पलीपाकः ॥

## ॥ अथ रसाः ॥

अथ नवज्वरेभाङ्कुशो रसराजलक्ष्म्याः ॥ सगन्धटङ्कं रसभूषणं च विमर्दितं भावयमीनपित्तैः । दिनत्रयं वल्लयुगं प्रदद्याद्वृन्ताकतक्रौदनपथ्यमत्र ॥ १ ॥ नवज्वरेभाङ्कुशनामधेयः क्षणेन घर्मोद्गमातनोति ॥ २ ॥ अथ पञ्चामृत रसः । स्वर्णरौप्यरविपन्नगलोहं चन्द्रदृक्शिखिचतुःशरभागम् । मर्दितं तनुतरं दिनमेकं भावितं मकरपित्तरसेन ॥ १ ॥ वल्लयुग्ममखिलज्वरशान्त्यै शर्करार्द्रकरसेन ददीत ॥२॥ इति पञ्चामृतरसः। अथ जीर्णज्वराङ्कुशः । मृतं सूताभ्रनागार्ककान्तवैक्रान्तमेव च। हिङ्गुलं टङ्कणं गन्धं विषं कुष्ठं समांशकम् ॥ १ ॥ त्रिकटुत्रिफलामुस्ताभृङ्गनिर्गुण्डिकाद्रवैः । भावयेत्रिदिनं चैव माषमात्रानुपानतः ॥४॥ जीर्णज्वरे क्षये कासे दोषे मन्दानलेपु च । पाण्डुं हलीमकं गुल्ममुदरं चार्दितं जयेत् ॥ ५ ॥ ग्रहणीमूलरोगांश्च त्वरोचकमनेकधा। कान्ति तेजो बलं पुष्टिं वीर्यवृद्धिं विवर्धयेत् ॥ साध्यासाध्यं निहन्त्याशु रसो जीर्णज्वराङ्कुशः ॥ ६ ॥ इति जीर्णज्वराङ्कुशः ॥

## ॥ अथ मुक्तापञ्चामृतरसः ॥

मुक्ताप्रवालखुरवङ्ककम्बुशुक्तिर्भूतिं वसूदधिदृगिन्दुसुधांशुभागाम् । इक्षो रसेन सुरभेः पयसा विदारीकन्यावरीषु रसहंसपदीरसैश्च ॥१॥ संमर्द्य यामयुगलं च वनोपलाभिर्दद्यात्पुटानि मृदुलानि च पञ्च पञ्च । पञ्चामृतं रसविभुं भिषजा प्रयुज्य गुञ्जाचतुष्टयमितं चपलारजश्च ॥ २ ॥ पात्रे निधाय चिरसूतपयस्विनीनां दुग्धेन च प्रपिबतः खलु चाल्पभोक्तुः । जीर्णज्वरः क्षयमियादथ सर्वरोगाः स्वीयानुपानकलिताश्च शमं प्रयान्ति ॥ ३ ॥ इति मुक्तापञ्चामृतरसः ॥

## ॥ अथ पञ्चामृतरसः ॥

रसेन्द्रसिन्दूरसुवर्णकान्तसिन्दूरमभ्रं ससितं च तारम्। पञ्चामृताख्यं क्षयपाण्डुरोगगुदाङ्कुरार्शोग्रहणीर्निहन्ति ॥ १ ॥ इति पञ्चामृतरसः ॥

## ॥ अथ त्रिभुवनकीर्तिरसः ॥

हिङ्गुलं च विषं व्योषं टङ्कणं मागधीं शिफाम् । संचूर्ण्य भावयेत्रेधा सुरसार्द्रकहेमभिः ॥ १ ॥ रसस्त्रिभुवनकीर्तिर्गुञ्जैकार्द्रद्रवेण वै । विनाशयेज्ज्वरान् सर्वान् सन्निपातांस्त्रयोदश ॥ इति त्रिभुवनकीर्तिरसः ॥

---

१ ( ख० ) दरदं च । २ ( ख० ) रसराजलक्ष्म्याः ( ङ० ) रसराजलक्ष्याः । ३ ( घ० ) दृढतरम् । ४ ( ग० ) भर्ति वसूदधि ( घ० ) भूनिम्बसूदधि ।

## ॥ अथ महाज्वराङ्कुशः ॥

शुद्धसूतं विषं गन्धं धूर्तबीजं त्रिभिः समम् । चतुर्णां द्विगुणं व्योषं हेमक्षीररविभावितम् ॥ १ ॥ चतुर्वारं घर्मशुष्कं चूर्णं गुञ्जाद्वयोन्मितम् । पक्वजम्बीरकद्रावैर्युक्तार्द्रस्य द्रवैर्युतम् ॥ २ ॥ महाज्वराङ्कुशो नाम ज्वराणामन्तको भवेत् । ऐकाहिकं द्व्याहिकं वा त्र्याहिकं वा चतुर्थकम् । विषमं वा त्रिदोषोत्थं नाशयेद्याममात्रतः ॥३॥ इति महाज्वराङ्कुशः ।

## ॥ अथ शीताङ्कुशः ॥

तुत्थं टङ्कणसूतखर्परविषं स्याद्गन्धकं तालकं सर्वं खल्वतले विमर्द्य घटिकां तत्कारवल्लीरसैः । गुञ्जैका गुटिका सुशर्करयुता सज्जीरकेणाथवा एकद्वित्रिचतुर्थशीतहरणः शीताङ्कुशो नामतः ॥ १ ॥ इति शीताङ्कुशः ॥

## ॥ अथ ज्वरघ्नी गुटिका ॥

भागैकं स्याद्रसाच्छुद्धाद्द्वौ पिप्पल्यास्ततस्त्रयः । अकारकरभाद्गन्धात्कटुतैलेन शोधितात् ॥१॥ फलिन्याश्चेन्द्रवारुण्याश्चतुर्भागैर्मिता अमी । एकत्र मर्दयेच्चूर्णमिन्द्रवारुणिकारसैः ॥ २ ॥ माषोन्मितां गुटीं कृत्वा दद्यात्सद्यो ज्वरे बुधः । छिन्नारसानुपानेन ज्वरघ्नी गुटिका मता ॥ ३ ॥ इति ज्वरघ्नी गुटिका ॥

## ॥ अथ सन्निपातभैरवरसः ॥

रसो गन्धस्त्रित्रिकर्षैः कुर्यात्कज्जलिकां द्वयोः । ताराऽरताम्रवङ्गाहिसाराश्चैकैककार्षिकाः ॥ १ ॥ शिग्रुज्वालामुखीशुण्ठीबिल्वेभ्यस्तण्डुलीयकात् । प्रत्येकं स्वरसैः कुर्याद्यामैकैकं विमर्दनम् ॥ २ ॥ कृत्वा गोलं वृतं वस्त्रैर्लवणापूरिते न्यसेत् । काचभाण्डे ततः स्थाल्यां काचकुपीं निवेशयेत् ॥३॥ वालुकाभिः प्रपूर्याथ वह्निर्यामद्वयं भवेत् । तत उद्धृत्य तं गोलं चूर्णयित्वा विमिश्रयेत् ॥ ४ ॥ प्रवालचूर्णकर्षेण शाणमात्रविषेण च । कृष्णसर्पस्य गरलैर्द्विवारं भावयेत्तथा ॥ ५ ॥ तगरं मुसली मांसी हेमाह्वा वेतसः कणा । नलिनीपत्रकं[1] चैला चित्रकश्च कुठेरकः ॥ ६ ॥ शतपुष्पा देवदाली धत्तूरागस्त्यमुण्डिकाः । मधूकजातिमदनरसैरेषां विमर्दयेत् ॥७॥ प्रत्येकमेकवेलं च ततः संशोष्य धारयेत् । बीजपूरार्द्रकद्रावैर्मरीचैः षोडशोन्मितैः ॥ ८ ॥ रसो द्विगुञ्जप्रमितः सन्निपातेषु दीयते । प्रसिद्धोऽयं रसो नाम्ना सन्निपातस्य भैरवः ॥ ९ ॥ अन्यच्च । सूतं गन्धं लोहकिट्टं विमर्द्य सर्वैस्तुल्यं वत्सनाभं नियुञ्ज्यात् । आर्द्रं भृङ्गं बीजपूरं जयन्त्या निर्गुण्डीकाव्यस्तराजद्रवैश्च ॥ १ ॥ युक्त्या वैद्यैर्भावयित्वा विधेयः शाणार्धार्धं सन्निपातस्य नूनम् । शीतैर्वातैर्निर्मलं स्नानपानं पथ्यं दुग्धं शर्कराभिर्युतं च ॥ २ ॥ इति सन्निपातभैरवरसः ।

---

१ ( ख० ग० घ० ङ० ) नीलिनी ।

## ॥ अथ त्रैलोक्यतापहरः ॥

सूतशुल्बत्रिवृताबलितिक्तादन्तिबीजचपला विषतिन्दुः। पथ्यया सह विचूर्ण्य समांशं हेमवारिसहितं दिनमेकम् ॥ १ ॥ वल्लयुग्मगुटिकार्द्रकवारा नाशयेदभिनवज्वरमाशु[1]। विश्वतापहरणोऽत्र च पथ्यं मुद्गयूषसहितं लघु युक्तम् ॥ २ ॥ इति त्रैलोक्यतापहरः ॥

## ॥ अथामृतकलानिधिरसः ॥

अमृतवराटकमरिचैर्द्विपञ्चनवमांशैः। मुद्गप्रमाणवटको ज्वरपित्तकफाग्निमान्द्यहारी स्यात् ॥ १ ॥

## ॥ अथ ज्वरमुरारिः ॥

रसबलिफणिलोहव्योमताम्राणि तुल्यान्यथ रसदलभागो नाग एतत्प्रघृष्टम्[2]। भवति गदमुरारिश्चास्य गुञ्जार्द्रवारा क्षपयति दिवसेन प्रौढमामज्वराख्यम् ॥ १ ॥ अथच। त्रिःसप्तजम्भजलभावितखर्परस्य चूर्णं त्रिसप्तनवनीतविमर्दितं स्यात्। वल्लद्वयं हरति शर्करयानुपानं सद्यो ज्वरं ज्वरमुरारिरसश्च पुंसाम् ॥ १ ॥ इति ज्वरमुरारिः ॥

## ॥ अथ चन्द्रशेखररसः ॥

शुद्धसूतसमं गन्धं मरिचं टङ्कणं तथा। चतुस्तुल्या सिता योज्या मत्स्यपित्तेन भावयेत् ॥ १ ॥ द्विगुञ्जामार्द्रकद्रावैर्देयं शीतोदकं पुनः। तक्रभक्तं च वृन्ताकं पथ्यं तत्र विधापयेत् ॥ २ ॥ त्रिदिनाच्छ्लेष्मपित्तोत्थमत्युष्णं[3] नाशयेज्ज्वरम् ॥ ३ ॥ इति चन्द्रशेखररसः।

## ॥ अथ स्वर्णमालिनीवसन्तः ॥

स्वर्णं मुक्तादरदमरिचं भागवृद्ध्या प्रदेयं खर्परयष्टौ प्रथमनवनीते निम्बुनीरेण[4] तावत्। यावत्स्नेहो व्रजति विलयं मर्दयेद्दीयतेऽसौ गुञ्जाद्वन्द्वं मधुचपलया सर्वरोगे वसन्तः ॥ १ ॥

## ॥ अथ लघुमालिनीवसन्तः ॥

रसकयुगुलभागं वल्लिजम्भागमेकं द्वितयमथ सुखल्वे मर्दयेन्म्रक्षणेन। भवति घृतविमुक्तो निम्बुनीरेण यावज्ज्वरहरमधुकुल्या मालिनीप्राग्वसन्तः ॥ १ ॥ जीर्णज्वरे धातुगतेऽतिसारे रक्तान्विते रक्तभवे विकारे। घोरव्यथे पित्तभवे च दोषे वल्लद्वयं दुग्धयुतं च पथ्यम् ॥ २ ॥ प्रदरं नाशयत्याशु तथा दुर्नामशोणितम्। विषमं नेत्ररोगं च गजेन्द्रमिव केसरी ॥ ३ ॥ वसन्तो मालिनीपूर्वः सर्वरोगहरः

---

१ (ख० ग० घ० ङ०) अमृतं वराटिका। २ (ख०) नाग एतत्प्रभृष्टम् (ग०) वत्सनागप्रदिष्टम्। ३ (ख० ग० घ० ङ०) त्रिशोथ। ४ (ग०) नवनीते निम्बुनीरेण (घ०) नवनीतेन निम्बाम्बुना (ङ०) नवनीतेन निम्बाम्बुनाथ।

शिशोः। गर्भिण्यै तत्र देयो वै जयन्त्याः पुष्पकैः सह। सर्वज्वरहरः श्रेष्ठो गर्भपोषण उत्तमः ॥ ४ ॥ इति लघुमालिनीवसन्तः। अन्यच्च। नराम्बुमध्ये रसकस्य चूर्णं दिनानि सप्त त्रिगुणानि पूर्वम्। धृत्वातपे शोषितमेतदेव त्ववारि जीर्णं भवतीति यावत् ॥ १ ॥ पलप्रमाणं मरिचं च निस्तुषं पलद्वयं स्याद्रसकस्य तस्य। एकत्र संचूर्ण्य कृतं तदेव पलार्धकं गोनवनीतकं च ॥ २ ॥ निम्बूत्थतोयेन विमर्दनीयं शतैकमानं भिषजा वरिष्ठम्। वल्लद्वयं चास्य कणामधुभ्यां प्रदापयेद्व्याधिगजस्य केसरी ॥ ३ ॥ नाम्ना प्रसिद्धो रसराज एष सद्यो ग्रहण्यामतिसारके च। ज्वरे क्षयेऽर्शस्सु तथैव तापे शूलाग्निमान्द्यानिलजे विकारे ॥ ४ ॥ अन्यच्च। खर्परं मानुषे मूत्रे स्थितं घस्त्रत्रिसप्तकम्। निस्त्वक् तदर्धमरिचं नवनीतेन मर्दयेत् ॥ १ ॥ शतधा भावयेन्निम्बुरसैः स्याद्रसकेश्वरः। पिप्पलीमधुयुग्दत्तःससितो वास्य भेषजम् ॥ २ ॥ ज्वरं धातुगतं पित्तं भ्रमं पित्तास्रजान् गदान्। रक्तातिसारं ग्रहणीं दुर्नामास्रं निवारयेत् ॥ अनम्लं दधि वा दुग्धं पथ्यं चास्मिन्प्रयोजयेत् ॥ ३ ॥

## ॥ अथापूर्वमालिनीवसन्तः ॥

वैक्रान्तमभ्रं रवितापरौप्यं वङ्गं प्रवालं रसभस्म लोहम्। सुटङ्कणं कम्बुकभस्म सर्वं समांशकं सेच्यैवरी हरिद्रा ॥ १ ॥ द्रव्यैर्विभाव्यं मुनिसंख्यया च मृगाङ्कजाशीतकरेण पश्चात्। वल्लप्रमाणो मधुपिप्पलीभिर्जीर्णज्वरे धातुगते नियोज्यः। गुडूचिकासत्वसितायुतश्च सर्वप्रमेहेषु नियोजनीयः ॥ २ ॥ कृच्छ्राश्मरीं निहन्त्याशु मातुलुङ्गाङ्घ्रिजैर्द्रवैः। रसो वसन्तनामायमपूर्वो मालिनीपदः ॥ ३ ॥ इत्यपूर्वमालिनीवसन्तः ॥

## ॥ अथ पञ्चवक्त्रः ॥

शुद्धसूतं विषं गन्धं मरीचं टङ्कणं कणाम्। मर्दयेद्धूर्तजद्रावैर्दिनमेकं च शोषयेत् ॥ १ ॥ पञ्चवक्त्ररसो नाम द्विगुञ्जः सन्निपातजित्। अर्कमूलं कषायं तु त्र्यूषणं चानुपानयेत् ॥ २ ॥ युक्तं दध्योदनं पथ्यं जलयोगं च कारयेत्। रसेनानेन शाम्यन्ति सक्षौद्रेण कफादयः ॥ ३ ॥ मधु त्वर्करसं चानुपिबेदग्निविवृद्धये। यथेष्टं घृतमत्याशु दीप्तो भवति पावकः ॥ ४ ॥ इति पञ्चवक्त्रः।

## ॥ अथ चन्द्रकलारसः ॥

गगनदरदयुक्तं शुद्धसूतं च गन्धं प्रहरमथ सुपिष्टं वल्लयुग्मं नरोऽद्यात्। ज्वरहरगजसिंहः शृङ्गबेरोदकेन प्रथमजनितदाहे तक्रभक्तं च भोज्यम् ॥१॥ मुस्तादाडिमदूर्वोत्थैः केतकीस्तनजद्रवैः। सह देव्याः कुमार्याश्च पर्पटस्यापि वारिणा ॥२॥ रामशीतलिकातोयैः शतावर्या रसेन च। भावयित्वा प्रयत्नेन दिवसे दिवसे पृथक् ॥३॥ तिक्ता गुडूचिकासत्वं पर्पटोशीरमाधवी। श्रीगन्धं सारिवा चैषां समानं सूक्ष्मचू-

---

१ (ख०) पाकंचवरी (ग०) पाच्यवरी।

र्णितम् ॥ ४ ॥ द्राक्षाफलकषायेण सप्तधा परिभावयेत् । ततः पोताश्रयं कृत्वा वल्यः कार्याश्चणोपमाः ॥ ५ ॥ अयं चन्द्रकलानाम्ना रसेन्द्रः परिकीर्तितः । सर्वपित्तगदध्वंसी वातपित्तगदापहः ॥ ६ ॥ अन्तर्बाह्यमहादाहविध्वंसनमहाघनः । ग्रीष्मकाले शरत्काले विशेषेण प्रशस्यते ॥ ७ ॥ कुरुते नाग्निमान्द्यं च महातापज्वरं हरेत् । भ्रममूर्च्छाहरं चाशु स्त्रीणां रक्तं महास्रवम् ॥ ८ ॥ ऊर्ध्वाधो रक्तपित्तं च रक्तं वान्ति विशेषतः । मूत्रकृच्छ्राणि सर्वाणि नाशयेन्नात्र संशयः ॥ ९ ॥ इति चन्द्रकलारसः ॥ इति रसाः ॥

## ॥ अथ सप्तधातुगतज्वराणां लक्षणम् ॥

गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ । रसस्थे च ज्वरे लिङ्गं दैन्यं चास्योपजायते ॥ १ ॥ रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ । प्रलापः पिटिका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥ २ ॥ पिण्डिकोद्वेष्टनं मूर्छा सृष्टमूत्रपुरीषता । उष्मान्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥ ३ ॥ भृशं स्वेदस्तृषा मूर्छा प्रलापश्छर्दिरेव च । दौर्गन्ध्यारोचकौ ग्लानिर्मेदस्थे चासहिष्णुता ॥ ४ ॥ भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च । विक्षेपणं च गात्राणां विद्यादस्थिगतज्वरे ॥ ५ ॥ तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा । अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे ॥ ६ ॥ मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे । शेफसः स्तब्धता मोक्षः शुक्रस्य च विशेषतः ॥ ७ ॥ इति सप्तधातुगतज्वरलक्षणम् ॥

## ॥ अथैषां चिकित्सा ॥

रसस्थे च ज्वरे तस्मिन्कुर्याद्वमनलङ्घने । सेकसंशमनालेपरक्तमोक्षास्त्वसृग्गते ॥ १ ॥ तीक्ष्णान्विरेकांश्च तथा कुर्यान्मांसगते ज्वरे । मेदोगे मेदसो नाशमस्थिस्थे कान्तमासनम् ॥ २ ॥ बस्तिकर्म प्रयोक्तव्यमभ्यङ्गोद्वर्तनं तथा । मज्जशुक्रे क्रिया नोक्ता मरणं तत्र भाषितम् ॥ ३ ॥ कटुका रोहिणी मुस्ता पिप्पलीमूलमेव च । हरीतकी च तत्तोयमामाशयगते ज्वरे ॥ ४ ॥ इति सप्तधातुगतज्वरचिकित्सा ।

## ॥ अथ मधुरज्वरलक्षणम् ॥

ज्वरो दाहो भ्रमो मोहो ह्यतीसारो वमिस्तृषा । अनिद्रा मुखरोगश्च तालु जिह्वा च शुष्यति ॥ १ ॥ ग्रीवायां परिदृश्यन्ते स्फोटकाः सर्षपोपमाः । एभिस्तु लक्षणैर्विद्यान्मन्थराख्यं ज्वरं नृणाम् ॥ २ ॥ मुस्ता पर्पटको यष्टी गोस्तनी समभागतः अष्टावशेषतः क्वाथो निपीतो मधुना सह ॥ ३ ॥ पित्तभ्रमं ज्वरं दाहं हन्ति च्छर्दिं समन्थराम् । चन्दनोशीरधान्यं च वालकं पर्पटं तथा ॥ ४ ॥ मुस्ता शुण्ठीसमं युक्तं मन्थरज्वरनाशनम् । मक्षिका गुडसंयुक्ता ज्वरे मन्थरके तथा । भ्रममोहातिसारांश्च नाशयत्यविलम्बतः ॥ ५ ॥ इति मधुरज्वरचिकित्सा । चलदलतरुसेवा-होममन्त्राग्निनेत्रद्विजगुरुजनपूजा विष्णुनाम्नां सहस्रम् । मणिधृतिरपि दानान्या-

शिषस्तापसानां सकलमिदमरिष्टं स्पष्टमष्टज्वराणाम् ॥ १ ॥ समुद्रस्योत्तरे तीरे द्विरदो नाम वानरः । तस्य स्मरणमात्रेण ज्वरा यान्ति दिगन्तरम् ॥ २ ॥ इति ज्वरचिकित्साकथनम् ॥

## ॥ अथ पथ्यापथ्यविधिमाह ॥

आलोक्य वैद्यतन्त्राणि यत्नादेष निबध्यते । व्याधितानां चिकित्सार्थं पथ्यापथ्यविनिश्चयः ॥ १ ॥ निदानौषधपथ्यानि त्रीणि यत्नेन चिन्तयेत् । तेनैव रोगाः शीर्यन्ते शुष्के नीर इवाङ्कुराः ॥ २ ॥ रुक्षु सर्वास्वपथ्यानि यथास्वं परिवर्जयेत् । तास्त्वपथ्यैर्विवर्धन्ते दोहदैरिव वीरुधः ॥ ३ ॥ विनापि भेषजैर्व्याधिः पथ्यादेव विलीयते । न तु पथ्यविहीनस्य भेषजानां शतैरपि ॥ ४ ॥ दोषान्दूष्यान्देशकालौ सात्म्यं सत्वं बलं वयः । विकृतिं भेषजं वह्निमाहारं च विशेषतः ॥ ५ ॥ निरीक्ष्य मतिमान्वैद्यश्चिकित्सां कर्तुमुद्यतः । पथ्यानि योजयेन्नित्यं यथास्वं सर्वरोगिषु ॥ ६ ॥ मतः सर्वेषु रोगेषु प्रायः श्रेष्ठतमो ज्वरः । अतस्त्वस्यैव प्रथमं पथ्यापथ्यं वदाम्यहम् ॥ ७ ॥

## ॥ अथ तरुणज्वरे दोषादीन्वीक्ष्य वमनादीनि कार्याणीत्याह ॥

वमनं लङ्घनं काले यवागूस्वेदनानि च । कटुतिक्तरसैश्चैव पाचनं तरुणे ज्वरे ॥ १ ॥ सन्निपाते हितान्याह । सन्निपाते त्विदं सर्वं कुर्यादामकफापहम् । अवलेहोऽञ्जनं नस्यं गण्डूषाश्च रसक्रियाः ॥ २ ॥ अन्यान्यपि हितान्याह । पादयोर्हस्तयोर्मूले कण्ठकूपे च गण्डयोः । स्वेदे भृष्टकुलत्थानां चूर्णघर्षणमाचरेत् ॥ १ ॥

## ॥ अथ तरुणज्वरेऽहितान्याह ॥

स्नानं विरेकं सुरतं कषायं व्यायाममभ्यञ्जनमह्नि निद्राम् । दुग्धं घृतं वैदलमामिषं च तक्रं सुरां स्वादुगुरुद्रवं च ॥ अन्नं प्रवातं भ्रमणं प्रकोपं त्यजेत्प्रयत्नात्तरुणज्वरार्तः ॥ १ ॥

## ॥ अथ मध्यमज्वरे हितान्याह ॥

पुरातनाः षष्टिकशालयश्च वार्ताकसौभाञ्जनकारवेल्लम् । वेत्राग्रमाषाढफलं पटोलं कर्कोटकं मूलकपोतिका च ॥ १ ॥ मुद्गैर्मसूरैश्चणकैः कुलत्थैर्मकुष्ठकैर्वा विहितश्च यूषः पाठामृतावास्तुकतण्डुलीयजीवन्तिशाकानि च काकमाची ॥ २ ॥ द्राक्षाकपित्थानि च दाडिमानि वैकङ्कतान्येव पचेलिमानि । लघूनि सात्म्यानि च भेषजानि पथ्यानि मध्यज्वरिणाममूनि ॥ ३ ॥

## ॥ अथ पुराणज्वरे हितान्याह ॥

विरेचनं छर्दनमञ्जनं च नस्यं च धूमोऽप्यनुवासनं च । शिराव्यधः संशमनं प्र-

देहोऽभ्यङ्गोऽवगाहः शिशिरोपचारः ॥ १ ॥ अन्यान्यपि पुराणज्वरे हितानि । एणः कुलिङ्गो हरिणो मयूरो लावः शशस्तित्तिरकुक्कुटौ च । क्रौञ्चः कुरङ्गः पृषरश्चकोरः कपिञ्जलो वर्तककालपुच्छौ ॥ १ ॥ गवामजायाश्च पयो घृतं च हरीतकी पर्वतनिर्झराम्भः । एरण्डतैलं सितचन्दनं च द्रव्याणि सर्वाणि पुरेरितानि । ज्योत्स्ना प्रियालिङ्गनमप्ययं स्याद्वर्गः पुराणज्वरिणां सुखाय ॥ २ ॥

## ॥ अथागन्तुकज्वरे हितानि ॥

आगन्तुके ज्वरे नैव नरः कुर्वीत लङ्घनम् । अभिचाराभिशापोत्थे जपहोमादिभेषजम् ॥ १ ॥ उत्पातग्रहपीडोत्थे दानस्वस्त्ययनादिभिः । कामशोकभयोद्भूते सर्वा वातहरी क्रिया ॥२॥ आश्वासनं चेष्टलाभो हर्षदायीनि यानि च । हर्षेण च समायान्ति कामशोकभयज्वराः ॥ ३ ॥ क्रोधजे पित्तजित्कार्यं प्रियासद्वाक्यमेव च । ओषधी गन्धविषजौ विषपित्तप्रसादनैः॥४॥अध्वश्रान्तेषु चाभ्यङ्गं दिवा निद्रां च कारयेत् । मनःक्षोभसमुत्पन्ने मनसः सान्त्वनानि च ॥ ५ ॥ अभिघातसमुत्थाने पानाभ्यङ्गौ च सर्पिषः । रक्तावसेकमद्यैश्च तथा मांसरसौदनैः ॥ ६ ॥ क्षतजे व्रणजे चापि क्षतव्रणचिकित्सितम् । इत्यागन्तुज्वरे पूर्वं भिषग्भिः पथ्यमीरितम् ॥ ७ ॥

## ॥ अथ विषमज्वरे हितानि ॥

विष्णोर्नामसहस्रस्य पठनं श्रवणं श्रुतेः । देवानां ब्राह्मणानां च गुरूणामपि पूजनम् ॥१॥ ब्रह्मचर्यं तपो होमः प्रदानं नियमो जपः । साधूनां दर्शनं श्रेष्ठं रत्नौषधिविधारणम् ॥ मङ्गलाचरणं चेति वर्गः सर्वज्वराञ्जयेत् ॥ २ ॥ व्यायामं च व्यवायं च स्नानं चङ्क्रमणानि च । ज्वरमुक्तो न सेवेत यावन्नो बलवान्भवेत् ॥ ३ ॥ इति ज्वरचिकित्साकथनं समाप्तम् ॥

---

## ॥ अथातीसारनिदानम् ॥

क्षीरमत्स्यादि यद्भुक्तं तद्विरुद्धाशनं मतम् । भुक्तस्योपरि यद्भुक्तं तदध्यशनमुच्यते ॥१॥गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः । विरुद्धाध्यशनाजीर्णैर्विषमैश्चातिभोजनैः॥ २ ॥स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः । शोकदुष्टाम्बुमद्यातिपानैः सात्म्यविपर्ययैः ॥ ३ ॥ जलाभिरमणैर्वेगविघातैः क्रिमिदोषतः । नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥ ४ ॥ संशम्यापां धातुरग्निं[1] प्रवृद्धो वर्चोमिश्रो वायुनाधः प्रणुन्नः सरत्यतीवातिसारं[2] तमाहुर्व्याधिं घोरं षड्विधं तं वदन्ति ॥ ५ ॥ एकैकशः सर्वशश्चापि दोषैः शोकेनान्यः षष्ठ आमेन चोक्तः । केचिच्चाहुर्नैकरूपप्रकारं नेत्येवं[3] तं काशिराजस्त्ववोचत् ॥ ६ ॥ हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधाः । विट्सङ्गमाध्मानमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥ ७ ॥ अरुणं फेनिलं

---

१ (ख॰) अग्निम् । २(ख॰) सारत्यतीवातिसारम् (ग॰) सार्यंतातीवातिसारम् । ३(ख॰) मित्येवंतम् ।

रूक्षमल्पमल्पं मुहुर्मुहुः । शकृदामं सरुक्शब्दं मारुतेनातिसार्यते ॥ ८ ॥ पित्तात्पीतं नीलमालोहितं वा तृष्णामूर्च्छादाहपाकोपपन्नम् । शुक्लं सान्द्रं श्लेष्मणा श्लेष्मजुष्टं विस्रं शीतं हृष्टरोमा मनुष्यः ॥ ९ ॥ वराहस्नेहमांसाम्बुसदृशं सर्वरूपिणम् । कृच्छ्रसाध्यमतीसारं विद्याद्दोषत्रयोद्भवम् ॥१०॥ तैस्तैर्भावैः शोचतोऽल्पाशनस्य बाष्पोष्मा वै वह्निमाविश्य जन्तोः । कोष्ठं गत्वा क्षोभयेत्तस्य रक्तं तच्चाधस्तात्काकणन्तीप्रकाशम् ॥ ११ ॥ निर्गच्छेद्वै विड्विमिश्रं ह्यविड्वा निर्गन्धं वा गन्धवद्वातिसारः शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं रोगो वैद्यैः कष्ट एव प्रदिष्टः ॥ १२ ॥ अन्नाजीर्णात् प्रद्रुताः क्षोभयन्तः कोष्ठं दोषा धातुसंघान् मलांश्च । नानावर्णं प्रायशः सारयन्ति शूलोपेतं कष्टमेनं वदन्ति ॥ १३ ॥ संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति । पुरीषं भृशदुर्गन्धि पिच्छिलं चामसंज्ञितम् ॥ १४ ॥ आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः । अपक्वाहारधातुर्यः स आम इति संज्ञितः ॥ १५ ॥ उष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् । दुष्टमामाशयगतं रसमामं प्रचक्षते ॥१६॥ एतान्येव तु लिङ्गानि विपरीतानि यस्य वै । लाघवं च विशेषेण तस्य पक्वं विनिर्दिशेत् ॥ १७ ॥ नात्युपद्रवतायुक्तं नातिदुष्टेषु धातुषु । बाले वृद्धेऽप्यसाध्योऽयं रूपैरेतैरुपद्रवैः ॥१८॥ अपि यूनामसाध्यः स्यादतिदुष्टेषु धातुषु ॥१९॥ लशुनकुणपगन्धं पूतिगन्धं घनं वा पललजलसमानं पक्वजम्बूफलाभम् । घृतमधुपयआभं तैलशैवालनीलं सुघनदधिरुवर्णं वर्जयेच्चातिसारम् ॥ २० ॥ शोफं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम् । छर्दिं मूर्च्छां च हिक्कां च दृष्ट्वातीसारिणं त्यजेत् ॥ २१ ॥ पित्तकृन्ति यदात्यर्थं द्रव्याण्यश्नाति पैत्तिके । तदोपजायते तीव्रो रक्तातीसार उल्बणः ॥ दोषलिङ्गेन मतिमान्संसर्गं तत्र लक्षयेत् ॥ २२ ॥ वायुः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य । प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः ॥ २३ ॥ प्रवाहिका वातकृताः सशूलाः पित्तात्सदाहाः सकफाः कफाच्च । सशोणिताः शोणितसम्भवाश्च ताः स्नेहरूक्षप्रभवा मतास्तु ॥ तासामतीसारवदादिशेच्च लिङ्गं क्रमं चामविपक्वतां च ॥२४॥ यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति । दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥२५॥ ज्वरातिसारयोरुक्तं निदानं च पृथक् पृथक् । तस्माज्ज्वरातिसारस्य तेन नात्रोदितं पुनः ॥२६॥ स्तम्भो वेपथुराध्मानमुष्णगात्रविपर्ययः । गतायुषामतीसारे व्यञ्जनान्युपलक्षयेत् ॥ २७॥ तृट्कासशोषज्वरदाहमूर्च्छाहिक्कान्नविद्वेषणवान्तिशूलैः । युक्तोऽतिसारी स्मरतु प्रसह्य गोविन्द गोपाल गदाधरेति ॥२८॥ इत्यतीसारनिदानम् ॥

## ॥ अथैतच्चिकित्सितं व्याख्यास्यामः ॥

हितं लङ्घनमेवादौ पूर्ववत्तेन मानवः । षडङ्गं वाथवा यूषं पिप्पल्यादिं प्रयोजयेत् ॥ १ ॥ मुद्गयूषं रसं तक्रं धान्यजीरकसंयुतम् । षडङ्गं यूषमित्याहुः सैन्धवेन समन्वितम् ॥ २ ॥ अग्निसंदीपनं प्रोक्तं ग्रहणीदोषनाशनम् । अरोचके ज्वरे चैव

---

१ ( अ० ) प्रवाहतुल्यां बहुशो मलाक्ताम् ।

श्रेष्ठमेव प्रवाहिके ॥ ३ ॥ बिल्वं च धान्यं च सजीरकं च पाठां च शुण्ठीं ति-लसंयुतां च । पिष्ट्वा षडङ्गः स हितो नराणां यूषो ह्यतीसारहरः प्रदिष्टः ॥४॥ इति षडङ्गयूषः । तृष्णापनयनी लघ्वी दीपनी बस्तिशोधिनी । चिरे चैवातिसारे च य-वागूः सर्वदा हिता ॥ ५ ॥ इत्यतीसारपूर्वरूपचिकित्सा ॥

## ॥ अथामातिसारचिकित्सा ॥

आमपक्वक्रमं हित्वा नातिसारे क्रिया हिता । अतः सर्वातिसारेषु ज्ञेयं पक्वाम-लक्षणम् ॥ १ ॥ आमे विलङ्घनं शस्तमादौ पाचनमेव च । कार्यं वानशनस्यान्ते सद्रवं लघु भोजनम् ॥ २ ॥ लङ्घनमेकं मुक्त्वा नान्यदस्तीह भेषजं बलिनाम् । समुदीर्णदोषचयं शमयति तत्पाचयत्येव ॥ ३ ॥ ह्रीबेरशृङ्गबेराभ्यां मुस्तपर्पटकेन वा । मुस्तोदीच्यशृतं तोयं देयं चापि पिपासवे ॥ ४ ॥ न तु संग्रहणं दद्यात्पूर्व-मामातिसारिणाम् । दोषो ह्यादौ वर्धमानो जनयत्यामयान् बहून् ॥ ५ ॥ शोफ-पाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान् । दण्डकालसकाध्मानग्रहण्यर्शोगदांस्तथा ॥ ६ ॥ डिम्भकः स्थविरो वापि वातपित्तात्मकश्च यः । क्षीणधातुर्ज्वरार्तश्च बहुदोषोऽतिवि-स्रुतः ॥ ७ ॥ आमोऽपि स्तम्भनीयः स्यात्पाचनान्मरणं भवेत् । अतिसारे ज्वरे चैव रक्तपित्ते हगामये ॥ ८ ॥ आदौ न प्रतिकुर्वीत व्याधिवेगो हि दुस्तरः । स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्यते ॥ ९ ॥ अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् । दीप्ताग्निर्बहुदोषो यो विबन्धमतिसार्यते ॥१०॥ विडङ्गत्रिफलाकृष्णाक-षायैस्तं विरेचयेत् । क्षुत्क्षामस्य विरिक्ते तु पेयां युञ्ज्याद्विचक्षणः ॥११॥ भेषजैर्मारुतघ्नैश्च दीपनीयैश्च कल्पिताम् । योऽतिबद्धं प्रभूतं च पुरीषमतिसार्यते ॥ १२ ॥ तस्या-दौ वमनं योज्यं पश्चाल्लङ्घनमुच्यते । देवदारुवचामुस्तं नागरातिविषाभयम् ॥ सर्वा-जीर्णप्रशमनं पेयमेतैः शृतं पयः ॥१३॥ त्र्यूषणातिविषाहिङ्गुवचासौवर्चलाभयाः । पी-त्वोष्णेनाम्भसा जह्यादामातीसारमुद्धतम् ॥ १४ ॥ पाठाहिङ्ग्वजमोदोग्रापञ्चकोला-ब्दजं रजः । उष्णाम्बुपीतं सरुजं जयत्यामं ससैन्धवम् ॥ १५ ॥ चित्रकं पिप्पली-मूलं वचा कटुकरोहिणी । पाठावत्सकबीजानि हरीतक्यो महौषधम् ॥ १६ ॥ ए-तदामसमुत्थानमतिसारं सवेदनम् । कफात्मकं सपित्तं च सवातं हन्ति वै ध्रुवम् ॥ १७ ॥ विश्वाभयाघनवचातिविषासुराह्वक्काथोऽथ विश्वजलदातिविषाशृतो वा । आमातिसारशमनः कथितः कषायः शुण्ठीघनाप्रतिविषामृतवल्लिजो वा ॥ १८ ॥ धान्यवालकबिल्वाब्दनागरैः साधितं जलम् । आमशूलहरं ग्राहि दीपनं पाचनं परम् ॥ १९ ॥ पित्ते धान्यचतुष्कं तु शुण्ठीत्यागाद्वदन्ति हि । चूर्णं किञ्चिद्घृताभ्यक्तं शुण्ठ्या एरण्डजैर्दलैः । वेष्टितं पुटपाकेन विपचेन्मन्दवह्निना ॥ २० ॥ तत उद्धृत्य तच्चूर्णं ग्राह्यं प्रातः सितासमम् । तेन याति शमं पीडा आमातीसारसम्भवा ॥ २१ ॥ कुक्षिशूलामशूलघ्नं विबन्धाध्मातिसारजित् । सेवितं सगुडं बिल्वं बिल्वतुल्यपयो-धरे ॥ २२ ॥ शुण्ठी जीरं सैन्धवं हिङ्गु जातीबीजं तद्वत्सांहकारं प्रशस्तम् । ज्ञेयं

सद्भिः सारवरूढं सबिल्वं मार्कण्डचार्यैर्योजितं सूक्ष्मचूर्णम् ॥ २३ ॥ दध्ना च व- टिकां कुर्यात्तेनैव सह लेहयेत् । आमातीसारमान्द्यं च अरुचिं हन्ति च क्षणात् ॥ २४ ॥ सत्वाशुण्ठ्योषणं भृङ्गीसमांशं सूक्ष्मं चूर्णयेत् । यथासात्म्यं सेवनीयं शी- ततोयानुपानतः ॥ २५ ॥ सशूलमामदोषं च नाशमायाति सत्वरम् । दध्योदनं प- थ्यमत्र उचितं रोगशान्तये ॥ २६ ॥ जयाखण्डं सारवरूढं जीरकं दधिमिश्रितम् । आमातिसाररक्तं च हन्ति वेगेन कौतुकम् ॥ २७ ॥ शुण्ठीसातिविषाहिङ्गुमुस्ताकुट- जचित्रकैः । चूर्णमुष्णाम्बुना पीतमामातीसारनाशनम् ॥ २८ ॥ हरीतकी प्रतिवि- षा सिन्धुसौवर्चलं वचा । हिङ्गु चेति कृतं चूर्णं पिबेदुष्णेन वारिणा ॥ २९॥ आमा- तीसारशमनं ग्राहि चाग्निप्रदीपनम् । पयस्युत्क्वाथ्य मुस्तानां विंशतिं त्रिगुणाम्भसि ॥ ३० ॥ क्षीरावशेषं तत्पीतं हन्त्यामं शूलमेव च । धान्यनागरजः क्वाथः पाचनो दीपनस्तथा ॥ ३१ ॥ एरण्डमूलयुक्तश्च जयेदामानिलव्यथाम् । यवानी नागरोशीर- धनिकातिविषाघनैः ॥ ३२ ॥ बालबिल्वद्विपर्णीभिर्दीपनं पाचनं भवेत् । कलिङ्गाति- विषाहिङ्गुपथ्यासौवर्चलं वचा ॥ ३३ ॥ शूलस्तम्भविबन्धघ्नं देयं दीपनपाचनम् । निरामरूपं शूलार्तं लङ्घनाद्यैश्च कर्षितम् ॥३४॥ क्षारनागरचाङ्गेरीकोलदध्याम्लसाधि- तम् । सर्पिरच्छं पिबेद्वापि शूलातीसारशान्तये ॥ ३५ ॥ इत्यामातिसारचिकित्सा ॥

## ॥ अथ पक्वातिसारचिकित्सा ॥

सलोध्रं धातकीबिल्वं मुस्ताम्रास्थिकलिङ्गकम् । पिबेन्माहिषतक्रेण पक्वा- तीसारनाशनम् ॥ १ ॥ पद्मं समङ्गामधुकं बिल्वजं तु शलाटु च । पिबे- त्तण्डुलतोयेन सक्षौद्रमगदं परम् ॥ २ ॥ कुटजातिविषाचूर्णं मधुना सह लेहितम् चिरोत्थितमतीसारं पक्वं पित्तास्रजं जयेत् ॥ ३ ॥ मोचरसमुस्तनागरपाठारलुधात- कीकुसुमैः । चूर्णं मथितसमेतं रुणद्धि गङ्गाप्रवाहमपि ॥ ४ ॥ इति लघुगङ्गाधरचू- र्णम् । मुस्तमोचरसलोध्रधातकीपुष्पबिल्वगिरिकौटजैः फलैः । चूर्णितैः सगुडतक्रसे- वितैर्निम्नगाजलरयोऽपि रुध्यते ॥ ५ ॥ इति वृद्धगङ्गाधरचूर्णम् । अङ्कोलमूलकल्कः सक्षौद्रस्तण्डुलाम्बुना पीतः । सेतुरिव वारिवेगं झटिति निरुन्ध्यादतीसारम् ॥ १ ॥ अजमोदामोचरसं सशृङ्गवेरं सधातकीकुसुमम् । करमथितसम्प्रयुक्तं गङ्गामपि वाहि- नीं रुन्ध्यात् ॥ २ ॥ विश्वजीरकसिन्धूत्थं हिङ्गुजातीफलानि च । साम्रास्थिशङ्खखण्डं च दध्नाम्लेन प्रपेषयेत् ॥ ३ ॥ ईषदङ्गारकैर्भृष्टा वटिका कर्षसम्मिता । पक्वापक्वमती- सारं सशूलं ग्रहणीगदम् ॥ चिरोत्थमचिरोत्थं च नाशयेन्नात्र संशयः ॥ ४ ॥ वटप्र- रोहं सम्पिष्टं श्लक्ष्णं तण्डुलवारिणा । तं पिबेत्तक्रसंयुक्तमतीसारप्रशान्तये ॥ ५ ॥ इति पक्वातिसारचिकित्सा ॥

---

१ ( ग० ) बिल्वं जतु ।

## ॥ अथ वातातिसारचिकित्सा ॥

कपित्थबिल्वचाङ्गेरीतक्रदाडिमसाधिता। ग्राहिणी पाचनी पेया वाते वा पञ्चमूलिका ॥ १ ॥ पञ्चमूलबलाविश्वधान्यकोत्पलबिल्वजा। वातातिसारिणे देया सक्तुनान्यतमेन वा ॥२॥ वचा प्रतिविषा मुस्ता बीजानि कुटजस्य च। श्रेष्ठो वातातिसारे च योगोऽयं वैद्यपूजितः ॥ ३ ॥ पूतिकं मागधी शुण्ठी बला धान्यं हरीतकी। पक्काम्बुना पिबेत्सामवातातीसारशान्तये ॥ ४ ॥ इति वातातिसारचिकित्सा ॥

## ॥ अथ पित्तातिसारचिकित्सा ॥

आमान्वयमतीसारं पैत्तिकं लङ्घनैर्जयेत्। लङ्घितस्य यथा सात्म्यं यवागूमण्डतर्पणैः ॥ १ ॥ शृतचन्दनमुस्ताभ्यां पटोलोदीच्यनागरैः। पेयामाम्लामतक्रां वा पाचनीं ग्राहिणीं पिबेत् ॥ २ ॥ धान्योदीच्यशृतं तोयं तृष्णादाहातिसारवान्। ताभ्यामेव सपाठाभ्यां सिद्धमाहारमाचरेत् ॥ ३ ॥ बिल्वशक्रयवाम्भोदवालकातिविषाकृतः। कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम् ॥४॥ रसाञ्जनं प्रतिविषं कुटजस्य फलत्वचौ। धातकी शृङ्गबेरं च पाययेत्तण्डुलाम्बुना ॥ ५ ॥ माक्षिकेण युतं हन्यात्पित्तातीसारमुल्बणम्। मन्दं संदीपयेदग्निं शूलं चाशु निवर्तयेत् ॥ ६ ॥ मधुकं कट्फलं लोध्रं दाडिमस्य फलत्वचम्। पित्तातिसारे मध्वक्तं पाययेत्तण्डुलाम्बुना ॥ ७ ॥ समङ्गा धातकीपुष्पं बिल्वं सौवर्चलं बिडम्। सक्षौद्रं दाडिमं चैव पीतं तण्डुलवारिणा ॥ ८ ॥ चूर्णं पित्तातिसारघ्नं शूलं चाशु च निर्हरेत्। सक्षौद्रातिविषां पिष्ट्वा वत्सकस्य फलं त्वचम् ॥९॥ तण्डुलोदकसंयुक्तं पेयं पित्तातिसारनुत्। कट्फलातिविषाम्भोदवत्सकं नागरान्वितम् ॥ १० ॥ शृतं पित्तातिसारघ्नं पातव्यं मधुसंयुतम्। पलं वत्सकसंसिद्धं चतुर्गुणजले घृतम्। पित्तातिसारे भिषजा देयं दीपनपाचनम् ॥ ११ ॥ इति धान्याकघृतम्। इति पित्तातिसारचिकित्सा ॥

## ॥ अथ रक्तातिसारचिकित्सा ॥

जम्ब्वाम्रामलकीनां च पल्लवैश्च रसो जयेत् ॥ मध्वाज्यक्षीरसंयुक्तो रक्तातीसारनाशनः ॥ १ ॥ गुडेन खादयेद्बिल्वं रक्तातीसारनाशनम्। आमशूलविबन्धघ्नं कुक्षिरोगविनाशनम् ॥ २ ॥ कुटजातिविषामुस्तं वालकं लोध्रचन्दनम्। धातकीदाडिमं पाठा क्वाथं क्षौद्रयुतं पिबेत् ॥ ३ ॥ दाहे रक्ते सशूले च आमरोगे च दुस्तरे। कुटजाष्टमिदं ख्यातं सर्वातीसारनाशनम् ॥ ४ ॥ इति कुटजाष्टकक्वाथः ॥ सवत्सकः सातिविषः सबिल्वः सोदीच्यमुस्तश्च कृतः कषायः। सामे सशूले च सशोणिते च चिरप्रवृत्तेऽपि हितोऽतिसारे ॥ १ ॥ लघुचेतकिजीरके समे मृदुभृष्टे च सुचूर्णितेऽर्पिते। सह तण्डुलवारिणा[1] मतेऽतिसृतिघ्न इति सिद्धयोग एषः ॥२॥ अयि कन्दुकनिन्दकस्तनि प्रमदारूपमदापहारिणि। रुधिरातिसृतौ कषायकः समधु-

1 (ख०) कृतेऽतिसृतिर्नश्यति।

दाडिमवत्सकत्वचः ॥३॥ चन्दनं विमलतण्डुलाम्बुना संयुतं मधुयुतं सितायुतम् । तृड्विखण्डनमसृग्विखण्डनं खण्डनं प्रचुरदाहमेहयोः ॥ ४ ॥ ह्रीबेरातिविषामुस्तं बिल्वधान्यकवत्सकम् । समङ्गाधातकीलोध्रं विश्वं दीपनपाचनम् ॥ ५ ॥ हन्त्यरोचकपिच्छामं विबन्धं चातिवेदनम् । सशोणितमतीसारं सज्वरं वाथ विज्वरम् ॥ ६ ॥ बिल्वं छागपयः सिद्धं सितामोचरसान्वितम् । कलिङ्गचूर्णसंयुक्तं रक्तातीसारनाशनम् ॥ ७ ॥ रसाञ्जनं सातिविषं कुटजस्य फलत्वचम् । धातकी शृङ्गबेरं च पिबेत्तण्डुलवारिणा ॥ ८ ॥ क्षौद्रेण युक्तं तद्देयं रक्तातीसारमुल्बणम् । जलमष्टगुणं दत्वा पलं कण्डिततण्डुलान् ॥ धावयित्वा ततो देयं तण्डुलोदककर्मणि ॥ ९ ॥ सहरीतकीप्रतिविषारुचकं सवचं सहिङ्गु सकलिङ्गयुतम् । इति तत्कलिङ्गयुतषट्कमिदं रुधिरातिसारगुदशूलहरम् ॥ १० ॥ इति चिकित्साकलिकातः ॥ अथ पिच्छबस्तिः ॥ अल्पाल्पं बहुशो रक्तं सशूलमुपवेश्यते । यदा वायुर्विबद्धश्च पिच्छबस्तिस्तदा हितः ॥ १ ॥ शाल्मलेरार्द्रपुष्पाणि पुटपाकीकृतानि च । संकुट्योलूखले सम्यग् गृह्णीयात्पयसि शृते ॥ २ ॥ गृहीत्वा च पलं तस्य त्रिफलं घृततैलयोः । युक्तं मधुककल्केन माक्षिकत्रिपलेन च ॥ ३ ॥ तैलाक्तवपुषो दद्याद्बस्तौ प्रत्यागते रसे । भोजयेत्पयसा वापि पित्तातीसारपीडितम् ॥ ४ ॥ उक्तं च वाग्भटे । पल्लवाञ्जर्जरीकृत्य शिंशुपाकविदारयोः । पचेद्यवांश्च स क्वाथो घृतक्षीरसमन्वितः ॥ १ ॥ पिच्छबस्तिः प्रयोक्तव्यः क्षतक्षीणबलावहः । पिच्छास्रुतौ गुदभ्रंशे प्रवाहणरुजासु च ॥ २ ॥ इति पिच्छबस्तिः । अथ गुदभ्रंशः । गुदो बहुभिरुत्थानैर्यस्य पित्तेन पच्यते । सिञ्चयेत्तं सुशीतेन पटोलमधुकाम्बुना ॥ १ ॥ रक्तातिसारिणामाजं पयः सक्षौद्रशर्करम् । गुदप्रक्षालने सेके प्रशस्तं पानभोजने ॥ २ ॥ स्वेदोऽथ मूषिकामांसैस्तद्रसाभ्रक्षणं तथा । गुदनिःसरणे शस्तं चाङ्गेरीघृतमुत्तमम् ॥ ३ ॥ शम्बूकमांसं सुस्विन्नं सतैललवणान्वितम् । ईषद्घृतेन चाभ्यक्तं स्वेदयेत्तेन यत्नतः ॥ गुदभ्रंशमशेषेण नाशयेत्क्षिप्रमेव च ॥ ४ ॥ इति रक्तातिसारचिकित्सा ॥

## ॥ अथ श्लेष्मातिसारचिकित्सा ॥

श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनम् । योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गणः ॥ १ ॥ पूतिकव्योषबिल्वाग्निपाठादाडिमहिङ्गुभिः । भोजयेत्संस्कृतैर्यूषैः श्लेष्मातीसारपीडितम् ॥ २ ॥ गोकण्टकगुहाव्याघ्रीकषायं सुशृतं पिबेत् । आमश्लेष्मातिसारघ्नं दीपनं पाचनं परम् ॥ ३ ॥ पथ्या सौवर्चलं हिङ्गु सैन्धवातिविषा वचा । आमातिसारं सकफं पीतमुष्णाम्बुना जयेत् ॥ ४ ॥ इति श्लेष्मातिसारचिकित्सा ॥

## ॥ अथ सन्निपातातिसारचिकित्सा ॥

समङ्गातिविषा मुस्ता विश्वह्रीबेरधातकी । कुटजत्वग्दलैर्बिल्वैः क्वाथः सर्वाति-

१ ( ख० ) यव ।

सारनुत् ॥ १ ॥ अभया नागरं मुस्तं गुडेन सह योजितम् । चतुःसमेयं गुटिका त्रिदोषघ्नी प्रकीर्तिता ॥ २ ॥ आमातिसारमानाहं सविबन्धं विषूचिकाम् । कृमीनरोचकं हन्याद्दीपयत्याशु चानलम् ॥ ३ ॥ इत्यभयादिगुटिका ॥ अवेदनं सुसंपक्कं दीप्ताग्नेः सुचिरोत्थितम् । नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ १ ॥ स्निग्धं घनं कुटजवल्कमजन्तुजग्धमादाय तत्क्षणमतीव च पेषयित्वा । जम्बूपलाशपुटतण्डुलतोयसिक्तं बद्धं कुशेन च बहिर्घनपङ्कलिप्तम् ॥ २ ॥ सुस्विन्नपिष्टमुपपीड्य रसं गृहीत्वा क्षौद्रेण युक्तमतिसारवते प्रदद्यात् । कृष्णात्रिपुत्रमतपूजित एष योगः सर्वातिसारहरणे स्वयमेव राजा ॥ ३ ॥ इति सन्निपातातिसारचिकित्सा ॥

## ॥ अथ श्लेष्मपित्तातिसारचिकित्सा ॥

समङ्गाधातकीबिल्वमाम्रास्थ्यम्भोजकेसरम् । बिल्वं मोचरसं लोध्रं कुटजस्य फलत्वचम् ॥ १ ॥ पिबेत्तण्डुलतोयेन कषायं कल्कमेव च । श्लेष्मपित्तातिसारघ्नं रक्तं वाथ नियच्छति ॥ २ ॥ इति श्लेष्मपित्तातिसारचिकित्सा ॥

## ॥ अथ वातश्लेष्मातिसारचिकित्सा ॥

रसैः स्वादुकटुप्रायैरुभौ वातकफौ नृणाम् । कुरुतस्तावतीसारं क्रुद्धौ वह्निं निहत्य च ॥१॥ द्रवं सफेनं पुरिषं तन्वामं मदगन्धिकम् । सशब्दवेदनावन्तं तत्र संपरिपच्यते ॥ २ ॥ नित्यं गुडगुडायन्तं तन्द्रामूर्छाभ्रमक्लमैः । प्रसक्तं सक्थिकट्यूरुजानुपृष्ठास्थिशूलिनः ॥ ३ ॥ धान्यपञ्चकसंसिद्धो धान्यविश्वकृतोऽथवा । आहारो भिषजा योज्यो वातश्लेष्मातिसारिणे ॥ ४ ॥ वातातिसारे यच्चोक्तं पाचनं ग्राहि भेषजम् । तदत्रापि प्रयुञ्जीत संचिन्त्य कफमारुतौ ॥ ५ ॥ इति वातश्लेष्मातिसारचिकित्सा ॥

## ॥ अथ पित्तश्लेष्मातिसारचिकित्सा ॥

कट्फलं मधुकं लोध्रं त्वग्दाडिमफलस्य च । वातपित्तातिसारघ्नं पिबेत्तण्डुलवारिणा ॥ १ ॥ मुस्तं सातिविषा दार्वी वचा शुण्ठी च तत्समम् । कषायं क्षौद्रसंयुक्तं श्लेष्मवातातिसारिणे ॥ २ ॥ पीतदारु वचा लोध्रं कलिङ्गफलनागरम् । दाडिमाम्बुयुतं दद्यात्पित्तश्लेष्मातिसारिणे ॥ ३ ॥ इति पित्तश्लेष्मातिसारचिकित्सा ॥

## ॥ अथ छर्द्यतीसारचिकित्सा ॥

बिल्वचूतास्थिनिर्यूहः पीतः सक्षौद्रशर्करः । निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ १ ॥ पटोलयवधान्याकक्काथः पीतः सुशीतलः । शर्करामधुसंयुक्तश्छर्द्यतीसारनाशनः ॥२॥ प्रियङ्ग्वञ्जनमुस्ताख्यं पाययेत्तु यथाबलम् । तृष्णातीसारच्छर्दिघ्नं सक्षौद्रं तण्डुलाम्बुना ॥ ३ ॥ जम्ब्वाम्रपल्लवोशीरवटशृङ्गावरोहकैः । रसः क्काथोऽथवा चूर्णं क्षौद्रेण सह योजितम् ॥ ४ ॥ छर्दिज्वरमतीसारं मूर्च्छां तृष्णां च दुर्जयाम् । नियच्छत्यचिराद्रक्तस्रुतिं चानेकहेतुभिः ॥५॥ इति छर्द्यतीसारचिकित्सा ॥

## ॥ अथ शोफातिसारचिकित्सा ॥

सदेवदारुः सविषः सपाठः सजन्तुशत्रुः सघनः सतीक्ष्णः । सवत्सकः क्वाथ उदाहृतोऽसौ शोफातिसाराम्बुधिकुम्भजन्मा ॥ १ ॥ किराताब्दामृताविश्वचन्दनोदीच्यवत्सकैः । शोफातिसारशमनं विशेषाज्ज्वरनाशनम् ॥ २ ॥ इति शोफातिसारचिकित्सा ॥

## ॥ अथ भयशोकातिसारचिकित्सा ॥

भयशोकावतीसारौ भयशोकसमुद्भवौ । तयोर्वातहरी कार्या हर्षणाश्वासनक्रिया ॥ १ ॥ पृश्निपर्णीबलाबिल्वधान्यकोत्पलनागरैः । विडङ्गातिविषामुस्ता दारुपाठा कलिङ्गकम् । मरीचेन समायुक्तं शोकातीसारनाशनम् ॥ २ ॥ इति भयशोकजातिसारचिकित्सा ॥

## ॥ अथ प्रवाहिका ॥

कल्कः स्याद्बालबिल्वानां तिलकल्कश्च तत्समः । दध्नः सारोऽम्लस्नेहाढ्यः षट् च हन्यात् प्रवाहिकाः ॥१॥ मुद्गयूषरसं तक्रं धान्यजीरकसंयुतम् । षडूषणमिति प्रोक्तं सैन्धवेन समन्वितम् ॥ २ ॥ अग्निसंदीपनं प्रोक्तं ग्रहणीदोषनाशनम् । अरोचके ज्वरे चैव श्रेष्ठमेतत्प्रवाहिके ॥३॥ बालबिल्वं गुडं तैलं पिप्पली विश्वभेषजम् । लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके ॥ ४ ॥ पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः । त्र्यहान्निर्वाहिकां हन्याच्चिरकालानुबन्धिनीम् ॥ ५ ॥ तैलं सर्पिर्दधि क्षौद्रं विषा विश्वं सफाणितम् । सर्वमालोड्य पातव्यं सद्यो निर्वाहिकां हरेत् ॥ ६ ॥ त्र्यूषणं त्रिफला चैव चित्रको गजपिप्पली । बिल्वकर्कटिकाहिंस्राविडङ्गं सनिदिग्धिकम् ॥७॥ घृतप्रस्थं पचेदेभिर्गवां मूत्रे चतुर्गुणे । तत्प्रयोगं पिबेत्काले हन्यात्तेन प्रवाहिकाम् ॥ ८ ॥ इति प्रवाहिका ॥

## ॥ अथ पुरीषक्षयः ॥

दीप्ताग्न्यतिपुरीषो यः सार्यते फेनिलं शकृत् । स पिबेत् फाणितं शुण्ठीदधितैलपयोन्वितम् ॥ १ ॥ दध्ना ससारेण समाक्षिकेण भुञ्जीत निःसारकपीडितस्तु । सुतप्तशुण्ठीक्वथितेन वापि क्षीरेण शीतेन मधुप्लुतेन ॥ २ ॥ बलाविश्वशृतं क्षीरं गुडतैलानुयोजितम् । दीप्ताग्निं पाययेत्प्रातः सुखदं वर्चसः क्षये ॥ ३ ॥ शशमांसं रुचिकरं सखण्डं सघृतं दधि । विपाच्य खादेत्सेवेच्च गृद्धन्नं शकृतः क्षये ॥ ४ ॥ इति पुरीषक्षयः । विबद्धवातो विट्शूलपरीतः सप्रवाहिकः । सरक्तपिच्छश्च[1] पयः पिबेत्तृष्णासमन्वितः ॥ १ ॥ यथामृतं तथा क्षीरमतिसारेषु पूजितम् । सरक्तोत्थेषु तत्पेयमपांभागेषु संस्कृतम् ॥ २ ॥

---

१ ( ख० ) सरक्तपित्तश्च ।

## ॥ अथ ज्वरातिसारः ॥

ज्वरातिसारयोरुक्तं भेषजं यत्पृथक्पृथक् । न तन्मिलितयोः कार्यमन्योन्यं वर्धयेद्यतः ॥ १ ॥ अतस्तौ प्रतिकुर्वीत विशेषोक्तचिकित्सितैः ॥२॥ लङ्घनमुभयोरुक्तं मिलिते कार्यं विशेषतस्तदनु । उत्पलषष्टिकसिद्धं लाजकमण्डादिकं पेयम् ॥ ३ ॥ पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः । ज्वरातिसारी पेयां वा पिबेत्साम्लां शृतां नरः ॥ ४ ॥ धातकीक्वाथसंसिद्धा विश्वभेषजकल्किता । दाडिमाम्लयुता पेया ज्वरातीसारशूलिनाम् ॥ ५ ॥ पाठेन्द्रयवभूनिम्बमुस्तपर्पटकाः शृताः । जयन्त्याममतीसारं ज्वरं च समहौषधाः ॥ ६ ॥ नागरातिविषामुस्तभूनिम्बामृतवत्सकैः । सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः ॥ ७ ॥ धान्यकातिविषामुस्तागुडूचीबिल्वनागरैः । दत्तः कषायः शमयेदतिसारं चिरोत्थितम् ॥ ८ ॥ अरोचकामशूलास्रज्वरघ्नः पाचनः स्मृतः । कलिङ्गातिविषाशुण्ठीकिराताम्बुयवासकम् ॥ ९ ॥ ज्वरातीसारसंतापं नाशयेदविकल्पतः । गुडूच्यतिविषाधान्यशुण्ठीबिल्वाब्दवालकैः ॥ १० ॥ पाठाकुटजभूनिम्बचन्दनोशीरपर्पटैः । पिबेत्कषायं सक्षौद्रं ज्वरातीसारशान्तये ॥ ११ ॥ हृल्लासारोचकच्छर्दिपिपासादाहनाशनम् । वत्सकस्य फलं दारु रोहिणी गजपिप्पली ॥ १२ ॥ श्वदंष्ट्रा पिप्पली धान्यबिल्वपाठा यवानिका । द्वावप्युक्ताविमौ योगौ श्लोकार्धेनावभाषितौ ॥ १३ ॥ ज्वरातीसारशमनौ विशेषाद्दाहनाशनौ । व्योषं वत्सकबीजानि निम्बभूनिम्बमार्कवम् ॥ १४ ॥ चित्रकं रोहिणी पाठा दार्वी ह्यतिविषासमम् । श्लक्ष्णचूर्णीकृतानेतांस्तत्तुल्यां वत्सकत्वचम् ॥ १५ ॥ सर्वमेकत्र संयोज्य पिबेत्तण्डुलवारिणा । सक्षौद्रं वा लिहेदेवं पाचनं ग्राहि भेषजम् ॥ १६ ॥ तृष्णारुचिप्रशमनं ज्वरातीसारनाशनम् । कामलां ग्रहणीरोगं गुल्मं प्लीहानमेव च ॥१७॥ प्रमेहं पाण्डुरोगं च श्वयथुं च विनाशयेत् । उशीरं वालकं मुस्तं धान्यकं बिल्वमेव च ॥१८॥ समङ्गा धातकी लोध्रं विश्वं दीपनपाचनम् । हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् ॥ १९ ॥ सशोणितमतीसारं सज्वरं वाथ विज्वरम् । बिल्ववालकभूनिम्बगुडूचीधान्यनागरैः ॥ कुटजाब्दामृताक्वाथो ज्वरातीसारशूलनुत् ॥ २० ॥ पञ्चाङ्घ्रिवृक्ष्यब्दबलेन्द्रबीजत्वक्सेव्यतिक्तामृतविश्वबिल्वैः । ज्वरातिसारान्सवमीन् सकासान्सश्वासशूलाञ्शमयेत्कषायः ॥ २१ ॥ अरलुतिविषा मुस्ता शुण्ठी बिल्वं सदाडिमम् । सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः ॥ २२ ॥ इति ज्वरातिसारचिकित्सा ॥

## ॥ अथ सर्वातीसारे ॥

यथा शृतं भवेद्वारि तथाऽतीसारनाशनम् । अतिसारं निहन्त्येव शतभागशृतं जलम् ॥ १ ॥

## ॥ अथ दाडिमावलेहः ॥

दाडिमादिफलप्रस्थं चतुष्प्रस्थजले पचेत् । चतुर्भागकषायेऽस्मिञ्शर्कराप्रस्थ-

मेव च ॥ १ ॥ नागरं पिप्पलीमूलं कणाधान्यकदीप्यकम् । जातीफलं जातिपत्रं मरिचं जीरकं तुगा ॥ २ ॥ विजया निम्बपत्रं च समङ्गा कूटशाल्मली । अरल्वतिविषा पाठा लवङ्गं च पृथक्पलम् ॥ ३ ॥ घृतस्य मधुनः प्रस्थं सर्वलेहं विपाचयेत् । दाडिम्बलेहकं नाम ज्वरातीसारनाशनम् ॥ ४ ॥ आमरक्तं चामशूलं मान्द्यशोफक्षयापहम् । धातुलीनं धातुगतमश्विभ्यां निर्मितं पुरा ॥ ५ ॥ इति दाडिमावलेहः ॥

## ॥ अथ कुटजाद्यवलेहः ॥

वत्सकस्यामृतायाश्च द्वे पले प्रस्थमम्भसः । श्रपयित्वा रसे तस्मिन्पादशेषावतारिते ॥ १ ॥ अष्टौ पलानि शक्रस्य यवाश्चूर्णीकृताश्च ते । भुक्त्वा पाकं विदित्वा तु यथावह्नि च खादयेत् ॥ २ ॥ जयेत्सर्वातिसारांश्च सर्वांश्च ग्रहणीगदान् । नाशयेद्दीपयेच्चाग्निं कृष्णात्रेयस्य शासनात् ॥ ३ ॥ अन्यच्च । शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत् । क्वाथे पादावशेषेऽस्मिँ ल्लेहं पूते पुनः पचेत् ॥ १ ॥ सौवर्चलयवक्षारबिडसैन्धवपिप्पली—धातकीन्द्रयवाजाजीचूर्णं दत्वा पलद्वयम् ॥२॥ लिह्याद्बदरमात्रं तु तच्छीतं मधुसंयुतम् ॥ ३ ॥ पक्वापक्वमतीसारं नानावर्णं सवेदनम् । दुर्वारं ग्रहणीरोगं जयेच्चैतत्प्रवाहिकाम् ॥४॥ अन्यच्च ॥ कुटजस्य पलं ग्राह्यमष्टभागजले शृतम् । तथैव विपचेद्भूयो दाडिमोदकसंयुतम् ॥१॥ कुटजक्वाथतुल्योऽत्र दाडिमस्य रसो मतः । यावच्च रसिकाभासं शृतं तमुपकल्पयेत् ॥२॥ तस्यार्धकर्षं तक्रेण पिबेद्रक्तातिसारवान् । अवश्यं मरणीयोऽपि न मृत्योर्याति गोचरम् ॥ ३ ॥ इति कुटजावलेहः ॥ अथ कुटजाष्टकम् ॥ पक्त्वार्द्रां कुटजात्तुलां जलघटेऽष्टांशं पुनः पालिकैः पाठाशाल्मलिधातकीघनविषालज्जामबिल्वैः सह ॥ तल्लिह्यात्कुटजाष्टकं जलगवां क्षीरेण मण्डानुपोऽतीसारं ग्रहणीमसृग्दरमसृक्पित्तासृगर्शो जयेत् ॥१॥ इति कुटजाष्टकम् ॥

## ॥ अथ कपित्थाष्टकम् ॥

यवानीपिप्पलीमूलचातुर्जातकनागरैः । मरीचाग्निजलाजाजीधान्यसौवर्चलैः समैः ॥ १ ॥ वृक्षाम्लधातकीकृष्णाबिल्वदाडिमदीप्यकैः । त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणीकृतैः ॥ २ ॥ चूर्णोऽतीसारग्रहणीक्षयगुल्मगलामयान् । कासश्वासारुचिं हिक्कां कपित्थाष्टमिदं जयेत् ॥३॥ इति कपित्थाष्टकम् ॥

## ॥ अथ दाडिमाष्टकम् ॥

कर्षोन्मिता तुगाक्षीरी चातुर्जातं तु कार्षिकम् । यवानीधान्यकाजाजीग्रन्थिव्योषं पलांशकम् ॥१॥ पलानि दाडिमस्याष्टौ सितायाश्चैकतः कृतम् । गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाडिमाष्टकः ॥ २ ॥ इति दाडिमाष्टकम् ॥

---

१ (च०) युक्त्या । २ (ख० ग०) कुटजातुलाम् । ३ (च०) लज्जालु ।

## ॥ अथ दाडिमपुटपाकौ ॥

पुटपाकेन विपचेत् सुपक्वं दाडिमीफलम्। तद्रसो मधुसंयुक्तः सर्वातीसारनाशनः॥१॥ जातीफलं सर्पफेनं टङ्कं गन्धकजीरके। एतानि समभागानि बालदाडिमबीजकैः॥२॥ पेषयेत्तेन कल्केन पूरयेद्दाडिमीफलम्। अङ्गारे तच्च गोधूमचूर्णेनालेपयेद्दृढम्॥ अतीसारे स्तम्भनं स्यात्परं दीपनपाचनम्॥३॥ इति दाडिमपुटपाकौ। भल्लातानां द्विखण्डानां द्वे पले भर्जिते क्षिपेत्। शुण्ठ्याः पलं तु चेतक्याः पलार्धं सुमनाफलम्॥१॥ कर्षं मेथीवेल्लजीरसर्षपान् कोलमात्रकः। ततो यवान्यर्धपलं पिप्पलीरामठोषणम्॥ २॥ बिडसैन्धवजीरं च किर्माणीसंज्ञकं तथा। कर्षप्रमाणं विज्ञेयं वैद्यविद्याविशारदैः॥ ३॥ सर्वमेकत्र संचूर्ण्य यथासात्म्यं तु भक्षयेत्। दध्ना सह तथा खादेत् सर्वातीसारनाशनम्॥ ४॥ इति भल्लातादिचूर्णम्।

## ॥ अथ रसाः ॥

कम्बूभस्म चतुष्कर्षं कर्षैकमहिफेनकम्। जातीफलं टङ्कणं च पृथक्कर्षं विनिक्षिपेत्॥१॥ अतिसूक्ष्मं विमर्द्याथ नवनीतेन गुञ्जकम्। रसः शङ्खोदरो नाम सर्वातीसारनाशनः॥ २॥ इति शङ्खोदरः। सूतं गन्धं त्रिकटुकं दीप्यकं जीरकद्वयम्। सौवर्चलं सैन्धवं च रामठं बिडमेव च॥१॥ शक्राह्वयस्य चूर्णं तु चूर्णतुल्यं प्रदापयेत्। संग्रहं शूलमानाहं हन्यान्नानातिसारजित्॥ २॥ इति लघुलायिचूर्णम्। रसगन्धौ विषं सूतं पादभागं समं च तत्। गगनं भावयेदेभी रसैः सर्वं विचूर्णयेत्॥ १॥ सर्पाक्षीधातकीस्वर्णविषाविश्वजयाम्बुदम्। यवानीबिल्वधान्याकजीरपाठाकणाशिवाः॥२॥ कुटजत्वक् कपित्थं च दाडिमं सकलिङ्गकम्। इत्येषां गोलकं कृत्वा वालुकायन्त्रगं पचेत्॥ ३॥ मृतसंजीवनो नाम रसः स्यादस्य वल्लकः। षट्प्रकारमतीसारं हन्ति वै चानुशीलितः॥ ४॥ विश्वाब्दधातकीदारुयवान्यम्बुकणा वचा। कुटजो धान्यकं बिल्वं पाठेन्द्रयवशाल्मली। विश्वाभयासमं चैषां चूर्णेन मधुना सह॥ ५॥ इति मृतसंजीवनो रसः॥ अथ चन्द्रप्रभावटी॥ मृतं सूतं मृतं स्वर्णं मृतं चाभ्रं समं समम्। तुल्यं च खादिरं सारं तथा मोचरसं क्षिपेत्॥ १॥ द्रवैः शाल्मलिमूलोत्थैर्मर्दयेत्प्रहरद्वयम्। चणमात्रां वटीं कृत्वा खादेज्जीरकसंयुताम्। त्रिदोषोत्थमतीसारं सज्वरं नाशयेद्ध्रुवम्॥ २॥ इति चन्द्रप्रभावटी॥ इति रसाः॥ लङ्घनं वमनं निद्रा पुराणाः शालिषष्टिकाः। विलेपी लाजमण्डश्च मसूरी तुवरी रसाः॥१॥ शशैणलावहरिणकपिञ्जलभवा रसाः। सर्वे क्षुद्रझषाः शृङ्गीडिण्डिशो मधुनालिका॥२॥ तैलं छागघृतं क्षीरं दधि तक्रं गवामपि। दधिजं वा पयोजं वा नवनीतं गवाजयोः॥ ३॥ नवं रम्भापुष्पफलं क्षौद्रं जम्बूफलानि च। भव्यं महार्द्रकं विश्वं शालूकं च विकङ्कतम्॥ ४॥ कपित्थं बकुलं बिल्वं तिन्दुकं दाडिमद्वयम्। शालूकं कण्टकाढ्या च चाङ्गेरी विजयारुणा॥ ५॥ जातीफलमफेनं च जीरकं गिरिमल्लिका। कुस्तुम्बुरु महानिम्बः कषायः सकलो रसः॥ ६॥

अन्नपानानि सर्वाणि दीपनानि लघूनि च । नाभेर्द्व्यङ्गुलतोऽधस्ताच्छस्त्रेणार्धेन्दुवद्दहेत् । तथा वंशास्थिमूलेऽपि पथ्यवर्गोऽतिसारिणाम् ॥ ७ ॥ अथातिसारेऽपथ्यानि ॥ स्वेदोऽञ्जनं रुधिरमोक्षणमम्बुपानं स्नानं व्यवायमपि जागरधूमनस्यम् । अभ्यञ्जनं सकलवेगविधारणं च रुक्षाण्यसात्म्यमशनं च विरुद्धमन्नम् ॥ १ ॥ गोधूममाषयववास्तुककाकमाचीनिष्पावकं च मधुशिग्रुरसालपूगम् । कूष्माण्डतुम्बिबदरं गुरु चान्नपानं ताम्बूलमिक्षुगुडमद्यमुपोदकी च ॥ २ ॥ द्राक्षाम्लवेतसफलं लशुनं च धात्री दुष्टाम्बु मस्तु गृहवारि च नारिकेलम् । सस्नेहनं मृगमदोऽखिलपत्रशाकं क्षीरं सराणि सकलानि पुनर्नवा च ॥ ३ ॥ उर्वारुकं लवणमम्लमपि प्रकोपी वर्गोऽतिसारगदपीडितमानवेषु । स्नानावगाहमभ्यङ्गगुरुस्निग्धान्नभोजनम् । व्यायाममग्निसन्तापमतीसारी विवर्जयेत् ॥ ४ ॥ इत्यतीसारचिकित्सा ॥

---

## ॥ अथ ग्रहणीनिदानम् ॥

अतिसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः । भूयः सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥ १ ॥ ग्रहण्यां[1] बलमग्निर्हि स चापि ग्रहणीं श्रितः । तस्मात्सन्दूषिते वह्नौ ग्रहणी संप्रदूष्यति ॥ २ ॥ नाभेरुपर्यग्निबलेनोपस्तब्धोपबृंहिता । षष्ठी कला पित्तधरा या पूर्वं समुदाहृता ॥ ३ ॥ पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्तिता । अपक्वं धारयत्यन्नं पक्वं सृजति पार्श्वतः ॥ ४ ॥ एकैकशः सर्वशश्च दोषैरत्यर्थमुच्छ्रितैः । सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥ ५ ॥ पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् । ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥ ६ ॥ पूर्वरूपं तु तस्येदं तृष्णालस्यं बलक्षयः । विदाहोऽन्नविपाकश्च चिराद्देहस्य गौरवम् ॥ ७ ॥ कटुतिक्तकषायातिरूक्षसन्दुष्टभोजनैः । प्रमितानशनात्यर्थवेगनिग्रहमैथुनैः ॥ ८ ॥ मारुतः कुपितो वह्निं संछाद्य कुरुते गदान् । तस्यान्नं पच्यते दुःखं शुष्कपाकः खराङ्गता ॥ ९ ॥ कण्ठास्यशोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः । पार्श्वोरुवङ्क्षणग्रीवारुगभीक्ष्णं विषूचिका ॥ १० ॥ हृत्पीडा कार्श्यदौर्बल्यं वैरस्यं परिकर्तिका । गृद्धिः सर्वरसानां च मनसः सदनं तथा ॥ ११ ॥ जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च । सवातगुल्महृद्रोगप्लीहाशङ्की च मानवः ॥ १२ ॥ चिराद्दुःखं[2] द्रवं शुष्कं तन्वामं शब्दफेनवत् । पुनः पुनः सृजेद्वर्चः कासः श्वासार्दितोऽनिलात् ॥ १३ ॥ कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् । संप्लावयद्धन्त्यनलं जलं तप्तमिवानलम् ॥ १४ ॥ सोऽजीर्णं नीलपीताभं पित्ताभः सृजति द्रवम् । पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ॥ १५ ॥ गुर्वतिस्निग्धमधुरमन्दशीतातिभोजनात् । भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥ १६ ॥ तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः । आस्योपले-

---

1 (ग० ङ० च०) ग्रहण्याम् । २ (ख० ग० ) चिरादुष्णम् ( ङ० ) चिन्तादुःखम् ।

षमाधुर्यकासष्ठीवनपीनसाः ॥ १७ ॥ हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु । दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ॥ १८ ॥ भिन्नामश्लेष्मसंसृष्टं गुरुवर्चःप्रवर्तनम् । अकृशस्यापि दौर्बल्यमालस्यं च कफात्मके ॥ १९ ॥ पृथग्वातादिनिर्दिष्टहेतुलिङ्गसमागमे । त्रिदोषं निर्दिशेदेवं तेषां वक्ष्यामि लक्षणम् ॥ २० ॥ अन्त्रकूजनमालस्यं दौर्बल्यं सदनं भवेत् । द्रवं घनं सितं स्निग्धं सकटीवेदनं शकृत् ॥ २१ ॥ आमं बहु सपैच्छिल्यं सशब्दं मन्दकूजनम् । पक्षान्मासाद्दशाहाद्वा नित्यं वापि प्रमुञ्चति ॥ २२ ॥ दिवा प्रकोपमायाति रात्रौ शान्तिं व्रजेच्च सा । दुर्विज्ञेया दुर्निवारा चिरकालानुबन्धिनी ॥ २३ ॥ सा भवेदामवातेन ग्रहणाद् ग्रहणी मता । संसृष्टा व्याधयो यस्य प्रतिलोमानुलोमगाः ॥ २४ ॥ आपन्नग्रहणीरोगः सोऽर्धमासं न जीवति । स्वपतः पार्श्वयोर्यस्य गलज्जलघटध्वनिः ॥ २५ ॥ तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम् । अत्याहारस्य संक्षोभाद्विदग्धाहारमूर्च्छितात् ॥ २६ ॥ स्थानात्प्रमुच्यते श्लेष्मा आममित्यभिधीयते । अतिसारातिदिष्टानि ग्रहण्यामपि लक्षयेत् ॥ २७ ॥ बालके ग्रहणी साध्या यूनि कृच्छ्रा समीरिता । वृद्धे त्वसाध्या विज्ञेया मतं धन्वन्तरेरिदम् ॥ २८ ॥ इति ग्रहणीनिदानम् ॥

## ॥ अथातो ग्रहणीचिकित्सितं व्याख्यास्यामः ॥

अथ वातग्रहणी । ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् । अतिसारोक्तविधिना तस्य त्वामं विपाचयेत् ॥ १ ॥ पेयादिपञ्चलवणं पञ्चकोलादिभिर्युतम् । दीपनानि च तक्रं च ग्रहण्यां संप्रयोजयेत् ॥ २ ॥ ज्ञात्वा तु परिपक्वं च वातजं ग्रहणीगदम् । दीपनैर्भेषजैः पक्वैः सर्पिर्भिः समुपाचरेत् ॥ ३ ॥ धान्यबिल्वबलाशुण्ठीशालिपर्णीशृतं जलम् । स्याद्वातग्रहणीदोषे सानाहे सपरिग्रहे ॥४॥ अथ पञ्चमूलाद्यं घृतम् । पञ्चमूल्यभयाव्योषपिप्पलीमूलसैन्धवैः । रास्नाक्षारद्वयाजाजीविडङ्गसटिभिर्घृतम् ॥ १ ॥ पक्वेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य च । शुष्कमूलककोलाम्बुचुक्रिकादाडिमस्य च ॥ २ ॥ तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः । काञ्जिकेन च तत्पक्त्वा पीतमग्निकरं परम् । शूलगुल्मोदरानाहकार्श्यानिलगदापहम् ॥ ३ ॥ इति पञ्चमूलाद्यं घृतम् ॥ अथ शुण्ठीघृतम् । घृतं नागरकल्केन सिद्धं वातानुलोमनम् । ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ १ ॥ इति शुण्ठीघृतम् । इति वातग्रहणी ॥

## ॥ अथ पित्तग्रहणी ॥

अथ रसाञ्जनादिचूर्णम् । रसाञ्जनं प्रतिविषा वत्सकस्य फलत्वचौ । नागरं धातकी चैवं सक्षौद्रं तण्डुलाम्बुना ॥ पित्तग्रहणीदोषार्शोरक्तपित्तातिसारनुत् ॥ १ ॥ इति रसाञ्जनादिचूर्णम् । श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुडः । ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति ॥ १ ॥ नागरातिविषामुस्तं धातकी सरसाञ्जनम् । वत्सकत्वक् फलं बिल्वं पाठा तिक्तकरोहिणी ॥ २ ॥ पिबेत्समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना । पित्तजे ग्रहणीदोषे रक्तं यश्चोपवेश्यते ॥ ३ ॥ अर्शांसि हृद्गदे शूलं

जयेच्चैव प्रवाहिकाम् । नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥ ४ ॥ इति नागराद्यं चूर्णम् । भूनिम्बकटुकाव्योषमुस्तानिन्द्रयवान्समान् । द्वौ चित्रकान्वत्सकत्वग्भागान् षोडश चूर्णयेत् ॥ १ ॥ गुडशीताम्बुना पीतं ग्रहणीपित्तदोषनुत् । कामलाज्वरपाण्डुघ्नं मेहतीव्रातिसारनुत् ॥ २ ॥ इति वृन्दात् । इति पित्तग्रहणीचिकित्सा ॥

## ॥ अथ श्लेष्मग्रहणीचिकित्सा ॥

शटी व्योषाभयं क्षारौ ग्रन्थिकं बीजपूरकम् । लवणाम्लाम्बुना पेयं श्लैष्मिके ग्रहणीगदे ॥१॥ रास्ना पथ्या शटी व्योषं द्वौ क्षारौ लवणानि च । ग्रन्थिकं मातुलिङ्गस्य समभेकत्र चूर्णयेत् ॥ पिबेदुष्णेन तोयेन श्लैष्मिके ग्रहणीगदे ॥ २ ॥ इति रास्नादिचूर्णम् इति श्लेष्मग्रहणी ॥ शुण्ठी समुस्तातिविषां गुडूचीं पिबेज्जलेन क्वथितां समांशाम् । मन्दानलत्वे सततामवाते सामानुबन्धे ग्रहणीगदे च ॥ १ ॥ इति शुण्ठ्यादिक्वाथः ।

## ॥ अथ चित्रकादिगुटिका ॥

चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च । व्योषं हिङ्ग्वजमोदा च चव्यमेकत्र चूर्णयेत् ॥ १ ॥ गुटिकामातुलिङ्गस्य दाडिमस्य रसेन वा । कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥ २ ॥ इति चित्रकादिगुटिका ॥ चूर्णं चव्यकचित्रश्रीविश्वभेषजनिर्मितम् । तक्रेण सहितं हन्ति ग्रहणीं दुःखकारिणीम् ॥ १ ॥ अथ भल्लातकक्षारः भल्लातकं त्रिकटुकं त्रिफला लवणत्रयम् । अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥ २ ॥ स क्षारः सर्पिषा पीतो भोज्ये वाप्यवचूर्णितः । हृद्रोगपाण्डुग्रहणीगुल्मोदावर्तशूलनुत् ॥ ३ ॥ इति भल्लातकक्षारः ॥

## ॥ अथ तक्रहरीतकी ॥

सप्ताहं वा दशाहं वा मासं मासार्धमेव वा । बलकालविकालज्ञो भिषक् तक्रं प्रयोजयेत् ॥ १ ॥ न तक्रदानात्प्रभवन्ति रोगा न तक्रसेवी व्यथते कदाचित् । यथा सुराणाममृतं प्रधानं तथा नराणां भुवि तक्रमाहुः ॥ २ ॥ तक्रं नोरक्षते दद्यान्नोष्णकाले न दुर्बले । न मूर्च्छाभ्रमदाहे च न रोगे रक्तपैत्तिके ॥ ३ ॥ इति वृन्दात् ॥ ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात् । पथ्यमम्लमपाकित्वान्न च पित्तप्रकोपनम् ॥ १ ॥ अरुचौ मातुलिङ्गस्य केसरं साज्यसैन्धवम् । दद्याद्भोजनकाले तु प्रातस्तक्रं च रोगिणाम् ॥ २ ॥ दहनाजमोदसैन्धवनागरमरिचं पिबाम्लतक्रेण । सप्ताहादग्निबलं ग्रहण्यतीसारशूलघ्नम् ॥ ३ ॥ त्रिकंसे तक्रस्य द्विकुडवपटोः षष्टिरभयाः पचेद्यर्थाः सार्धं घृततिलजविश्वाग्निकुडवैः । समावाप्याजाजीमरिचचपलादीप्यकपलैर्लिहन्सर्वं वह्निं द्रढयति विकारांश्च जयति ॥ ४ ॥ इति तक्रहरीतकी ॥

---

१ ( ख० ) व्यत्ययः ।

## ॥ अथ कल्याणकावलेहः ॥

पाठाधान्ययवान्यजाजिहपुषाचव्याग्निसिन्धूद्भवैः सश्रेयस्यजमोदकीटरिपुभिः कृष्णाजटासंयुतैः । सव्योषैः सफलत्रिकैः सत्रुटिभिस्त्वक्पत्रकैरौषधैरित्यक्षप्रमितैः सतैलकुडवैः सार्धं त्रिवृन्मुष्टिभिः ॥ १ ॥ एतैरामलकीरसस्य तुलया सार्धं तुलार्धं गुडात्पक्वव्यं भिषजावलेहवदयं प्राग् भोजनाद्भक्षितः । ये केचिद्ग्रहणीगदाः सगुदजाः कासाः सशोषामयाः सश्वासाः श्वयथुस्वरोदररुजः कल्याणकस्ताञ्जयेत् ॥ २ ॥ इति कल्याणकावलेहः ॥ भूनिम्बकौटजकटुत्रिकमुस्ततिक्ताः कर्षांशकाः सशिखिमूलपिचुद्वयाश्च । त्वक् कौटजा पलचतुष्कमिता गुडाम्भः पीतं नृणामिह हरेद्ग्रहणीविकारान् ॥ १ ॥ बिल्वाब्दशक्रयववालकमोचसिद्धमाजं पयः पिबति यो दिवसत्रयं च । सोऽतिप्रवृद्धचिरकृद् ग्रहणीविकारं मांसं सशोणितमसाध्यमपि क्षिणोति ॥२॥ व्योषं दीप्याजमोदाक्रिमिरिपुदहनं रामठं चाश्वगन्धं सिन्धूत्थं जीरके द्वे रुचकफलयुतं धान्यकं तुल्यभागम् । भृङ्गीचूर्णं लवङ्गं घृतमधुसहितं शाणमात्रं च दद्याद्दीप्तिं पुष्टिं च कान्तिं बलमपि कुरुते नाशयेत्संग्रहण्याम् ॥ ३ ॥

## ॥ अथ वृद्धगङ्गाधरचूर्णम् ॥

मुस्ताबालकलोध्रवत्सकवृकीविश्वारलुश्रीमदालज्जामोचरसाम्रकौटजवृषाचूर्णस्तु गङ्गाधरः । पीतस्तण्डुलवारिमाक्षिकयुतः कर्षोन्मितो वाहिकामुग्रां च ग्रहणीं निहन्ति सहसा सर्वातिसारामयान् ॥ १ ॥ इति वृद्धगङ्गाधरचूर्णम् ॥

## ॥ अथ तालीसाद्यं चूर्णम् ॥

तालीसोग्रतुगाषडूषणनिशाबिल्वाजमोदासटी चातुर्जातलवङ्गधातकिविषाजातीफलं दीप्यकम् । पाठा मोचरसोल्पश्चलवणाजाजीद्वयं वेल्लकं वृक्षाम्लाम्लवरापलाशतरुजं मांस्यम्बुदं वालुकम् ॥१॥ ऐन्द्री ब्रह्मसुवर्चला दृढपदा कुष्ठं समस्तैः समं बल्या सर्वसमा जयाखिलसमा मत्स्यण्डिका वासिता । चूर्णोऽयं ग्रहणीक्षयादिकसनश्वासारुचिप्लीहहृद्दुर्नामातिसृतिज्वरार्तिपवनस्थौल्यप्रमेहप्रणुत् ॥ २ ॥ तीव्रापस्मृतिपाण्डुगुल्मजठरश्लेष्मोत्थपित्तोद्भवोन्मादध्वंसविधायको विजयते सर्वामयध्वंसकः । बालानां च विशेषतो हितकरः संस्पष्टवाणीप्रदः पुष्ट्यायुर्बलकान्तिधीस्मृतिमहामेधाविलासप्रदः ॥ ३ ॥ इति तालीसाद्यं चूर्णम् ॥

## ॥ अथ जातीफलाद्यं चूर्णम् ॥

जातीफलं लवङ्गैलापत्रत्वङ्नागकेसरम् । कर्पूरं चन्दनं लोध्रं त्वक्क्षीरीतगरामलैः ॥ १ ॥ तालीसपिप्पलीपथ्यास्थूलजीरकचित्रकैः । शुण्ठीविडङ्गमरिचैः समभागैर्विचूर्णितैः ॥ २ ॥ यावन्त्येतानि चूर्णानि दद्याद्भङ्गां च तावतीम् । सर्वचूर्ण-

१ ( ग० ङ० च० छ० ) कौटबीज । २ ( ख० घ० ङ० ) शृङ्गी । ३ ( ग० च० ) रसाल । ४ ( क० ) ऐन्द्रम् । ५ ( च० छ० ङ० ) समन्तैः ।

समा देया शर्करा सुभिषग्वरैः ॥ ३ ॥ कर्षमात्रं ततः खादेन्मधुना प्लावितं सुधीः । अस्य प्रभावाद्ग्रहणीकासश्वासारुचिक्षयाः ॥ वातश्लेष्मप्रतिश्यायाः प्रशमं यान्ति सर्वथा ॥ ४ ॥ इति जातीफलाद्यं चूर्णम् ।

## ॥ अथ बिल्वाद्यं घृतम् ॥

बिल्वाग्निचव्यार्द्रकशृङ्गवेरक्राथेन कल्केन च सिद्धमाज्यम् । सच्छागदुग्धं ग्रहणीगदोत्थे शोफाग्निसादारुचिनुद्वरा सा ॥ १ ॥ इति बिल्वाद्यं घृतम् । कृच्छ्रेण कठिनत्वेन यः पुरीषं विमुञ्चति । सघृतं लवणं तस्य पाययेत्क्लेशशान्तये ॥ विडं यवानीविष्टम्भे पिबेदुष्णेन वारिणा ॥ १ ॥

## ॥ अथ द्राक्षासवः ॥

मृद्वीकायाः पलशतं चतुर्द्रोणेऽम्भसः पचेत् । द्रोणशेषे तु शीते च पूते तस्मिन्प्रदापयेत् ॥ १ ॥ द्विशते क्षौद्रखण्डाभ्यां धातक्याः प्रस्थमेव च । कक्कोलकलवङ्गे च जातीसस्यं तथैव च ॥ २ ॥ पलांशकानि मरिचं त्वगेलापत्रकेसरैः । पिप्पली चित्रकं चव्यं पिप्पलीमूलरेणुकम् ॥ ३ ॥ घृतभाण्डस्थितमिदं चन्दनागुरुधूपितम् । कर्पूरवासितो ह्येष ग्रहणीदीपनः परम् ॥ ४ ॥ अर्शसां नाशनः श्रेष्ठ उदावर्तास्रगुल्मनुत् । जठरक्रिमिकुष्ठानि व्रणांश्च विविधांस्तथा ॥ ५ ॥ अक्षिरोगशिरोरोगगलरोगविनाशनः । ज्वरमामं महाव्याधिं पाण्डुरोगं सकामलम् ॥ नाम्ना द्राक्षासवो ह्येष बृंहणो बलवर्णकृत् ॥ ६ ॥ इति गदनिग्रहाद्द्राक्षासवः ।

## ॥ अथ रसाः ॥

सूतकं गन्धकं लोहं विषं चित्रकपत्रकम् । वरारी रेणुका मुस्ता एला ग्रन्थिककेशरम् ॥ १ ॥ फलत्रयं त्रिकटुकं शुल्बभस्म तथैव च । एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ २ ॥ ग्रहण्यां पाण्डुरोगे च दातव्यं मधुना सह । अतिसारे क्षये कासे प्रमेहे विषमज्वरे । नानानुपानैर्दातव्यश्चतुर्मूर्ती रसोत्तमः ॥ ३ ॥ अथ सुवर्णरसपर्पटी । शुद्धसूतं पलमितं तुर्यांशस्वर्णसंयुतम् । मर्दयेन्निम्बुनीरेण यावदेकत्वमाप्नुयात् ॥ १ ॥ प्रक्षाल्योष्णाम्बुना पश्चात्पलमात्रे सुगन्धके । द्रुते लोहमये पात्रे बादरानलयोगतः ॥ २ ॥ प्रक्षिप्य चालयेल्लोह्यां मन्दं लोहशलाकया । ततः पाकं विदित्वा तु रम्भापत्रे शनैः क्षिपेत् ॥ ३ ॥ गोमयस्थे तदुपरि रम्भापात्रेण यन्त्रयेत् । शीतं तच्चूर्णितं गुञ्जाक्रमवृद्धं निषेवयेत् ॥ ४ ॥ माषमात्रं भवेद्यावत्ततो मात्रां न वर्धयेत् । सक्षौद्रेणोषणेनैव लेहयेद्भिषगुत्तमः ॥ ५ ॥ ग्रहणीं हन्ति शोषं च सुवर्णरसपर्पटी । सद्योबलकरी शुक्रवर्धनी वह्निदीपनी ॥ क्षयकासश्वासमेहशूलातीसारपाण्डुनुत् ॥ ६ ॥ इति सुवर्णरसपर्पटी ॥ अथ ग्रहणीकपाटः ॥ तारमौक्तिकहेमानि सारश्चैकैकभागिकम् । द्विभागो गन्धकः सूतस्त्रिभागो मर्दये-

१ ( च० ) वरं तद् ।

दिमान् ॥ १ ॥ कपित्थस्वरसैर्गाढं मृगशृङ्गे ततः क्षिपेत् । पुटेन्मध्ये पुटेनैव तत उद्धृत्य मर्दयेत् ॥ २ ॥ बलारसैः सप्तवेलमपामार्गरसैस्त्रिधा । लोध्रप्रतिविषामुस्तधातकीन्द्रयवामृता ॥ ३ ॥ प्रत्येकमेतत्स्वरसैर्भावना स्यात् त्रिधा त्रिधा । माषमात्रं रसो देयो मधुना मरिचैस्तथा ॥ ४ ॥ हन्यात्सर्वानतीसारान् ग्रहणीं सर्वजामपि । कपाटो ग्रहणीरोगे रसोऽयं वह्निदीपनः ॥५॥ अन्यश्च । रसेन्द्रगन्धातिविषाभयाभ्रं क्षारत्रयं मोचरसो वचा च । जया च जम्बीररसेन पिष्टं पिण्डीकृतं स्याद्ग्रहणीकपाटः ॥१॥ अन्यश्च रसराजलक्ष्म्याः । शुद्धैः कर्कवराटकैर्गणनया भल्लातकांस्तत्समान्छ्रोतान्बब्बुलकण्टकैर्लघुपुटैस्तस्याङ्घ्रिभागं रसम् । लेलीतेन समं विचूर्ण्य जयया सप्तानुभाव्यं शिवः प्रोक्तोऽयं ग्रहणीकपाटकरसस्त्रैवल्लकस्त्वौषधैः ॥ १ ॥ इति ग्रहणीकपाटः ॥ अथ ग्रहणीगजकेसरी रसः ॥ गन्धं पारदमभ्रकं च दरदं लोहं च जातीफलं बिल्वं मोचरसं विषं प्रतिविषां व्योषं तथा धातकीम् । भृष्टामप्यभयां कपित्थजलदौ दीप्यानलौ दाडिमं टङ्काद्रसमकलिङ्गकात्कनकजं बीजं च पक्षेक्षणम् ॥ १ ॥ एतत्सुर्यमफेनमेतदखिलं संमर्द्य संचूर्णयेद्धत्तूरच्छदजै रसैश्च मतिमान्कुर्यान्मरीचाकृतिम् । दत्ता सा ग्रहणीगदं सरुधिरं सामं सशूलं चिरातीसारं विनिहन्ति जूर्तिसहितां तीव्रां विषूचीमपि ॥ २ ॥ दुःसाध्यामपि बिम्बसीं परिहरेदुक्तानुपानैरयं नाम्ना तु ग्रहणीमतङ्गजमदध्वंसीभकण्ठीरवः ॥ ३ ॥ इति ग्रहणीगजकेसरी रसः ॥ अथ रसपर्पटी ॥ शुद्धपारदगन्धाभ्यां कृता पर्पटिका नृणाम् । निहन्ति ग्रहणीं क्षौद्रयुक्ता पथ्यभुजां भृशम् ॥ १ ॥ इति रसपर्पटी ॥ अथ पञ्चामृतपर्पटीरसः ॥ लोहाभ्रार्करसं समं द्विगुणितं गन्धं पचेत्कोलिकाकाष्ठाग्नौ मृदुले निधाय सकलं लोहस्य पात्रे भिषक् । सर्वं गोमयमण्डले विनिहिते रम्भादले विन्यसेत्तस्योर्ध्वं कदलीदलं द्रुततरं वैद्येश्वरो विन्यसेत् ॥१॥ स्यात्पञ्चामृतपर्पटी ग्रहणिकायक्ष्मातिसारज्वरस्त्रीरुक्पाण्डुगराम्लपित्तगुदजक्षुन्मान्द्यविध्वंसिनी ॥ २ ॥ ग्रहण्यामनुपानं हि हिङ्गु सैन्धवजीरकम् । जीरकम् पाण्डुगरयोरितरेषु स्वयुक्तितः ॥ ३ ॥ इति पञ्चामृतपर्पटीरसः ॥ अथ कनकसुन्दररसः ॥ मरीचबलिहिङ्गुलैर्गरलपिप्पलीटङ्कणैः सुवर्णभवबीजकैः समलवैर्दिनार्धावधि । जयारसविमर्दितैः कनकसुन्दरः सुन्दरि स्मृतो ग्रहणिकाज्वरातिसृतिवह्निमान्द्यापहः ॥१॥ इति कनकसुन्दररसः ॥ अथ शङ्खवटी । चिञ्चाक्षारपलं पटुव्रजपलं निम्बूरसे कल्कितं तस्मिन्शङ्खपलं प्रतप्तमसकृन्निर्वाप्य शीर्णावधि । हिङ्गुव्योषपलं रसामृतबलीन्निक्षिप्य निष्कांशकान् बद्ध्वा शङ्खवटी क्षयग्रहणिकारुक्पक्तिशूलादिषु ॥ १ ॥ इति शङ्खवटी ॥ अथाग्निसूनुरसः । भागो दग्धकपर्दकस्य च तथा शङ्खस्य भागद्वयम् भागो गन्धकसूतयोर्मिलितयोः पिष्टा मरीचादपि । भागस्य त्रितयं नियोज्य सकलं निम्बूरसे चूर्णितं नाम्ना वह्निसुतो रसोऽयमचिरान्मान्द्यं जयेद्दारुणम् ॥ १ ॥ घृतेन खण्डात्सह भक्षितेन क्षीणान्नरान्ह-

---

१ ( च० ) स्यूतान् । २ ( घ० ) कमलजम् । ३ ( ग० ङ० ) विनिहितम् ।

स्तिसमान्करोति । समागधीचूर्णघृतेन लीढ्वा नरः प्रमुञ्चेद् ग्रहणीविकाराद् ॥ २ ॥ शोषज्वरारोचकशूलगुल्मान्पाण्डूदरार्शोग्रहणीविकारान् । तक्रानुपानो जयति प्रमेहान्युक्त्या प्रयुक्तोऽग्निसुतो रसेन्द्रः ॥ ३ ॥ इत्यग्निसूनुरसः ॥ अथागस्तिसूतराजो रसः ॥ रसबलिसमभागं तुल्यहिङ्गुलयुक्तं द्विगुणकनकबीजं नागफेनेन तुल्यम् । सकलविहितचूर्णं भावयेद्भृङ्गनीरैर्ग्रहणिजलधिशोषे सूतराजो ह्यगस्तिः ॥ १ ॥ त्रिकटुकमधुयुक्तः सर्ववान्तिं च शूलं कफपवनविकारं वह्निमान्द्यं च निद्राम् । घृतमरिचयुतोऽयं गुञ्जमात्रः प्रवाहीं हरति पडतिसाराञ्जीरजातीफलेन ॥ २ ॥ इत्यगस्तिसूतराजो रसः ॥ अथ क्षारताम्ररसः ॥ शङ्खक्षारार्कभूतिं च वराटं लोहभस्मकम् । अयोमलं यवक्षारं टङ्कणक्षारमेव च ॥ १ ॥ त्रिकटुं सैन्धवं तुल्यं भृङ्गतोयेन मर्दयेत् । आटरूपरसैर्मर्धमार्द्रकस्वरसेन च ॥ २ ॥ चणमात्रां वटीं कृत्वा रसोऽयं क्षारताम्रकः । श्वासे कासे प्रतिश्याये पुराणज्वरपीडिते ॥ ३ ॥ मन्दाग्नौ ग्रहणीदोषे त्वनुपानं यथोचितम् । सेवयेत्सप्तरात्रेण नाशयेन्नात्र संशयः ॥ ४ ॥ चिरकालानुबन्धे च सेवयेन्मण्डलावधि । तत्तद्व्याधिहरं पथ्यं नियमेन समाचरेत् ॥ ५ ॥ इति क्षारताम्ररसः ॥ इति रसाः ॥

## ॥ अथ पथ्यम् ॥

मुद्गषष्टिकशाली च आढकी माक्षिकं तथा । छाग्याः पयो दधि घृतं नवनीतं कपित्थकम् ॥ १ ॥ निःसारं दधि गोर्बिल्वं रम्भायाः कुसुमं फलम् । दाडिमं लाजकृन्मण्डः शृङ्गाटं क्षुद्रमत्स्यकः ॥ २ ॥ एणतित्तिरलावानां शशानां क्रव्यमेव च । ग्रहण्यामातुरे पथ्यं कथितं मुनिभिर्हितम् ॥ ३ ॥ पिच्छिलानि कठोराणि गुरूण्यन्नानि यानि च । आमकृन्ति न सेव्यानि ग्रहणीरोगिभिः क्वचित् ॥ ४ ॥ इति ग्रहणीचिकित्सा ॥

---

## ॥ अथार्शोरोगनिदानम् ॥

पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च । अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये ॥ १ ॥

## ॥ अथार्शसां स्वरूपमाह ॥

दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् । मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान्जगुः ॥ १ ॥

## ॥ अथार्शसां हेतुमाह ॥

कषायकटुतिक्तानि रूक्षशीतलघूनि च । प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसे-

१ ( क० ख० ) शृङ्ग भृङ्गी ।

वनम् ॥ १ ॥ लङ्घनं देशकालौ च शीतौ व्यायामकर्म च । शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः ॥ २ ॥ कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः । देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ ३ ॥ विदाहि तीक्ष्णमुष्णं च सर्वं पानान्नभेषजम् । पित्तोल्वणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ ४ ॥ मधुरस्निग्धशीतानि लवणाम्लगुरूणि च । अव्यायामदिवास्वप्नशय्यासनसुखे रतिः ॥ ५ ॥ प्राग्वातसेवा शीतौ च देशकालावचिन्तनम् । श्लैष्मिकाणां समुद्दिष्टमेतत्कारणमर्शसाम् ॥ ६ ॥ हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वोल्वणानि च । सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥ ७ ॥

## ॥ अथार्शसां पूर्वरूपमाह ॥

विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च । कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥ १ ॥ ग्रहणीरोगपाण्डूवर्तेराशङ्का चोदरस्य च । पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥ २ ॥

## ॥ अथ वातार्शसो लक्षणमाह ॥

गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमिचिमान्विताः । म्लानाः श्यावारुणाः स्तब्धा विशदाः परुषाः खराः ॥ १ ॥ मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः । बिम्बीकर्कन्धुखर्जूरकार्पासीफलसन्निभाः ॥ २ ॥ केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः । शिरःपार्श्वांसकट्यूरुवङ्क्षणाभ्यधिकव्यथाः ॥ ३ ॥ क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः । कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ॥ ४ ॥ तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् । रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥ ५ ॥ कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते । गुल्मप्लीहोदराष्ठीलासंभवस्तत एव च ॥ ६ ॥

## ॥ अथ पित्तार्शोलक्षणम् ॥

पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः । तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः ॥ १ ॥ शुकजिह्वायकृत्खण्डजलौकावक्त्रसन्निभाः । दाहपाकज्वरस्वेदतृण्मूर्छारतिमोहदाः ॥ २ ॥ सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः । यवमध्या हरित्पीता हारिद्रत्वङ्नखादयः ॥ ३ ॥

## ॥ अथ कफोल्बणार्शोलक्षणम् ॥

श्लेष्मोल्बणा महामूला घना मन्दरुजः सिताः । उत्सन्नोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः ॥ १ ॥ पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः । करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥ २ ॥ वङ्क्षणानाहिनः पायुबस्तिनाभ्यवकर्षिणः । सकासश्वासहृल्लासप्रसेका रुचिपीनसाः ॥ ३ ॥ मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः । क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः ॥ ४ ॥

१ ( च ) भ्रमाः ।

वसाभाः सकफप्राज्यपुरीषाः समवाहिकाः । न स्रवन्ति न भिद्यन्ते पाण्डु-स्निग्धत्वगादयः ॥ ५ ॥

## ॥ अथ त्रिदोषजसहजार्शसोर्लक्षणम् ॥

सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च ॥ १ ॥

## ॥ अथ रक्तार्शोलक्षणम् ॥

रक्तोल्बणा गुदे कीलाः पित्ताकृतिसमन्विताः । वटप्ररोहसदृशा गुञ्जा-विद्रुमसन्निभाः ॥ १ ॥ तेऽत्यर्थं दुष्टमुष्णं च गाढविट्कप्रपीडिताः । स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥ २ ॥ भेकाभः पीड्यते दुःखैः शोणितक्षयसंभवैः । हीन-वर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ॥ विट्श्यावं कठिनं रूक्षमधो वायुर्न गच्छति ॥ ३ ॥

## ॥ अथ रक्तार्शसि वातादीनामनुबन्धमाह ॥

तनु चारुणवर्णं च फेनिलं चासृगर्शसाम् । कट्यूरुगुदशूलं च दौर्बल्यं यदि वा-धिकम् ॥ १ ॥ तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् । शिथिलं श्वेतपीतं च विट्स्निग्धं गुरु शीतलम् ॥ २ ॥ यद्यर्शसां घनं चासृक् तन्तुमत्पाण्डुपिच्छिलम् । गुदं सपिच्छं स्तिमितं गुरु स्निग्धं च कारणम् ॥ श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥ ३ ॥

## ॥ अथ सर्वशरीरव्यापित्वमाह ॥

पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रये । सर्वे एव प्रकुप्यन्ति गुदजानां समु-द्भवे ॥ १ ॥ तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च । सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥ २ ॥ बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च । अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥ ३ ॥

## ॥ अथ कृच्छ्रसाध्यान्याह ॥

द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च । कृच्छ्रसाध्यानि तान्याहुः परि-संवत्सराणि च ॥ १ ॥

## ॥ अथासाध्यान्याह ॥

सहजानि त्रिदोषाणि यानि चाभ्यन्तरे[२] वलौ । जायन्तेऽर्शांसि संश्रित्य ता-न्यसाध्यानि निर्दिशेत् ॥ १ ॥ शेषत्वादायुषस्तानि चतुष्पादसमन्विते । याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ॥ २ ॥

---

१ (च०) वर्तते । २ (च०) चाभ्यन्तरां वलिम् ।

## ॥ अथोपद्रवादसाध्यत्वमाह ॥

हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा । शोथो हृत्पार्श्वशूलं च यस्यासाध्यार्शसो हि सः ॥ १ ॥ हृत्पार्श्वशूलसंमोहो छर्दिरङ्गस्य रुग्ज्वरः । तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥ २ ॥ तृष्णारोचकशूलार्तमतिप्रस्रुतशोणितम् । शोथातीसारसंयुक्तमर्शांसि क्षपयन्ति च ॥ ३ ॥

## ॥ अथ स्थानान्तरेऽर्शांस्याह ॥

मेण्ढ्रादिष्वपि लक्ष्यन्ते यथास्वं नाभिजानि च । गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥ १ ॥

## ॥ अथ चर्मकीलप्राप्तिपूर्वकमर्शोलक्षणमाह ॥

व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः । कीलोपमं स्थिरखरं चर्मकीलं तु तं विदुः ॥ १ ॥

## ॥ अथ तस्यैव वातादिभेदेन लक्षणमाह ॥

वातेन तोदरूक्षत्वं पित्तादसितरक्तता । श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥ १ ॥ अरिवत्प्राणिनो मांसकीलका विवसन्ति यत् । अर्शांसि तस्मादुच्यन्ते गुदमार्गनिरोधतः ॥ २ ॥ इत्यर्शोनिदानम् ॥

## ॥ अथार्शश्चिकित्सां व्याख्यास्यामः ॥

स्नेहः स्वेदादयो वाते पित्ते स्यू रेचनादयः । कफे वान्त्यादयोऽर्शःसु मिश्रे मिश्रा प्रतिक्रिया ॥ पित्तवद्रक्तजे कार्यः प्रतीकारोऽर्शसि ध्रुवम् ॥ १ ॥ अर्शोऽतिसारग्रहणीविकाराः प्रायेण चान्योन्यनिदानभूताः । सन्नेऽनले सन्ति न सन्ति दीप्ते रक्षेदतस्तेषु विशेषतोऽग्निम् ॥ २ ॥ दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्तितः । भेषजक्षारशस्त्राग्निसाध्यत्वं याप्यमुच्यते ॥ ३ ॥

## ॥ अथ तिलादिमोदकः ॥

तिलभल्लातकं पथ्या गुडश्चेति समांशकम् । दुर्नामश्वासकासघ्नं प्लीहपाण्डुज्वरापहम् ॥ १ ॥ इति तिलादिमोदकः ॥

## ॥ अथ मरीच्यादिमोदकः ॥

मरिचमहौषधचित्रकसूरणभागा यथोत्तरं द्विगुणाः । सर्वसमो गुडभागः सेव्योऽयं मोदकः प्रसिद्धफलः ॥ १ ॥ इति मरिचादिमोदकः ॥

## ॥ अथ प्राणदो मोदकः ॥

तालीसज्वलनोषणाः सचविकास्तुल्या द्विभागा भवेत् कृष्णामूलसमन्विता

---

१ ( च० ) गुदास्य ।

त्रिपलिका शुण्ठी चतुर्जातकम् । स्यान्मुष्टिप्रमितं गुडत्रिगुणितैरेभिः कृता मोदकाः कासश्वासमदाग्निमान्द्यगुदजप्लीहप्रमेहापहाः ॥ १॥ इति प्राणदो मोदकः ॥

## ॥ अथ काङ्कायनगुटिका ॥

पथ्यादलस्य पलपञ्चकमेकमेवमेकं पलं तु मरिचादपि जीरकस्य । कृष्णातदुद्भवजटाचविकाग्निशुण्ठ्यः कृष्णादिपञ्चकमिदं पलतः प्रवृद्धम् ॥ १ ॥ पलाष्टभल्लातकसंप्रयुक्तं कन्दस्त्वरुष्करफलाद् द्विगुणः प्रकल्प्यः । स्याद्यावशूककुडवार्धमतः समस्तैर्योज्यो गुडो द्विगुणितो वटकीकृतश्च ॥ २ ॥ काङ्कायनेन मुनिना वटकः किलायमुक्तः प्रजाहिततमेन गुदामयघ्नः । क्षाराग्निशस्त्रपतनैरपि ये न सिद्धाः सिध्यन्त्यनेन वटकेन गुदामयास्ते ॥ ३ ॥ इति काङ्कायनगुटिका ॥

## ॥ अथ सूरणमोदकः ॥

चित्रकस्य पलं त्वेकं द्विपलं सूरणस्य च । पलार्धं नागरस्यापि मरिचं कोलमात्रकम् ॥ १ ॥ भल्लातकं कणामूलं विडङ्गं त्रिफला कणा । तालीससहितान्सर्वानक्षमात्रान्प्रयोजयेत् ॥ २ ॥ द्वे पले वृद्धदारस्य तालमूल्याः पलं भवेत् । त्वगेलामरिचांशं च सर्वानेकत्र चूर्णयेत् ॥ ३ ॥ गुडेन मर्दयित्वा तु द्विगुणेनेह बुद्धिमान् । मोदकः सूरणो नाम त्वक्षमात्रः प्रमाणतः ॥ ४ ॥ उपयुक्तो निहन्त्याशु गुदकीलान्न संशयः । अग्निवृद्धिकरः पुंसां सेव्यमानो महागुणः ॥ ५ ॥ अथ द्वितीयः ॥ शुष्कात्सूरणकन्दतोऽर्धमिलितं व्योषं तथा चित्रकं श्रेष्ठाजीरकरामठं समलवं दीप्याजमोदान्वितम् । सर्वस्वाङ्घ्रिकसिन्धुजं परिभवेन्निम्बुद्रवैर्वासरं सिद्धः सूरणमोदको गदहरः श्रेष्ठो भवेत्प्राणिनाम् ॥ १ ॥ शूलं सङ्ग्रहणीगदं त्वतिसृतिं दुष्टां प्रवाहीं जयेद्दीप्ताग्निं कुरुते बलं वितनुते गुल्मप्रणाशं तथा । अर्शांस्युद्धतमारुतामयहरो बाले च वृद्धे हितो गर्भिण्यां च न शस्यते न निपुणैर्नो रक्तपित्तेऽपि च ॥ २ ॥ इति सूरणमोदकः ॥

## ॥ अथ सूरणपुटपाकः ॥

मृल्लिप्तं सौरणं कन्दं पक्त्वाऽग्नौ पुटपाकवत् । दद्यात्सतैललवणं दुर्नामविनिवृत्तये ॥ १ ॥ सौरणं कन्दमादाय पुटपाकेन पाचयेत् । सतैलगुडसंयुक्तो रसश्चार्शोविकारनुत् ॥ २ ॥ इति सूरणपुटपाकः ॥

## ॥ अथ बाहुशालगुडः ॥

इन्द्रवारुणिका मुस्ता शुण्ठी दन्ती हरीतकी । त्रिवृत्सटी विडङ्गानि गोक्षुरश्चित्रकस्तथा ॥ १॥ तेजोह्वा च द्विकर्षाणि पृथग् द्रव्याणि कारयेत् । सूरणस्य पलान्यष्टौ वृद्धदारश्चतुष्पलम् ॥ २ ॥ चतुष्पलं स्याद्भल्लातं काथयेत्सर्वमेकतः । जलद्रोणे

१ ( ग० ङ० छ० ) पलाद् । २ ( ग० च० छ० ) सद्याव । ३ ( ग० ङ० ) समस्तयोगो । ( च० ) समस्तायोज्यो । ४ ( छ० ) गुडाद्द्विगु० । ५ ( ग० च० ) मरीचांशे । छ० मरिचांशेन । ६ ( ग० च० ) फलम् ।

चतुर्थांशं गृह्णीयात्काथमुत्तम् ॥ ३ ॥ काथ्यद्रव्यात्त्रिगुणितं गुडं क्षिप्त्वा पुनः पचेत् । सम्यक् पक्कं च तं ज्ञात्वा चूर्णान्येतानि दापयेत् ॥ ४॥ चित्रकस्त्रिवृता दन्ती तेजोह्वा पलिकाः पृथक् । पृथक् त्रिपलिकाः कार्या व्योषैलामरिचत्वचः ॥ ५ ॥ निक्षिपेन्मधु शीते च तस्मिन्प्रस्थप्रमाणकम् । एवं सिद्धो भवेच्छ्रीमान्बाहुशालो गुडः शुभः ॥ ६ ॥ जयेदर्शांसि सर्वाणि गुल्मान्वातोदरं तथा । आमवातं प्रतिश्यायं ग्रहणीक्षयपीनसान् । हलीमकं पाण्डुरोगं प्रमेहे च रसायनम् ॥ ७ ॥ इति बाहुशालगुडः ॥

## ॥ अथागस्तिमोदकः ॥

हरीतकीनां त्रिपलं त्रीण्याम्राणि कटुत्रिकम् । त्वक्पत्रकं चार्धपलं गुडस्याष्टपलं मतम् ॥ १ ॥ अगस्तिमोदकानेतान्कल्पितान्परिभक्षयेत् । शोफार्शोग्रहणीदोषकासोदावर्तनाशनान् ॥ २ ॥ इत्यगस्तिमोदकः ॥

## ॥ अथ लघुमूरणमोदकः ॥

कणामरीचविश्वाग्निसूरणैस्तु गुडैः क्रमात् । द्विगुणैर्मोदकोऽर्शोघ्नः परं पाचनदीपनः ॥ १ ॥ इति लघुसूरणमोदकः ॥

## ॥ अथ बृहद्भल्लातकलेहः ॥

सुपक्वभल्लातफलानि सम्यग् द्विधा विधायाढकसंमितानि । विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषे व्यपनीय तानि ॥१॥ पुनः पचेत्क्षीरचतुर्गुणेन घृतांशयुक्तेन घनं यथा स्यात् । सितोपला षोडशभिः पलैश्च विमर्द्य संस्थाप्य दिनानि सप्त ॥ २ ॥ ततः प्रयोज्याग्निबलेन मात्रां जयेद्विकारानखिलान्गुदोत्थान् । कचान्सुनीलान्घनकुञ्चिताग्रान्सुपर्णदृष्टिं च शशाङ्ककान्तिम् ॥ ३ ॥ जवं हयानां बलमुत्तमं च स्वरं मयूरस्य हुताशदीप्तिम् । स्त्रीवल्लभत्वं विविधप्रभावं नीरोगतां द्वित्रिशतायुषं च ॥ ४ ॥ न चान्नपाने परिहार्यमस्ति न चातपे नाध्वनि मैथुने च । प्रयोगकाले सकलामयानां राजाधिराजा च रसायनानाम् ॥ ५ ॥ इति बृहद्भल्लातकलेहः ॥

## ॥ अथार्शसि शर्करासवः ॥

दुरालभायाः प्रस्थस्य चित्रकस्य वृषस्य च । पथ्यामलकयोश्चैव पाठाया नागरस्य च ॥ १ ॥ दद्याद्विपलिकान्भागाञ्जलद्रोणे विपाचयेत् । पादशेषे रसे पूते सुशीते शर्कराशतम् ॥ २ ॥ दत्वा कुम्भे दृढे स्थाप्यं मासार्धं घृतभाजने । प्रलिप्ते पिप्पलीचव्यप्रियङ्गुमधुसर्पिषा ॥ ३ ॥ तस्य मात्रां पिबेत्काले शार्करस्य यथाबलम् । अर्शांसि ग्रहणीरोगमुदावर्तमरोचकम् ॥ ४ ॥ शकृन्मूत्रानिलोद्गारविबन्धानग्निमार्दवम् । हृद्रोगं पाण्डुरोगं च सर्वरोगान्प्रणाशयेत् ॥ ५ ॥ इति शर्करासवः ॥

---

१ ( ग० ङ च० छ० ) क्काथ ।

## ॥ अथ द्राक्षासवः ॥

द्राक्षापलशतं दत्वा चतुर्द्रोणेऽम्भसः पचेत् । द्रोणशेषे रसे तस्मिन्पूतशेषे मदापयेत् ॥ १ ॥ शर्करायास्तुलां दत्वा तत्तुल्यं मधुनस्तथा । पलानि सप्त धातक्याः स्थापयेदाज्यभाजने ॥ २ ॥ जातीलवङ्गकक्कोललवलीफलचन्दनैः । कृष्णा त्रिगन्धसंयुक्ता भागैरर्धपलांशकैः ॥ ३ ॥ त्रिःसप्ताहाद्भवेत्पेयं तत्र मात्रा यथाबलम् । नाम्ना द्राक्षासवो ह्येष नाशयेद्गुदकीलकान् ॥४॥ शोषारोचकहृत्पाण्डुरक्तपित्तभगन्दरान् । गुल्मोदरकृमिग्रन्थिक्षतशोषज्वरान्तकृत्. ॥ वातपित्तप्रशमनः शस्तश्च बलवर्णकृत् ॥ ५ ॥ इति द्राक्षासवः

## ॥ अथ समशर्करचूर्णम् ॥

शुण्ठीकणामरिचनागदलत्वगेलं चूर्णीकृतं क्रमविवर्धितमूर्ध्वमन्त्यात् । खादेदिदं समसितं गुदजाग्निमान्द्यगुल्मोदरश्वयथुपाण्डुगुदोद्भवेषु ॥ १ ॥ इति समशर्करचूर्णम् ॥

## ॥ अथ व्योषाद्यं चूर्णम् ॥

व्योपाग्न्यरुष्करविडङ्गतिलाभयानां चूर्णं गुडेन सहितं सततं प्रयोज्यम् । दुर्नामशोफगरकुष्ठशकृद्विबन्धमग्निर्जयत्यबलतां कृमिपाण्डुतां च ॥ १ ॥ चूर्णे चूर्णसमो देयो मोदके द्विगुणो गुडः । गुडव्योषवरावेल्लतिलारुष्करचित्रकैः ॥ अर्शांसि हन्ति गुटिका त्वग्निकरी च शीलिता ॥ २ ॥ गुडेन शुण्ठीमथवोपकुल्यां पथ्यां तृतीयामथ दाडिमं च ॥ आमेष्वजीर्णेषु गुदामयेषु वर्चोविबन्धेषु च नित्यमद्यात् ॥ ३ ॥ शर्करया युतसूरणकन्दः कुञ्जरकेसरमेव तथान्यत् ॥ क्षौद्रयुतं नवनीतमथो वा सूदनकारणमर्शस एव ॥ ४ ॥ समूलपत्रकोकम्बं पलद्वयमितं शुभम् । भल्लातफलमज्जाया मरीचस्य पलं पलम् ॥५॥ एतच्चूर्णीकृतं सूक्ष्मं भक्षयेत्कर्षसंमितम् । अर्शोऽङ्कुरान्निहन्त्याशु सबाह्याभ्यन्तरानपि ॥ ६ ॥ दुःस्पर्शकेन बिल्वेन यवान्या नागरेण वा । एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम् ॥ ७ ॥ अपामार्गस्य बीजानां कल्कं तण्डुलवारिणा । पीतं रक्तार्शसां नाशं कुरुते नात्र संशयः ॥ ८ ॥ चन्दनकिराततिक्तकधन्वयवासाः सनागराः क्वथिताः । रक्तार्शसां प्रशमना दार्वीत्वगुशीरनिम्बाश्च ॥ ९ ॥ त्रिदोषजित्स्यो हितं तक्रं यवानीविश्वसंयुतम् । न प्ररोहन्ति गुदजाः प्रायस्तक्रसमन्विताः ॥ १० ॥ यो जातो गोरसः क्षीराद्वह्निमूलावचूर्णितात् । पिबंस्तमेव तेनैव भुञ्जानो गुदजाङ्कुरान् ॥ ११ ॥ पिबेदहरहस्तक्रं निरन्नो वा सकामतः । सप्ताहं वा दशाहं वा मासार्धं मासमेव च ॥ १२ ॥ बलकालविकारज्ञो भिषक् तं च प्रयोजयेत् । हरीतकीं तक्रयुतां त्रिफलां वा प्रयोजयेत् ॥ १३ ॥ चित्रकं हपुषां

---

१ ( ग० च० छ० ) मात्राम् । २ ( ग० ङ० च० ) गदोद्भवेषु । ३ ( ग० ङ० च० छ० ) त्वग्निकारं च । ४ ( ग० ङ० च० छ० ) केशर ।

हिङ्गु दद्याद्वा तक्रसंयुतम्। पञ्चकोलकयुक्तं वा तक्रेणैव प्रदापयेत् ॥ १४ ॥ त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत्। तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत्। तक्रेणार्शांसि हन्यन्ते मुसलीकटुकाग्निना ॥१५॥ अरलुत्वगग्निसुरेन्द्रयवाश्चिरिबिल्वससैन्धवशुण्ठियुतान्। मथितेन पिबेद्यदि सप्तदिनं गुदजानि पतन्ति समूलबलात् ॥१६॥

## ॥ अथ हपुषादितक्रारिष्टः ॥

हपुषा कुञ्चिका धान्यमजाजी कारवी सटी। पिप्पली पिप्पलीमूलं चित्रको गजपिप्पली ॥ १ ॥ यवानी चाजमोदा च तच्चूर्णं तक्रसंयुतम्। मन्दाम्लकटुकं विद्वांस्थापयेद्घृतभाजने ॥ २ ॥ व्यक्ताम्लं कटुकं जातं तक्रारिष्टं कटुप्रियम्। प्रपिबेन्मात्रया काले त्वन्नस्य तृषितस्तृषा ॥ ३ ॥ दीपनं रोचनं वर्ण्यं कफवातानुलोमनम्। गुदश्वयथुकण्ड्वार्तिनाशनं बलवर्धनम् ॥ ४ ॥ इति हपुषादितक्रारिष्टः ॥

## ॥ अथ घृतानि ॥

चव्यं त्रिकटुकं पाठा क्षारं कुस्तुम्बरूणि च। यवानी पिप्पलीमूलमुभे च बिडसैन्धवे ॥ १ ॥ चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्। सकृद्वातानुलोमार्थं जाते दधिचतुर्गुणे ॥ २ ॥ प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्। गुदवङ्क्षणशूलं च घृतमेतद्व्यपोहति ॥ ३ ॥ इतिचव्यादिघृतम् ॥ अथ शुण्ठीघृतम् ॥ त्रिंशत्पलानि शुण्ठीनां जलद्रोणे विपाचयेत्। तेन पादावशेषेण कल्के तासां पचेद्घृतम् ॥ १ ॥ दुर्नामश्वासकासघ्नं प्लीहपाण्ड्वामयापहम्। विषमज्वरशान्त्यर्थं तृष्णारोचकनाशनम् ॥ २ ॥ शुण्ठीघृतमिदं ख्यातं कृष्णात्रेयेण पूजितम्। नागरेण जले पक्कं वस्तिकुक्षिगदापहम् ॥ ३ ॥ इत्यर्शसि शुण्ठीघृतम् ॥ अथ लघुचव्यादि घृतम् ॥ चव्यतिक्ताकलिङ्गानि शताह्वा लवणानि च। सर्पिरर्शोविकारघ्नं ग्रहणीदीपनं परम् ॥ १ ॥ इति लघुचव्यादिघृतम् ॥ अथ ह्रीबेरादिघृतम् ॥ ह्रीबेरमुत्पलं लोध्रं समङ्गाचव्यचन्दनम्। पाठा सातिविषा बिल्वं धातकी देवदारु च ॥ १ ॥ दार्वीत्वङ्नागरं मांसी मुस्तं क्षारो यवाग्रजः। चित्रकश्चेति पेष्याणि चाङ्गेरीस्वरसे घृतम् ॥ २ ॥ एकत्र साधयेत्सर्वं तत् सर्पिः परमौषधम्। अर्शोतिसारग्रहणीपाण्डुरोगे ज्वरेऽरुचौ ॥३॥ मूत्रकृच्छ्रे गुदभ्रंशे वस्त्यानाहप्रवाहिके। पिच्छास्रावेऽर्शसां शूले योज्यमेतत्त्रिदोषहृत् ॥ ४ ॥ इति ह्रीबेरघृतम् ॥ इति घृतानि ॥

## ॥ अथ लेपः ॥

आर्कं पयः सुधाकाण्डं कटुकालाबुपल्लवाः। करञ्जो बस्तमूत्रेण लेपनं श्रेष्ठमर्शसाम् ॥ १ ॥ सिन्धूत्थं देवदाल्याश्च बीजं काञ्जिकपेषितम् ॥ गुदाङ्कुरान्प्रलेपेन पातयत्यचलानपि ॥ २ ॥ कृष्णाशिरीषबीजार्कक्षीरैः सामरसैन्धवैः। हरिद्रा ऋक्षविड् गुञ्जा गोमूत्रे पिप्पलीयुतैः ॥ ३ ॥ एतल्लेपत्रयं योज्यं शीघ्रमर्शोविनाशनम्। ज्योति-

१ (क० छ० ग०) निघ्नन्ति। २ (च० छ०) शकृत्। ३ (च०) जले।

ष्कावीजकल्केन लेपो रक्तार्शसां हितः ॥ ४ ॥ कोशातकीरजोघर्षान्निपतन्ति गुदो-द्भवाः। निशाकोशातकीचूर्णं स्नुकूपयःसैन्धवान्वितम्। गोमूत्रेण समायुक्तं लेपो दुर्नामनाशनः ॥ ५ ॥ इति लेपः ॥

## ॥ अथ धूपः ॥

नृकेशाः सर्पनिर्मोको वृषदंशस्य चर्म च। अर्कमूलं शमीपत्रमर्शोभ्यो धूपनं हितम् ॥ १ ॥ रालचूर्णस्य तैलेन सार्षपेण युतस्य च। धूमदानेन युक्त्यार्शोरक्तस्रावो निवर्तते ॥ २ ॥ गोधूमपिष्टं पलमेव हिङ्गु शागार्धमारुष्करमब्धिसङ्ख्यम् ॥ स्याद्धूपदानाद्गुदशूलनाशः स्यात्सन्निपातो* गुदसंभवानाम् ॥ ३ ॥ इति धूपः ॥

## ॥ अथ रसाः ॥

विषरविगगनायःसूतगन्धं समांशं समहुतभुगथार्द्रं कन्दकैः सप्तवारम्। प्रबल-गुदजकीलं हन्ति नित्योदितोऽसौ नलहतिमलबन्धे मुद्गमात्रः ससर्पिः ॥१॥ इति नि-त्योदितो रसः ॥ अथार्शःकुठारो रसः॥ भागः शुद्धरसस्य भागयुगलं गन्धस्य लोहा-भ्रयोः षड्बिल्वाग्निहलोषणाभयरजोदन्ती च भागैः पृथक्। पञ्च स्युः स्फुटटङ्कणस्य च यवक्षारस्य सिन्धूद्भवाद्भागाः पञ्च गवां जलं सुविमलं द्वात्रिंशदेतत्पचेत् ॥ स्नुग्दुग्धं च गवां जलावधि शनैः पिण्डीकृतं तद्भवेद्द्वौ माषौ गुदकीलकाननुजटाच्छेदे कुठारो रसः ॥ १ ॥ इत्यर्शःकुठारो रसः ॥ इति रसाः ॥

## ॥ अथ पथ्यापथ्यम् ॥

कुलित्था यवगोधुमाः शालयो रक्तभा हिताः। पुनर्नवा सूरणं च तक्रं धात्री कपित्थकम् ॥१॥ नवनीतं तु वास्तूकं पटोलं मरिचं तथा। मृगमांसमजादुग्धं वृन्ताकं काञ्जिकं तथा ॥ २ ॥ अर्शोरोगे तु पथ्यानि मुनिभिः कथितानि तु। वेगावरोधः स्त्रीपृष्ठयानमुत्कटकासनम्। यथास्वं दोषलं चान्नमर्शसः परिवर्जयेत् ॥ ३ ॥ इत्यर्श-श्चिकित्सा समाप्ता ॥

## ॥ अथाग्निमान्द्यम् ॥

तत्र सन्निकृष्टनिदानपूर्वकोदराग्निविकारानाह।

मन्दस्तीक्ष्णोऽथविषमः समश्चेति चतुर्विधः। कफपित्तानिलाधिक्यात्तत्साम्या-ज्जाठरोऽनलः ॥ १ ॥

## ॥ अथ समविषमाद्यग्निलक्षणान्याह ॥

समा समाग्नेरशिता मात्रा सम्यग्विपच्यते। स्वल्पापि नैव मन्दाग्नेर्विषमाग्नेस्तु दे-

---

* सन्निपातः = पतनम्।

१ (ग० छ०) भल्लातकवेदयुक्तः। २ (ख०) नित्यादित्यो रसः। ३ (च०) कीलकद्रुमजटा। ४ (घ०) यथादोषं चान्नपानम्।

हिनः ॥ कदाचित्पच्यते सम्यक्कदाचिन्नैव पच्यते ॥ १ ॥ मात्रातिमात्राप्यशिता सुखं यस्य विपच्यते । तीक्ष्णाग्निरिति तं विद्यात्समाग्निः श्रेष्ठ उच्यते ॥ २ ॥ विषमो वातजान्रोगांस्तीक्ष्णः पित्तनिमित्तजान् ॥ करोत्यग्निस्तथा मन्दो विकारान्कफसंभवान् ॥ ३ ॥

## ॥ अथैषां चिकित्सामाह ॥

समस्य रक्षणं कार्यं विषमे वातनिग्रहः । तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥ १ ॥ सममग्निं भिषग् रक्षेदन्नपानैर्नृणां हितैः । मन्दं संवर्धयेदग्निं कटुतिक्तकषायकैः ॥२॥ तीक्ष्णमग्निं दधिक्षीरपायसैः समतां नयेत् । स्नेहाम्ललवणाद्यैश्च विषमाग्निमुपाचरेत् ॥ ३ ॥ जरणरुचकशुण्ठीपिप्पलीतीक्ष्णवेल्लं सुलवणमजमोदाहिङ्गुपथ्येतिकर्षम् । पृथगथ पलमात्रं स्यात्त्रिवृच्चूर्णमेषां जननमुदरवह्नेः पाचनं रेचनं च ॥ ४ ॥ इत्यग्निमान्द्यम् ॥

## ॥ अथ भस्मकलक्षणमाह ॥

कफे क्षीणे यदा पित्तं स्वस्थाने मारुतानुगम् । तीव्रं प्रवर्तयत्यग्निं तदा तं भस्मकं वदेत् ॥ १ ॥ कट्वादिरूक्षान्नभुजां नराणां क्षीणे कफे मारुतपित्तवृद्धौ । अतिप्रवृद्धः पवनान्वितोऽग्निः क्षणाद्रसं शोषयति प्रसह्य ॥ २ ॥ भुक्तं क्षणाद्भस्म करोति यस्मात्तस्मादयं भस्मकसंज्ञकोऽभूत् । तृड्दाहमूर्छाभ्रमकासशोफविट्शोषमोहश्रमकर्मकारी ॥ ३ ॥ तृड्दाहश्वासकासादीन्कृत्वान्यानग्निसम्भवान् । पक्त्वान्नमाशु धात्वादीन् स क्षिप्रं नाशयेद्ध्रुवम् ॥ ४ ॥

## ॥ अथ चरकपाठे भस्मकः ॥

नरे क्षीणकफे पित्तं कुपितं मारुतानुगम् । सोष्मणः पाचकस्थाने बलमग्नेः प्रयच्छति ॥१॥ तदा लब्धबलो देहं रूक्षयेत् सोऽनिलोऽनलम् । अभिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः ॥२॥ पक्त्वान्नं स ततो धातूञ्शोणितादीन्पचत्यपि । ततो दौर्बल्यमातङ्कं मृत्युं चोपनयेत्परम् ॥३॥ भुक्ते न लभते शान्तिं जीर्णमात्रे प्रशाम्यति । तृड्दाहकासमोहाः स्युर्व्याधयोऽत्यग्निसम्भवाः ॥ ४ ॥

## ॥ अथाजीर्णनिदानम् ॥

अविपक्कोऽग्निमान्द्येन यो रसः स निगद्यते । रोगाणां प्रथमो हेतुः सर्वेषामामसंज्ञया ॥ १ ॥ आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः । अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ २ ॥ अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च । वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् ॥ ३ ॥

## ॥ अथ तेषां कारणमाह ॥

ग्लानिगौरवविष्टम्भभ्रममारुतमूढताः । विबन्धोऽतिप्रवृत्तिर्वा सामान्याजीर्णलक्ष-

णम् ॥ अजीर्णाज्जायते रोगस्तस्माद्रक्षेदजीर्णकात् ॥ १ ॥ अत्यम्बुपानाद्विषमाशनाच्च सन्धारणात्स्वप्नविपर्ययाच्च । कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ॥ २ ॥ ईर्ष्याभयक्रोधपरिप्लुतेन लुब्धेन रुग्दैन्यनिपीडितेन । प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक् पचते नरस्य ॥ ३ ॥ मात्रया चाभ्यवहृतं पथ्यं चान्नं न जीर्यते । चिन्ताशोकभयक्रोधदुःखशय्याप्रजागरैः ॥ ४ ॥ तत्रामे गुरुतोत्क्लेदः शोफो गण्डाक्षिकूटयोः । उद्गारश्च यथाभुक्तमविदग्धः प्रवर्तते ॥ ५ ॥ विदग्धे भ्रमतृण्मूर्छाः पित्ताच्च विविधा रुजः । उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥६॥ विष्टब्धे शूलमाध्मानं विविधा वातवेदनाः । मलवाताप्रवृत्तिश्च मोहःस्तम्भोऽङ्गपीडनम् ॥ ७ ॥

## ॥ अथ रसशेषलक्षणमाह ॥

उद्गारशुद्धावपि भक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य । रसावशेषेण चतुर्थमेतत्कचित्त्वजीर्णं प्रवदन्ति तज्ज्ञाः ॥ १ ॥ रसशेषेऽन्नविद्वेषो हृदयाशुद्ध्यरोचकौ । मूर्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः ॥ २ ॥ उपद्रवा भवन्त्येते मरणं चात्यजीर्णतः । यावत्सन्तिष्ठते तस्य दुष्टोऽप्यन्नरसो हृदि ॥ तावन्मर्माणि भिद्यन्ते विषं पीतवतो यथा ॥ ३ ॥ अनात्मवन्तः पशुवद्भुञ्जते येऽप्रमाणतः । रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि ॥ ४ ॥ स्वल्पं यदा दोषविबद्धमामलीनं न तेजःपथमावृणोति । भवत्यजीर्णेऽपि तदा बुभुक्षा सा मन्दबुद्धिं विषवन्निहन्ति ॥ ५ ॥ प्रायेणाहारवैषम्यादजीर्णं जायते नृणाम् । तन्मूलो रोगसङ्घातस्तद्विनाशाद्विनश्यति ॥ ६ ॥

## ॥ अथाजीर्णोपद्रवानाह ॥

अजीर्णमामं विष्टब्धं विदग्धं यदुदीरितम् । विषूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥ १ ॥ अथ विषूचीमाह ॥ सूचिभिरिव गात्राणि तुदन्सन्तिष्ठतेऽनिलः । यस्यामजीर्णात्सा वैद्यैर्विषूचीति निगद्यते ॥ १ ॥ न तां परिमिताहारा लभन्ते विदितागमाः । मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥ २ ॥ मूर्छातिसारो वमथुः पिपासा शूलभ्रमोद्वेष्टनजृम्भदाहाः । वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्यां शिरसश्च भेदः ॥ ३ ॥ अथालसकमाह ॥ कुक्षिरानह्यतेऽत्यर्थं मुह्यते परिकूजति । निरुद्धो मारुतश्चैव कुक्षावुपरि धावति ॥ १ ॥ वातवर्चोनिरोधस्तु तस्यात्यर्थं भवेदपि । तस्यालसकमाचष्टे तृष्णोद्गारौ तु यस्य हि ॥२॥ अथ विलम्बिकामाह ॥ दुष्टं तु भुक्तं कफमारुताभ्यां प्रवर्तते नोर्ध्वमधश्च यस्य । विलम्बिकां तां भृशदुश्चिकित्स्यामाचक्षते शास्त्रविदः पुराणाः ॥ १ ॥ अथाजीर्णजन्यामस्य कार्यान्तरमाह ॥ यत्रस्थमामं विरुजेत्तमेव देशं विशेषेण विकारजातैः । दोषेण येनावततं शरीरं तल्लक्षणैरामसमुद्भवैश्च ॥१॥ विषूच्यलसयोरसाध्यत्वमाह ॥ यः श्यावदन्तौष्ठनखोऽल्पसंज्ञो वम्यर्दितो-

---

१ (ख०) शुग्दैन्य ।

ऽभ्यन्तरयातनेत्रः। क्षामस्वरः सर्वविमुक्तसन्धिर्यायान्नरोऽसौ पुनरागमाय ॥ १ ॥ निद्रानाशोऽरतिः कम्पो मूत्राघातो विसंज्ञिता। अमी ह्युपद्रवा घोरा विषूच्याः पञ्च दारुणाः ॥ २ ॥ अथ जीर्णाहारलक्षणमाह ॥ उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः। लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥ ३ ॥ इत्यजीर्णनिदानम्॥

## ॥ अथाजीर्णचिकित्सितं व्याख्यास्यामः ॥

प्रायेणाहारवैषम्यादजीर्णं जायते नृणाम्। तन्मूलो रोगसङ्घातस्तद्विनाशाद्विनश्यति ॥ १ ॥ तत्रामे वमनं[1]कार्यं विदग्धे लङ्घनं हितम्। विष्टब्धे स्वेदनं शस्तं रसे शेषे शयीत च ॥ २ ॥ वचालवणतोयेन वान्तिरामे प्रशस्यते। धान्यनागरसिद्धं वा तोयं दद्याद्विचक्षणः। आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम् ॥ ३ ॥ अन्नं विदग्धं तु नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति। तदास्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् ॥ ४ ॥ विष्टब्धे स्वेदनं कार्यं पेयं च लवणोदकम्। रसशेषे दिवा स्वापं लङ्घनं वातवर्जनम् ॥ ५ ॥ एरण्डतैले प्रविपाच्य पथ्यां खादेत्तदेवानु पिबेच्च तैलम्। स शूलविष्टम्भकृतान्विकारान् सर्वाञ्जयेत्पित्तकफानिलोत्थान् ॥६॥ आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः। दिवा स्वापं प्रकुर्वीत सर्वाजीर्णप्रणाशनम् ॥ ७ ॥ व्यायामप्रमदाध्ववाहनरतान् क्लान्तानतीसारिणः शूलश्वासवतस्तृषापरिगतान्हिक्कामरुत्पीडितान्। क्षीणान् क्षीणकफाञ्शिशून्मदहतान्वृद्धांस्तथाजीर्णिनो रात्रौ जागरितान्नरान्निरशनान्कामं दिवा स्वापयेत् ॥ ८ ॥

## ॥ अथ चूर्णानि ॥

पथ्यापिप्पलिसंयुक्तं चूर्णं सौवर्चलं पिबेत्। मस्तुनोष्णोदकेनाथ मत्वा दोषगतिं भिषक् ॥ १ ॥ चतुर्विधमजीर्णं च मन्दानलमथारुचिम्। आध्मानं वातगुल्मं च शूलं चाशु विनाशयेत् ॥ २ ॥ इति पथ्यादिचूर्णम् ॥ सिन्धूत्थपथ्यमगधोद्भववह्निचूर्णमुष्णाम्बुना पिबति यः खलु नष्टवह्निः। तस्यामिषेण सघृतेन सहान्नपानं भस्मीभवत्यशितमात्रमपि क्षणेन ॥ १ ॥ इति लघुवैश्वानरचूर्णम् ॥ अथ हिङ्ग्वादिचूर्णम् ॥ त्रिकटुकमजमोदासैन्धवं जीरके द्वे समचरणकृतानामष्टमो हिङ्गुभागः। प्रथमकवलभोजी सर्पिषा चूर्णमेतज्जनयति जठराग्निं वातगुल्मं निहन्ति ॥ १ ॥ अन्यच्च। कर्षं हिङ्गु द्विकर्षं बिडमथ मरिचं सैन्धवं विश्वकृष्णादीप्याजाजीराजमोदासितजरणबिभीताभया वेदकर्षाः। अष्टौ मार्कण्डिधात्र्योरथ बदरकपित्थोद्भवाः षोडश स्युः सर्वं लुङ्गोदकार्द्रं हरति रुचिवधाध्माविबन्धाग्निसादान् ॥१॥ इति हिङ्ग्वादिचूर्णम् ॥ अथ लवणभास्करचूर्णम् ॥ पिप्पली पिप्पलीमूलं धान्यकं कृष्णजीरकम्। सैन्धवं च बिडं चैव पत्रतालीसकेसरान् ॥ १ ॥ एषां द्विपलकान् भागान् पञ्च सौवर्चलस्य च।

---

1 (ख० ग० घ०) विदग्धस्य।

मरीचाजाजिशुण्ठीनामेकैकस्य पलं पलम् ॥ २ ॥ त्वगेला चार्धभागा स्यात्सामुद्रं कुडवद्वयम्। दाडिमं कुडवं चैव द्विपलं चाम्लवेतसम् ॥ ३ ॥ एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम्। लवणं भास्करं नाम भास्करेण विनिर्मितम् ॥ ४ ॥ श्लेष्मवातं वातगुल्मं शूलं मन्दाग्न्यरोचकम्। अन्यानपि निहन्त्याशु रोगांल्लवणभास्करः ॥५॥

## ॥ अथाग्निमुखचूर्णम् ॥

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत्। पिप्पली त्रिगुणा ज्ञेया शृङ्गबेरं चतुर्गुणम्॥१॥यवानिका पञ्चगुणा षड्गुणा च हरीतकी। चित्रकः सप्तगुणितः कुष्ठं चाष्टगुणं भवेत् ॥२॥ एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नया। पिबेद्दध्ना मस्तुना वा सुरया कोष्णवारिणा ॥ ३ ॥ सोदावर्तमजीर्णं च प्लीहानमुदरं तथा। अङ्गानि यस्य शीर्यन्ते विषं वा येन भक्षितम् ॥ ४ ॥ अर्शोहरो दीपनश्च शूलघ्नो गुल्मनाशनः। कासं श्वासं निहन्त्याशु तथैव क्षयनाशनः॥ ५ ॥ चूर्णो ह्यग्निमुखो नाम्ना न कश्चित्प्रतिहन्यते ॥ ६ ॥ अथ सामुद्राद्यं चूर्णम् ॥ सामुद्रसौवर्चलसैन्धवानां क्षारो यवानामजमोदकं च। हरीतकीपिप्पलिशृङ्गबेरं हिङ्गु विडङ्गं च समानि दद्यात् ॥ १ ॥ संचूर्ण्य चैतानि घृतप्लुतानि भुञ्जीत चादौ कवलानि पञ्च। अजीर्णवातं गुदगुल्मवातं वातप्रमेहं विषमं च वातम् ॥ विषूचिकामलपाण्डुरोगान् श्वासं च कासं च जयेदवश्यम् ॥ २ ॥ अथ व्योषाद्यं चूर्णम् ॥ व्योषैलाहिङ्गुभार्गीविडलवणयवक्षारपाठायवानीचिञ्चात्वग्भस्मचव्यं दहनकरिकणात्वक्पटुग्रन्थ्यजाजी। एतच्चूर्णं घृताढ्यं त्रिदिवसमशनाद्धन्यते रोगजातं विश्वं वैश्वानरोऽसौ दहति सरभसं किं पुनर्भुक्तमन्नम् ॥ १ ॥ इति चूर्णानि ॥

## ॥ अथ गुटिकाः ॥

विडङ्गं नागरं कृष्णा पथ्या वह्निर्बिभीतकः[2]। वचा गुडूची भल्लातं विषं चात्र प्रयोजयेत्[1] ॥ १ ॥ एतानि समभागानि गोमूत्रेणैव पेषयेत्। गुञ्जाभा गुटिकाः कार्या दद्यादार्द्रकजै रसैः ॥ २ ॥ एकामजीर्णयुक्तस्य द्वे विषूच्यां प्रदापयेत्। तिस्रो भुजङ्गदष्टस्य चतस्रः सन्निपातिनः॥ गुटिका जीवनी नाम्ना संजीवयति मानवम्॥३॥ इति संजीवनीगुटिका ॥ अथ धनञ्जयवटी ॥ जीरकं चित्रकं चव्यं सप्तगन्धं वचात्वचौ। एलाकर्चूरहपुषा कारवी नागकेसरम् ॥ १ ॥ पृथक् कर्षमिता ह्येते मिश्रीकर्षार्धसंमिता[3] [4]यवानी पिप्पलीमूलं स्वर्जिका च हरीतकी ॥ २ ॥ जातीफलं लवङ्गं च पृथक्कर्षयुगं मतम्। धान्यकं चित्रकं चापि कर्षत्रयमितं पृथक् ॥ ३ ॥ कृष्णा पलप्रमाणा स्यात्पलमानं तु रौमकम्। मरीचान्यपि चवः सप्त त्रिवृन्मूलात्पलद्वयम् ॥ ४ ॥ पृथगूदशाक्षं सामुद्रं सैन्धवं नागरं तथा। शरावसंमितं चुक्रं तदर्धं तिन्तिणीफलम् ॥ ५ ॥ धनञ्जयवटी ह्येषा धनञ्जयविवर्धनी।

१ (च०) कुर्यात्। २ (च०) बिभीतकाः। ३ (च०) मिश्री। ४ (ख०) पत्रकम्। ५ (ख० ग०) रामठम्।

अजीर्णं जरयत्याशु शूलमुन्मूलयेद्‌द्रुतम् ॥ ६ ॥ हरेद्विबन्धसंबन्धमाध्मानं कर्षयत्यपि । ग्रहण्या निग्रहं कुर्याद्रचयेद्रुचिमुत्तमाम् ॥ ७ ॥ इति धनञ्जयवटी ॥ अथ शङ्खवटी रसार्णवतः ॥ चिञ्चाश्वत्थस्नुहीक्षारादपामार्गार्कतस्तथा । लवणं पञ्च संगृह्य ततो लवणपञ्चकम् ॥ १ ॥ सैन्धवाद्यं समादाय सर्वमेतत्पलद्वयम् । द्वौ द्वौ कर्षौ पृथक्कार्यौ तथा द्वौ शङ्खचूर्णतः ॥२॥ कर्षं कर्षं विषं गन्धं रसं टङ्कणमेव च । हिङ्गुपिप्पलिशुण्ठीनां तथा मरिचजीरयोः॥३॥ फलत्रयाच्च कर्षैकं द्विकर्षं तु लवङ्गतः । एतत्सर्वं समासाद्य श्लक्ष्णचूर्णीकृतं शुभम् ॥ ४ ॥ भावयेदम्लयोगेन सप्तधा च प्रयत्नतः । रसः शङ्खवटी नाम्ना सेवितः सर्वरोगजित् ॥ ५ ॥ गुञ्जामात्रमिदं खादेद्वह्निदीपनपाचनम् । अजीर्णं वातसम्भूतं पित्तश्लेष्मभवं तथा । विषूचीं शूलमानाहं हन्यादत्र न संशयः ॥ ६ ॥ इति शङ्खवटी ॥ अथ द्वितीया शङ्खवटी ॥ चिञ्चाक्षारपलं पटुव्रजपलं निम्बुद्रवे कल्कितं तस्मिन् शङ्खपलं प्रतप्तमसकृन्निर्वाप्य शीर्णावधि । हिङ्गुव्योषपलं रसामृतबलीन्निक्षिप्य निष्कांशकान्बद्ध्वा शङ्खवटी ज्वरग्रहणिकारुक्पक्तिशूलादिषु ॥१॥ इति गुटिकाः ॥

## ॥ अथामृतहरीतकी ॥

तक्रे समुत्स्वेद्य शिवाशतानि तद्बीजमुद्धृत्य च कौशलेन । षड्‌षणं पञ्च पटूनि हिङ्गुक्षारावजाजीमजमोदकं च ॥ १ ॥ षड्‌षणादेस्त्रिवृदर्धभागा गणस्य देयाम्बरगालितस्य । विभाव्य चुक्रेण रजांस्यमीषां क्षिपेच्छिवाबीजनिवासगर्भे ॥ २ ॥ समूह्य घर्मे च विशोष्य तासां हरीतकीमन्यतमां निषेवेत् । अजीर्णमन्दानलजाठरामयान्सगुल्मशूलग्रहणीगुदाङ्कुरान् ॥ विबन्धमानाहरुजो जयत्यसौ तथाप्रवातांस्त्वमृताहरीतकी ॥ ३ ॥ इत्यमृतहरीतकी ॥

## ॥ अथावलेहः ॥

विडङ्गभल्लातकचित्रकाभयाः सनागरास्तुल्यगुडेन सर्पिषा । अश्नन्ति ये मन्दहुताशना नरा भवन्ति ते वाडवतुल्यवह्नयः ॥ १ ॥ इति विडङ्गाद्यवलेहः । विदह्यते यस्य तु भुक्तमात्रं दह्यन्ति हृत्कोष्ठगतामलाश्च । द्राक्षां सितामाक्षिकसंप्रयुक्तां लीढ्वाभयां वा स सुखं लभेत ॥ १ ॥

## ॥ अथ यवागूः ॥

चित्रकचविकानागरमागधिकोग्रैर्यवागूः स्यात् । गुल्मानिलशूलहरी चित्राद्या वह्निजननी च ॥ १ ॥ इति चित्रकादिः ॥

## ॥ अथ क्वाथः ॥

लवङ्गपथ्ययोः क्वाथः सैन्धवेनावधूलितः । पीतः प्रशमयत्याशु त्वजीर्णं रेचय-

१ (ग० छ०) रुचिप्रदा । च० सुखप्रदा । २ (ग० च० छ०) त्युग्रमजीर्णम् ।

त्यपि ॥ १ ॥ धान्यनागरसिद्धं वा तोयं दद्याद्विचक्षणः । आमाजीर्णप्रशमनं शूलघ्नं वह्निदीपनम् ॥ २ ॥

## ॥ अथ घृतानि ॥

अथाग्निकरं घृतम् । पञ्चमूल्यभयाव्योषपिप्पलीमूलसैन्धवैः । रास्नाक्षारद्वयाजाजीविडङ्गसटिभिर्घृतम् ॥ १ ॥ युक्तेन मातुलिङ्गस्य स्वरसेनार्द्रकस्य च । तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः ॥ २ ॥ काञ्जिकेन च यत्पक्कं पीतमग्निकरं स्मृतम् । शूलगुल्मोदरश्वासकासानिलकफापहम् ॥ ३ ॥ इत्यग्निकरं घृतम् ॥ अथ मूलघृतम् ॥ मरीचं पिप्पलीमूलं नागरं पिप्पली तथा । भल्लातकं यवानी च विडङ्गं गजपिप्पली ॥ १ ॥ हिङ्गु सौवर्चलं चैव त्वजाजी बिडधान्यकम् । सामुद्रं सैन्धवं क्षारं चित्रकं वचया सह ॥ २ ॥ एभिरर्धपलैर्भागैर्घृतं प्रस्थं विपाचयेत् । दशमूलरसे सिद्धं पयसाष्टगुणेन वा ॥ ३ ॥ मन्दाग्नेश्च हितं सिद्धं ग्रहणीदोषनाशनम् । विष्टम्भमामं दौर्बल्यं प्लीहानमपकर्षयेत् ॥ ४ ॥ कासं श्वासं क्षयं वापि दुर्नामसभगन्दरम् । कफजान्हन्ति रोगांश्च वायुजान्क्रमिसम्भवान् । तान्सर्वान्नाशयत्याशु शुष्कं दार्वनलो यथा ॥ ५ ॥ इति दशमूलघृतम् ॥ इति घृतानि ॥

## ॥ अथाजीर्णकुलकण्डनगणः ॥

नारीकेलफलेषु तण्डुलमथ क्षीरं रसाले हितं जम्बीरोत्थरसो घृते समुचितः सर्पिस्तु मोचाफले । गोधूमेषु च कर्कटी हिततमा मांसाशिने काञ्जिकं नारङ्गे गुडभक्षणं प्रकथितं पिण्डालुकं कोद्रवे ॥ १ ॥ पनसे कदलं कदले च घृतं घृतपाकविधावपि जम्भरसः । तदुपद्रवशान्तिकरं लवणं लवणेषु च तण्डुलवारि परम् ॥ २ ॥ गोधूमे कर्कटिका माषे तक्रं च मूलकं चणके । आमलकं किल मुद्गे दीप्यः पक्का तु यावनाले स्यात् ॥ ३ ॥ खण्डं च खण्डयति माषभवं ह्यजीर्णं तैलं कुलत्थजमिति प्रवदन्ति केचित् । द्राक्षामुकूलकनिकोचकसेवितं वा वातामवृन्तफलपाककरं लवङ्गम् ॥ ४ ॥ कङ्गुश्यामाकनीवारकोरदूषमकुष्ठकाः । दध्ना जलेन जीर्यन्ति काञ्जिकं त्वाढकीं पचेत् ॥ ५ ॥ पिष्टान्ने शीतलं वारि कृशरान्ने तु सैन्धवम् । माषेण्डर्यां निम्बमूलं मुद्गयूषस्तु पायसे ॥ ६ ॥ मत्स्य आम्रफलात्कूर्मो यवक्षाराद्विपच्यते । कोसमूलान्नीलकण्ठपारावतकपिञ्जलाः ॥ ७ ॥ पटोलवंशाङ्कुरकारवल्लीफलाम्बुनिम्बुक्कथितानि जग्ध्वा । क्षारोदकं ब्रह्मतरोर्निपीय भोक्तुं पुनर्वाञ्छति तावदेव ॥ ८ ॥ विपच्यते सूरणको गुडेन तथालुकं तण्डुलकोदकेन । पिण्डालुकं जीर्यति कोरदूषात्कसेरुपाकः खलु नागरेण ॥ ९ ॥ क्षीरं जीर्यति तक्रेण तद्रव्यं कोष्णमण्डतः । माहिषं माणिमन्थेन शङ्खचूर्णेन तद्दधि ॥ १० ॥ रसाला जीर्यति व्योषात्खण्डं

---

१ (क० ग० ङ०) क्षीर। २ (च०) रसैः। ३ (च०) मांसाशने। ४ (ग० च० छ०) काञ्जिकेन। ५ (च०) काश। ६ (च०) फलानि निम्ब। ७ (च०) पिण्डालुकाज्जीर्यतिकोरदूषः।

नागरभक्षणात् । गुडो नागरमुस्ताभ्यां तथेक्षुश्चार्द्रकाशनात् ॥ ११ ॥ इत्यजीर्णकुलकण्डनगणः ॥

## ॥ अथ रसाः ॥

दन्तीबीजमकल्मषं सदहनं शुण्ठीलवङ्गं समं गन्धं पारदटङ्कणं च मरिचं श्रीवृद्धदारो विषम् । खल्वे यामयुगं विमर्द्य विधिना दन्तीद्रवैर्भावना देयाः पञ्चदशानु निम्बुकजलैस्त्रेधा त्रिधा चित्रकैः ॥ १ ॥ त्रेधा चार्द्रकजै रसैः शुभधिया सप्तैव चोवेदिना पश्चाच्छुष्ककलायसंमितवटी कार्या भिषक्संमता । क्षुद्बोधप्रकरी त्रिशूलशमनी जीर्णज्वरध्वंसिनी कासारोचकपाण्डुतोदरगदान्पामामरुन्नाशिनी ॥ २ ॥ वस्त्याटोपहलीमकामयहरी मन्दाग्निसंदीपनी सिद्धेयं तु महोदधिप्रकटिता सर्वामयघ्नी सदा ॥ ३ ॥ इति बृहन्महोदधौ अजीर्णहरी वटी । रसेन्द्रचिन्तामणेः अग्निकुमारः । पारदं च विषं गन्धं टङ्कणं समभागतः। मरीचादष्टभागाः स्युर्द्वौ द्वौ शङ्खवराटयोः ॥ १ ॥ पक्वजम्बीरजैर्गाढं रसैः सप्त विभावयेत् । गुञ्जाद्वयमितो देयो रसो ह्यग्निकुमारकः ॥ २ ॥ समीरणसमुद्भूतमजीर्णं च विषूचिकाम् । क्षणेन क्षपयत्येष कफरोगनिकृन्तनः ॥ ३ ॥ इत्यग्निकुमारः ॥ अथ द्वितीयाग्निकुमारः । रसेन गन्धं सह टङ्कणेन समं विषं योज्यमतस्त्रिभागम् । कपर्दशङ्खावपि नेत्रभागौ मरीचकं चाष्टगुणं विमर्द्य ॥ १ ॥ सुपक्वजम्बीररसेन खल्वे शुद्धो भवत्यग्निकुमारकोऽयम् । अजीर्णवातं गुदगुल्मवातं विषूचिकाद्यं विनिहन्ति सद्यः ॥ २ ॥ इति द्वितीयोऽग्निकुमारः ॥ अथ लघुक्रव्यादः । पारदाद्विगुणं गन्धं गन्धांशं मृतलोहकम् । पिप्पली पिप्पलीमूलमग्निशुण्ठीलवङ्गकम् ॥ १ ॥ लोहसाम्यं पृथक्कुर्याद्रससाम्यं सुवर्चलम् । टङ्कणं मरिचं चापि गन्धतुल्यं प्रदापयेत् ॥ २ ॥ एतद्विचूर्ण्य यत्नेन भावयेत्सप्तधाम्लकैः । एतद्रसायनं श्रेष्ठं माषमात्रं प्रदापयेत् ॥ ३ ॥ तक्रेण केवलं वापि दद्याद्भोजनपाचने । क्षिप्रं तज्जीर्यते भुक्तं दीपनं भवति ध्रुवम् ॥ सर्वाजीर्णप्रशमनं लघुक्रव्यादसंज्ञितम् ॥४॥ इति लघुक्रव्यादः ॥ अथ बृहत्क्रव्यादः मन्थानभैरवात् । द्विपलं गन्धकं शुद्धं द्रावयित्वा विनिक्षिपेत् । पारदं पलमानं तु मृतशुल्बायसं पुनः ॥ १ ॥ पलमानेन संमिश्र्य पश्चात्कुलदले क्षिपेत् । ततो विचूर्ण्य यत्नेन लोहपात्रे विचक्षणः ॥ २ ॥ स्थापयेच्च रसं तत्र पात्रं चोपरि निक्षिपेत् । वस्त्रशुद्धं ततः कृत्वा लोहपात्रे विनिक्षिपेत् ॥ ३ ॥ मृद्वग्निना पचेत्तत्तु दर्व्या संचालयेन्मुहुः । पात्रमात्रं रसं [illegible] दद्याज्जम्बीरकस्य तु ॥ ४ ॥ संचूर्ण्य पञ्चकोलोत्थैः कषायैः साम्लवेतसैः । भावनाः किल दातव्याः पञ्चाशत्प्रमिताः पृथक् ॥ ५ ॥ भृष्टटङ्कणचूर्णं च तुल्येन सह मेलयेत् । तदर्धं कृष्णलवणं मरीचं सर्वतुल्यकम् ॥ ६ ॥ सप्तधा भावयेत्पश्चाच्चणकक्षारवारिणा । ततः संशोष्य संपिष्य कूप्याश्च जठरे क्षिपेत् ॥ ७ ॥ अत्यर्थं गुरुमांसानि गुरुभोज्यान्य-

१ ( ग० ङ० च० छ० ) दारं । २ ( च० ) चावेगिना । ३ ( क० ग० ङ०छ० ) सामा । ४ ( ख० ) सिद्धो । ५ ( ख० ) गन्धमर्धांशम् ।

भेकशः। भुक्त्वा चाकण्ठपर्यन्तं चतुर्वल्लमितो रसः ॥ ८ ॥ कट्वम्लतक्रसहितः पीतमात्रो हि पाचयेत्। पुनर्भोजयति क्षिप्रं का पुनर्मन्दवह्निता ॥ ९ ॥ रसः क्रव्यादनामायं प्रोक्तो मन्थानभैरवैः। सिंहलक्षोणिपालस्य भूरिमांसप्रियस्य च ॥ पुनर्भोजनकामस्य भैरवानन्दयोगिनः ॥ १० ॥ कुर्यादीपनमूर्ध्वजत्रुगदहृत् कुष्ठामसंशोधनस्तुन्दस्थौल्यनिबर्हणो मदहरः शूलार्तिमूलापहः। गुल्मप्लीहविनाशको बहुरुजां विध्वंसनो वातहा वातग्रन्थिमहोदरापहरणः क्रव्यादनामा रसः ॥ ११ ॥ इति बृहत्क्रव्यादः ॥ अथाजीर्णे योगाः ॥ द्वौ क्षारौ टङ्कणं सूतं लवङ्गं लवणत्रयम्। पिप्पली गन्धकं शुण्ठी मरीचं पलसंमितम् ॥ १ ॥ कर्षमेकं विषं दत्वा सूक्ष्मचूर्णानि कारयेत्। अर्कदुग्धस्य दातव्या भावना सप्तवासरम् ॥ २ ॥ अन्तर्धूमं गजपुटे स्वाङ्गशीतं समुद्धरेत्। ततो लवङ्गमरिचस्फटिकीनां पलं पलम् ॥ ३ ॥ सर्वं संमर्द्य दृढवद्दृढभाण्डे निधापयेत्। सायं गुञ्जाद्वयं खादेद्भुक्तं द्रावयति क्षणात् ॥ ४ ॥ पुनर्भोजनवाञ्छां च जनयेत्प्रहरोपरि। आममांसं द्रावयति श्लेष्मरोगनिकृन्तनम् ॥ ५ ॥

॥ अथाग्निमुखो रसः ॥ सूतं गन्धं विषं तुल्यं मर्दयेदार्द्रकद्रवैः। अश्वत्थचिञ्चापामार्गक्षारः क्षारौ च टङ्कणम् ॥ १ ॥ जातीफलं लवङ्गं च त्रिकटु त्रिफलासमम्। शङ्खक्षारं पञ्चपलं हिङ्गुजीरं द्विभागिकम् ॥ २ ॥ मर्दयेदम्लयोगेन गुञ्जामात्रा वटी शुभा। पाचनी दीपनी सद्योऽजीर्णशूलविषूचिकाः ॥ ३ ॥ हिक्कां गुल्मं चोदरं च नाशयेन्नात्र संशयः। रसेन्द्रसंहितायां च नाम्ना वह्निमुखो रसः ॥ ४ ॥ इत्यग्निमुखो रसः।

॥ अथाजीर्णारिरसः ॥ शुद्धं सूतं गन्धकं च पलमानं पृथक् पृथक्। हरीतकी च द्विपला नागरं त्रिपलं स्मृतम् ॥१॥ कृष्णा च मरिचं तद्वत्सिन्धूत्थं त्रिपलं पृथक्। चतुष्पला च विजया मर्दयेन्निम्बुकद्रवैः ॥ २ ॥ पुटानि सप्त देयानि घर्ममध्ये पुनः पुनः। अजीर्णारिरयं प्रोक्तः सद्यो दीपनपाचनः ॥ भक्षयेद्द्विगुणं भक्ष्यं पाचयेद्रेचयेदपि ॥ ३ ॥ इत्यजीर्णारिः ॥ अथ पाशुपतो रसः। धन्वन्तरीयमतात्। कर्षं सूतं द्विधा गन्धं त्रिभागं भस्मतीक्ष्णकम्। त्रिभिः समं विषं योज्यं चित्रकद्रवभावितम् ॥ १ ॥ द्विधा त्रिकटुकं योज्यं लवङ्गैले तु तत्समे। जातीफलं जातिपत्रं चार्धभागमितं मतम् ॥ २ ॥ तथार्धं पञ्चलवणं स्नुह्यर्कौ वापि तिन्तिणी। अपामार्गोऽश्वत्थ एषां लवणं च पलार्धकम् ॥ ३॥ टङ्कणं यावकक्षारं स्वर्जिकाहिङ्गुजीरकम्। हरीतकी सूततुल्या मर्दयेदम्लयोगतः ॥ ४ ॥ धूर्तबीजस्य वै भस्म सर्वैः सप्तमभागतः। रसः पाशुपतो नाम प्रोक्तः प्रत्ययकारकः ॥ ५ ॥ गुञ्जा मात्रा वटी कार्या सर्वाजीर्णविनाशिनी। तालमूली तक्रयोगादुदरामयनाशिनी ॥ ६ ॥ मोचरसेनातिसारं ग्रहणीतक्रसैन्धवैः। शूले नागरकं शस्तं हिङ्गुसौवर्चलान्वितम् ॥ ७ ॥ अर्शःसु तक्रेण हिता पिप्पली राजयक्ष्मणि। वातरोगं निहन्त्याशु शुण्ठीसौवर्चलान्विता ॥ ८ ॥ गुडूचीशर्करायोगात्पित्तरोगविनाशिनी। पिप्पलीक्षौद्रयोगेन श्लेष्मरोगान्निकृन्तति ॥

१ (घ०) मूर्ध। २ (ग० घ० छ०) दृढाम।

अतः परतरा नास्ति धन्वन्तरमते वटी ॥ ९ ॥ इति पाशुपतो रसः ॥ अथ रससिन्धोरादित्यरसः ॥ दरदं च विषं गन्धं त्रिकटु त्रिफलासमम् । जातीफलं लवङ्गं च लवणानि च पञ्च वै ॥ १ ॥ सर्वमेतत् कृतं चूर्णमम्लयोगेन सप्तधा । भावयित्वा वटी कार्या गुञ्जार्धप्रमिता बुधैः ॥ २ ॥ रसो ह्यादित्यसंज्ञोऽयमजीर्णक्षयकारकः । भुक्तमात्रं पाचयति जठरानलदीपनः ॥ ३ ॥ इत्यादित्यरसः ॥ अथ हुताशनः ॥ एकं च दिग्द्वादशभागमानं योज्यं विषं टङ्कणमूषणं च । हुताशनो नाम हुताशनस्य करोति वृद्धिं कफवातहन्ता ॥१॥ अन्यच्च । एकांशकाः पारदगन्धटङ्काः कपर्दशङ्खामृतगेहधूमाः । त्र्यंशा इमेऽथो मरिचं त्रिभागं संमर्दितं जम्भरसेन गाढम् ॥ १ ॥ गुल्मारोचकशूलवह्निसदनाजीर्णं विषूचीकफं जाड्यं शीर्षसमुद्भवं च कसनं मुद्गप्रमाणा वटी ॥ लीढार्द्रस्य रसेन हन्ति कथितानेतान् गदान् ब्रह्मणा पूर्वं निर्मित एष यत्नशतकैर्नाम्ना हुताशो रसः ॥ २ ॥ इतिहुताशनरसः ॥ अथाजीर्णकण्टको रसः ॥ शुद्धसूतं विषं गन्धं प्रत्येकं च समं समम् । मरीचं सर्वतुल्यांशं कण्टकारिफलद्रवैः ॥ १ ॥ मर्दयेद्भावयेद्यत्नादेकविंशतिवारकम् । गुञ्जात्रयमिदं खादेत्सर्वाजीर्णप्रशान्तये ॥ सर्वोपद्रवसंयुक्तां विषूचीमपि नाशयेत् ॥ २ ॥ इति रसाः ॥

## ॥ अथ विषूच्यादिचिकित्सा ॥

सूचीभिरिव गात्राणि तुदन्संतिष्ठतेऽनिलः । यस्याजीर्णेन सा वैद्यैर्विषूचीति निगद्यते ॥ १ ॥ विषूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते । गन्धकं कुङ्कुमं वापि दद्यान्निम्बुजलेन वा ॥ २ ॥ व्योषं करञ्जस्य फलं हरिद्रानिम्बुकद्रवैः । नस्याञ्जने प्रयोक्तव्ये कुर्याच्च जलसेवनम् ॥ ३ ॥ व्योषं करञ्जस्य फलं हरिद्रामूलं समावाप्य च मातुलुङ्ग्याः । छायाविशुष्का गुटिकाः कृतास्ता हन्युर्विषूचीं नयनाञ्जनेन ॥४॥ करञ्जनिम्बशिखरीगुडूच्यर्जुनवत्सकैः । पीतः कषायो वमनाद्घोरां हन्याद्विषूचिकाम्॥ ॥ ५ ॥ निम्बूरसं चिञ्चिणिकासमेतं विषूचिकाशोषहरं कफं च । दुग्धेन पीतो यदि टङ्कणोऽसौ प्रशाम्यतेऽयं वमनं विरोधः ॥ ६ ॥ पिपासायामनुत्क्लेशे लवङ्गस्याम्बु शस्यते । जातीफलस्य वा शीतं शृतं भद्रघनस्य वा ॥ ७ ॥ त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचाशताह्वैः । उद्वर्तनं खल्लिविषूचिकाघ्नं तैलं विपक्वं च तदर्थकारि ॥ ८ ॥

## ॥ अथ चुक्राद्यं तैलम् ॥

पलं चुक्रं कुष्ठं पिचुयुगमितं सैन्धवकणे तदर्धं प्रत्येकं करतलमितं जातिफलकम् । कटोस्तैलं किञ्चित्कुडवमितमन्नावधिशृतं तदेतच्चुक्राद्यं शमयति विषूचीं च सगदाम् ॥ १ ॥ इति चुक्राद्यं तैलम् । कुष्ठसैन्धवयोः कल्कं चुक्रतैलसमन्वितम् । विषूच्यां मर्दनं कोष्णं खल्लीशूलनिवारणम् ॥१॥ विलम्बिकालसकयोरूर्ध्वाधः शोधनं हितम् ।

---

१ (च०) प्रशाम्यते्द्वै । २ पिपासायां तथोत्क्लेशे इति भावप्रकाशस्थः पाठः । ३ (ग० छ० च०) शूक्तम् ।

पाकेन फलवर्त्या च तथा शोधनभेषजैः । दण्डाख्येऽलसकेऽप्युच्चैरयमेव क्रियाक्रमः ॥२॥ उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः । लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥ ३ ॥ विरुद्धासात्म्यपानान्नं विष्टम्भीनि गुरूणि च । अग्निमान्द्येऽप्यजीर्णे च सर्वाणि परिवर्जयेत् ॥ ४ ॥ फलवर्तिं वमिं स्वेदं लङ्घनं चापतर्पणम् । विशेषादलसे कुर्याद्विषूच्यामतिसारवत् ॥ ५ ॥ इत्यजीर्णचिकित्सा ॥

## ॥ अथ भस्मकरोगनिदानचिकित्से ॥

कफे क्षीणे यदा पित्तं स्वस्थाने मारुतानुगम् १ तीव्रं प्रवर्तयेद्वह्निं तदा तं भस्मकं वदेत् ॥१॥ तृड्दाहश्वासमूर्छादीन् कृत्वैवात्यग्निसंभवात् । पक्त्वान्नमाशु धात्वादीन् स क्षिप्रं नाशयेत्तनुम् ॥ २ ॥ तं भस्मकं गुरुस्निग्धसान्द्रमण्डहिमादिभिः । अन्नपानैर्नयेच्छान्तिं पित्तघ्नैश्च विरेचनैः ॥ ३ ॥ अत्युद्धताग्निशान्त्यै माहिषदधिदुग्धसर्पींषि । सेवेत वा यवागूं समधूच्छिष्टां ससर्पिष्काम्॥४॥असकृत् पित्तहरणं पायसं प्रतिभोजने । श्यामात्रिवृद्विपक्कं वा पयो दद्याद्विरेचनम् ॥५ ॥ यत्किञ्चिन्मधुरं मेध्यं श्लेष्मलं गुरु भोजनम् । सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा ॥ ६ ॥ कफे पूर्वं जिते पित्ते मारुते चानलः समः । समधातोः पचत्यन्नं पुष्ट्यायुर्बलवर्धनम् ॥ ७ ॥ आहारं पचति शिखी दोषानाहारवर्जितः पचति । दोषक्षये च धातून् धातुक्षैण्ये तथा प्राणान् ॥८॥ मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् । निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विषादयेत् ॥ ९ ॥ कोलास्थिमज्जकल्कस्तु पीतो वाप्युदकेन वै । अचिराद्विनिहन्त्येवं प्रयोगो भस्मकं नृणाम् ॥ १० ॥ नारीक्षीरेण संपिष्य पिबेदौदुम्बरत्वचम् । ताभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये ॥११॥ सिततण्डुलसितकलमाक्षीरेण पायसं सिद्धम् । भुक्त्वा दत्तेन पुरुषो द्वादश दिवसान् बुभुक्षितो न भवेत् ॥ १२ ॥ विदारिस्वरसे क्षीरे पचेदष्टगुणं घृतम् । माहिषं जीवनीयेन कल्केनात्यग्निनाशनम् ॥ १३ ॥ इति भस्मकरोगनिदानचिकित्से ॥

## ॥ अथ क्रिमिनिदानम् ॥

तत्र क्रिमिभेदानाह ॥ क्रिमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः । बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ॥ १ ॥ नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः ॥ बाह्यक्रिमिरूपाण्याह ॥ तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥ २ ॥ बहुपादाश्च सूक्ष्माश्च यूकालिक्षाश्च नामतः । द्विधा ते कोष्ठपिटिकाकण्डूगण्डान्प्रकुर्वते ॥ ३ ॥ तेषां निदानमाह । अजीर्णभोजी मधुराम्लसेवी द्रवप्रियः पिष्टगुडोपभोक्ता। व्यायामवर्जी च दिवाशयी च विरुद्धभोक्ता लभते क्रमींश्च ॥ ४ ॥ पुरीषजानां निदानमाह । माषपिष्टान्नलवणगुडशाकैः पुरीषजाः ॥ कफोद्भवनिदानमाह । मांसमा-

१ ( ग० च० ) प्रवर्धये— २ ( च० ) मन्द्रः । ३ ( ग० ङ० च० ) वर्धनः । ४ ( ग० ङ० च० छ० ) निरन्धनो । ५ ( क०.(कल्मा) ग० कलसा घ० कलशा ङ० कल्या । ६ (ग० च० छ०) घृतेन ७ ( च० ) गुणे ।

षगुडक्षीरदधिशुक्तैः कफोद्भवाः ॥ ५ ॥ शोणितजानां कारणमाह । विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ॥ संजाताभ्यन्तरक्रमिलक्षणमाह । ज्वरो विवर्णता शूलं हृद्रोगश्छर्दनं भ्रमः ॥ ६ ॥ भक्तद्वेषोऽतिसारश्च संजातक्रिमिलक्षणम् ॥ कफजानां स्वरूपमाह । कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ॥ ७ ॥ पृथुवर्ध्रनिभाः केचित्केचिद्गण्डूपदोपमाः । रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाणवः ॥ ८ ॥ श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते । अन्त्रादाश्चोदरावेष्टा हृदयादा महामुखाः ॥ ९ ॥ चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते । हृल्लासमास्यस्रवणमविपाकमरोचकम् ॥ १० ॥ मूर्च्छाछर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥ अथ रक्तजानां स्वरूपमाह । रक्तवाहिशिरास्थाना रक्तजा जन्तवोऽणवः ॥ ११ ॥ अपादवृत्तास्ताम्राश्च सौक्ष्म्यात्केचिददर्शनाः । केशादा लोमविध्वंसा रोमद्वीपा उदुम्बराः ॥ १२ ॥ षट् ते कुष्ठैककर्माणः सहसौरसमातरः ॥ पुरीषजानां स्वरूपमाह ॥ पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ॥ १३ ॥ वृद्धास्ते स्युर्भवेयुश्च ते यदामाशयोन्मुखाः । तदास्योद्गारनिश्वासविड्बन्धानुविधायिनः ॥ १४ ॥ तेषां शरीरमाह । पृथग्वृत्ततनुस्थूलाः श्यावपीतसितासिताः । ते पञ्च नाम्ना क्रमयः ककेरुकमकेरुकाः ॥१५॥ सौसुरादाः सलूनाख्या लेलिहा जनयन्ति च । भ्रमः शूलं तथा छर्दिर्हृदयज्वलनज्वराः ॥ १६ ॥ वैवर्ण्यमतिसारः स्यादरुचिः क्रमिलक्षणम् । विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ॥ रोमहर्षोऽग्निसदनं गुदे कण्डूर्विमार्गगाः ॥ १७ ॥ इति क्रिमिनिदानम् ॥

## ॥ अथातः क्रिमिचिकित्सितं व्याख्यास्यामः ॥

मुस्ताखुपर्णीफलदारुशिग्रुक्वाथः सकृष्णाक्रमिशत्रुकल्कः । मार्गद्वयेनापि चिरप्रवृत्तान् क्रमीन्निहन्ति क्रिमिजांश्च रोगान् ॥ १ ॥ दाडिमत्वक्कृतः क्वाथस्तिलतैलेन संयुतः । त्रिदिनात्पातयत्येवं कोष्ठतः क्रमिजालकम् ॥ २ ॥ खदिरः कुटजः पिचुमन्दवचात्रिकटुत्रिफलात्रिवृतासहितम् । पशुमूत्रयुतं पिब सप्तदिनं क्रमिकोटिशतान्यपि हन्त्यचिरात् ॥ ३ ॥ निम्बवत्सकविडङ्गसैन्धवं रामठेन सह जन्तुनाशनम् । निम्बषट्कमजमोदकान्वितं चूर्णमेव मधुना प्रशस्यते ॥ ४ ॥ आखुकर्णीदलैःपिष्टैः पिष्टकेन च पूपकान् । भुक्त्वा सौवीरकं चानु पिबेत्क्रमिहरं परम् ॥५॥ सुवर्चिकारामठपत्रिकाह्वाविडङ्गबाल्हीककणाग्निविश्वाः । यवानिकाग्रन्थिकभद्रमुस्तास्तक्रेण चूर्णं क्रमिकोटिहारि ॥ ६ ॥ भल्लातको वा दध्ना च चिञ्चाम्लेन हरेत्क्रमीन् । विडङ्गं पारिभद्राग्रं ब्रह्मबीजं पृथक् पिबेत् ॥ ७ ॥ मधुना क्रमिनाशाय निम्बं वा हिङ्गुना युतम् । निम्बाजमोदाजन्तुघ्नं ब्रह्मबीजं सचोरकम् ॥ सहिङ्गुकं समगुडं सद्यो

---

१ (क०) वर्ध्म । २ (ग०) गुरवः । ३ (च०) अपादा वृत्तताम्राश्च । ४ (ग० च० छ०) कर्णी ।

जन्तुविनाशनम् ॥ ८ ॥ हरीतकी चैव तथा हरिद्रा सौवर्चलं चैव समं विचूर्णितम् । इन्द्रवारुणिजलेन भावितं कीटसङ्घविनिवारणं परम् ॥ ९ ॥ काकुभकुसुमविडङ्गं लाङ्गलिभल्लातकं तथोशीरम् । श्रीवेष्टकसर्जरसं चन्दनमथ कुष्ठमष्टमं दद्यात् ॥ १० ॥ एष सुगन्धो धूपः सकृत्क्रमीणां विनाशकः प्रोक्तः । शय्यासु मत्कुणानां शिरसि च गात्रेषु यूकानाम् ॥ ११ ॥ इति सुगन्धो धूपः ॥ विशालायाः फलं पक्कं तप्तलोहे परिक्षिपेत् । तद्धूमो दन्तलग्नश्चेत्कीटानां पातनः परः ॥ १२ ॥ अथ विडङ्गादितैलम् ॥ सविडङ्गं च शिलया सिद्धं सुरभिजलेन कटुतैलम् । निखिला नयति विनाशं लिक्षासहिता दिनैर्यूकाः ॥ १ ॥ इति विडङ्गादितैलम् । पारदं मर्दयेन्निष्कं कृष्णधत्तूरकद्रवैः । नागवल्लीद्रवैर्वाथ वस्त्रखण्डं प्रलेपयेत् ॥ १ ॥ तद्वस्त्रं मस्तके पेष्य धार्यं यामत्रयं ततः । यूकाः पतन्ति निश्शेषाः सलिक्षा नात्र संशयः ॥२॥ चित्रकं दन्तिनीमूलं कोशातकीसमन्वितम् । कल्कं पिष्ट्वा पचेत्तैलं केशशत्रुविनाशनम् ॥ ३ ॥

## ॥ अथ रसादिलेपः ॥

रसेन्द्रेण समायुक्तो रसो धत्तूरपत्रजः । ताम्बूलपत्रजो वापि लेपनाद्यूकनाशनः ॥१॥

## ॥ अथ कृमिमुद्गरो रसः ॥

क्रमेण वृद्धं रसगन्धकाजमोदाविडङ्गं विषमुष्टिका च । पलाशबीजं च विचूर्णमस्य निष्कप्रमाणं मधुनावलीढम् ॥ १ ॥ पिबेत्कषायं घनजं तदूर्ध्वं रसोऽयमुक्तः कृमिमुद्गराख्यः । क्रिमीन्निहन्ति क्रिमिजांश्च रोगान् संदीपयत्यग्निमयं त्रिरात्रात् ॥२॥

## ॥ अथ कृमिकुठारः ॥

विश्वं रामठसैन्धवाग्निमरिचं पथ्या वचा गुग्गुलुर्बोलं रात्रिविडङ्गकुष्ठलशुनं गन्धः कुबेराक्षकः । इन्द्रोद्भूतपलाशबीजखदिराजाजीकणादीप्यकं सौवर्चं मधुना गुटी कृमिकुठाराह्वा रुजाजन्तुनुत् ॥ १ ॥ कृमिषु वर्ज्याण्याह । क्षीराणि मांसानि घृतानि चैव दधीनि शाकानि च पत्रवन्ति । समासतोऽम्लं मधुरान्रसांश्च कृमीन्प्रियांस्तु परिवर्जयेत्तु ॥ २ ॥ शीताम्बु मधुरं क्षारं दधिक्षीरघृतादिकम् । सौवीरं पत्रशाकांश्च वर्जयेत्कृमिवान्नरः ॥ ५ ॥ इति कृमिचिकित्सा ॥

---

## ॥ अथातः पाण्डुरोगनिदानम् ॥

पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः । चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः ॥ १ ॥ व्यवायिमम्लं लवणानि मद्यं मृदं दिवा स्वप्नमतीव तीक्ष्णम् । निषेवमाणस्य विदूष्य रक्तं दोषास्त्वचं पाण्डुरतां नयन्ति ॥ २ ॥ अथ पूर्वरूपमाह ।

---

१ (च०) लोहोपरि ।

त्वक्स्फोटनिष्ठीवनगात्रसादमृद्भक्षणप्रेक्षणकूटशोथाः । विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥ १ ॥ अथ वातिकमाह ॥ विण्मूत्रनयनादीनां रूक्षकृष्णारुणाभता । वातपाण्ड्वामये कम्पतोदानाहभ्रमादयः ॥ १ ॥ अथ पैत्तिकमाह ॥ पीतमूत्रशकृन्नेत्रो दाहतृष्णाज्वरान्वितः । भिन्नविट्कोऽतिपीताभः पित्तपाण्ड्वामयी नरः ॥ १ ॥ अथ श्लैष्मिकमाह ॥ कफप्रसेकश्वयथुतन्द्रालस्यातिगौरवैः । पाण्डुरोगी कफाच्छुक्लैस्त्वङ्मूत्रनयनाननैः ॥ १ ॥ अथ त्रिदोषजमाह ॥ सर्वान्नसेविनः सर्वे दुष्टा दोषास्त्रिदोषजम् । त्रिदोषलिङ्गं कुर्वन्ति पाण्डुरोगं सुदुःसहम् ॥ १ ॥ इति चरके ॥ ज्वरारोचकहृल्लासच्छर्दितृष्णाक्लमान्वितः । पाण्डुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः ॥ २ ॥ अथ मृत्तिकाजन्यमाह ॥ मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः । कषाया मारुतं पित्तमूषरा मधुरा कफम् ॥ १ ॥ कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तं च रूक्षयेत् । पूरयत्यविपक्वैव स्रोतांसि निरुणद्ध्यपि ॥ २ ॥ इन्द्रियाणां बलं हत्वा तेजो वीर्यौजसी तथा । पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥ ३ ॥ अथ मृज्जस्य लक्षणमाह ॥ शूनाक्षिकूटगण्डभ्रूः शूनपन्नाभिमेहनः । क्रिमिकोष्ठोऽतिसार्येत मलं चासृक्कफान्वितम् ॥ १ ॥

## ॥ अथासाध्यलक्षणमाह ॥

पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति । कालप्रकर्षाच्छूनाङ्गो यो वा पीतानि पश्यति ॥ १ ॥ बद्धाल्पविट् सहरितं सकफं योऽतिसार्यते । दीनः श्वेतातिदिग्धाङ्गश्छर्दिमूर्छातृषान्वितः ॥ स नास्त्यसृक्क्षयाद्यस्तु पाण्डुश्वेतत्वमाप्नुयात् ॥ २ ॥ अन्यच्च । पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च यो भवेत् । पाण्डुसंघातदर्शी च पाण्डुरोगी विनश्यति ॥१॥ अन्तेषु शूनं परिहीनमध्यं म्लानं तथान्तेषु च मध्यशूनम् । गुदे ऽथ शेफस्यथ मुष्कयोश्च शूनं प्रताम्यं तमसंज्ञकल्पम् ॥ विवर्जयेत्पाण्डुकिनं यशोऽर्थी तथातिसारज्वरपीडितं च ॥ २ ॥ कामलाकारणमाह ॥ पाण्डुरोगी च योऽत्यर्थं पित्तलानि निषेवते । तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते ॥ १ ॥

## ॥ अथ कामलास्वरूपमाह ॥

हारिद्रनेत्रः स भृशं हारिद्रत्वङ्नखाननः । रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥ १ ॥ दाहाविपाकदौर्बल्यसदनारुचिकर्शितः । कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ॥२॥ कालान्तरात्खरीभूता कृच्छ्रा स्यात्कुम्भकामला । कृष्णपीतशकृन्नेत्रो भृशं शूनश्च मानवः ॥ ३ ॥ सरक्ताक्षिमुखच्छर्दिविण्मूत्रो यश्च ताम्यति । दाहारुचितृडानाहतन्द्रामोहसमन्वितः ॥ नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान्विपद्यते ॥४॥ छर्द्यरोचकहृल्लासज्वरक्लमनिपीडितः । नश्यति श्वासकासार्तो विड्भेदी कुम्भकामली ॥ ५ ॥

---

१ च० त्वङ्मूत्र । २ ( च० ) मूत्रो ।

## ॥ अथ पाण्डुरोगावस्थायां हलीमकमाह ॥

यदा तु पाण्डोर्वर्णःस्याद्धारीतश्यावपीतकः । बलोत्साहक्षयस्तन्द्रामन्दाग्नित्वं मृदुज्वरः॥ स्त्रीष्वहर्षोऽङ्गमर्दश्च सादस्तृष्णारुचिर्भ्रमः ॥१॥ हलीमकं तदा तस्य विद्याद-निलपित्ततः । पाण्डुरुक्कामलाकुम्भकामला च हलीमकम् ॥२॥ सन्तापो भिन्नवर्चस्त्वं बहिरन्तश्च पीतता । पाण्डुता नेत्रयोर्यस्य पानकीलक्षणं भवेत् ॥ ३ ॥ इति पाण्डुरोगकामलाहलीमकनिदानम् ॥

## ॥ अथातः पाण्डुरोगचिकित्सा ॥

साध्यं च पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्ध्वमधश्च शुद्धम् । सम्पादयेत्क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णमयप्रयोगैः ॥ १ ॥ पिबेद्घृतं वा रजनीविपक्वं यत्त्रैफलं तैल्वकमेकमेव । विरेचनद्रव्यकृतं पिबेद्वा योगांश्च वैरेचनिकान् घृतेन॥२॥ विधिः स्निग्धोऽत्र वातोत्थे तिक्तः शीतश्च पैत्तिके । श्लैष्मिके कटुरूक्षोष्णः कार्यो मिश्रस्तु मिश्रजे ॥ ३ ॥ द्विपञ्चमूलीक्वथितं सविश्वं कफात्मके पाण्डुगदे पिबेत्तम् । ज्वरेऽतिसारे श्वयथौ ग्रहण्यां कासेऽरुचौ कण्ठहृदामयेषु ॥ ४ ॥ फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः । क्वाथः क्षौद्रयुतो हन्यात्पाण्डुरोगं सकामलम् ॥ ५ ॥ पुनर्नवानिम्बपटोलशुण्ठीतिक्तामृतादार्व्यभयाकषायः । सर्वाङ्गशोफोदरपाण्डुरोगस्थौल्यप्रसेकोर्ध्वकफामयेषु ॥ ६ ॥

## ॥ अथ नवायसचूर्णम् ॥

त्र्यूषणत्रिफलामुस्ताविडङ्गदहनाः समाः । नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा। भक्षयेत्पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् ॥ १ ॥ इति नवायसचूर्णम् ॥ लोहपात्रस्थितं क्षीरं सप्ताहं पथ्यभोजनः । पिबेत्पाड्वामयी शोषी ग्रहणीदोषपीडितः॥ १ ॥ दग्ध्वाक्षकाष्ठैर्मलमायसं तु गोमूत्रनिर्वापितसप्तवारम् । विचूर्ण्य लीढं मधुना चिरेण तक्रेण वा पाण्डुगदं निहन्यात् ॥२॥ इति वीरसिंहावलोकतः ॥ अतिशुद्धमयोभस्म मधुक्षौद्रयुतं लिहेत् । पाण्डुरोगस्य नाशाय कामलानां च सर्वशः ॥१॥ नागरं लोहचूर्णं वा कृष्णां पथ्यामथाश्मजम् । गुग्गुलुं वाथ मूत्रेण कफपाण्ड्वामयी पिबेत् ॥ २ ॥ शिलाजतु क्षौद्रविडङ्गसर्पिर्लोहाभयाशर्करया समक्षम् । आपूर्यते दुर्बलदेहधारी त्रिपञ्चरात्रेण यथा शशाङ्कः ॥ ३ ॥ वृन्दात् ॥ अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम् । तैर्मोदकः क्षौद्रयुतो नु तक्रः पाण्ड्वामये दूरगतेऽपि शस्तः ॥ १ ॥

## ॥ अथ मण्डूरवटकाः ॥

सुराब्ददार्वीकटुषट्कतोप्यवेल्लं वरा चेति समांशचूर्णम् । मण्डूरभागद्वयमष्टमूत्रे पक्त्वा गवां तक्रसमं च योज्यम् ॥१॥ कामलापाण्डुमेहार्शःशोथकुष्ठकफामयान् । ऊरुस्तम्भमजीर्णं च प्लीहानं नाशयन्ति च ॥ २ ॥ इति रत्नप्रदीपात् ॥

---

1 (च०) श्वास । २ (च०) तोयम् ।

## ॥ अथ मण्डूरवज्रवटकः ॥

पञ्चकोलं समरिचं देवदारु फलत्रिकम् । विडङ्गमुस्तायुक्ताश्च भागास्त्रिपलसंमिताः ॥ १ ॥ यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः । पक्त्वाष्टगुणिते मूत्रे तद्घनीभूतमुद्धरेत् ॥ २ ॥ ततोऽक्षमात्रान्वटकान् पिबेत्तक्रेण तक्रभुक् । पाण्डुरोगं जयेत्तद्वन्मन्दाग्नित्वमरोचकम् ॥ ३ ॥ मण्डूरवज्रवटको रोगानीकप्रभेदनः । अर्शांसि ग्रहणीं शोफमूरुस्तम्भं हलीमकम् । क्रमीन्प्लीहानमुदरं गलरोगं च नाशयेत् ॥ ४ ॥ इति वृन्दात् ॥

## ॥ अथ मण्डूरलवणम् ॥

कृत्वाग्निवर्णं मलमायसं तु मूत्रेऽभिषिञ्चेद्बहुशो गवां च । तत्रैव सिन्धूत्थसमं विपाच्यं निरुद्धधूमं च बिभीतकाग्नौ ॥ १ ॥ तक्रेण पीतं मधुनाथवापि बिभीतकाख्यं लवणं प्रयुक्तम् । पाण्ड्वामयिभ्यो हितमेतदस्मात्पाण्ड्वामयघ्नं न हि किञ्चिदन्यत् ॥ २ ॥ इति योगतरङ्गिण्याः ॥

## ॥ अथ मधुमण्डूरः ॥

गृहीत्वा पृथक्प्रस्थमण्डूरभागं सुते त्रैफले मर्दयित्वा च यामम् । पुटे पाचयेद्यामयुग्मं कृशानौ पुटानीह देयानि चन्द्राक्षिवारम् ॥ १ ॥ तथा धेनुमूत्रे कुमारीरसे च विधेयश्च पञ्चामृते योगराजः । भवेत् सिन्धुनागैः पुटैः सिद्धिदोऽयमचिन्त्यप्रभावश्च मण्डूर एषः ॥ २ ॥ मधुमण्डूर एष कणामधुना चिरपाण्डुगदं ननु हेममितः । जनको रुधिरस्य निहन्ति परं विविधार्तिहरस्त्वनुपानबलैः ॥ ३ ॥

## ॥ अथ मण्डूराद्योऽरिष्टः ॥

मण्डूरस्य तु शुद्धस्य तुलार्धं परिकीर्तितम् । तद्वल्लोहस्य पत्राणि तिलोत्सेधप्रमाणतः ॥ १ ॥ पुराणगुडपञ्चाशत् कोलप्रस्थत्रयं तथा । निकुम्भचित्रकाभ्यां च पले द्वे द्वे सुचूर्णिते ॥ २ ॥ पिप्पलीनां विडङ्गानां कुडवं कुडवं पृथक् । त्रींश्चापि त्रिफलाप्रस्थाञ्जलद्रोणे समावपेत् ॥ ३ ॥ अर्धमासस्थितो धान्ये पेयोऽरिष्टः प्रमाणतः । दोषानुभयतः श्राव्य पाण्डुरोगं नियच्छति ॥ ४ ॥ क्रमीनर्शांसि कुष्ठं च कासश्वासकफामयान् । एषोऽरिष्टस्तु मण्डूरः सर्वपाण्ड्वामयापहः ॥ ५ ॥

## ॥ अथ गदनिग्रहात् मण्डूराद्योऽरिष्टः ॥

रेचनं कामलार्तस्य स्निग्धस्यादौ प्रयोजयेत् । ततः प्रशमनी कार्या क्रिया वैद्येन जानता ॥ १ ॥ पाण्डुरोगक्रियां सद्यो योजयेच्च हलीमके । मलानुसरणं दृष्ट्वा सापि कार्या भिषग्वरैः ॥ २ ॥ हरिद्रात्रिफलानिम्बबलामधुकसाधितम् । सक्षीरं माहिषं सर्पिः कामलापहमुत्तमम् ॥ ३ ॥ त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य

---

१ (च०) निषिञ्चेत् । २ (ख० च०) भिषक् ।

वा रसम्। प्रातर्मधुयुतं वैद्यः कामलार्ताय योजयेत् ॥ ४ ॥ दार्वीसत्रिफलाव्योषविडङ्गानयसो रजः। मधुसर्पिर्युतं लिह्यात्कामलापाण्डुरोगवान् ॥ ५ ॥ अयोरजो व्योषविडङ्गचूर्णं लिह्याद्धरिद्रां त्रिफलान्वितां वा। सशर्करां कामलिनां त्रिभंङ्गी हिता गवाक्षी सगुडा च शुण्ठी ॥ ६ ॥ धात्रीलोहरजोव्योषनिशाक्षौद्रं, सशर्करम्। लीढं निवारयत्याशु कामलामुद्धतामपि ॥ ७ ॥ लोहचूर्णं निशायुग्मं त्रिफलां कटुरोहिणीम्। प्रलिह्य मधुसर्पिर्भ्यां कामलार्तः सुखी भवेत् ॥ ८ ॥ व्योषाग्निवेल्लत्रिफलामुस्तैस्तुल्यमयोरजः। चूर्णितं तक्रमध्वाज्यकोष्णतोयोपयोजितम् ॥ ९ ॥ कामलापाण्डुहृद्रोगकुष्ठार्शोमेहनाशनम्। तुल्यं वायोरजः पथ्यां हरिद्रां क्षौद्रसर्पिषा ॥ १० ॥ चूर्णितां कामली लिह्याद्गुडक्षौद्रेण वाभयाम्। एलाजीरकभूधात्रीसितागव्येन भावयेत् ॥ ११ ॥ प्रातः संसेवनं कुर्यात्कामलानाशनं परम्। निशाचूर्णं कर्षमितं दध्नः पलमितं तथा ॥ १२ ॥ प्रातः संसेवनं कुर्यात्कामलानाशनं परम्। अर्कमूलं हरेन्नस्यात्कामलां तण्डुलोदकैः ॥ १३ ॥ अञ्जनं कामलार्तस्य द्रोणपुष्पीरसस्य तु। निशागैरिकधात्रीणां चूर्णं चोपरि लेपयेत् ॥१४॥ गोदुग्धेन विशालाया मुनिसंख्यादलानि तु। जीरकेण युतं पेष्यं रसमेकं पलं पिबेत् ॥ १५ ॥ अथवा तज्जटाद्रावं कर्षार्धं दुग्धमिश्रितम्। पाययेत्तु प्रतिदिनमेवमेतद्दिनत्रयम् ॥ १६ ॥ घृतदुग्धौदनं पथ्यं कुर्याद्वै लवणं विना। कामलां नाशयत्याशु वायुरभ्रं हरेद्यथा ॥ १७ ॥

## ॥ अथ घृतानि ॥

अथ गुडूचीघृतम्। गुडूचीस्वरसे सर्पिः सक्षीरं माहिषं घृतम्। चतुर्गुणेन पयसा पाययेत्तद्धलीमके ॥ १ ॥ इति गुडूचीघृतम्। व्योषं बिल्वं द्विरजनी त्रिफला द्विःपुनर्नवम्। मुस्ता अयोरजः पाठा विडङ्गं देवदारु च ॥ १ ॥ वृश्चिकाली च भार्ङ्गी च सक्षीरैस्तैर्घृतं शुभम्। सर्वान् प्रशमयत्याशु विकारान्मृत्तिकाकृतान् ॥ २ ॥ इति व्योषादिघृतम् ॥

## ॥ अथामलक्यवलेहः ॥

रसमामलकानां तु संशुद्धं यन्त्रपीडितम्। द्रोणं पचेच्च मृद्वग्नौ तत्र चेमानि दापयेत् ॥ १ ॥ चूर्णितं पिप्पलीप्रस्थं मधुकं द्विपलं तथा। प्रस्थं गोस्तनिकायाश्च द्राक्षायाः किल पेषितम् ॥२॥ शृङ्गबेरपले द्वे तु तुगाक्षीर्याः पलद्वयम्। तुलार्धं शर्करायाश्च घनीभूतं समुद्धरेत् ॥ ३ ॥ मधुप्रस्थसमायुक्तं लेहयेत्पलसम्मितम्। हलीमकं कामलां च पाण्डुत्वं चापकर्षति ॥ ४ ॥ इत्यामलक्यवलेहः ॥

## ॥ अथ त्रिफलाद्यवलेहः ॥

त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च। भागाश्चित्रकमूलस्य विडङ्गानां तथैव

---

१ (घ०) त्रिभण्डी।

च ॥ १ ॥ पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च । माक्षिकस्य च शुद्धस्य लोहस्य रजसस्तथा ॥ २ ॥ अष्टौ भागाः सितायास्तु तत्सर्वं मधुसंयुतम् । श्लक्ष्णचूर्णं सुसंस्थाप्यमायसे भाजने शुभे ॥ ३ ॥ उदुम्बरसमां मात्रां ततः खादेद्यथाग्निना । दिने दिने प्रयोक्तव्यं जीर्णे भोज्यं यथेप्सितम् ॥ ४ ॥ वर्जयित्वा कुलत्थांस्तु काकमाचीकपोतकान् । पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ॥ ५ ॥ कुष्ठान्यजीर्णकं मेहं श्वासं शोफमरोचकम् । विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ ६ ॥ इति त्रिफलाद्यवलेहो योगतरङ्गिण्याः ॥ अथ हंसमण्डूरः ॥ मण्डूरं चूर्णयेच्छ्लक्ष्णं गोमूत्रेऽष्टगुणे पचेत् । पञ्चकोलं देवदारु मुस्ता व्योषफलत्रयम् ॥ १ ॥ विडङ्गं स्यात्प्रतिपलं पाकान्ते चूर्णितं क्षिपेत् । भक्षयेत्कर्षमात्रं च तक्रे तक्रं च भोजने ॥ २ ॥ पाण्डुशोफं हलीमं च ऊरुस्तम्भं च कामलाम् । अर्शांसि हन्ति नो चित्रं हंसमण्डूरको ह्ययम् ॥ ३ ॥

## ॥ अथ मदेभसिंहसूतो रसः ॥

काश्यपग्रन्थे ॥ रसगन्धवराटताम्रशङ्खं विषवङ्गाभ्रककान्ततीक्ष्णमुण्डम् । अहिहिङ्गुलटङ्कणं समांशं सकलैः स्यात्त्रिगुणं पुराणकिट्टम् ॥१॥ पशुमूत्रविशोधितं सुघृष्टा त्रिफलाभृङ्गमथार्द्रकोत्थनीरैः । सुविशोष्य वरामृतालिवासास्वरसैरष्टगुणैः पुनर्नवोत्थैः ॥ २ ॥ पृथगग्निकृतं घनं विपाच्यं गुलिका गुञ्जमिता निजानुपानैः । ज्वरपाण्डुतृषास्रपैत्यगुल्मक्षयकासस्वरमग्निसादमूर्च्छाम् ॥ ३ ॥ पवनादिषु दुस्तराष्टरोगान् सकलं पित्तहरं मदावृतं च । बहुना किमसौ यथार्थनामा सकलव्याधिहरो मदेभसिंहः ॥ ४ ॥ इति मदेभसिंहः ॥

## ॥ अथ त्रैलोक्यनाथरसः ॥

पलानि चत्वारि रसस्य पञ्च गन्धस्य सत्वस्य गुडूचिकायाः । व्योषस्य चूर्णस्य च तालमूल्याः सशाल्मलस्येह पलत्रयं स्यात् ॥१॥ पृथक् पृथक् पङ्गगनस्य चाष्टौ लोहस्य सर्वं त्रिफलाजलेन । घृष्टं चतुष्षष्टिमितं तदर्धाः स्युर्भावनामार्कवजद्रवस्य ॥२॥ शिग्रूत्थनीरेण च षोडशाष्टौ तथा नलोत्थाद् गृहकन्यकायाः ॥ आर्द्रद्रवस्येति रसोऽयमुक्तः पाण्डुक्षयश्वासगदादिहर्ता ॥ ३ ॥ क्षौद्रेण वा शर्करया घृतेन कर्षार्धमेतस्य भजेत्प्रयत्नात् ॥ इति रसरत्नप्रदीपात् ॥

## ॥ अथ पथ्यापथ्यम् ॥

यवगोधूमशाल्यन्नं रसैर्जाङ्गलजैः शुभैः । मुद्गाढकमसूराद्यैः पाण्डौ भोजनमिष्यते ॥ १ ॥ वह्निमातपमायासमन्नपानं च पित्तलम् । मैथुनं क्रोधमध्वानं पाण्डुरोगी सदा त्यजेत् ॥ २ ॥ इति पाण्डुकामलाहलीमकचिकित्सा समाप्ता ॥

---

१ ( च० ) शृतं । २ ( च० ) विपाच्य । ३ ( ग० ) अहिकन्यकायाः ।

## ॥ अथ रक्तपित्तनिदानम् ॥

घर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः । तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च ॥ १ ॥ कोद्रवोद्दालकैश्चान्नैस्तद्युक्तैरतिसेवितैः । पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम् ॥ २ ॥ ततः प्रवर्तते रक्तमूर्ध्वं चाधो द्विधापि वा ॥ आमाशयाद्व्रजेदूर्ध्वमधः पक्वाशयाद्व्रजेत् ॥ ३ ॥ विदग्धयोर्द्वयोश्चापि द्विधाभागं प्रवर्तते । ऊर्ध्वं कर्णाक्षिनासास्यैर्मेण्ढ्रयोनिगुदैरधः ॥ ४ ॥ कुपितं रोमकूपैस्तु समस्तैस्तत्प्रवर्तते । श्लैष्मिकमाह । केचिच्च यकृतः प्लीह्नः प्रवदन्त्यसृजो गतिम् ॥ ५ ॥ सदनं शीतकामित्वं कण्ठधूमायनं वमिः । लोहगन्धिश्च निःश्वासो भवत्यस्मिन्भविष्यति ॥ ६ ॥ वातिकमाह ॥ सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफात्मकम् ॥ श्यावारुणं सफेनं च तनु रूक्षं च वातिकम् ॥७॥ पैत्तिकमाह । रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम् । मेचकागारधूमाभमञ्जनाभं च पैत्तिकम् ॥८॥ सान्निपातिकमाह । संसृष्टलिङ्गं संसर्गात्त्रिलिङ्गात्सान्निपातिकम् । ऊर्ध्वगं कफसंसृष्टमधोगं मारुतानुगम् ॥९॥ द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्तते । ऊर्ध्वं साध्यमधो याप्यमसाध्यं युगपद्गतम् ॥१०॥ रूक्षाद्यभ्यासतो दुष्टो रसो रक्तं प्रदूषयेत् । एकमार्गं बलवतो नातिवेगं नवोत्थितम् ॥११॥ रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् । एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ॥१२॥ त्रिदोषजमसाध्यं स्यान्मन्दाग्नेरतिवेगवत् । व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥ १३ ॥ दौर्बल्यं श्वासकासज्वरवमथुमदाः पाण्डुता दाहमूर्च्छे भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा । तृष्णा कोष्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनत्वं भक्तद्वेषाविपाकौ विकृतिरपि भवेद्रक्तपित्तोपसर्गाः ॥ १४ ॥ मांसप्रक्षालनाभं क्वथितमिव च यत्कर्दमाम्भोनिभं वा मेदःपूयास्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभम् । यत्कृष्णं यच्च नीलं भृशमतिकुणपं यत्र चोक्ता विकारास्तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥ १५ ॥ येन चोपहतो रक्तं रक्त[illegible] मानवः । पश्येद् दृश्यं वियच्चापि तस्यासाध्यमसंशयम् ॥ १६ ॥ लोहितं छर्दये[illegible] सततं लोहितेक्षणः । लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः ॥ १७ ॥ [illegible] रक्तपित्तनिदानम् ॥

## ॥ अथातो रक्तपित्तचिकित्सां व्याख्यास्यामः ॥

पित्तास्रं स्तम्भयेन्नादौ प्रवृत्तं बलिनेऽश्नुतम् । हृत्पाण्डुग्रहणीरोगप्लीहगुल्मोद[illegible] कृत् ॥ १ ॥ क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् । अवाम्यमविरेच्यं च शम[illegible] रुपाचयेत् ॥ २ ॥ अतिप्रवृद्धदोषस्य पूर्वं लोहितपित्तिनः । अक्षीणबलमांसाग्ने[illegible] र्तव्यमपतर्पणम् ॥३॥ ऊर्ध्वगे रेचनं पूर्वमधोगे वमनं हितम् । आरग्वधेन धात्र्या त्रिवृता पथ्ययाथवा ॥ ४ ॥ विरेचनं प्रयोक्तव्यं शर्करामाक्षिकोत्तरम् । मुस्तेन्द्र[illegible] ष्टयाह्वमदनाह्वं पयो मधु ॥ ५ ॥ शिशिरं वमनं योज्यं रक्तपित्तहरं परम् । वृन्दात् ।

---

१ (च०) त्रिलिङ्गं । २ (ग० छ०) बलिनोऽश्नु (सु) तम् । ३ (क०) उपाचरेत् ।

द्राक्षा मधुककाश्मर्यसितायुक्तं विरेचनम् ॥६॥ यष्टीमधुकसंयुक्तं सक्षौद्रं वमनं हितम् । शालिपर्ण्यादिना सिद्धा पेया पूर्वमधोगमे ॥ रक्तातिसारहन्ता च योज्यो विधिरशेषतः ॥ ७ ॥ पयांसि शीतानि रसाश्च जाङ्गलाः सतीनयूषाश्च सशालिषष्टिकाः । हितानि चैतानि च रक्तपित्ते चान्यान्यपि स्युः किल पित्तहानि ॥८॥ शालिषष्टिकनीवारकोरदूषप्रसाधिकाः । श्यामाकाश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥ ९ ॥ मसूरमुद्गचणकाः समकुष्टाढकीफलाः । प्रशस्ताः सूपयूषार्थे कल्पिता रक्तपित्तिनाम् ॥ ॥१० ॥ दाडिमामलकं विल्वानम्लार्थे चापि दापयेत् । पटोलनिम्बवेत्राग्रप्लक्षवेतसपल्लवाः ॥ ११ ॥ शाकार्थे शाकसात्म्यानां तण्डुलीयादयो हिताः । पारावतकपोतांश्च लावान् रक्ताक्षवर्तकान् ॥ १२ ॥ शशान्कपिञ्जलानेणान्हरिणान् कालपुच्छकान् । रक्तपित्तहरान् विद्याद्रसं तेषां प्रयोजयेत् ॥ १३ ॥ ईषदम्लाननम्लांश्च घृतभृष्टान् ससैन्धवान् । कफानुगे यूषशाकं दद्याद्वातानुगे रसम् ॥ १४ ॥ पथ्यं सतीनयूषेण ससितैर्लाजसक्तुभिः । जलं खर्जूरमृद्वीकामधुकैः सपरूषकैः ॥ १५ ॥ शृतशीतं प्रयोक्तव्यं तर्पणायसशर्करम् । तर्पणं सघृतं क्षौद्रं लाजचूर्णैः प्रदापयेत् ॥ १६ ॥ ऊर्ध्वगं रक्तपित्तं तत् काले पीतं व्यपोहति । ह्रीबेरचन्दनोशीरमुस्तपर्पटकैः शृतम् ॥ केवलं शृतशीतं वा दद्यात्तोयं पिपासवे ॥१७॥ पयः सिताढ्यं शृतशीतमाजं गव्यं पयो वा प्रसमीक्ष्य वह्निम् । यष्टीमधूकार्जुनभावनीयं द्राक्षाबलागोक्षुरकैः शृतं वा ॥ १८ ॥ द्राक्षया फलिनीभिर्वा बलया नागरेण वा । श्वदंष्ट्रया शतावर्या रक्तजित्साधितं पयः ॥ १९ ॥ शृतेनाजेन पयसा सेपिष्टं कुङ्कुमं पिबेत् । ऊर्ध्वरक्तविनाशाय तेनैवाज्येन भोजनम् ॥ २० ॥ यष्टीमधुसमायुक्तं क्षीरं संक्वाथ्य शीतलम् । शर्करामधुसंमिश्रं रक्तपित्तापहं पिबेत् ॥ २१ ॥ क्षीरेण लाक्षामधुमिश्रितेन प्रपीय जीर्णे पयसानुमद्यम् । सद्यो निहन्याद्रुधिरं क्षतोत्थं कान्तार्जुनानामथवापि कल्कः ॥ २२ ॥ कल्कं मधूकत्रिफलार्जुनानां निशि स्थितं लोहमये सुपात्रे । साज्यं विलिह्यात्तु पिबेत्सुशीतं सशर्करं छागपयः क्षतार्तः ॥ २३ ॥ वृषपत्राणि निष्पीड्य रसं समधुशर्करम् । अनेन प्रशमं याति रक्तपित्तं सुदारुणम् ॥ २४ ॥ मध्वाटरूषकरसौ यदि तुल्यभागौ कृत्वा नरः पिबति पुण्यतरः प्रभाते । तद्रक्तपित्तमतिदारुणमप्यवश्यमाशु प्रशाम्यति जलैरिव वह्निपुञ्जः ॥ २५ ॥ इति राजमार्तण्डात् । आटरूषकनिर्यूहः प्रियङ्गुमृत्तिकाञ्जने । विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ २६ ॥ पिष्टानां वृषपत्राणां पुटपाको रसो हिमः । मधुयुक्तो जयेद्रक्तपित्तकासज्वरक्षयान् ॥ २७ ॥ इति वासापुटपाकः । वासायां विद्यमानायामाशायां जीवितस्य च । रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ २८ ॥ वासाकषायोत्पलमृत्प्रियङ्गुलोध्राञ्जनाम्भोरुहकेसराणि । पीत्वा सिताक्षौद्रयुतानि जह्यात्पित्तासृजो वेगमुदीर्णमाशु ॥२९ ॥ आटरू-

---

१ ( च० ) काम्यानाम् । २ ( च० ) संपिष्टम् । ३ ( च० ) आजेन । ४ ( च० छ० ) सुदारणम् । ५ ( च० ) काञ्जनैः । ६ ( च० ) हितः ।

पक्वमृद्वीकापथ्याक्काथः सशर्करः । क्षौद्राढ्यः कसनश्वासरक्तपित्तनिबर्हणः ॥ ३० ॥ मुद्गाः सलाजाः सयवाः सकृष्णाः सोशीरमुस्ताः सह चन्दनेन । बलाजले पर्युषितः कषायः स रक्तपित्तं शमयत्युदीर्णम् ॥ ३१ ॥ ह्रीवेरं धान्यकं शुण्ठी चन्दनं मधुयष्टिका । वृषोशीरयुतः क्काथः शर्करामधुयोजितः ॥ ३२ ॥ रक्तपित्तं जयत्युग्रं तृष्णां दाहं ज्वरं तथा । उशीरं चन्दनं पाठा द्राक्षा मधुकपिप्पली ॥ ३३ ॥ सक्षौद्रं पाययेत्काथं रक्तपित्तं हरेद्ध्रुवम् । अमृता मधुकं चैव खर्जूरं गजपिप्पली ॥ ३४ ॥ क्काथः क्षौद्रयुतो ह्येष रक्तपित्तविकारनुत् । चन्दनेन्द्रयवौ पाठा कटुका सदुरालभा ॥ ३५ ॥ गुडूची वालुकं लोध्रं पिप्पलीक्षौद्रसंयुतम् । कफान्वितं जये-द्रक्तं तृष्णाकासज्वरापहम् ॥ ३६ ॥ शतावरी बला रास्ना काश्मर्यं सपरूषकम् । पाययेद्रक्तपित्तघ्नं सद्यः शूलहरं परम् ॥ ३७ ॥ त्रिफलाकृतमालभवं क्कथनं सितया मधुना मिलितं हरति । ननु शोणितपित्तरुजं विविधां घनदाहकपित्तजशूलदरम् ॥ ३८ ॥ अतसीकुसुमसमङ्गावटप्ररोहास्तृणाम्भसा पीताः । साधयति रक्तपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ ३९ ॥ पक्वोदुम्बरकाश्मर्यपथ्याखर्जूरगोस्तनी । मधुना घ्नन्ति संलीढा रक्तपित्तं पृथक् पृथक् ॥ ४० ॥ वासकस्वरसैः पथ्या सप्तधा परिभाविता । कृष्णा वा मधुना लीढा रक्तपित्तं दृढं जयेत् ॥ ४१ ॥ द्रवेण यावता द्रव्यमेकीभूयार्द्रतां व्रजेत् । तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ ॥४२॥ अभया मधुसंयुक्ता पाचनी दीपनी मता । श्लेष्माणं रक्तपित्तं च हन्ति शूलातिसारजित् ॥ ४३ ॥ लोहगन्धनिभः श्वास उद्गारे रक्तगन्धिनि । मृद्वीकोषणमात्रां तु स्वादेद्द्विगुणशर्कराम् ॥ ४४ ॥ उशीरकालीयकरोध्रपद्मकं प्रियङ्गुका कट्फलशङ्खगैरिकाः । पृथक् पृथक् चन्दनतुल्यभागिकाः सशर्करास्तण्डुलधावनप्लुताः॥४५॥ रक्तं च पित्तं तमकं पिपासां दाहं च पीताः शमयन्ति सद्यः॥४६॥ पलाशकल्कक्काथो वा सुशीतः शर्करान्वितः । पिबेद्वा मधुसर्पिर्भ्यां गवाश्वशकृतो रसम् ॥ ४७ ॥ सक्षौद्रं ग्रथिते रक्ते लिह्यात्पारावतं शकृत् । अतिनिःसृतरक्तो वा क्षौद्रेण रुधिरं पिबेत् ॥ ४८ ॥ खदिरस्य प्रियङ्गूणां कोविदारस्य शाल्मलेः । पुष्पचूर्णानि मधुना लिह्याद्वा रक्तपित्तनुत् ॥ ४९ ॥ अश्वत्थपत्राग्ररसात् षडंशो बोलोऽथ तस्माद्द्विगुणं मधु स्यात् । रक्तप्रवाहं हृदयस्थितं वा वातो यथाभ्रं हरते तथैव ॥ ५० ॥ मूलानि पुष्पाणि च मातुलुङ्ग्याः समं पिबेत्तण्डुलधावनेन । घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकयोः पयो वा । द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करं त्विक्षुरसं हिमं वा॥ ५१ ॥ उदुम्बराणि पक्वानि गुडेन मधुनापि वा । उपयुक्तानि निघ्नन्ति नासारक्तं नृणां ध्रुवम् ॥ ५२ ॥ नस्यदाडिमपुष्पोत्थो रसो दूर्वाभवोऽथवा । आम्रास्थिजः पलाण्डोर्वा नासिकास्रुतरक्तजित् ॥५३॥ हरीतकी दाडिमपुष्पदूर्वा लाक्षारसो नस्यविधानयोगात् । निवारयत्येव चिरप्रवृत्तमप्याशु नासान्तरशोणितौघम् ॥ ५४ ॥ नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम् । सेतुरिव रुधिरवेगं रुणद्धि मूर्ध्नि प्रले-

पेन ॥ ५५ ॥ प्रियङ्गुमृत्तिकालोध्रमञ्जनं चेति चूर्णयेत् । तच्चूर्णं योजयेत्तत्र नस्ये क्षौद्रसमन्वितम् ॥ ५६ ॥ नासिकामुखपायुभ्यो योनिमेण्ढ्राच्च वेगितम् । रक्तपित्तस्रवं हन्ति सिद्ध एष प्रयोगराट् ॥ ५७ ॥ यत्र शस्त्रक्षते चैव रक्तं तिष्ठति वेगितम् । तत्रप्यनेन चूर्णेन तिष्ठत्येवावचूर्णितम् ॥ मेण्ढ्रतोऽतिप्रवृत्तेऽस्रे बस्तिरुत्तर इष्यते॥५८॥

## ॥ अथ दूर्वाद्यं घृतम् ॥

दूर्वामुत्पलकिञ्जल्कं मञ्जिष्ठां सैलवालुकाम् । शिवालोध्रमुशीरं च मुस्ताचन्दनपद्मकैः ॥ १ ॥ विपचेत्कार्षिकैः कल्कैर्घृतप्रस्थं सुखाग्निना । तण्डुलाम्बुत्वजाक्षीरं दत्वा चैव चतुर्गुणम् ॥ २ ॥ तत्पानाद्वमतो रक्तं नावनं नासिकागतम् । कर्णाभ्यां यस्य गच्छेच्च तस्य कर्णौ प्रपूरयेत् ॥३॥ चक्षुःस्राविणि रक्ते च पूरयेत्तेन चक्षुषी । मेण्ढ्रपायुप्रवृत्तेषु बस्तिकर्म प्रकारयेत् ॥ रोमकूपप्रवृत्ते च तदभ्यङ्गे प्रयोजयेत्॥ ४॥ इति दूर्वाद्यं घृतम् ॥

## ॥ अथ वासादिघृतम् ॥

वासां सशाखां सदलां समूलां कृत्वा कषायं कुसुमानि चास्याः । प्रदाय कल्कं विपचेद्घृतं च सत्क्षौद्रमांश्वेव निहन्ति रक्तम् ॥१॥ इति वासादिघृतम् ॥ प्राणस्य कोविदारस्य वृषस्य ककुभस्य च । कल्काढ्यत्वात्पुष्पकल्कं प्रस्थे पलचतुष्टयम् ॥२॥ इति वृन्दात् ॥ सनास्यकोविदारस्य वृषस्य कुसुमस्य च । कल्काढ्यत्वात्प्रशंसन्ति पुष्पकल्कं चतुष्पलम् ॥ ३ ॥ इति योगतरङ्गिण्याः ॥

## ॥ अथ शतावरीघृतम् ॥

शतावरी दाडिमतित्तिडीकं काकोलिकन्दं मधुकं विदारी । पिष्ट्वा च मूलं फलपूरकस्य पचेद्घृतं क्षीरचतुर्गुणं तत् । कासज्वरोन्मादविबन्धशूलं तद्रक्तपित्तं विविधं निहन्ति ॥ १ ॥ इति शतावरीघृतम् ॥

## ॥ अथ चन्दनादिचूर्णम् ॥

चन्दनं नलदं लोध्रमुशीरं पद्मकेसरम् । नागपुष्पं च बिल्वं च भद्रमुस्तं सशर्करम् ॥ १ ॥ ह्रीबेरं चैव पाठा च कुटजोत्पलमेव च । शृङ्गबेरं सातिविषा धातकी सरसाञ्जनम् ॥ २ ॥ आम्रास्थिजम्बुसारास्थि तथा मोचरसोऽपि च । नीलोत्पलं समङ्गा च सूक्ष्मैला दाडिमत्वचः ॥ ३ ॥ चतुर्विंशतिरेतानि समभागानि कारयेत् । तण्डुलोदकसंयुक्तं मधुना सह योजयेत् ॥ ४ ॥ योगं लोहितपित्तानामर्शसां गरिणां तथा । मूर्च्छामदोपसृष्टानां तृष्णार्तानां प्रदापयेत् ॥ ५ ॥ अतिसारं तथा छर्दिं स्त्रीणां चापि रजोग्रहे । प्रच्युतानां च गर्भाणां स्थापनं परमिष्यते ॥ अश्विनोः सम्मतो योगो रक्तपित्तनिर्बहणः ॥ ६ ॥ इति चन्दनादिचूर्णम् ॥

---

१ ( च० ) रसे । २ ( च० ) नावनान्नासिकागतम् । ३ ( च० ) चक्षुर्भ्यां निर्गते ।

## ॥ अथैलादिगुटिका ॥

एला पत्रत्वचा द्राक्षा पिप्पल्यर्धपलं तथा । शिलामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥ १ ॥ संचूर्ण्य मधुना युक्तां गुटिकां सम्प्रकल्पयेत् । अक्षमात्रां ततश्चैकां भक्षयेत्तां दिने दिने ॥ २ ॥ कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम् । रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥ ३ ॥ शोषं प्लीहोर्ध्ववातं च स्वरभेदं क्षतं क्षयम् । गुटिका तर्पणी वृष्या रक्तपित्तं विनाशयेत् ॥ ४ ॥ इत्येलादिगुटिका ॥

## ॥ अथ कूष्माण्डावलेहः ॥

कूष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम् । पचेत्तप्ते घृतप्रस्थे पात्रे ताम्रमये दृढे ॥ १ ॥ यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत् । पिप्पली शृङ्गवेरं च द्वे पले जीरकस्य च ॥ २ ॥ त्वगेला पत्रमरिचधान्यकानां पलार्धकम् । न्यसेच्चूर्णीकृतं तत्र दर्व्या तं घट्टयेत्ततः ॥ ३ ॥ लेहीभूते सुशीते च दद्यात् क्षौद्रं घृतार्धकम् । क्षौद्रार्धकां सितां केचिद्द्राक्षां केचित्सितार्धकाम् ॥ ४ ॥ द्राक्षार्धानि लवङ्गानि कर्षं कर्पूरकं क्षिपेत् । तद्यथाग्निबलं खादेद्रक्तपित्तक्षतक्षयी ॥ ५ ॥ कासश्वासतमश्छर्दितृष्णाज्वरनिपीडितः । वृष्यं पुनर्नवकरं बलवर्णप्रसाधनम् ॥ ६ ॥ उरस्सन्धानकरणं बृंहणं स्वरबोधनम् । अश्विभ्यां निर्मितं श्रेष्ठं कूष्माण्डकरसायनम् ॥ ७ ॥ इति कूष्माण्डावलेहः ॥

## ॥ अथ कूष्माण्डखण्डः ॥

खण्डकामलकान्[1] गृह्याद्रसप्रस्थद्वयोन्मितः । खण्डकूष्माण्डके कंसः स्विन्नकूष्माण्डकद्रवात्[2] ॥ १ ॥ अन्यत्र खण्डकूष्माण्डे सम्मतः सकलो रसः । पञ्चाशच्च पलं स्विन्नं कूष्माण्डात्[3] प्रस्थमाज्यतः ॥ २ ॥ पक्वं पलशतं खण्डं वासाक्वाथाढके पचेत् । शिवा धात्री घनं भार्गी त्रिसुगन्धैश्च कार्षिकैः ॥ ३ ॥ तालीसविश्वधान्याकमरीचैश्च पलांशकैः । पिप्पलीकुडवं चैव मधुना सह दापयेत् ॥ ४ ॥ कासं श्वासं ज्वरं हिक्कां रक्तपित्तं हलीमकम् । हृद्रोगमम्लपित्तं च पीनसं च व्यपोहति ॥ ५ ॥ इति कूष्माण्डखलः ॥

## ॥ अथ वासाखण्डः ॥

तुलामादाय वासायाः पचेदष्टगुणे जले । तेन पादावशेषेण पाचयेदाढकं भिषक् ॥ १ ॥ चूर्णानामभयानां तु खण्डं शतपलं तथा । शीतीभूते निदध्यात्तु क्षौद्रस्याष्टौ पलानि च ॥ २ ॥ वंशोद्भवा च चत्वारि पिप्पली द्विपलं तथा । चातुर्जातपलं त्वेकं चूर्णितं तत्र दापयेत् ॥ ३ ॥ रक्तपित्तं निहन्त्याशु कासं श्वासं तथा क्षयम् । विद्रधिं जठरं गुल्मं तृष्णाहृद्रोगपीनसान् ॥ पलार्धं भोजनं चास्य यथेष्टं तत्र भोजनम् ॥ ४ ॥

---

१ (ख० ग० घ० ङ० च० छ०) खण्डकूष्माण्डः । २ (च०) कूष्माण्डकात् । ३ (च०) कूष्माण्डात् ।

## ॥ अथ खण्डकाद्यवलेहः ॥

शतावरी मुण्डितकाबलामृताफलत्वचः पुष्करमूलभार्गी। वृषो बृहत्यौ खदिरस्य मूलं पृथक् पृथक् पञ्च पलानि चात्र ॥ १ ॥ पक्कं जलद्रोणमितेऽष्टमांशं यावद्भवेच्छेषमथैव पूतम्। विमूर्च्छितस्यापि निधाय धीमान्पलानि च द्वादश माक्षिकस्य ॥२॥ तथा सुवर्णस्य च लोहजस्य विद्याद्धितं खण्डघृतस्य तुल्यम्। देयं पलं षोडशकं विधिज्ञो विपाचयेल्लोहमये कटाहे ॥ ३ ॥ गुडेन तुल्यं च यदा भवेत्तदा तुगा विडङ्गं मगधा च शुण्ठी। द्वे जीरके कर्कटकं फलत्रिकं धान्यं मरीचं सकणासकेसरम् ॥ ४ ॥ पलेन मात्रां विदधीत तत्पृथक् सुघट्टितं चूर्णमिदं घृतेन। स्निग्धे कटाहे प्रणिधाय युञ्ज्यात्कर्षप्रमाणं विदधीत चूर्णम् ॥ ५ ॥ प्रभातकाले त्वनुदुग्धपानं गुरूणि चान्नानि च भोजनानि। रक्तं सपित्तं सहसा निहन्ति रक्तप्रवाहं च सरक्तशूलम् ॥ ६ ॥ रक्तातिसारं रुधिरप्रमेहं तथैव वस्तौ विहितं नराणाम्। भगन्दरार्शः श्वयथुं निहन्ति तथाम्लपित्तं किल राजरोगम् ॥ ७ ॥ विशेषतः कुष्ठरुजश्च गुल्मान्बलप्रदं वृष्यतमं प्रदिष्टम् ॥ ८ ॥ इति खण्डकाद्यवलेहः ॥

## ॥ अथ रसाः ॥

शुद्धपारदबलिप्रवालकं हेममाक्षिकभुजङ्गरङ्गकम्। मारितं सकलमेतदुत्तमं भावयेत्पृथक् पृथक् द्रवैस्त्रिशः ॥ १ ॥ चन्दनस्य कमलस्य मालतीकोरकस्य वृषपल्लवस्य च। धान्यवारणकणाशतावरीशाल्मलीवटजटामृतस्य च ॥ २ ॥ रक्तपित्तकुलकण्डनाभिधो जायते रसवरोऽस्रपित्तिनाम्। प्राणदो मधुवृषद्रवैरयं सेवितस्तु वसुकृष्णलैर्मितः। नास्त्यनेन सममत्र भूतले भेषजं किमपि रक्तपित्तिनाम् ॥३॥ इति रक्तपित्तकुलकुठारो रसः ॥

## ॥ अथ वासामृतः ॥

आटरूषनवपल्लवद्रवे पालिके सरसभस्मवल्लकम्। कर्षसंमितमधुप्रयोजितम् प्राश्य नाशयति रक्तपित्तकम् ॥ १ ॥ इति वासामृतः ॥

## ॥ अथ बोलपर्पटी ॥

सूतगन्धकसुकज्जलिकायाः पर्पटी समयुता समभागम्। बोलचूर्णविहितं प्रतिवाप्यं स्याद्रसोऽयमसृगामयहारी ॥ १ ॥ वल्लयुग्मयुगुलं प्रतिदेयं शर्करामधुयुतः किल दत्तः। रक्तपित्तगुदजाक्षतियोनिस्रावमाशु विनिवारयतीशः ॥ २ ॥ इति बोलपर्पटी ॥

## ॥ अथ सुधानिधिरसः ॥

गन्धं सूतं माक्षिकं लोहचूर्णं सर्वं घृष्टं त्रैफलेनोदकेन। लौहे पात्रे गोपयेसा च

१ (ख०) घृते तु तुल्ये। देये पलैः षोडशकैर्वि० २ (ख०) गोपयस्थं। क०। गोपयोभिश्च।

कृत्वा रात्रौ दद्याद्रक्तपित्तप्रशान्त्यै ॥ १ ॥ इति सुधानिधिरसः ॥ यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम्। रक्तपित्ते हितं तच्च क्षतक्षीणे हितं च यत् ॥ २ ॥ इति रक्तपित्तचिकित्सा ॥

## ॥ अथ राजयक्ष्मनिदानम् ॥

अनेकरोगानुगतो बहुरोगपुरोगमः। राजयक्ष्मा क्षयः शोषो रोगराडिति स स्मृतः ॥१॥ नक्षत्राणां द्विजानां च राजा चाभूदयं पुरा। यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥ २ ॥ राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः। तस्मात्तं राजयक्ष्मेति प्रवदन्ति मनीषिणः ॥ ३ ॥ देहौषधक्षयकृते क्षयस्तत्सम्भवाच्च सः। रसादिशोषणाच्छोषो रोगराट् तेषु राजनात् ॥ ४ ॥

## ॥ अथ तत्र कारणचतुष्टयमाह ॥

वेगरोधात्क्षयाच्चैव साहसाद्विषमाशनात्। त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात्॥१॥क्षयः शोषो राजयक्ष्मा रोगराडिति कीर्तितः। यावद्दोषा रसस्थानं नाप्नुवन्ति विशेषतः ॥ २ ॥ न भजेच्च ज्वरस्तावत् प्राप्ते प्राप्ते प्रवर्तते। कफप्रधानैर्दोषैर्हि रुद्धेषु रसवर्त्मसु ॥ ३ ॥ अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तराः। क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ॥ ४ ॥

## ॥ पूर्वरूपमाह ॥

श्वासाङ्गसादकफसंस्रवतालुशोषवम्यग्निसादमदपीनसकासनिद्राः। शोषे भविष्यति भवन्ति स चापि जन्तुः शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥ १ ॥ स्वप्नेषु काकशुकशल्लकनीलकण्ठगृध्रास्तथैव कपयः कृकलासकाश्च। तं वाहयन्ति स नदीर्विजलाश्च पश्येच्छुष्कांस्तरून्पवनधूमदवार्दितांश्च ॥ २ ॥ त्रिरूपं दर्शयन्नाह। अंसपार्श्वाभितापाश्च सन्तापः करपादयोः। ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥ १ ॥ अग्निमान्द्यं ज्वरः शैत्यं वान्तिः शोणितपूययोः। सत्त्वहानिश्च दौर्बल्यं रोगराजस्य लक्षणम् ॥ २ ॥ दोषभेदेन एकादश रूपाण्याह ॥ स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपार्श्वयोः। ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः ॥ ३ ॥ शिरसः परिपूर्णत्वमभक्तच्छन्द एव च। कासकण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः ॥ ४ ॥ तस्य षड्रूपाण्यपि दर्शयितुमाह ॥ भक्तद्वेषो* ज्वरः कासः श्वासशोणितदर्शनम्। स्वरभेदश्च जायन्ते षडेते राजयक्ष्मणि ॥ ५ ॥ एकादशभिरेतैर्वा षड्भिर्वापि समन्वितम्। कासातिसारपार्श्वार्तिस्वरभेदारुचिज्वरैः ॥ ६ ॥ त्रिभिर्वा पीडितं लिङ्गैः कासश्वासासृगामयैः। जह्याच्छोषार्दितं जन्तुमिच्छन्सुविपुलं यशः ॥ ७ ॥ सर्वैरर्धैस्त्रिभिर्वापि लिङ्गैर्मांसबलक्षयैः। युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्य-

* अभक्तस्य श्रवणस्मरणदर्शनस्पर्शनैर्यत्रोद्विजते स भक्तद्वेषः

१ (घ०) क्षयकरः। २ (ख० ग० घ० ङ० च० छ०) रोगरञ्जनात्। ३ (च०) ज्वरकासा। ४ (च०) द्रवे।

तोऽन्यथा ॥ ८ ॥ महाशनं क्षीयमाणमतीसारनिपीडितम् । शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत् ॥ ९ ॥ उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् । शुक्राक्षमश्रद्वेष्टारमूर्ध्वश्वासनिपीडितम् ॥ १० ॥ कृच्छ्रेण बहुमेहन्तं यक्ष्मा हन्तीह मानवम् । व्यवायशोकवार्धक्यव्यायामाध्वप्रशोषितान् ॥ ११ ॥ व्रणोरःक्षतसंज्ञौ च शोषिणौ लक्षणैः शृणु ॥ शुक्रक्षयलक्षणमाह । शुक्रक्षये रतेऽशक्तिर्व्यथा शेफसि मुष्कयोः ॥१२॥ चिरेण शुक्रसेकः स्यात्सेके रक्ताल्पशुक्रता । व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः ॥१३॥ पाण्डुदेहो यथा पूर्वं क्षीयन्ते चास्य धातवः । प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ॥१४॥ चिन्ताशुक्रक्षयकृतैर्विकारैरुपलक्षितः ॥१५॥ जराशोषिलक्षणमाह ॥ जराशोषी कृशो मन्दवीर्यबुद्धिबलेन्द्रियः । दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं भ्रमः ॥१६॥ क्लैब्यं शुक्रविसर्गश्च क्षीणशुक्रस्य लक्षणम् । कम्पनोऽरुचिमान्भिन्नकांस्यपात्रसमस्वनः ॥ १७ ॥ ष्ठीवति श्लेष्मणा हीनं गौरवारतिपीडितः । संप्रस्रुताक्षिनासास्यः शुष्करूक्षमलच्छविः ॥ १८ ॥ अध्वशोषिणमाह ॥ अध्वप्रशोषी स्रस्ताङ्गः सम्भृष्टपरुषच्छविः । प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ॥१९॥ व्यायामशोषिलक्षणमाह ॥ व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः । लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षताद्विना ॥ २० ॥ व्रणशोषिणमाह ॥ रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् । व्रणिनश्च भवेच्छोषः स चासाध्यतमो मतः ॥ २१ ॥ परं दिनसहस्रं तु यदि जीवति मानवः । सुभिषग्भिरुपक्रान्तस्तरुणः शोषपीडितः ॥ २२ ॥ मलायत्तं बलं पुंसां शुक्रायत्तं तु जीवितम् । तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥ २३ ॥ इति राजयक्ष्मनिदानम् ॥

## ॥ अथातो राजयक्ष्मचिकित्सां व्याख्यास्यामः ॥

किञ्चिल्लिङ्गयुतं दीप्तपावकं त्वकृशं नरम् । उपाचरेदात्मवन्तं यक्ष्मिणं साध्यलक्षणम् ॥ १ ॥ अर्धलिङ्गैः कृच्छ्रसाध्यं सर्वलिङ्गैः परित्यजेत् । यक्ष्मिणं शुक्लनयनं तथा भक्तद्विषं कृशम् ॥ २ ॥ तथोर्ध्वश्वासिनं कृच्छ्रं मेहन्तं परिवर्जयेत् । क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ॥ ३ ॥ व्यवायशोषिणं क्षीररसमांसाद्यभोजनैः । मुकुलैर्मधुरैर्गन्धैर्जीवनीयैरुपाचरेत् ॥ ४ ॥ व्रणशोषं जयेत्स्निग्धैर्दीपनैः स्वादुशीतलैः । दीपनैर्लघुभिश्चान्नैः शोकशोषमुपाचरेत् ॥ ५ ॥ हर्षणाश्वासनैः क्षीरैः स्निग्धैर्मधुरशीतलैः । आस्यासुखैर्दिवास्वप्नशीतैर्मधुरबृंहणैः ॥ ६ ॥ तत्रं मांसरसाहारैरध्वशोषिणमाचरेत् । ईषदम्लैरनम्लैर्वा यूषमांसरसादिभिः ॥ ७ ॥ व्यायामशोषिणं स्निग्धैः क्षतक्षयहितैर्हिमैः । उपचारैर्जीवनीयैर्विधिना श्लैष्मिकेण तु ॥ ८ ॥बलिनो बहुदोषस्य वमनं रेचनं तथा । वातश्लेष्महरं क्वाथं दद्याद्दोषापहं पुरा ॥९॥ यक्ष्मिणः क्षीणदेहस्य यत्कृतं स्यात्क्रिषोपमम् । वृन्ताकं कारवेल्लं च तैलं बिल्वं च राजिकाम् ॥१०॥ मैथुनं च दिवा निद्रां क्षयी कोपं च वर्जयेत् । शालिषष्टिकगो-

१ (ख०) विना। २ (ख०) हवि। ३ (ख०) रक्तमांस० (ग० क० छ०) तक्रमांस०

धूमयवमुद्गादयः शुभाः ॥ ११ ॥ मद्यानि जाङ्गलाः पक्षिमृगाः शस्ताः विशुष्यतः । मूलकानां कुलत्थानां यूषैर्वा सूपसंस्कृतैः ॥ १२ ॥ सपिप्पलीकं सयवं सकुलत्थं सनागरम् । दाडिमामलकोपेतं स्निग्धमाजरसं पिबेत् ॥ १३ ॥ तेन षड् विनिवर्तन्ते विकाराः पीनसादयः । सधान्ययवगोधूममुद्गाश्चापि सदा हिताः ॥१४॥ स्त्रियश्चतुष्पदे श्रेष्ठाः पुमांसो विहगा मताः । हरिणच्छागमांसं तु श्लक्ष्णचूर्णीकृतं शुभम् ॥ १५ ॥ अजाक्षीरेण पातव्यं क्षयव्याधिनिवारणम् । छागमांसं पयश्छागं सर्पिश्छागं सशर्करम् ॥ छागोपसेवा सततं छागमध्ये तु यक्ष्मनुत् ॥ १६ ॥

## ॥ अथ षडङ्गयूषः ॥

द्रव्यतो द्विगुणं मांसं सर्वतोऽष्टगुणं जलम् । पादस्थं संस्कृतं चाज्ये षडङ्गो यूष उच्यते ॥ १ ॥ इति षडङ्गयूषः । धान्यकं पिप्पलीविश्वदशमूलीजलं पिबेत् । पार्श्वशूलज्वरश्वासपीनसादिनिवृत्तये ॥ १ ॥ दशमूलबलारास्नापुष्करामरदारुनागरैः क्वथितम् । पेयं पार्श्वांसशिरोरुक्क्षतकासादिशान्तये सलिलम् ॥ २ ॥ इति दशमूलादिः ॥ ककुभत्वङ्नागरबलावातारिबीजानि चूर्णितं पीतम् । पक्वं मधुघृतयुक्तं सशिवं यक्ष्मादिकासहरम् ॥ १ ॥ अश्वगन्धामृता भीरुदशमूली बलावृषम् । पुष्करातिबला हन्ति क्षयं क्षीररसाशिनः ॥ २ ॥

## ॥ अथ तालीसाद्यं चूर्णम् ॥

तालीसपत्रं मरिचं नागरं पिप्पली तुगा । यथोत्तरं भागवृद्ध्या त्वगेले चार्धभागिके ॥ १ ॥ पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा । कासश्वासारुचिहरं तच्चूर्णं दीपनं परम् ॥ पाण्डुत्हृद्ग्रहणीदोषप्लीहशोषज्वरापहम् ॥ २ ॥ अथ सितोपलाद्यं चूर्णम् ॥ सितोपला षोडश स्यादष्टौ स्याद्वंशरोचना । पिप्पली स्याच्चतुष्कर्षा एला स्याच्च द्विकार्षिका ॥ १ ॥ एककर्षस्त्वचः कार्यश्चूर्णयेत्सर्वमेकतः । सितोपलादिकं चूर्णं मधुसर्पिर्युतं लिहेत् ॥ २ ॥ कासश्वासक्षयहरं हस्तपादाङ्गदाहजित् । मन्दाग्निं सुप्तजिह्वत्वं पार्श्वशूलमरोचकम् । ज्वरमूर्ध्वगतं रक्तपित्तमाशु व्यपोहति ॥ ३ ॥ अथ लवङ्गादिचूर्णम् ॥ लवङ्गकक्कोलमुशीरचन्दनं नतं सनीलोत्पलकृष्णजीरकम् । एला सकृष्णागरुभृङ्गकेसरं कणा सविश्वानलदं सहाम्बुना ॥ १ ॥ कर्पूरजातीफलवंशरोचनं सितार्धभागं समसूक्ष्मचूर्णितम् । संरोचनं तर्पणमग्निदीपनं बलप्रदं वृष्यतमं त्रिदोषनुत् ॥ २ ॥ उरोविबन्धं तमकं गलग्रहं सकासहिध्मारुचि यक्ष्मपीनसम् । ग्रहण्यतीसारमथास्रजः क्षयं प्रमेहगुल्मांश्च निहन्ति सत्वरम् ॥ ३ ॥ अथ कर्पूराद्यं चूर्णम् ॥ कर्पूरचोचकक्कोलजातीफलदलाः समाः । लवङ्गमांसीमरिचकृष्णाशुण्ठ्यो विवर्धिताः ॥ १ ॥ चूर्णं सितासमं हृद्यं सदाहक्षय-

१ ( ख० ग० घ० ङ० च० छ० ) शुभा । २ ( ङ० ) द्विकर्षिका । ३ ( च० ) हिता ।

कासजित् । वैस्वर्यपीनसश्वासच्छर्दिकण्ठामयापहम् । प्रयुक्तं चान्नपानैर्वा भेषज-द्वेषिणां हितम् ॥ २ ॥ इति ह्रदयदाहे कर्पूराद्यं चूर्णम् ॥

## ॥ अथैलादिचूर्णम् ॥

एलापत्रं नागपुष्पं लवङ्गं भागस्त्वेषां द्वौ च खर्जूरकस्य । द्राक्षायष्टीशर्करा-पिप्पलीनां चत्वारस्तत्क्षौद्रयुक्तं क्षये स्यात् ॥ १ ॥

## ॥ अथाश्वगन्धाचूर्णम् ॥

अश्वगन्धादशपलं तदर्धं नागरान्वितम् । तदर्धं कणया युक्तं मरीचं च चतुर्थकम् ॥ १ ॥ चातुर्जातं वरालं च भार्गीतालीसपत्रकम् । कचोराजाजिकैडर्य-मांसीकक्कोलमुस्तकम् ॥ २ ॥ रास्नाकटुकरोहिण्याजीवन्तीकुष्ठकं तथा । प्रायः कर्षमितं चूर्णं चूर्णेन समशर्करा ॥ ३ ॥ प्रातःकाले त्विदं चूर्णं जलेनोष्णेन सेवयेत् । वातक्षये पित्तशोषे त्वजागोघृतसंयुतम् ॥ ४ ॥ श्लेष्मक्षये क्षौद्रयुतं नवनीतेन मेहजित् । शिरोभ्रमे च पित्तार्ते गोक्षीरेण समायुतम् ॥ ५ ॥ क्षतक्षीणे च देहे च विशेषबलवर्धनम् । मेदोहरं च मन्दाग्निकुक्षिशूलोदरापहम् ॥ अनुपान-विशेषेण सर्वरोगहरं परम् ॥ ६ ॥

## ॥ अथ द्राक्षादिचूर्णम् ॥

द्राक्षालाजसितोत्पलं समधुकं खर्जूरगोपीतुगाह्वीवेरामलकाब्दचन्दननतं कक्को-लजातीफलम् । चातुर्जातकणा सधान्यकमिदं चूर्णं समां शर्करां प्रातर्भक्षित-मात्मकेन विधिना पित्तं सदाहं जयेत् ॥ १ ॥ मूर्च्छां छर्दिमरोचकं च शमयेत् कायस्य कान्तिप्रदं पाण्डुं कामलरक्तपित्तमुदरं दाहज्वरारोचकम् । यक्ष्मागं रुधिरप्रमेहहरणं तद्योनिदोषापहं रक्ताशोंमदवृद्धिविद्रधिहरं द्राक्षादिचूर्णोत्तमम् ॥ २ ॥ यवगोधूमचूर्णं वा क्षीरसिद्धं घृतप्लुतम् । सक्तून्वा सर्पिषा क्षौद्रसिताक्तां-न्भयशान्तये ॥ ३ ॥

## ॥ अथ चतुर्दशाङ्गलोहम् ॥

रास्नाकर्पूरतालीसं भेकपर्णी शिलाजतु । त्रिकटु त्रिफला मुस्ता विडङ्गदहनाः स-माः ॥ १ ॥ चतुर्दशायसो भागास्तच्चूर्णं मधुसर्पिषा । लीढं कासं ज्वरं श्वासं राज-यक्ष्माणमेव च ॥ बलवर्णाग्निपुष्टीनां वर्धनं दोषनाशनम् ॥ २ ॥

## ॥ अथ बृहन्नवायसम् ॥

त्रिकटुत्रिफलैलाभिर्जातीफललवङ्गकैः । नवभागोन्मितैरेतैः समं तीक्ष्णं मृतं भवे-

१ (घ०) वैवर्ण्य । २ (ग० च०) क्षये । ३ (च०) संस्कृत्य । ४ (च०) सिताक्तं । ५ (ख० ग० घ०) बृहन्नवायसम् ।

त् ॥ १ ॥ सञ्चूर्ण्यालोडयेत्क्षौद्रे नित्यं यः सेवते नरः । कासं श्वासं क्षयं मेहं पाण्डुरोगं भगन्दरम् । ज्वरं मन्दानलं शोथं सम्मोहं ग्रहणीं जयेत् ॥ २ ॥

## ॥ अथ शिलाजतुयोगः ॥

फलत्रिकक्काथविशुद्धमादौ शीघ्रं गुडूच्या दशमूलसिद्धम् । स्थिरादिकाकोलियुगादिसिद्धं शिलाजतु स्यात्क्षयिषु प्रशस्तम् ॥ १ ॥ द्राक्षाखर्जूरसर्पिर्भिः पिप्पल्या च सह स्मृतम् । सक्षौद्रं ज्वरकासघ्नं स्वर्यं चैतत्प्रयोजयेत् ॥ २ ॥ मधुताप्यविडङ्गाश्मजतुलोहघृताभयम् । हन्ति यक्ष्माणमत्युग्रं सेव्यमानं हिताशिना ॥३॥ शिलाजतुमधुव्योषताप्यलोहरजांसि च । क्षीरभुग्लेहिनश्चाशु क्षयः क्षयमवाप्नुयात् ॥ ४ ॥ कृष्णाद्राक्षासितालेहः क्षयेद्वा क्षौद्रतैलवान् । मधुसर्पिर्युतो वाश्वगन्धाकृष्णासितोद्भवः ॥ ५ ॥ कूष्माण्डकगिरोत्थेन रसेन परिपेषितम् । लाक्षाकर्षद्वयं पीत्वा जयेद्रक्तक्षयं तथा ॥ ६ ॥ शतपुष्पा समधुकं कुष्ठं तगरचन्दनम् । आलेपनं स्यात्सघृतं शिरःपार्श्वांसशूलनुत् ॥ ७ ॥ अश्वत्थवल्कलं चैव त्रिकटुं लोहकिट्टकम् । गुडेन सह दातव्यं क्षयरोगविनाशनम् ॥८॥ अथ चिकित्साकलिकातश्च्यवनप्राशयावलेहः ॥ द्विपञ्चमूलीजलसिद्धमाज्यं वासाघृतं वाप्यथ षट्पलं च । पेयं हि तच्छागलगव्यतोऽथ प्रयुज्यते नागबलाभिधानम्॥१॥शृङ्गीतामलकीफलत्रिकबलीछिन्नाविदारीसटीजीवन्तीदशमूलचन्दनघनैर्नीलोत्पलैलावृषैः । मृद्वीकाष्टकवर्गपौष्करयुतैः सार्धं पृथक् पालिकैरष्टोनानि शतानि पञ्च विपचेद्धात्रीफलानामपः ॥ २ ॥ उद्धृत्यामलकानि तैलघृतयोः षड्भिश्च षड्भिः पलैर्भृष्टान्यर्धतुलां निधाय विधिवन्मत्स्यण्डिकायाः पचेत् । शीते षण्मधुनः पलानि कुडवो वांश्याश्चतुर्जाततो मुष्टिर्मागधिकाफलद्वयमयं प्राश्यः स्मृतश्च्यावनः ॥ ३ ॥ न शोषः साफल्यं व्रजति वपुषि क्षीणमनसो न मूर्च्छा नो छर्दिस्तदपि च न च श्वासकसनम् । न चालक्ष्मीर्विघ्नः क्वचिदपि च न व्यापदभयं प्रयोगादेतस्मान्मनसिजधियो बिभ्रति मनः ॥ ४ ॥ इति च्यवनप्राश्यः ॥ अथ खण्डपिप्पल्यवलेहः ॥ कृष्णाप्रस्थं पचेच्चाढकपयसि घृतस्याञ्जलिं खण्डपात्रं दत्वा लेहोऽयमस्मिन्सुरकुसुमचतुर्जातविश्वोषणादीन् । ग्रन्थिश्रीखण्डयष्टीमधुमसृणजलं जातिकोशं च कर्षं प्रत्येकं चूर्णयित्वा मधुकुडवयुतः स्याच्च कृष्णावलेहः ॥ १ ॥ आदौ मन्दाग्निकार्श्यं हरति स च शिशुस्त्रीजरन्मानुषेषु प्रायो वृष्यः क्षयाद्यो विपुलबलकरो दीपनः पाचनश्च । कासश्वासांश्च मेहक्षयरुगतितृषाकामलापाण्डुकण्डूप्लीहाजीर्णज्वरांश्चानिलकफविकारांतें रक्तपित्तं च हन्यात् ॥ २ ॥ अथ वासावलेहः ॥ तुलामादाय वासायाः पचेदष्टगुणे जले । तेन पादावशेषेण पाचयेदाढकं भिषक् ॥ १ ॥ चूर्णानामभयानां तु खण्डच्छेदशतं तथा । द्वे पले पिप्पलीचूर्णात्सिद्धे शीते च माक्षिकात् ॥ २ ॥ कुडवं पलमानं तु चातुर्जातं सुचूर्णितम् । क्षिप्त्वावलोडितं खादेद्रक्तपित्तक्षतक्षयी । कासश्वासगृहीतश्च यक्ष्मणा च विशेषतः ॥३॥ इति वासावलेहः । शार्ङ्ग-

---

१ (च०) क्षीरयुग्लेहिन—२ (च०) क्षये वा । ३ (च०) पल । ४ (च०) खण्डाच्च दशकं ।

धरादगस्त्यवलेहः। हरीतकीशतं भद्रं यवानामाढकं तथा। पलानां दशमूलस्य विंशतिं च नियोजयेत् ॥ १ ॥ चित्रकः पिप्पलीमूलमपामार्गः सटी तथा। कपिकच्छुः शङ्खपुष्पी भार्गी च गजपिप्पली ॥ २ ॥ बला पुष्करमूलं च पृथग् द्विपलमात्रया। पचेत्पञ्चाढके नीरे यवैः स्विन्नैः शृतं नयेत् ॥३॥ तत्राभयाशतं दद्यात्काथे तस्मिन्विचक्षणः। सर्पिस्तैलाष्टपलिकं क्षिपेद् गुडतुलां तथा ॥ ४ ॥ पक्त्वा लेहत्वमानीय सिद्धशीते पृथक् पृथक्। क्षौद्रं च पिप्पलीचूर्णं दद्यात्कुडवमात्रया ॥ ५ ॥ हरीतकीद्वयं खादेत्तेन लेहेन नित्यशः। क्षयं कासं ज्वरं श्वासं हिक्कार्शोऽरुचिपीनसान् ॥ ६ ॥ ग्रहणीं नाशयत्येष वलीपलितनाशनः। बलवर्णकरः पुंसामवलेहो रसायनम् ॥ ७ ॥ विहितोऽगस्त्यमुनिना सर्वरोगप्रणाशनः। शर्करामधुसंयुक्तं नवनीतं लिहन् क्षयी। क्षीराशी लभते पुष्टिमतुल्ये चाज्यमाक्षिके ॥ ८ ॥

## ॥ अथ शिवगुटिका ॥

श्रीन्वारान् प्रथमं शिलाजतुजले भाव्यं भवेत्त्रैफले निष्काथे दशमूलजेऽथ तदनुच्छिन्नोद्भवाया रसे। वाट्यालक्कथने पटोलसलिले यष्टीकषाये पुनर्गोमूत्रेऽथ पयस्यथापि च गवामेषां कषाये ततः ॥ १ ॥ द्राक्षाभीरुविदारिकाद्वयपृथक्पर्णीस्थिरापौष्करैः पाठाकौटजकर्कटाख्यकटुकारास्नाम्बुदालम्बुषैः। दन्तीचित्रकचव्यवारणकणावीराष्टवर्गौषधैरब्द्रोणे चरणस्थिते पलमितैरेभिः पृथग्भावयेत् ॥ २ ॥ धात्रीमेषविषाणिकात्रिकटुकैरेभिः पृथक् पञ्चकैर्द्रव्यैश्च द्विपलोन्मितैरपि पलं चूर्णं विदारीभवम्। तालीसास्कुडवं चतुष्पलमिह प्रक्षिप्यते सर्पिषस्तैलस्य द्विपलं पलाष्टकमथ क्षौद्राद्भिषग् योजयेत् ॥ ३ ॥ तुल्यं पलैः षोडशभिः सितायास्त्वक्क्षीरिकापत्रककेसरैश्च। बिल्वांशकैस्त्वक्त्रुटिसम्प्रयुक्तैरित्यक्षमात्रा गुटिकाः प्रकल्प्याः ॥ ४ ॥ तासामेकतमां प्रयोज्य विधिवत्प्रातः पुमान्भोजनात्प्राग्वा मुद्गदलाम्बुजाङ्गलरसं शीतं शृतं वा जलम्। माक्षीकं मदिरामगुर्वशनभुक् पीत्वा पयो वा गवां प्राप्नोत्यङ्गमनङ्गवत्सुभगतां संपन्नमानन्दकृत् ॥ ५ ॥ शोफग्रन्थिविमन्थवेपथुवमीपाण्ड्वामयश्लीपदप्लीहार्शःप्रदरप्रमेहपिटिकामेहाश्मरीशर्कराः। हृद्रोगार्बुदवृद्धिविद्रधियकृद्योन्यामयाः सानिला ऊरुस्तम्भभगन्दरं ज्वररुजस्तूनी प्रतूनी तृषा ॥ ६ ॥ वातासृक् प्रबलं प्रवृद्धमुदरं कुष्ठं किलासं कृमीन्कासश्वासमुरःक्षतक्षयमसृक्पित्तं सपानात्ययम्। उन्मादं मदमप्यपस्मृतिमतिस्थौल्यं कृशत्वं तनोः सालस्यं च हलीमकं च शमयेन्मूत्रस्य कृच्छ्राणि च ॥७॥ भवति जरया सर्वश्वेतैरकालजराकृतैर्वृतमलिकुलाकारैरेभिः शिरश्च शिरोरुहैः। प्रसरति बलं त्वस्तातङ्कं वपुश्च समुद्वहन्प्रभवति शतं स्त्रीणां गन्तुं जनो जनवल्लभः ॥ ८ ॥ स्तिमितमतिरप्यज्ञानान्धः सदस्यपटुः पुमान् सकृदपि यया ज्ञानोपेतः श्रुतिस्मृतिमान् भवेत्। व्रजति च यया युक्तो योगी शिवस्य समीपतां शिवगुटिकया कस्तामेतां करोति न मानुषः ॥ ९ ॥ इति शिवगुटिका ॥

## ॥ अथ लघुशिवगुटिका ॥

कौटजत्रिफलानिम्बपटोलघननागरैः । भावितानि दशाहानि रसैर्द्वित्रिगुणानि च ॥१॥ शिलाजतुपलान्यष्टौ तावती सितशर्करा । त्वक्क्षीरीपिप्पलीधात्रीकर्कटाख्यान् पलोन्मितान् ॥२॥ निदिग्धिफलमूलाभ्यां पलं युञ्ज्यात्त्रिजातकान् । मधुत्रिफलसंयुक्तान्कुर्यादक्षसमान्गुडान् ॥ ३ ॥ दाडिमाम्रपयःक्षीररसयूषसुरासवान् । तं भक्षयित्वानुपिबेन्निरन्नो हितभक्ष्यभाक् ॥ ४ ॥ पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगन्दरम् । नाशयेन्मूत्रकृच्छ्राणि मूत्रस्थानविबन्धनात् ॥५॥ यद्यत्र विनतो येन कान्तलोहं तथाभ्रकम् । पलं पलं च मिलिते तदा स्यात् किमतः परम् ॥ ६ ॥ तीव्रदुःखप्रदं पाण्डुं प्रमेहं सपरिग्रहम् । राजरोगं च व्याधींश्च जयेदिति किमद्भुतम् ॥ ७ ॥ इति लघुशिवगुटिका ॥ अथ सूर्यप्रभागुटिका ॥ दार्वी व्योषविडङ्गचित्रकवचापीताकरञ्जामृतादेवाह्वातिविषा त्रिवृत्सकटुका कुस्तुम्बरुः कारवी । द्वौ क्षारौ लवणत्रयं गजकणा चव्यं तथा पुष्करं तालीसं कणमूलपुष्करजटाभूनिम्बसंज्ञैर्युतम् ॥ १ ॥ भार्गी पद्मकजीरकेशकुटजो दन्ती वचा भद्रकं सर्वं कर्षसमांशकं सुभिषजा सूक्ष्मं च संचूर्णितम् । तद्वत्पञ्चपलं वरं गिरिजतु स्यात्पञ्चमुष्टिः पुरो लोहस्य द्विपलं पलद्वयमथो ताप्यस्य सम्मिश्रितम् ॥ २ ॥ क्षिप्त्वा पञ्च पलानि शुभ्रसिकता वांशीपलं योजितमेकैकं त्रिसुगन्धि वस्तुपलिकं क्षौद्रैर्घृतैर्लेहवत् । एकीकृत्य समांशमेव गुटिका कार्या सुवर्णोन्मिता सा च ब्रह्ममुखाम्बुजप्रकटिता सूर्यप्रभा नामतः ॥ ३ ॥ शोषं कासमुरःक्षतं सतमकं पाण्ड्वामयं कामलां गुल्मं विद्रधिपार्श्वशूलमुदरं स्त्रीषु क्षयं च क्रिमीन् । कुष्ठार्शोविषमज्वरग्रहणिकामूत्रग्रहं नाशयेद्भुक्त्वैकां गुटिकां प्रहृष्टमनसा योज्यं यथेष्टाशनम् ॥ ४ ॥ नास्त्येतत्सममौषधं त्रिजगतीचक्रे हितं प्राणिनामुद्दामप्रमदामदद्विपदराट्सिंही तु सूर्यप्रभा ॥ ५ ॥ इति सूर्यप्रभा गुटिका ॥

## ॥ अथ घृतानि ॥

अथ बलाद्यं घृतम् । बलाश्वदंष्ट्रा बृहती कलशी धावनी स्थिरा । निम्बः पर्पटकं मुस्तं त्रायमाणं दुरालभा ॥ १ ॥ कृत्वा कषायं पेयार्थं दद्यात्तामलकीं सटीम् । द्राक्षां पुष्करमूलं च मेदामामलकानि च ॥ २ ॥ घृतं पयश्च तत्सिद्धं सर्पिर्ज्वरहरं परम् । क्षयकासप्रशमनं शिरःपार्श्वरुजापहम् ॥ ३ ॥ इति बलाद्यं घृतम् ॥ अथ कोलाद्यं घृतम् । कोललाक्षारसे तद्वत्क्षीराष्टगुणसाधितम् । कल्कैः षडङ्गदार्वीत्वग्द्राक्षाक्षोटफलान्वितम् ॥ १ ॥ घृतं खर्जूरमृद्वीकामधुकैः सपरूषकैः । सपिप्पलीकं वैस्वर्यकासश्वासज्वरापहम् ॥ २ ॥ इति कोलाद्यं घृतम् ॥ अथ गोक्षुराद्यं घृतम् ॥ श्वदंष्ट्रां सदुरालभां चतस्रः पर्णिनीर्बलाम् । भागान्पलोन्मितान्कृत्वा पलं पर्पटकस्य च ॥ १ ॥ पचेद्दशगुणे तोये दशभागावशेषिते । रसे पूते तु द्रव्याणा-

१ ( च० ) योजितम् । २ ( ङ० च० छ० ) कोश । ३ ( ग० च० छ० ) लेहयेत् । ४ ( क० ङ० ख० ) पेय्यार्थम् ।५ ( च० ) रसैः ।

मेषां कल्कान्समावपेत् ॥ २ ॥ सटी पुष्करमूलानां पिप्पलीत्रायमाणयोः । आमल-क्याः किराताना तिक्तस्य कटुकस्य च ॥ ३ ॥ फलानां सारिवायाश्च सुपिष्टा कर्ष-सम्मितान् । तैः साधयेद् घृतप्रस्थं क्षीरद्विगुणितं भिषक् ॥ ४ ॥ ज्वरं दाहं तमः श्वासं कासं पार्श्वशिरोरुजम् । तृष्णां छर्दिमतीसारमेतत्सर्पिर्व्यपोहति ॥ ५ ॥ इ-ति गोक्षुराद्यं घृतम् ॥ अथ जीवन्त्यादिघृतम् ॥ जीवन्तीमधुकं द्राक्षां फलानि कु-टजस्य च । सटीपुष्करमूलं च व्याघ्रीं गोक्षुरकम्बलाम् ॥ १ ॥ नीलोत्पलं चामल-कीं त्रायमाणां दुरालभाम् । पिप्पलीं च समां पिष्ट्वा घृतं वैद्यो विपाचयेत् ॥ २ ॥ एतद्व्याधिसमूहस्य रोगराजस्य दुर्जयम् । रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥ ३ ॥ इति जीवन्त्यादि घृतम् ॥ इति घृतानि ।

## ॥ अथ तैलानि ॥

अथ चन्दनादितैलम् ॥ चन्दनाम्बुनखं वाप्यं यष्टी शैलेयपद्मकम् । मञ्जिष्ठा स-रलं दारु पटोलं पूतिकेसरम् ॥ १ ॥ पत्रं बिल्वमुशीरं च कक्कोलं चन्दनाम्बुदम् । हरिद्रे सारिवे तिक्ता लवङ्गागुरुकुङ्कुमम् ॥ २ ॥ त्वग्रेणुनलिका चैभिस्तैलं मस्तु चतुर्गु-णम् । लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्णकृत् ॥ ३ ॥ अपस्मारज्वरोन्मादकृत्याल-क्ष्मीविनाशनम् । आयुःपुष्टिकरं चैव वशीकरणमुत्तमम् ॥ विशेषात् क्षयरोगघ्नं रक्त-पित्तहरं परम् ॥४॥ इति चन्दनादितैलम् ॥ अथ लाक्षादितैलम् ॥ तैलं प्रस्थमितं चतुर्गुणजतुक्वाथं चतुर्मस्तुरुग्यष्टीदारुनिशाब्दमूर्वकटुकामिश्यश्च कौन्तीहिमैः । रास्ना-द्यैः पिचुसम्मितैः कृतमिदं शस्तं तु जीर्णज्वरे सर्वस्मिन्विषमेऽपि यक्ष्मणि शिशौ वृद्धे सगर्भासु च ॥ १ ॥ इति लाक्षादितैलम् ॥

## ॥ अथ चन्दनबलालाक्षादि तैलम् ॥

चन्दनं च बलामूलं लाक्षा लामज्जकं तथा । पृथक् पृथक् प्रस्थमितं जलद्रोणे विपाचयेत् ॥ १ ॥ चतुर्भागावशेषेऽस्मिंस्तैलं प्रस्थद्वयं क्षिपेत् । चन्दनोशीरमधु-कशताह्वा कटुरोहिणी ॥ २ ॥ देवदारु निशाकुष्ठं मञ्जिष्ठागुरुवालकम् । अश्व-गन्धाबलादार्वीमूर्वा मुस्तां समूलिकाम् ॥ ३ ॥ एला त्वग्नागकुसुमं रास्ना लाक्षा सुगन्धिका । चम्पकं पीतसारं च सारिवा चोरकद्वयम् ॥ ४ ॥ कल्कैरेतैः समायुक्तं क्षीराढकसमन्वितम् । तैलमभ्यञ्जने श्रेष्ठं सप्तधातुविवर्धनम् ॥ ५ ॥ कासश्वास-क्षयहरं सर्वच्छर्दिनिवारणम् । असृग्दरं रक्तपित्तं हन्ति [1] पित्तकफामयम् ॥ ६ ॥ कान्तिकृद्दाहशमनं कण्डूविस्फोटनाशनम् । शिरोरोगं नेत्रदाहमङ्गदाहं च नाश-येत् ॥ ७ ॥ वातामयहतानां च क्षीणानां क्षीणरेतसाम् । बालमध्यमवृद्धानां शस्यते शोफकामले ॥ पाण्डुरोगे विशेषेण सर्वज्वरविनाशनम् ॥ ८ ॥

## ॥ अथाश्वगन्धादितैलम् ॥

अश्वगन्धा बला लाक्षा प्रस्थं प्रस्थं पृथक् पृथक् । जलद्रोणेऽपि पक्तव्यं चतु-

1 ( ख० ) पट्टैलाजाति ।

भागावशेषितम् ॥ १ ॥ तैलं त्रिमानिकं दद्याद्दधिमस्तु चतुर्गुणम् । अश्वगन्धा निशा दारु कौन्ती कुष्ठाब्दचन्दनैः ॥ २ ॥ निशा तिक्ता शताह्वा च लाक्षा मूर्वा समूलकैः । सुरदारु च मञ्जिष्ठा मधुकोशीरसारिवा ॥ ३ ॥ समभागानि सर्वाणि कल्कीकृत्य विपाचयेत् । सर्वज्वरं हरत्याशु शोफघ्नं लघु बृंहणम् ॥४॥ कासश्वासहरं चैव सर्वधातुविवर्धनम् । एतदभ्यञ्जनेनाशु क्षयरोगो विमुञ्चति ॥ ५ ॥ इत्यश्वगन्धादितैलम् ॥

## ॥ अथ लक्ष्मीविलासतैलम् ॥

एलाश्रीखण्डरास्नाजतुनखशशिकंकोलकं चाथ मुस्ता बालत्वग् दारुकृष्णागुरुतगरजटाकुष्ठमेतत् समांशम् । त्रैगुण्यं कालरालं सुदृढमरुकापत्रतः सिद्धमेततैलं पुष्पैश्च भाव्यं परिमलमिलितं नामतो गन्धतैलम् ॥ १ ॥ एतल्लक्ष्मीविलासं जनयति जगतीनायकैः सम्प्रयुक्तं युक्त्या नाना च रोगान्निखिलगदहरं वातसङ्घातहन्तृ। पीतं ताम्बूलवल्लीदलमिलितमलं जाठरं वह्निमिद्धं कुर्याद्दुर्नामदद्रुक्षयमपि नितरामङ्गसम्मर्दनेन ॥ २ ॥ इति लक्ष्मीविलासतैलम् ॥

## ॥ अथ द्राक्षासवः ॥

मृद्वीकायास्तुलार्धं तु द्विद्रोणेऽपां विपाचयेत् । पादशेषे कषाये च पूते शीते प्रदापयेत् ॥ १ ॥ गुडस्य द्वितुला मानी धातक्या घृतभाजने । विडङ्गं फलिनी कृष्णा त्वगेला पत्रकेसरम् ॥ २ ॥ मरीचं च भिषक् चूर्णं सम्यग्दत्वा विचक्षणः । क्षिपेच्च पलिकैर्भागैः स्थापयेच्चैव तद्दिने ॥ ३ ॥ ततो यथाबलं पीत्वा कासश्वासगलामयान् । हन्ति यक्ष्माणमत्युग्रमुरःसन्धानकारकम् ॥ ४ ॥ चतुर्थभागां द्राक्षायाः धातकीमत्र केचन । प्रयच्छन्ति ततो वीर्यमेतस्योच्चैः प्रजायते ॥ ५ ॥ इति द्राक्षासवो वीरसिंहावलोकतः ॥

## ॥ अथ पिप्पल्यरिष्टः ॥

पिप्पली लोध्रमरिचपाठाधात्र्येलवालुकैः । चव्यचित्रकजन्तुघ्नक्रमुकोशीरचन्दनैः ॥ १ ॥ मुस्ताप्रियङ्गुलवलीहरिद्रामिसिपल्लवैः । पत्रत्वक्कुष्ठतगरैर्नागकेसरसंयुतैः ॥२॥ भागैः स्यादर्धपलिकैर्द्राक्षां षष्टिपलां क्षिपेत् । पलानि दश धातक्या गुडस्य च शतत्रयम् ॥ ३ ॥ तोयार्मणद्वये सिद्धं भवत्येतत्सुखावहम् । ग्रहणीपाण्डुरोगार्शःकार्श्यगुल्मोदरापहः ॥ पिप्पल्यादिररिष्टोऽयं क्षयक्षयकरः परम् ॥ ४ ॥ इति पिप्पल्यरिष्टः ॥

## ॥ अथ खर्जूरासवः ॥

पञ्चप्रस्थं समादाय खर्जूरस्य विचक्षणः । द्रोणाम्भसि पचेत्सम्यगुत्तार्य गालयेत्ततः ॥ १ ॥ कुंभीं सुधूपितां कृत्वा प्रक्षिपेत्तं रसं शुभम् । हपुषां ताम्रपुष्पीं च कषायं

---

१ ( क० ) क्षयरोगम् । २ ( क० ग० छ० ) शशिनः कोलकम् । ३ ( च० छ० )—पिप्पली (क०) विडङ्गफलिनी । ४ ( घ० च० ) कुम्भं सुधूपितम् । ( ख० ग० छ० ) कुपीं । ( क० ) कुम्भीं ।

तत्र निक्षेपेत् ॥ २ ॥ द्वारं निरुध्य सुदृढं निक्षिपेद्वसुधातले । सप्तकद्वयपयोगेन सिद्धोऽयं त्वासवो रसः ॥ ३ ॥ रोगराजं तथा शोफं प्रमेहं पाण्डुकामलाम् । ग्रहणीं पञ्च गुल्मार्शो नाशयत्यतिवेगतः ॥ ४ ॥ इति गदनिग्रहात्खर्जूरासवः ॥

## ॥ अथ गुडूच्यादिमोदकः ॥

गुडूचीं खण्डशः कृत्वा कुट्टयित्वा सुमर्दयेत् । वस्त्रेण विधृतं तोयं स्रावयेत्तच्छनैः शनैः ॥ १ ॥ शुद्धशङ्खनिभं चूर्णमेतैः सम्मिश्रयेद्भिषक् । उशीरं वालकं पत्रं कुष्ठं धात्रीं च मौसलीम् ॥ २ ॥ एलां हरेणुकां द्राक्षां कुङ्कुमं नागकेसरम् । पद्मकन्दं च कर्पूरं चन्दनद्वयमिश्रितम् ॥ ३ ॥ व्योषं च मधुलांजांश्च[1] अश्वगन्धां शतावरीम् । गोक्षुरं मर्कटाख्यं च जातीकक्कोलचोरकम् ॥ ४ ॥ रसाभ्रवङ्गलोहैश्च सम्मिश्रं कारयेद्बुधः । एतानि समभागानि द्विगुणामृतशर्करा ॥५॥ मत्स्यण्ड्याज्यमधूपेतं भक्षयेत्मातरुत्थितः । क्षयं च रक्तपित्तं च पाददाहमसृग्दरम् ॥ ६ ॥ मूत्राघातं मूत्रकृच्छ्रं वातकुण्डलिकां तथा । निहन्याच्च प्रमेहांश्च सोमरोगं च दारुणम् ॥ ७ ॥ रसायनमिवर्षीणाममृतं वामृतान्धसाम् ॥ ८ ॥ इति गुडूच्यादिमोदकः ॥

## ॥ अथ रसाः ॥

### ॥ अथ चतुर्मुखरसः ॥

सूतायोऽभ्रकगन्धकं समलवं सूताङ्घ्रितुल्यं मृतम् स्वर्णं सर्वमिदं निधाय विमले खल्वे दिनं मर्दयेत् । कन्याव्योषवरापुनर्नवरसैः कच्छूलवङ्गैः पुनर्भाव्यं चित्रकपत्रके घनतरं सेव्येष्टधान्यान्तगम् ॥ १ ॥ कुर्याद्ब्रह्मविनिर्मितं रसवरं यक्ष्मापहं पुष्टिदम् वह्निक्षौद्रफलत्रयेण सहितं मेहाग्निमान्द्यप्रणुत् ॥ २ ॥ इति चतुर्मुखरसः ॥

## ॥ अथ रत्नगर्भपोटलीरसः ॥

रसं वज्रं हेम तारं नागं लोहं तथाभ्रकम् । तुल्यांशं मारितं योज्यं मुक्तामाक्षिकविद्रुमम् ॥ १ ॥ राजावर्तं च वैक्रान्तं गोमेदं पुष्परागकम् । शङ्खं च तुल्यतुल्यांशं सप्ताहं चित्रकद्रवैः ॥ २ ॥ मर्दयित्वा विचूर्ण्याथ तेनापूर्य वराटकान् । टङ्कणं रविदुग्धेन पिष्ट्वा तन्मुद्रणं चरेत् ॥ ३ ॥ मृद्भाण्डे तान्सुसंयन्त्र्य सम्यग्गजपुटे पचेत् । आदाय चूर्णयेत्सम्यग् निर्गुण्ड्याः सप्त भावनाः॥४॥ आर्द्रकस्य रसैः सप्त चित्रकस्यैकविंशतिः । द्रव्यैर्भाव्यं ततः शुष्कं देयं गुञ्जाचतुष्टयम् ॥ ५ ॥ क्षयरोगं निहन्त्याशु सत्यं शिव इवान्धकम् । योजयेत्पिप्पलीक्षौद्रैः सघृतैर्मरिचैश्च वा । पोटली रत्नगर्भोऽयं सर्वरोगहरो मतः ॥ ६ ॥

## ॥ अथ राजमृगाङ्कः ॥

रसभस्म त्रिभागं च भागैकं हेमभस्मकम् । मृतताम्रस्य भागैकं शिलागन्धकतालकम् ॥ १ ॥ प्रतिभागद्वयं शुद्धमेकीकृत्वा विचूर्णितम् । वराटान्पूरयेत्तेन अजाक्षी-

---

१ ( ग० क० च० छ० ) मधुलाजश्च ।

रेण टङ्कणम् ॥ २॥ पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे सन्निधापयेत् । शुष्कं गजपुटे पाच्यं चूर्णयेत्स्वाङ्गशीतलम् ॥ ३ ॥ रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः । एकोनविंशन्मरिचैर्घृतेन सह भक्षयेत् ॥ ४ ॥ दशानां पिप्पलीनां च चूर्णं दत्वा प्रदापयेत् । क्षये कासे ज्वरे पाण्डौ ग्रहण्यामतिसारके ॥ ५ ॥ इति राजमृगाङ्कः ॥

## ॥ अथ रसरत्नप्रदीपान्मृगाङ्कः ॥

रसेन तुल्यं कनकं तयोस्तु साम्येन गुञ्ज्यान्नवमौक्तिकानि । रसप्रमाणो बलिरङ्घ्रिभागः क्षारश्च सर्वं तुषवारिणा तु ॥ १ ॥ सम्मर्द्य वस्त्रं तु विधाय गोलं दिनं पचेत्तं लवणेन पूर्णे । भाण्डे मृगाङ्कोऽयमतिप्रगल्भः क्षयाग्निमान्द्यग्रहणीगदेषु ॥ २ ॥ साज्योषणाभिर्मधुपिप्पलीभिर्वल्लोऽस्य देयो न ततोऽधिकस्तु । पथ्यं हितं शीतलमेव योज्यं त्याज्यं सदा पित्तकरं विदाहि ॥ ३ ॥ अन्यच्च वैद्यविलासात् ॥ रसबलितपनीयं योजयेत्तुल्यभागं तदनु युगुलभागं मौक्तिकानां शुभानाम् । यवजचरणयुक्तं मर्दयेत्सर्वमेवद्दिनमपि तुषवारा गोलकं लध्वमत्रे ॥ १ ॥ विधाय मुद्रां विदधीत भाण्डे चुल्यां समुद्रे लवणेन पूर्णे । दिनं पचेच्चारु मृगाङ्कनामा क्षयाग्निमान्द्यग्रहणीविकारे ॥ ५ ॥ योज्यः सदा वह्निजसर्पिषा वा कृष्णामधुभ्यां सततं त्रिगुञ्जः । वर्ज्यं सदा पित्तकरं हि वस्तु लोकेशवत्पथ्यविधिर्निरुक्तः ॥ ६ ॥ इति मृगाङ्कः ॥

## ॥ अथ नवरत्नराजमृगाङ्कः ॥

सूतं गन्धकहेमताररसकं वैक्रान्तकान्तायसं वङ्गं नागपविप्रवालविमला माणिक्यगारुत्मतम् । ताप्यं मौक्तिकपुष्परागजलजं वैदूर्यकं शुल्बकं शुक्तिस्तालकमभ्रहिङ्गुलशिला गोमेदनीलं समम् ॥ १ ॥ गोक्षूरैः फणिवल्लिसिंहवदनामुण्डीकणाचित्रकैरिक्षुच्छिन्नरुहाहरप्रियजयाद्राक्षावरीजद्रवैः । शोफघ्नीशतपत्रिकामधुजलैः सच्छाल्मलीधातकीजातीसस्यबलाचतुष्टयजलत्वग्देवपुष्पद्रवैः ॥ २ ॥ कक्कोलैर्मदनागकेसरजलैर्भाव्यं पृथक् सप्तधा भाण्डे सिन्धुभृते मृगाङ्कवदयं पाच्यः क्रमाग्नौ दिनम् । भूयः प्राक् समुदाहृतैर्द्रवचयैस्तं भावयेत्पूर्ववत् पश्चात्तुल्यविभागशीतलरजःकस्तूरिका भावना ॥३॥ गोप्याद् गोप्यतरं रसायनमिदं श्रीशङ्करेणोदितं गुञ्जासिन्धुयुतं कणामधुयुतं शोफे सपाण्ड्वामये । वातव्याधिमुपद्रवैश्च सहितं मेहांस्तथा विंशतिं संयोज्यं च हरीतकीगुडयुतं वातास्रके दुर्जये ॥ ४ ॥ गम्भीरे च गुडूचिसत्वचपलाक्षौद्रैस्तु संयोजितस्त्वाध्मानारुचिशूलमान्द्यकसनापस्मारवातोदरान् । श्वासान्संग्रहणीं हलीमकमथो सर्वज्वरान्नाशयेद्धातून्पोषयति क्षयं क्षपयति श्यामाशतं यौवनम् ॥ ५ ॥ प्रौढाटोपयुतं करोति सहसा तारुण्यगर्वोज्झितं सिद्धो राजमृगाङ्क एष जयति स्वस्वानुपानैर्गदान् ॥ ६ ॥ इति नवरत्नराजमृगाङ्कः ॥

## ॥ अथ महाकनकसिन्दूररसः ॥

रसगन्धकनागाश्च रसको माक्षिकाभ्रके । कान्तविद्रुममुक्तानां वङ्गभस्म च तार-

कम् ॥ १ ॥ भस्म कृत्वा प्रयत्नेन प्रत्येकं कर्षसंमितम् । सर्वतुल्यं शुद्धहेमभस्म कृत्वा प्रयोजयेत् ॥ २ ॥ मर्दयेत् त्रिदिनं सर्वं हंसपादीरसैर्भिषक् । ततो वै गोलकान् कृत्वा काचकूप्यां विनिक्षिपेत्॥३॥रुद्ध्वा तत्काचकूपीं च सप्तवस्त्रेण वेष्टिताम् । ततो वै सिकतायन्त्रे त्रिदिनं चोक्तवह्निना ॥४॥ पश्चात्तं स्वाङ्गशीतं च पूर्वोक्तरसमर्दितम् । विनिक्षिप्य करण्डेऽथ संपूज्य रसराजकम् ॥ ५ ॥ महाकनकसिन्दूरो राजयक्ष्महरः परः । पाण्डुरोगं श्वासकासं कामलाग्रहणीगदान् ॥ ६ ॥ क्रिमिशोफोदरावर्तगुल्ममेहगुदाङ्कुरान् । मन्दाग्निं छर्दिमरुचिं आमशूलहलीमकान्॥७॥ज्वरान् द्वन्द्वादिकान् सर्वान् सन्निपातांस्त्रयोदश । पैत्यैरोगमपस्मारं वातरोगान्विशेषतः॥८॥रक्तपित्तप्रमेहांश्च स्त्रीणां रक्तस्रवांस्तथा । विंशतिश्लेष्मरोगांश्च मूत्ररोगान्निहन्त्यसौ ॥ ९ ॥ हेमवर्णश्च बल्यश्च आयुःशुक्रविवर्धनः । महाकनकसिन्दूरः काश्यपेन विनिर्मितः ॥१०॥ इति महाकनकसिन्दूररसः योगतरङ्गिण्याः ॥

## ॥ अथ कनकसिन्दूररसः ॥

योगतत्वे । रसः कनकभागिकः कनकमाक्षिकस्तालकः शिलारसकगन्धकौ रससमाः सतुत्था इमे । विमर्द्य पयसा रवेः सकलमेतदस्योपरि द्रवैः प्रतिदिनं पृथक् तदिति भावयेद्बुद्धिमान् ॥ १ ॥ जयामुनिकलिप्रियादहनभृङ्गवासोद्भवैर्विभाव्य च रसैस्ततः सुदृढगोलकं स्वेदयेत् । मृगाङ्कवदथार्द्रकद्रवभरेण तं सप्तधा विमर्द्य च कटुत्रयाम्बुभिरयं क्षयस्यान्तकृत्॥२॥रसः कनकसुन्दरो भवति सन्निपातेऽप्ययं सदार्द्रकरसैस्तथा पवनगुल्मशूलादिहृत् । स विश्वघृतयोजितः सकलमत्र पथ्यं हितं मृगाङ्कवदथापरं किमपि नैव योज्यं क्वचित् ॥ ३ ॥ इति कनकसुन्दरो रसः ॥

## ॥ अथ सुवर्णभूपतिः ॥

शुद्धसूतसमं गन्धं मृतशुल्वं तयोः समम् । अभ्रलोहकयोर्भस्म कान्तभस्म सुवर्णजम् ॥ १ ॥ रजतं च विषं सम्यक् पृथक्[3] सूतं समं भवेत् । हंसपादीरसैर्मर्द्यं दिनमेकं वटीकृतम् ॥ २ ॥ काचकूप्यां विनिक्षिप्य मृदा संलेपयेद्बहिः । शुष्का सा वालुकायन्त्रे शनैर्मृद्वग्निना पचेत् ॥ ३ ॥ चतुर्गुञ्जमितं देयमार्द्रकद्रवपिप्पली । क्षयं त्रिदोषजं हन्ति सन्निपातांस्त्रयोदश ॥ ४ ॥ अण्डवातं धनुर्वातं शृङ्खलावातमेव च । आढ्यवातं पङ्गुवातं कफवाताग्निमान्द्यनुत् ॥ ५ ॥ कटिवातं सर्वशूलं नाशयेन्नात्र संशयः । गुल्मशूलमुदावर्तं ग्रहणीमतिदुस्तराम् ॥ ६ ॥ प्रमेहमुदरं सर्वामश्मरीं मूत्रविड्ग्रहम् । भगन्दरं सर्वकुष्ठं विद्रधिं महतीं तथा ॥ ७ ॥ श्वासकासमजीर्णं च ज्वरमष्टविधं तथा । कामलां पाण्डुरोगं च शिरोरोगं च नाशयेत् ॥ ८ ॥ अनुपानविशेषेण सर्वरोगान्विनाशयेत् । यथा सूर्योदये नश्येत् तमः सर्वगतं तथा ॥ सर्वरोगविनाशाय सर्वेषां स्वर्णभूपतिः ॥ ९ ॥ इति सुवर्णभूपतिः ॥

---

१ ( ग० ङ० च० छ० ) वर्ण्यं—२ ( ङ० च० छ० ) योगतरङ्गिण्याः । ३ ( घ० च० छ० ) सर्वे सूक्ष्मम् । ४ ( च० ) आमवातम् ।

## ॥ अथ लक्ष्मीविलासः ॥

सुवर्णताराभ्रकताम्रवङ्गत्रिलोहनागामृतमौक्तिकं च । एतत्समं योऽ्यरसस्य भस्म खल्वे कृतं स्यात् कृतकज्जलीकम् ॥ १ ॥ सुमर्दयेन्माक्षिकसम्प्रयुक्तं तच्छोषयेद्दित्रिदिनं च घर्मे । तत्कल्कमूषोदरमध्यगामी यत्नात्कृतं तार्क्ष्यपुटेन पक्वम् ॥ २ ॥ यामाष्टकं पावकमर्दितं च लक्ष्मीविलासो रसराज एषः । क्षये त्रिदोषप्रभवे च पाण्डौ सकामलासर्वसमीरणेषु ॥ ३ ॥ शोफप्रतिश्यायविनष्टवीर्ये मूलामयं चैव सशूलकुष्ठम् । हत्वाग्निमान्द्यं क्षयसन्निपातं श्वासं च कासं च हरेत्प्रयुक्तम् ॥ ४ ॥ तारुण्यलक्ष्मीप्रतिबोधनाय श्रीमद्विलासो रसराज एषः ॥ ५ ॥

## ॥ अथ त्रैलोक्यचिन्तामणिः ॥

रसं वज्रं हेमतारं ताम्रं तीक्ष्णाभ्रकं मृतम् । गन्धकं मौक्तिकं शङ्खं प्रवालं तालकं शिला ॥ १ ॥ शोधितं च समं सर्वं सप्ताहं भावयेद्दृढम् । चित्रमूलकषायेण भानुदुग्धैर्दिनत्रयम् ॥ २ ॥ निर्गुण्डीसूरणद्रावैर्वज्रिदुग्धैर्दिनत्रयम् । अनेन पूरयेत्सम्यक् पीतवर्णान्वराटकान् ॥ ३ ॥ टङ्कणं रविदुग्धेन पिष्ट्वा तेषां मुखं लिपेत् । मृदा भाण्डे पुटे पश्चात् स्वाङ्गशीतं विचूर्णयेत् ॥४॥ चूर्णतुल्यं मृतं सूतं वैक्रान्तं सूतपादकम् । शिग्रुमूलद्रवैः सर्वं सप्तवारं विभावयेत् ॥ ५ ॥ चित्रमूलकषायेण भावनाश्चैकविंशतिः । आर्द्रकस्य रसेनैव भावनाः सप्त एव च । जम्बीरैर्मातुलुङ्गैर्वा सप्तवारं विभावयेत् ॥ ६ ॥ सूक्ष्मचूर्णं ततः कृत्वा चूर्णपादांशटङ्कणम् । टङ्कणांशं वत्सनाभं तत्समं मरिचं क्षिपेत् ॥ ७ ॥ लवङ्गं नागरं पथ्या कणा जातीफलं पृथक् । प्रत्येकं वत्सनागस्य पादांशं चूर्णितं क्षिपेत् ॥८ ॥ मातुलुङ्ग्या आर्द्रकस्य रसेनैतद्विलोडयेत् । चतुर्गुञ्जामितं खादेत्कणाक्षौद्रं लिहेदनु ॥ ९ ॥ क्षौद्रैर्वा चार्द्रकद्रावैः शुण्ठ्या वाथ गुडैर्युतम् । अनुपानैः समायोज्यं सर्वरोगोपशान्तये ॥ १० ॥ वह्निं दीपयते बलं च कुरुते तेजो महद्वर्धते वीर्यं वर्धयते विषं च हरते दार्ढ्यं विधत्ते तनोः । अभ्यासेन निहन्ति मृत्युपलितं पुष्टिं प्रदत्ते नृणां कासं नोदयते क्षयं क्षपयति श्वासं च निर्नाशयेत् ॥ ११ ॥ वातं विद्रधिपाण्डुशूलग्रहणीरक्तातिसारं जयेन्मेहप्लीहजलोदराश्मरितृषाशोफं हलीमोदरम् । लूताकृच्छ्रभगन्दरं ज्वरगणं चार्शांसि कुष्ठं जयेत् साध्यासाध्यरुजो निहंन्ति च रसस्त्रैलोक्यचिन्तामणिः ॥ १२ ॥ इति त्रैलोक्यचिन्तामणिः ॥

## ॥ अथ द्वितीयस्त्रैलोक्यचिन्तामणिः ॥

योगतरङ्गिण्याः । सूताभ्रस्वर्णताराणभिदुरशिलाताप्यगन्धप्रवालायोमुक्ताशङ्खतालं वरमिदमनलक्काथतः सप्त भाव्यम् । निर्गुण्डीसूरणाम्भःपविरविपयसा त्रिः पृथक् चाथ पीतानापूर्यैतैर्वराटानथ मिहिरपयष्टङ्कणालिप्तवक्त्रान् ॥१॥ कृत्वा भाण्डे च रुद्ध्वा

१ ( च० ) मूषा । २ ( च० ) रुद्ध्वा भाण्डपुटे पक्त्वा ।

गजपुटजठरे युक्तिसस्तत्तु पक्त्वोद्धृत्यैतन्मर्दयित्वा तदखिलतुलितं सूतभस्म प्रदद्यात् । वैक्रान्तं सूततुर्यांशकमथ मिलितं सप्तशः शिग्रुमूलं त्वग्बाणस्तेन तुल्यं विषमनलवरं टङ्कणं चोषणं च ॥ २ ॥ पथ्याजातीफलं चामरकुसुमकणानागरं वत्सनाभात्तुर्यांशं मेलयित्वा पृथगथ दिवसं मर्दयेल्लुङ्गतोयैः । एष त्रैलोक्यचिन्तामणिरखिलगदध्वान्तविध्वंसहंसस्तत्तद्रोगानुपानादुषसि कवलितः सार्धवल्लप्रमाणः ॥३॥ वातव्याध्यामवातज्वरजठरकृमिश्वासशूलास्रवातास्रकृपित्तक्षैण्यकासक्षयकफजगदोरःक्षताजीर्णमेहे । कुष्ठातीसारपाण्डुग्रहणिषु तमकेऽथव्रणार्शःप्रकेष्ठे खाञ्जे खञ्जाढ्यवातश्रुतिभगजगदे सर्वथैव प्रशस्तः ॥ ४ ॥ इति त्रैलोक्यचिन्तामणिः । अथ योगसाराचिन्तामणिरसः । रसेन्द्रवैक्रान्तकरौप्यताम्रं सलोहमुक्ताफलगन्धहेम । त्रिर्भावितं चार्द्रकभृङ्गवह्निरसैरजागोपयसा तथैव ॥ १ ॥ अर्शः क्षयं कासमरोचकं च जीर्णज्वरं पाण्डुमपि प्रमेहान् । गुञ्जाप्रमाणं मधुमागधीभ्यां लीढं निहन्याद्विषमं च वातम् ॥ चिन्तामणिरिति ख्यातः पार्वत्या निर्मितः स्वयम् ॥ २ ॥ इति चिन्तामणिः ॥

## ॥ अथ वसन्तकुसुमाकरः ॥

प्रवालरसमौक्तिकाभ्रकमिदं चतुर्भागभाक् पृथक् पृथगतः स्मृते रजतहेमनी द्व्यंशके ॥ अयोभुजगरङ्गकं त्रिवलकं विमर्द्याखिलं शुभेऽहनि विभावयेद्भिषगिदं धिया सप्तशः ॥ १ ॥ द्रवैर्वृषनिशेक्षुजैः कमलमालतीपुष्पजैः पयःकदलिकन्दजैर्मलयचन्दनाहुद्रवैः । वसन्तकुसुमाकरो रसपतिर्द्विवल्लोशितः समस्तगदहृद् भवेत्किल निजानुपानैरयम् ॥ २ ॥ क्षिणोत्यनुमधूषणैः क्षयगदेषु सर्वेष्वपि प्रमेहरुजि रात्रिभिः समधुशर्कराभिः सह । सितामलयजद्रवैर्महति रक्तपित्तेऽथवा सितामधुसमन्वितैर्वृषभपल्लवानां द्रवैः ॥३॥ त्रिजातगतचन्दनैरपि च तुष्टिपुष्टिप्रदो मनोभवकरः परो वमिषु शङ्खपुष्पीरसैः । अभीरुरसशर्करामधुभिरम्लपित्तामये परेषु च यथोचितं ननु गदेषु संसेवयेत् ॥ ४ ॥ इति वसन्तकुसुमाकरो योगतरङ्गिण्याः ॥

## ॥ अथ लोकेश्वरः ॥

पलं कपर्दचूर्णस्य पलं पारदगन्धयोः । माषष्टङ्कणकस्यैको जम्बीराद्भिर्विमर्दयेत् ॥१॥ पुटेल्लोकेश्वरो नाम्ना लोकनाथोऽयमुत्तमः । ऋते कुष्ठं रक्तपित्तमन्यरोगान्क्षयं जयेत् ॥२॥ पुष्टिवीर्यप्रसादौजःकान्तिलावण्यदः परः । कोऽस्ति लोकेश्वरादन्यो नृणां शम्भुमुखोद्गतात् ॥ ३ ॥ इति लोकेश्वरः ॥

## ॥ अथ लोकेश्वरपोटलीरसः ॥

रसस्य भस्मना हेमपादांशेन प्रकल्पयेत् । द्विगुणं गन्धकं दत्वा मर्दयेच्चित्रकाम्बुना ॥१॥ वराटकांश्च संपूर्य टङ्कणेन निरुध्य च । भाण्डे चूर्णप्रलिप्तेऽथ शीघ्रं रुन्ध्यात्तु मृन्मये ॥२॥ शोषयित्वा पुटे गर्ते रत्निमात्रेऽपराह्णके । स्वाङ्गशीतलमुद्धृत्य चूर्णयित्वाथ विन्य-

१ ( च० ) स्रग्धारा । २ ( च० ) प्रकृष्टे । ३ ( ख० ग० घ० ) गज० गरु ।

बेत् ॥ ३ ॥ एष लोकेश्वरो नाम्ना वीर्यपुष्टिविवर्धनः । गुञ्जाचतुष्टयं खादेत्पिप्पलीमधुसंयुतम् ॥ ४ ॥ भक्षयेत्परया भक्त्या लोकेशः सर्वदर्शनः । अङ्गकार्श्येऽग्निमान्द्ये च कासे पित्ते रसः स्वयम् ॥ ५ ॥ मरीचैर्घृतसंयुक्तैः प्रदातव्यो दिनत्रयम् । लवणं वर्जयेत्तत्र साज्यं दधि च योजयेत् ॥ ६ ॥ एकविंशत्यहानीत्थं मरीचं सघृतं पिबेत् । पथ्यं मृगाङ्कवज्ज्ञेयं शयीतोत्तानपादतः ॥ ७ ॥ ये शुष्का विषमाशनैः क्षयरुजा व्याप्ताश्च ये कुष्ठिनो ये पाण्डुत्वहताः कुवैद्यविधिना ये शोषिणो दुर्भगाः । ये तप्ता विविधैर्ज्वरैर्भ्रमदोन्मादैः प्रमादं गतास्ते सर्वे विगतामया हि परया स्युः पोटलीसेवया ॥ ८ ॥ इति लोकेश्वरपोटलीरसः ॥

## ॥ अथ प्राणदा पर्पटी ॥

सूताभ्राप्योऽहिवङ्गोषणविषमखिलांशेन गन्धेन लोह्यां कोलाग्नौ विद्रुतेन क्षणमेथ मिलितं दापितं गोमयस्थे । रम्भापत्रेऽमुनान्येन च दृढपिहितं प्राणदा पर्पटी स्यात्पाण्डौ रेके ग्रहण्यां ज्वररुजि कसने यक्ष्ममेहाग्निमान्द्ये ॥ १ ॥ प्राणदा पर्पटी सैषा भाषिता शम्भुना स्वयम् । तत्तद्रोगानुपानेन सर्वरोगविनाशिनी ॥ २ ॥ ॥ इति प्राणदा पर्पटी ॥

## ॥ अथ कुमुदेश्वरो रसः ॥

रसार्णवात् । पारदं शोधितं गन्धमभ्रकं च समं समम् । तदर्धं दरदं विद्यात्तदर्धां च मनःशिलाम् ॥ १ ॥ सर्वार्धं मृतलोहं च खल्वमध्ये विनिक्षिपेत् । त्रिःसप्तभावना देयाः शतावर्या रसेन च ॥ २ ॥ ततः सिद्धो भवत्येष कुमुदेश्वरसंज्ञकः । सितया मरिचेनाथ गुञ्जाद्वित्रिप्रमाणतः ॥ ३ ॥ भक्षयेत्प्रातरुत्थाय पूजयित्वेष्टदेवताम् । यक्ष्माणमुग्रं हन्त्येव वातपित्तकफामयान् ॥ ४ ॥ ज्वरादीनखिलान् रोगान् यथा दैत्याञ्जनार्दनः । सतताभ्यासयोगेन वलीपलितनाशनः ॥ ५ ॥

## ॥ अथ पञ्चामृताख्यो रसः ॥

सारसङ्ग्रहात् ॥ भस्मीभूतसुवर्णतारदिनकृत्सूताभ्रसत्त्वैः क्रमात् संवृद्धैस्त्रितयं त्रयः कृमिहराम्भोदैर्युतः कट्फलैः । निर्गुण्डीदशमूलवह्निरजनीव्योषार्द्रकैर्भावितो गोलीकृत्य विशोषितो निगदितः पञ्चामृताख्यो रसः ॥ १ ॥ नानेन सदृशः कोऽपि रसोऽस्ति भुवनत्रये । निहन्ति सकलान्रोगान् भवरोगमिवाच्युतः ॥ २ ॥ सर्वरोगहरः सूतस्तत्तद्रोगानुपानतः । अयं पञ्चामृतो नृणां त्रिदशानामिवामृतम् ॥ ३ ॥ योगसारात् ॥

## ॥ अथ हेमाभ्रकरससिन्दूरः ॥

अभ्रकं रससिन्दूरमिश्रितं हेमभस्मना । समभागं प्रकुर्वीत रसेनार्द्रकयोजितम्

१ ( च० ) त्र्यंशगन्धेन । २ ( क० ग० छ० ) मलमिलितम् । ३ ( क० ग० ङ० ) ढालितम् च० द्रावितम् ।

॥ १ ॥ क्षयं च क्षयपाण्डुं च क्षयकासं च कुष्ठकम् । जयेन्मण्डलपर्यन्तं पूर्वकर्मविपाककृत् ॥ २ ॥ इति हेमाभ्रकरससिन्दूरः ॥

## ॥ अथ शिलाजत्वादिलोहम् ॥

शिलाजतुयुतं लोहं वल्लं तु विधिमारितम् । पथ्याशी सेवते यस्तु स यक्ष्माणं व्यपोहति ॥ १ ॥ इति शिलाजत्वादिलोहम् ॥

## ॥ अथ सुवर्णपर्पटीरसः ॥

शुद्धं सुवर्णदलमष्टगुणेन शुद्धसूतेन पिण्डितमथो वसुभागभाजम् । गन्धे द्रुते बदरबर्हिषि लोहपात्रे दत्वावलोड्य लघुलोहशलाकया तत् ॥ १ ॥ मन्दं निरस्य सुरभीमलमण्डलस्थं रम्भादले तदुपरि प्रणिधाय चान्यत् । रम्भादलं लघु नियम्य तदा ददीत शीतं सुवर्णरसपर्पटिकाभिधानम् ॥ २ ॥ पित्तोल्बणे ससितया तुगयाथ वातश्लेष्मोल्बणे किल तुगामधुपिप्पलीभिः । क्षीणे विरेकिणि च शोषिणि मन्दवह्नौ पाण्डौ प्रमेहिणि चिरज्वरिणि ग्रहण्याम् ॥ वृद्धे शिशौ सुखिनि राज्ञि तथैव नार्यां भैषज्यमेतदुदितं हितमामयघ्नम् ॥ ३ ॥ इति सुवर्णपर्पटीरसः ॥

## ॥ अथ सर्वरोगेषु मृत्युञ्जयरसः ॥

त्रिकटु त्रिफला सूतगन्धकौ टङ्कणं विषम् । यष्टीनिशाकुबेराक्षीदन्तीबीजमथापि च॥१॥ एतानि समभागानि खल्वमध्ये विनिक्षिपेत् । भृङ्गराजरसेनैव मर्दयेत्त्रिदिनं भिषक् ॥२॥ गुटिका माषमात्रास्तु च्छायाशुष्काश्च कारयेत् । अनुपानविशेषेण सर्वरोगेषु योजयेत् ॥ मृत्युञ्जयो रसो नाम सर्वरोगविदारणः ॥ ३ ॥ इति मृत्युञ्जयरसः ॥ इति रसाः ॥

## ॥ अथ क्षयरोगचिकित्सा ॥

ज्वराणां शमनीयो यः पूर्वमुक्तः क्रियाविधिः । यक्ष्मिणां ज्वरदाहेषु स सर्पिषु प्रशस्यते ॥ १ ॥ नित्यं स्वदेवपूजाभक्तिर्भैषज्यदेवतागुरुषु । छागलमांसपयोऽश्नञ्जीवति यक्ष्मी चिरं धृतिमान् ॥ २ ॥ उपद्रवान्सत्वरवैकृतादीञ्जयेद्यथा क्षिप्रसमीक्ष्य शास्त्रम्[1] । त्यजेत्कुवैद्यप्रतिपादितानि बुधो विरुद्धानि च भेषजानि ॥३ ॥ गीतवादित्रशब्दैश्च प्रियस्तुतिभिरेव च । हर्षणाश्वासनैर्नित्यं गुरूणां समुपासनैः ॥ ४ ॥ ब्रह्मचर्येण दानेन तपसा देवतार्चनैः । सत्येनाचारयोगेन रविमण्डलसेवया ॥ वैद्यविप्रार्चनाच्चैव रोगराजो निवर्तते ॥ ५ ॥ इति क्षयरोगचिकित्सा ॥

## ॥ अथोरःक्षतनिदानम् ॥

धनुराकर्षतोऽत्यर्थं भारमुद्वहतो गुरुम् । युध्यमानस्य बलिभिः पततो विषमोच्चतः ॥ १ ॥ वृषं हयं वा धावन्तं दम्यं चान्यं निगृह्णतः । शिलाकाष्ठाश्मनिर्घातात् क्षि-

---

१ यथास्वं प्रसमीक्ष्य ।

पतो निम्नतोऽपराम् ॥ २ ॥ अधीयानस्य वात्युच्चैर्दूरं वा व्रजतो द्रुतम् । महानदीं वा तरतो हयैर्वा सह धावतः ॥ ३ ॥ सहसोत्पततो दूरं तूर्णं चाप्यतिनृत्यतः । तथान्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य च ॥४॥ वीक्ष्यते वक्षसि व्याधिर्बलवान्समुदीर्यते । स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ॥५॥ उरो विरुज्यतेऽत्यर्थं भिद्यतेऽथ विदह्यते । प्रपीड्येते ततः पार्श्वे शुष्यत्यङ्गं प्रकम्पते ॥ ६ ॥ क्रमाद्वीर्यं बलं वर्णोऽरुचिरग्निश्च हीयते । ज्वरो व्यथा मनोदैन्यं विड्भेदोऽग्निवधस्तथा ॥ ७ ॥ दुष्टः श्यावः सुदुर्गन्धिः पीतो विग्रथितो बहुः । कासमानस्य चाभीक्ष्णं कफः सासृक् प्रवर्तते ॥ ८ ॥ सक्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् । अव्यक्तं लक्षणं तस्य पूर्वरूपमिदं स्मृतम् ॥ ९ ॥ उरोरुक् शोणितच्छर्दिः कासो वैशेषिकः क्षते । क्षीणे च रक्तमूत्रत्वं पार्श्वपृष्ठकटिग्रहः ॥ १० ॥ अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः । परिसंवत्सरो याप्यः सर्वलिङ्गं विवर्जयेत् ॥ ११ ॥

## ॥ अथ तच्चिकित्सा ॥

उरोमन्थी क्षती लाजान्पयसा मधुसंयुतान् । सद्य एव पिबेज्जीर्णपयसाद्यात्सशर्करम् ॥ १ ॥ पार्श्ववस्तिरुजि त्वल्पपित्ताग्निस्तान् सुरायुतान् । बलाश्वगन्धाश्रीपर्णीबहुपत्रीपुनर्नवाः ॥ २ ॥ पयसा नित्यमभ्यस्ताः शमयन्ति ह्युरःक्षतम् । शर्करामधुसंयुक्तं जीवकर्षभकौ मधु ॥ ३ ॥ लिह्यात्क्षीरानुपानानि रक्तक्षीणतरः कृशः । नीलिकातिविषाग्रन्थिपद्मकेसरचन्दनैः ॥ शृतं पयो मधुयुतं सन्धानार्थं पिबेत्क्षती ॥४॥ लाक्षाचूर्णं सुष्ठु कृतं क्षौद्राज्येनान्वितं क्षीरम् ॥ शमयति शोषोद्भूतं वमनं रक्तस्य सत्यमिव ॥ ५ ॥

## ॥ अथैलादिगुटिका ॥

एलापत्रत्वचो द्राक्षा पिप्पल्यर्धपलं तथा । सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः ॥ १ ॥ सञ्चूर्ण्य मधुना युक्तां गुटिकां सम्प्रकल्पयेत् । अक्षमात्रां ततश्चैकां भक्षयेच्च दिने दिने ॥ २ ॥ कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम् । रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥ ३ ॥ शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम् । गुटिका तर्पणी वृष्या रक्तपित्तं च नाशयेत् ॥ ४ ॥

## ॥ अथ यष्ट्याद्यं घृतम् ॥

यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमं घृतम् । पयसा पिप्पलीवांशीकल्कसिद्धं क्षते हितम् ॥ १ ॥

## ॥ अथ बलाद्यं घृतम् ॥

घृतं बलानागबलार्जुनाम्बुसिद्धं सयष्टीमधुकल्कपादम् । हृद्रोगशूलक्षतरक्तपित्तकासानिलान्संशमयत्युदीर्णान् ॥ १ ॥

---

१ (क० च० छ०) विक्षते । (ङ०) वीक्षते । २ (ग० च० छ०) जीर्णे । ३ (ग० ङ० च० छ०) सिद्ध । ४ (ग० च० छ०) मांसी ।

## ॥ अथ श्वदंष्ट्राद्यं घृतम् ॥

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम् । दर्भमूलं पृथक्पर्णी बला सर्षपिका स्थिरा ॥ १ ॥ पलिकांन्साधयेत्तेषां पचेत्क्षीरे चतुर्गुणे । कल्कः स्वगुप्तवर्षाभूमेदाजीवन्तिजीवकैः ॥ २ ॥ शतावर्यादिमृद्वीकाशर्कराश्रावणीवृषैः । प्रस्थः सिद्धो घृताद्वा तु पित्तहृद्रोगगुल्मनुत् ॥ ३ ॥ मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः । धनुस्तम्भाद्यभाराध्वक्षीणानां बलमांसदः ॥ ४ ॥

## ॥ अथ द्राक्षाद्यं घृतम् ॥

द्राक्षायाः सम्मितं प्रस्थं मधुकस्य पलाष्टकम् । पचेत्तोयाढके सिद्धे पादशेषेण तेन तु ॥ १ ॥ पलिके मधुकद्राक्षे पिष्टे कृष्णापलद्वयम् । प्रदाय सर्पिषः प्रस्थं पचेत्क्षीरे चतुर्गुणे ॥ २ ॥ सिद्धे शीते पलान्यष्टौ शर्करायाः प्रदापयेत् । एतद्द्राक्षाघृतं सिद्धं क्षीणक्षतहितं परम् ॥ ३ ॥ वातपित्तज्वरश्वासविस्फोटकहलीमकान् । प्रदरं रक्तपित्तं च हन्यान्मांसबलप्रदम् ॥ ४ ॥

## ॥ अथामृतप्राश्यावलेहः ॥

क्षीरधात्रीविदारीक्षुक्षीरिणां च तथा रसे । पचेत्समे घृतप्रस्थे मधुकैरिक्षुरन्वितैः ॥ १ ॥ द्राक्षादिचन्दनोशीरशर्करोत्पलपद्मकैः । मधुकं कुसुमानन्ता काश्मरी तृणसंज्ञकैः ॥ २ ॥ प्रस्थार्धं मधुनः शीते शर्करायास्तुलां तथा । पलार्धकांश्च संचूर्ण्य त्वगेलापत्रकेसरान् ॥ ३ ॥ विनीय तस्य संलिह्यान्मात्रां नित्यं सुयन्त्रितः । अमृतप्राश्यमित्येतदश्विभ्यां निर्मितं पुरा ॥ ४ ॥ क्षीरमांसाशिनो हन्ति रक्तपित्तक्षतक्षयम् । तृष्णारुचिश्वासकासच्छर्दिहिक्काप्रमर्दनम् । मूत्रकृच्छ्रज्वरघ्नं च बल्यं स्त्रीरतिवर्धनम् ॥ ५ ॥

## ॥ अथ रसराजः ॥

मुक्ताप्रवालरसहेमसिताभ्रकान्तवङ्गं मृतं सकलमेतदहो विभाव्यम् । छिन्नारसेन च वरीसलिलेन सप्तवारं ततो मधुहविर्मरिचेन साकम् ॥ लिह्यादुरःक्षतहरं रसराजकाख्यं माषप्रमाणमतनूद्भवहेतुमानम् ॥ १ ॥ अन्यच्च तर्पणं शीतमविदाहि हितं लघु । अन्नपानं निषेव्यं तु क्षतक्षीणैः सुखार्थिभिः ॥ २ ॥ शोकं स्त्रियं क्रोधमसूयनं च त्यजेदुदारान् विषयान्भजेच्च । तथा द्विजातींस्त्रिदशान् गुरूंश्च कथाश्च पुण्याः शृणुयाद्द्विजेभ्यः ॥ ३ ॥ इत्युरःक्षतचिकित्सा ॥

---

१ ( च० ) पालिकान् । २ ( च० छ० ) कर्षाभ । ३ ( च० ) मधूकं । ४ ( ग० छ० ख० ) पश्चात्दद्यान्मधु । ५ ( ग० ङ० च० छ० ) मेनम् ।

## ॥ अथ कासनिदानम् ॥

धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च । विमार्गगत्वाद्भुक्तभोजना-च्च वेगावरोधात्क्षवथोस्तथैव ॥ १ ॥

## ॥ तस्य सम्प्राप्तिमाह ॥

प्राणो ह्युदानानुगतः प्रदुष्टः सम्भिन्नकांस्यस्वनतुल्यघोषः । निरेति वक्त्रात्सहसा सदोषो मनीषिभिः कास इति प्रदिष्टः ॥ १ ॥

## ॥ अथ तस्य संख्यामाह ॥

पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः । क्षयायोपेक्षिताः सर्वे बलिनश्चोत्त-रोत्तरम् ॥ १ ॥ पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता । कण्ठे कण्डूश्च भोज्यानाम-वरोधश्च जायते ॥ २ ॥

## ॥ अथ वातिकमाह ॥

हृच्छङ्खमूर्धोदरपार्श्वशूली क्षामाननः क्षीणबलस्वरौजाः । प्रसक्तवेगस्तु समी-रणेन भिन्नस्वरः कासति शुष्कमेव ॥ १ ॥

## ॥ अथ पैत्तिकमाह ॥

उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्तः । पित्तेन पित्तानि वमेत्कटूनि कासेत्सपाण्डुः परिदह्यमानः ॥ १ ॥

## ॥ अथ कफजमाह ॥

प्रलिप्यमानेन मुखेन सीदञ्शिरोरुगार्तः कफपूर्णदेहः । अभक्तरुग्गौरवकण्डुयुक्तः कासेद्भृशं सान्द्रकफः कफेन ॥ १ ॥

## ॥ अथ क्षतकासमाह ॥

अतिव्यवायभाराध्वयुद्धाश्वगजनिग्रहैः । रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमा-वहेत् ॥ ८ ॥

## ॥ अथ तेनैते उपद्रवाः ॥

स पूर्वं कासते शुष्कं ततः ष्ठीवेत्स शोणितम् । कण्ठेन रुजतात्यर्थं विभग्नेनैव चो-रसा ॥ १ ॥ सूचिभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना । दुःखस्पर्शेन शूलेन भेद-पीडाभितापिना ॥ २ ॥ पर्वभेदज्वरश्वासतृष्णावैस्वर्यपीडितः । पारावत इवाकूजे-त्कासवेगात्क्षतोद्भवात् ॥ ३ ॥

## ॥ अथ क्षयजमाह ॥

विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् । घृणिनां शोचतां नृणां व्यापन्ने-ऽग्नौ त्रयो मलाः ॥ कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम् ॥ १ ॥

## ॥ अथास्योपद्रवानाह ॥

स गात्रशूलज्वरदाहमोहान् प्राणक्षयं चोपलभेत् स कासी । शुष्कं स निष्ठीवति दुर्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम् ॥ तं सर्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति ॥ १ ॥ इत्येष क्षयजः कासः क्षीणानां देहनाशनः । साध्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोत्थितः ॥ २ ॥

## ॥ अथ पुनरसाध्यत्वमाह ॥

नवौ कदाचित्सिध्येतामपि पादगुणान्वितौ । स्थविराणां जरा कासः सर्वो याप्यः प्रकीर्तितः ॥ १ ॥

## ॥ अथ चिकित्साद्वारेण साध्ययाप्यत्वमाह ॥

त्रीन्पूर्वान् साधयेत्साध्यान्पथ्यैर्याप्यांस्तु यापयेत् । पूयाभमरुणं श्यावं हरितं पीतनीलकम् ॥ १ ॥ निष्ठीवन्श्वासकासार्तो न जीवति हतस्वरः । कासाच्छ्वासक्षयच्छर्दिस्वरसादादयो गदाः ॥ भवन्त्युपेक्षया यस्मात्तस्मात्तं त्वरया जयेत् ॥ २ ॥ इति कासनिदानम् ।

## ॥ अथ कासचिकित्सा ॥

### अथ वातकासचिकित्सा ।

रूक्षस्यानिलजं कासमादौ स्नेहैरुपाचरेत् । सर्पिर्भिर्बस्तिभिः पेयाक्षीरयूषरसादिभिः ॥ १ ॥ ग्राम्यानुपोदकैः शालियवगोधूमषष्टिकान् । रसैर्मांसात्मगुप्तानां यूषैर्वा भोजयेद्धितान् ॥ २ ॥ दशमूली स्मृता श्वासकासहिक्कारुजापहा । यवागूर्दीपनी वृष्या वातरोगविनाशिनी ॥ ३ ॥ रसः कर्कोटकानां च घृतभृष्टः स नागरः । वातकासप्रशमनः शृङ्गीमत्स्यस्य वा पुनः ॥ ४ ॥

## ॥ अथापराजितलेहः ॥

सटीशृङ्गीकणाभार्गीगुडवारिदयासकैः । सतैलैर्वातकासघ्नो लेहोऽयमपराजितः ॥१॥

## ॥ अथ भार्ग्यादिलेहः ॥

भार्गीद्राक्षासटीशृङ्गीपिप्पलीविश्वभेषजम् । गुडतैलयुतो लेहो हितो मारुतकासिनाम् ॥ १ ॥

## ॥ अथ विश्वादिलेहः ॥

विश्वाभार्गीकणासोमवल्कं द्राक्षा सटी सिता । लिह्यात्तैलेन वातोत्थकासं जयति दुस्तरम् ॥ १ ॥

## ॥ अथ दशमूलादिघृतम् ॥

दशमूलीकषायेण भार्गीकल्कं घृते पचेत् । दक्षतित्तिरनिर्यूहे तत्परं वातकासजित् ॥ १ ॥

## ॥ अथ कण्टकार्यवलेहः ॥

चित्रकं पिप्पलीमूलं व्योषं मुस्तं दुरालभाम् । शटी पुष्करमूलं च श्रेयसी सुरसा वचा ॥ १ ॥ भार्गी छिन्नरुहा रास्ना कर्कटाख्या च कर्षिकान् । कल्कान्निदिग्धिद्वितुला कषाये पलविंशतिः ॥ २ ॥ मत्स्यण्डिकाया दत्वा तु सर्पिषः कुडवं पचेत् । सिद्धशीते पृथक् क्षौद्रपिप्पलीकुडवान्वितम् ॥ ३ ॥ चतुष्पलं तुगाक्षीर्याश्चूर्णं तत्र प्रदापयेत् । लेहयेत्कासहृद्रोगश्वासगुल्मनिवारणम् ॥ ४ ॥ चूर्णिता विश्वदुःस्पर्शा शृङ्गीद्राक्षासटीसिताः । लिह्यात्तैलेन वाताढ्यं कासं जयति दुस्तरम् ॥ ५ ॥ पञ्चमूलकृतः क्काथः पिप्पलीचूर्णसंयुतः । रसः समश्नुतो नित्यं वातकासमुदस्यति ॥ ६ ॥ इति वातकासः ॥

## ॥ अथ पित्तकासे बलादिक्काथः ॥

बलाद्विबृहतीद्राक्षावासाभिः क्कथितं जलम् । पित्तकासापहं पेयं शर्करामधुयोजितम् ॥ १ ॥

## ॥ अथ शट्यादिक्काथः ॥

शटीह्रीबेरबृहतीशर्कराविश्वभेषजम् । एतं क्काथं पिबेत्पूतं सघृतं पित्तकासनुत् ॥ १ ॥ शुण्ठीद्विपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा । कषायेण शृतं क्षीरं पिबेत्समधुशर्करम् ॥ २ ॥

## ॥ अथ खर्जूरादिलेहः ॥

खर्जूरपिप्पलीद्राक्षासितालाजाः समांशकाः । मधुसर्पिर्युतो लेहः पित्तकासहरः परः ॥ १ ॥

## ॥ अथ क्षीरामलकघृतम् ॥

महिष्यजाविगोक्षीरधात्रीफलरसैः समैः । सर्पिष्प्रस्थं पचेद्युक्त्या पित्तकासनिबर्हणम् ॥ १ ॥

## ॥ अथ वङ्गसेनात् ॥

काकोलीबृहतीमेदायुग्मैः सवृषनागरैः । पित्तकासे रसक्षीरयूषांश्चाप्युपकल्पयेत् ॥ १ ॥

## ॥ अथ षट्प्रस्थं घृतम् ॥

अपोथ्या क्षीरिणां शृङ्गान् पचेत् क्षीरचतुर्गुणे ॥ द्राक्षाकल्के घृतं सिद्धं लिह्यात्तत्पित्तकासनुत् ॥ १ ॥

## ॥ अथ क्षीरघृतम् ॥

क्षीरवृक्षाङ्कुरक्काथः पचेत् क्षीरसमं घृतम् । पाययेत्पित्तकासघ्नं मधुना वावलेहयेत् १ ॥ इति वङ्गसेनात् पित्तकासः ॥

## ॥ अथ द्राक्षामलकादिलेहः ॥

द्राक्षामलकखर्जूरं पिप्पलीमरिचान्वितम् । पित्तकासहरं ह्येतल्लिह्यान्माक्षिकसर्पिषा ॥ १ ॥

## ॥ अथ कफकासः ॥

कफजे वमनं कार्यं कासे लङ्घनमेव च । शस्तापवाता प्रकृतिर्यूषाश्च कटुतिक्तकाः ॥ १ ॥ मुद्गामलाभ्यां यवदाडिमाभ्यां कर्कन्धुना शुष्ककमूलकेन । शुण्ठीकणाभ्यां सकुलत्थकेन यूषो नवाङ्गः कफकासहन्ता ॥२॥ इति नवाङ्गयूषः ॥ सटी सातिविषा मुस्तशृङ्गी कर्कटकस्य च । अभया शृङ्गबेरं च समं सम्यादि पेषयेत् ॥ १ ॥ हिङ्गुसैन्धवसंयुक्तं तक्रोदकपरिप्लुतम् । श्लेष्मकासी लिहेदेतमवलेहं मुहुर्मुहुः ॥ २ ॥ इति शट्याद्यवलेहः । व्योषाजमोदचित्रकपद्मन्थचव्यकल्कितं सर्पिः । कफकासश्वासहरं वासकरससाधितं समधु ॥ १ ॥ इति व्योषाद्यं घृतम् ॥ इतिश्लेष्मकासः ॥

## ॥ अथ द्वन्द्वकासचिकित्सा ॥

कट्फलं कत्तृणं भार्गी मुस्ता धान्यं वचाभया । शुण्ठी पर्पटकं शृङ्गी सुराह्वं च जले शृतम् ॥ १ ॥ मधुहिङ्गुयुतं पेयं कासे वातकफान्विते । कण्ठरोगे मुखे शूले हिक्काश्वासज्वरेषु च ॥ २ ॥

## ॥ अथ कट्फलादिः ॥

सिंहास्यामृतसिंहीनां क्वाथं मधुयुतं पुमान् । पिबेत्सपित्तकफजे कासे श्वासे क्षये ज्वरे ॥ १ ॥ वासकस्वरसः पेयो मधुयुक्तो हिताशिना । पित्तश्लेष्मकृते कासे तालीसाद्यं च योजयेत् ॥ २ ॥

## ॥ अथ क्षतकासः ॥

कासे तु क्षतजे बल्ये पाचनैर्बृंहणैरपि । शमनैः पित्तकासघ्नैरन्यैश्च मधुरौषधैः ॥ १ ॥ यवागूं वा पिबेत्सिद्धां क्षतोरस्कः सुशीतलाम् । इक्षिवक्षुवालिकापद्ममृणालोत्पलचन्दनैः ॥ २ ॥ मधुकं पिप्पली द्राक्षा शृङ्गी चैव शतावरी । द्विगुणा च तुगाक्षीरी सिता सर्वैश्चतुर्गुणा । लिह्यात्तं मधुसर्पिभ्यां क्षतकासनिवृत्तये ॥ ३ ॥ इति इक्ष्वाद्यो लेहः । मञ्जिष्ठमूर्वानतवह्निपाठाकृष्णाहरिद्राविहितं तु चूर्णम् । क्षौद्रेण कासेऽवलिहेत्क्षतोत्थे पिबेद् घृतं चेक्षुरसे विपक्वम् ॥ १ ॥ इक्षिवक्षुवालिकापद्ममृणालोत्पलचन्दनैः । शृतं पयो मधुयुतं सन्धानार्थं पिबेत्क्षती ॥ २ ॥ इति क्षतकासः ॥

## ॥ अथ क्षयकासः ॥

पिप्पलीगुडसंसिद्धं छागीक्षीरयुतं घृतम् । एतदग्निविवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम् ॥ १ ॥ इति पिप्पल्यादिघृतम् ॥ काकुभपिष्टं कृत्वा वासारसभावितं बहून्वारान् । मधुघृतसितोपलाभिर्लेह्यं क्षयकासरक्तपित्तहरम् ॥ १ ॥ इति ककुभचूर्णम् ॥

## ॥ अथ पिप्पल्याद्यवलेहः ॥

पिप्पलीमधुकं पिष्टं कर्षकं ससितोपलम् । प्रस्थैकं गव्यमाज्यं च क्षीरमिक्षुरसस्तथा ॥ १ ॥ यवगोधूममृद्वीकाचूर्णमामलकीरसम् । तैलं च प्रसृतांशानि तत्सर्वं मृदुवह्निना ॥ २ ॥ पचेल्लेहं घृतक्षौद्रयुक्तं स श्वासकासजित् । क्षयहृद्रोगकासघ्नो हितो वृद्धाल्परेतसाम् ॥ ३ ॥ इति पिप्पल्याद्यवलेहः । अन्यच्च । पिप्पलीमधुकं द्राक्षा सुपक्कं बृहतीफलम् । घृतक्षौद्रयुतो लेहः क्षयकासनिबर्हणः ॥ १ ॥ सन्निपातभवो ह्येष क्षयकासः सुदारुणः । सन्निपातहितं तस्मात्कार्यमत्र चिकित्सितम् ॥ २ ॥ इति क्षयकासः ॥

## ॥ अथ कासश्वासः ॥

अमृतानागरफञ्जीव्याघ्रीपर्णीसुसाधितः क्काथः । पीतः सकणाचूर्णः कासश्वासौ जयत्याशु ॥ १ ॥ इत्यमृतादिक्काथः । भार्गीसिनागरासिंहीकुलत्थं मूलकं तथा । पिबेत्पिप्पलिचूर्णेन कासश्वासौ व्यपोहति ॥१॥ इति भार्ग्यादिक्काथः । स्वरसं शृङ्गबेरस्य माक्षिकेण समन्वितम् । पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥ १ ॥ सेवितं मधुखण्डाभ्यां चूर्णं मरिचजं यदि । किमर्थं क्रियते चिन्ता कासश्वासपराजितैः ॥२॥ कुलित्थः कण्टकारी च तथा ब्राह्मणयष्टिका । शुण्ठीसुरभिसंयुक्तः कासश्वासज्वरापहः ॥ ३ ॥ पौष्करं कट्फलं भार्गीविश्वपिप्पलिसाधितम् । पिबेत्क्काथं कफोद्रेके कासे श्वासे च हृद्ग्रहे ॥३॥ कुनटीसैन्धवव्योषविडङ्गामरहिङ्गुभिः । लेहः साज्यमधुः कासहिक्काश्वासनिवारणः ॥ ४ ॥ इति कुनट्यादिलेहः । श्वासकासहरा बर्हिपादा च क्षौद्रसर्पिषा । लिह्यान्मरिचचूर्णं वा सघृतक्षौद्रशर्करम् ॥ १ ॥ भार्गीशुण्ठीकणाचूर्णं गुडेन श्वासकासनुत् । पथ्याशुण्ठीगुडयुतां गुटिकां धारयेन्मुखे ॥ २ ॥ सर्वेषु श्वासकासेषु केवलं वा बिभीतकम् । नागरेणाभया तद्वत्कासमाशु व्यपोहति ॥ ३ ॥ इति कासश्वासः ॥

## ॥ अथ सर्वकासः ॥

सपिप्पलीपुष्करमूलपथ्याशुण्ठीसटीमूलकसूक्ष्मचूर्णम् । गुडेन युक्ता गुटिका प्रयोज्या कासेषु नासास्रववैस्वरे च ॥ १ ॥ क्षवथौ गन्धनाशे च धूमपानं प्रयोजयेत् । अर्कमूलशिले तुल्ये ततोऽर्धेन कटुत्रिकम् ॥ २ ॥ चूर्णितं वह्निनिक्षिप्तं पिबेद्धूमं तु योगवित् । भक्षयेदथ ताम्बूलं पिबेद्दुग्धमथाम्बु वा ॥३॥ कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः । मनःशिलैलमरिचं मांसीमुस्तांगुडैः पिबेत् ॥४॥ धूमं तस्यानु च पयः सुखोष्णं सगुडं पिबेत् । एष कासान्पृथग् द्वन्द्वसन्निपातसमुद्भवान् ॥५॥ शतैरपि प्रयोगाणां साधयेदप्रसाधितान् । मनःशिलालिप्तदलं बदर्यातपशोषितम् ॥६॥ सक्षीरं धूमपानं च महाकासनिबर्हणम् । पीत्वा त्रिपुटधत्तूरमूलव्योषमनःशिलाः ॥७॥

---

१ ( च० ) शिलालं । २ ( च० ) मुस्तेङ्गुदैः ।

तेन प्रलिप्य वसनं धूमवर्तिं प्रकल्पयेत् । धूमं तस्याः पिबेद्यस्तु त्रिदिनात्कसनं हरेत् ॥ ८ ॥ जातीपत्रशिलारालैर्योजयेद् गुग्गुलं समम् । अजामूत्रेण सम्पिष्टो धूमः कासहरः परः ॥ ९ ॥

## ॥ अथ जात्यादिधूमः ॥

जातीजटाकिसलयैर्बदरीदलैश्च जातीमसूरकफलैः सुमनःशिला च । स्याद्धूमवर्तिरिह गुग्गुलुना समेतैः कासच्छिदे बदरिकाग्निविदह्यमानैः ॥ १ ॥ रात्रिद्वयशिलाधूमपानात्कासश्रुतिः कुतः । जलपानादपि तथा क्षणेन क्षणदाक्षये ॥२॥ इतिजात्यादिधूमः ॥ हरीतकीकणाशुण्ठीमरीचगुडसंयुतः । कासघ्नो मोदकः प्रोक्तः परं चानलदीपनः॥१॥ इति हरीतक्याद्यो मोदकः ॥ शुण्ठीकणामरिचनागदलत्वगेलं चूर्णीकृतं क्रमविवर्धितमूर्ध्वमन्त्यात् । खादेदिदं समसितं गुदजाग्निमान्द्यगुल्मारुचिश्वसनकण्ठहृदामयेषु ॥१॥इति समशर्करं चूर्णम् ॥ कर्पूरवालककक्कोलजातीफलदलं समम् । लवङ्गनागमरिचकृष्णाशुण्ठ्यो विवर्धिताः ॥१॥ चूर्णं सितासमं ग्राह्यं रोचनं क्षयकासजित् । वैस्वर्यकासश्वासघ्नं छर्दिं चैव क्षयं नयेत् ॥ प्रयुक्तं चान्नपानेषु भैषज्यं द्विगुणं हितम् ॥ २ ॥ इति कर्पूराद्यं चूर्णम् ॥ कर्षः कर्षांश*पलं पलद्वयं स्यात्ततोऽर्धकर्षश्च । मरिचस्य पिप्पलीनां दाडिमगुडयावशूकानाम् ॥ १ ॥ सर्वौषधैरसाध्या ये कासाः सर्ववैद्यनिर्मुक्ताः । अपि पूयं छर्दयतां तेषामिदमौषधं पथ्यम् ॥ २ ॥

## ॥ अथ मरिचाद्यं चूर्णम् ॥

देवदारुबलारास्नात्रिफलाव्योषपद्मकैः । सविडङ्गैः सितातुल्यैस्तच्चूर्णं सर्वकासनुत् ॥१॥बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् । स्वरोपघाते कासे च लेहमेतं प्रयोजयेत् ॥२॥ द्वौ क्षारौ पञ्च मूलानि पञ्चैव लवणानि च । सटीनागरकोदीच्यकल्कं वा वस्त्रगालितम् ॥ पाययेच्च घृतोन्मिश्रं सर्वकासनिबर्हणम् ॥ ३ ॥

## ॥ अथ त्रिजातगुटिका ॥

त्रिजातमर्धकर्षं च पिप्पल्यर्धपलं सिता । द्राक्षामधुकखर्जूरं पलांशं श्लक्ष्णकल्कितम् ॥१॥ मधुना गुटिका घ्नन्ति ता वृष्याः पित्तशोणितम् । कासश्वासारुचिच्छर्दिमूर्च्छाहिध्मामदभ्रमान् ॥ २ ॥ क्षतक्षयस्वरभ्रंशप्लीहशोषाढ्यमारुतान् । रक्तनिष्ठीवहृत्पार्श्वरुक्पिपासाज्वरानपि ॥ ३ ॥

## ॥ अथ मरीचादिगुटिका ॥

शार्ङ्गधरात् । मरीचं कर्षमात्रं च पिप्पली कर्षसम्मिता । अर्धकर्षो यवक्षारः कर्षयुग्मं च दाडिमात् ॥१॥ एतच्चूर्णीकृतं युञ्ज्यादष्टकर्षगुडेन हि । शाणप्रमाणां गुटिकां कृत्वा वक्त्रे च धारयेत् ॥ अस्याः प्रभावात्सर्वेऽपि कासा यान्त्येव सङ्क्षयम् ॥ २ ॥

---

* अत्र कर्षांशो द्विकर्षमेव ।

१ ( ख० ) जातामसूरकफलैः समनःशिला च ।

## ॥ अथ लवङ्गादिवटी ॥

तुल्या लवङ्गमरिचाक्षफलत्वचः स्युः सर्वैः समो निगदितः खदिरस्य सारः । बब्बूलवल्कलकषाययुजां चतुर्णां कासान्निहन्ति गुटिका घटिकाष्टकान्ते ॥ १ ॥ धनञ्जयत्रिजातकं कणाजटाकटुत्रिकम् । रसार्द्रकेन भावितं जयेच्च कासमाततम् ॥२॥ कटुत्रिकं छिन्नलताकृशानुफलत्रिकं वेल्लभवं सरास्नम् । सशर्करं चूर्णमिदं सुसेव्यं कासाटवीदाहदवानलाख्यम् ॥ ३ ॥

## ॥ अथ बिभीतकावलेहः ॥

प्रस्थं बिभीतकानामस्थीनि विहाय साधयेदजामूत्रे । लेह्यस्त्ववलेहोऽयं मधुना सहितोऽतिकासहरः ॥ १ ॥

## ॥ अथ खदिरादिगुटिका ॥

खादिरं पौष्करं शृङ्गी कट्फलं[1] द्विजयष्टिका । हरीतकी लवङ्गं च व्योषं चातिविषं तथा ॥ १ ॥ कारवीयासममृता बृहतीद्वयमक्षकम् । पृथक्कर्षद्वयं ग्राह्यं सूक्ष्मचूर्णं तु कारयेत् ॥ २ ॥ सर्वैः समं खादिरं च मेलयित्वा विभावयेत् । दाडिमत्वक् तथा क्षुद्राखदिराम्भोभिरार्द्रकैः ॥ ३ ॥ बब्बूलत्वग्दलक्काथैराटरूषजलैस्तथा । सप्तधा भावयेद्बद्ध्वा गुटिका खादिरी मता ॥ कासश्वासौ निहन्त्याशु दुस्तरौ चिरजावपि ॥ ४ ॥ इति श्वासकासे खदिरादिगुटिका ॥

## ॥ अथार्द्रकावलेहः ॥

वैद्यजीवनात् । आर्द्रादर्धतुला गुडादपि तथा द्व्याम्रं च कुस्तुम्बरीदीप्यायोजरणत्रिजातजलदादेतत्पचेद्युक्तितः । लेहो रत्नकले तवैव कथितः प्राणप्रियाया मया कासार्शोज्वरपीनसश्वयथुरुग्गुल्मक्षयध्वंसनः ॥ १ ॥

## ॥ अथ व्याघ्रीहरीतकीलेहः ॥

समूलपुष्पच्छदकण्टकार्यास्तुलाजलद्रोणपरिप्लुता च । हरीतकीनां च शतं निदध्याद् ग्राह्यं तु पक्त्वा चरणावशेषम् ॥१॥ गुडस्य दत्वा शतमेतदग्नौ विपक्वमुत्तार्य ततः सुशीते । कटुत्रिकं च त्रिपलप्रमाणं पलानि षट् पुष्परसस्य चापि ॥ २ ॥ क्षिपेच्चतुर्जातपलं यथाग्नि प्रयुज्यमानो विधिनावलेहः । वातात्मकं पित्तकफोद्भवं च द्विदोषकासानपि सन्निपातान् ॥ ३ ॥ क्षतोद्भवं कासक्षयं च हन्यात् स पीनसश्वासउरःक्षतं च । यक्ष्माणमेकादशरूपमुग्रं भृगूपदिष्टं हि रसायनं स्यात् ॥ ४ ॥

## ॥ अथ कासकण्डनावलेहः ॥

अजामूत्रं शतपलं मन्दाग्नौ गुडपाकवत् । पक्त्वा बिभीतकं चूर्णं पलद्वयमितं क्षिपेत् ॥ १ ॥ पिप्पली पिप्पलीमूलं पलमात्रं मृतायसम् । कण्टकारीफलरजो

---

१ ( च० ) कट्फलं ।

निक्षिपेच्च पलद्वयम् ॥ २ ॥ ततो माषद्वयं खादेट्टङ्कं कर्षमथापि च । क्षौद्रेणोष्णाम्बुना वापि सर्वकासात्प्रमुच्यते ॥ ३ ॥ असाध्या भिषजा त्यक्ताश्चिरजाः पथ्यवर्जिताः । ये कासास्तेऽप्यनेनाशु प्रणश्यन्ति न संशयः ॥ कासकण्डननामायं योग आत्रेयभाषितः ॥ ४ ॥

## ॥ अथागस्तिहरीतकीपाकः ॥

वृन्दात् । दशमूलीं स्वयं गुप्तां शङ्खपुष्पीं शटीं बलाम् । हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥ १ ॥ भार्गीपुष्करमूलं च द्विपलांशं यवाढकम् । हरीतकीशतं चैव जले पञ्चाढके पचेत् ॥ २ ॥ यवैः स्विन्नैः कषाये च पूतं तच्चाभयाशतम् । पचेद् गुडतुलां दत्वा कुडवं च पृथग् घृतात् ॥ ३ ॥ तैलात्पिप्पलिचूर्णाच्च सिद्धे शीते च माक्षिकात् । लिह्याद्वे चाभये नित्यं ततः खादेद्रसायनम् ॥ ४ ॥ वलीं च पलितं हन्याद्वर्णायुर्बलवर्धनम् । पञ्च कासान्क्षयश्वासान् हिक्कां च विषमज्वरान् ॥ ५ ॥ हन्यात्तथा ग्रहण्यर्शोहृद्रोगारुचिपीनसान् । अगस्तिविहितं धन्यमिदं श्रेष्ठं रसायनम् ॥ ६ ॥

## ॥ अथ वैद्यजीवनाद्विभीतकावलेहः ॥

आजस्य मूत्रस्य शतं पलं च शतं पलानां च कलिद्रुमस्य । पक्वं समध्वाशु निहन्ति कासं श्वासं च तद्वत्सबलं बलासम् ॥ १ ॥ कण्टकारीतुलां नीरद्रोणे पक्त्वा कषायकम् । पादशेषं गृहीत्वा च तस्मिंश्चूर्णानि दापयेत् ॥ २ ॥ पृथक् पलांशान्येतानि गुडूचीचव्यचित्रकम् । मुस्तकर्कटशृङ्गी च त्र्यूषणं धन्वयासकम् ॥ ३ ॥ भार्गी रास्ना शटी चैव शर्करा पलविंशतिः । प्रत्येकं च पलान्यष्टौ प्रदद्याद्घृततैलयोः॥४॥ पक्त्वा लेहत्वमायाते शीते मधुपलाष्टकम् । चतुष्पलं तुगाक्षीरीपिप्पलीनां चतुष्पलम् ॥ ५ ॥ क्षिप्त्वा निदध्यात्सुदृढे मृन्मये भाजने शुभे । लेहोऽयं हन्ति कासार्तिहिक्काश्वासानशेषतः ॥ ६ ॥ इति कण्टकार्यवलेहो वृन्दात् ॥ व्याघ्रीस्वरसविपक्वै[१] रास्नाकट्फलसुगोक्षुरव्योषैः । सर्पिः स्वरोपघातं निहन्ति कासं च पञ्चविधम् ॥१॥ वृन्दात् । सर्पिर्गुडूचीवृषकण्टकारीक्काथेन कल्केन च सिद्धमेतत् । पेयं पुराणज्वरकासशूलप्लीहाग्निमान्द्यग्रहणीगदेषु ॥ २ ॥

## ॥ अथ त्र्यूषणादिघृतं वृन्दात् ॥

त्र्यूषणं त्रिफलाद्राक्षाकाश्मर्यश्चाटरूपकम् । द्वे पाठे देवदार्व्यब्दस्वगुप्तं चित्रकं शटी ॥ १ ॥ व्याघ्री तामलकी मेदा काकनासा शतावरी । त्रिकण्टकं विदारी च पिष्ट्वा कर्षसमान्घृतात् ॥ २ ॥ प्रस्थं चतुर्गुणक्षीरसिद्धं कासहरं पिबेत् । ज्वरगुल्मारुचिप्लीहशिरोहृत्पार्श्वशूलनुत् ॥ ३ ॥ कामलार्शोऽनिलाष्ठीलाक्षतशोषक्षयापहम् । त्र्यूषणं नाम विख्यातं घृतमेतन्महोत्तमम् ॥ ४ ॥

---

१ ( च० ) मानीय । २ ( च० ) विपक्व ।

## ॥ अथ कण्टकारीघृतम् ॥

समूलफलपत्रायाः कण्टकार्या रसाढकम्। घृतप्रस्थं बलाव्योषविडङ्गशटिदाडिमैः ॥ १ ॥ सौवर्चलयवक्षारविश्वामलकपौष्करैः। वृश्चीवबृहतीपथ्यायवानीचित्रकादिभिः ॥ २ ॥ मृद्वीकाचव्यवर्षाभूदुरालम्भाम्लवेतसैः। शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ॥ ३ ॥ कल्कैस्तत्सर्वकासेषु श्वासहिक्कासु शस्यते। कण्टकारीघृतं सिद्धं कफव्याधिनिषूदनम् ॥४॥ वृन्दात् ॥ द्वितीयं कण्टकारीघृतं योगतरङ्गिण्याः। कण्टकार्यास्तुलां क्षुण्णां कृत्वा द्रोणेऽम्भसः पचेत्। तेनाढकेन क्वाथस्य घृतप्रस्थं पिचून्मितैः ॥१॥ रास्नादुःस्पर्शषड्ग्रन्थिपिप्पलीद्वयचित्रकैः। सौवर्चलयवक्षारकृष्णामूलैश्च तज्जयेत् ॥ कासश्वासकफष्ठीवहिक्कारोचकपीनसान् ॥ २ ॥ इति कण्टकारीघृतम् ॥

## ॥ अथ रसाः ॥

रसगन्धकणापथ्याकलिद्रुफलवासकाः। भार्गी चेति क्रमाद् वृद्धैरेतद्बर्वरजद्रवैः॥१॥ पिष्टं विंशतिमेकान्तान् कुर्यात्क्षौद्रेण गोलकान्। कर्षप्रमाणमेतस्य तमेकं प्रातरुत्थितः ॥ २ ॥ दद्यान्मासत्रयं क्षुद्राक्वाथं दशकणायुतम्। पिबेत्तदनु कासाच्च श्वासाच्च परिमुच्यते ॥ ३ ॥ इति भार्गोत्तरवटी ॥

## ॥ अथ पर्पटीरसः

रसरत्नप्रदीपात्। भागौ रसस्य गन्धस्य द्वावेको लोहभस्मतः। एतद्घृते द्रवीभूतं मृदग्नौ कदलीदले ॥ १ ॥ पातयेद् गोमयगते तथैवोपरि योजयेत्। ततः पिष्ट्वा द्रवैरेभिर्मर्दयेत्सप्तधा पृथक् ॥ २ ॥ भार्गीमुण्डीमुनिवराजयानिर्गुण्डिकाद्रवैः। व्योषवासककन्यार्द्रद्रवैः शुष्कं पुटेल्लघु ॥ ३ ॥ अगन्धं खर्परे नाम्ना पर्पटीति रसो भवेत्। सर्वरोगहरः स्वैः स्वैरनुपानैर्द्विमाषतः ॥ ४ ॥ ताम्बूलपत्रसहिता कासश्वासहरा परा। सकणः सुरसाक्वाथोऽनुपानं वासगोजलम् ॥ ५ ॥

## ॥ अथ पारदादिचूर्णम् ॥

योगरत्नावलितः ॥ पारदं गन्धकं शुद्धं मृतं लोहं च टङ्कणम्। रास्नाविडङ्गत्रिफलादेवदारुकटुत्रयम् ॥ १ ॥ अमृतापद्मकक्षौद्रं पिचुतुल्यानि चूर्णयेत्। त्रिगुञ्जः सर्वकासघ्नो ज्वरारोचकमेहनुत् ॥ २ ॥

## ॥ अथ कासश्वासविधूननो रसः ॥

रसभागो भवेदेको गन्धकाद्द्वौ तथैव च। यवक्षारस्त्रिभागः स्याद् रुचकं च चतुर्गुणम् ॥ १ ॥ मरिचं पञ्चभागं स्याच्छुद्धं रसविमर्दितः। कासं पञ्चविधं हन्याच्छ्वासं पञ्चविधं हरेत् ॥ २ ॥

---

१ (च०) हिध्मासु। २ (च०) हिध्मा। ३ (ग०) शुष्कपुटे लघु।

## ॥ अथ ताम्रपर्पटीरसः ॥

मृतं ताम्रं त्रिभागं च रसं तत्समगन्धकम् । भागमेकं वत्सनाभं कज्जलीखल्वमध्यगम् ॥ १ ॥ गोघृतेन कृतं कल्कं लोहपात्रे विपाचयेत् । ढालयेदर्कपत्रस्था पर्पटीरससिद्धये ॥ २ ॥ गुञ्जाद्वयं त्रयं चैव पिप्पलीमधुसंयुतम् । त्रिसप्तरात्रयोगेन रोगराजं च नाशयेत् ॥ ३ ॥ आर्द्रकस्य रसेनैव सन्निपातं नियच्छति । त्रिफलारससंयुक्ता सर्वपाण्डुं विनाशयेत् ॥४॥ वातारितैलसंयुक्ता सर्वशूलनिवारणी । कुमारीरसयोगेन वातपित्तोपशान्तिकृत् ॥ ५ ॥ बाकुचीरससंयुक्ता सर्वदद्रुविनाशनी । त्रिफला मधुसंयुक्ता सर्वमेहनिवारणी ॥६॥ खदिरक्काथपानेन कुष्ठाष्टादशनाशनी । मन्थानभैरवेणोक्ता लोकानां हितकाम्यया ॥ ७ ॥ इति ताम्रपर्पटीरसः ॥

## ॥ अथ नागवल्लभः ॥

कर्षमाना मृगमदचोचटङ्कणका अथ । कश्मीरजन्मदरदपिप्पल्यः स्युर्द्विकर्षकाः ॥ १ ॥ अकारकरभो जातीपत्री जातीफलं विषम् । प्रत्येकं पलमानानि चत्वार्यथ सुखल्वके ॥ २ ॥ अहिवल्लीदलरसैर्मर्दयेच्च दिनत्रयम् । मुद्गप्रमाणा वटका लीढा मध्वार्द्रकद्रवैः ॥ ३ ॥ ताम्बूलचर्विता मेहकासक्षयमरुद्धराः । नागवल्लभनामायं रसो विश्वोपकारकः ॥ ४ ॥ इति नागवल्लभरसो ग्रन्थान्तरात् ॥

## ॥ अथ हेमगर्भपोटलीरसः ॥

शार्ङ्गधरात् । रसस्य भागाश्चत्वारस्तावन्तः कनकस्य च । तयोश्च पिडिकां[2] कृत्वा गन्धो द्वादशभागिकः ॥ १ ॥ कुर्यात्कज्जलिकां तत्र मुक्ताभागाश्च षोडश । चतुर्विंशश्च शङ्खस्य भागेकं टङ्कणस्य च ॥ २ ॥ एकत्र मर्दयेत्सर्वं पक्वनिम्बुकजै रसैः । कृत्वा तेषां ततो गोलं मूषासम्पुटके न्यसेत् ॥ ३ ॥ मुद्रां दत्वा ततो हस्तमात्रे गर्ते च गोमयैः । पुटेद् गजपुटेनैव स्वाङ्गशीतं समुद्धरेत् ॥ ४ ॥ पिष्ट्वा गुञ्जाचतुर्मानं दद्याद् गव्याज्यसंयुतम् । एकोनत्रिंशदुन्मानमरिचैः सह दीयते ॥ ५ ॥ राजते मृन्मये पात्रे काचजे वाथ लोहजे । लोकनाथसमं पथ्यं कुर्यात्प्रयतमानसः ॥ ६ ॥ कासे श्वासे क्षये वाते कफे ग्रहणिकागदे । अतिसारे प्रयोक्तव्या पोटली हेमगर्भिका ॥ ७ ॥ इति हेमगर्भपोटलीरसः ॥

## ॥ अथ द्वितीयहेमगर्भपोटलीरसः ॥

शुद्धसूतं चतुर्भागं द्विभागं गन्धकस्य च । भागमेकं सुवर्णं च त्रिभागं शुल्बभस्म च ॥१॥ कुमारीरससंयुक्तं सप्ताहं मर्दयेद्दृढम् । गुटिकां कारयेत्तां तु बध्नीयात् खरकर्पटे ॥ २ ॥ वस्त्रे किञ्चिद् बालिं स्थाप्य तत्र गोलं निधाय च । बध्नीयात् पोटलीं गाढां पश्चाद्वस्त्रेण वेष्टयेत् ॥ ३ ॥ सर्वभागसमं गन्धं दत्वा मृन्मयभाजने । तन्मध्ये पोटलीं न्यस्य मुखे मुद्रां च कारयेत् ॥ ४ ॥ विधाय च्छिद्रं मुद्रास्थं द्रावं

१ ( च० ) धारयेत् । २ ( च० ) पिष्ठिकां ।

दृष्ट्वा शलाकया । पाचयेत्सिकतायन्त्रे रसोऽयं मृदुवह्निना ॥ ५ ॥ यामार्धेन सुसञ्जातं स्वाङ्गशीतं समुद्धरेत् । कासे श्वासे क्षये वाते कफे ग्रहणिकागदे । सर्वरोगेषु दातव्या हेमगर्भाख्यपोटली ॥ ६ ॥

## ॥ अथान्यः प्रकारः ॥

शुद्धसूतं त्रिभागं च तत्समं शुल्बभस्म च । भागैकं गन्धकं दद्यात्तदर्धं स्वर्णमेव च ॥ १ ॥ कज्जलीं कारयेत्तां तु खल्वके सप्तवासरम् । अथ निर्गुण्डिकाद्रावैर्मर्दयेद्दिनसप्तकम् ॥ २ ॥ अथवा कनकद्रावैर्गुटिकां कारयेत्ततः । किञ्चिद्दलिसमायुक्ते वस्त्रे गोलं निधाय च ॥ ३ ॥ बध्नीयात्पोटलीं गाढामेवं च त्रिपुटं चरेत् । दृढमृन्मयपात्रे तु गन्धं दत्वाधरोत्तरम् । तन्मध्ये पोटलीं न्यस्य निर्वातभवनान्तरे । वितस्तिप्रमितं गर्तं तस्मिन् संस्थाप्य मुद्रयेत् ॥ ५ ॥ अङ्गुलिमृत्तिकाभिश्च ज्वालयेदिन्धनानि च । यामेन सिद्धतां याति हेमगर्भाख्यपोटली ॥ अनुपानानुसारेण सर्वरोगेषु योजयेत् ॥ ६ ॥

## ॥ अथान्यः प्रकारः ॥

रसं च गन्धकं चैव समं खल्वे विमर्दयेत् । कज्जल्या[1] च तथा स्वर्णसंशुद्धं च विनिक्षिपेत् ॥१॥ सुसूक्ष्मे सुदृढे वस्त्रे बद्ध्वा पोटलिकां दृढाम् । गन्धकेनायसे पात्रे पक्त्वा पोटलिकां चिरम् ॥२॥ मन्दाग्निना पचेद्यावद् व्योमवर्णं भवेत्तु तत् । हेमगर्भ इति ख्यातो रसोऽयं श्वासकासनुत् ॥ अनुपानविभेदेन सर्वरोगाञ्जयत्यसौ॥३॥

## ॥ अथ कफकुञ्जररसः ॥

रसगन्धौ समांशौ च स्नुह्यर्कपयसः पलम् । पलं च पञ्चलवणमेकीकृत्वावचूर्णयेत् ॥१॥ आलोड्य चार्कदुग्धेन पूरयेच्छङ्खमध्यतः । पिप्पलीभकणावारिचूर्णं कृत्वा प्रलेपयेत् ॥२ ॥ प्रज्वालयेद्याममात्रं सूक्ष्मचूर्णं तु कारयेत् । कर्पूरनागपत्रैश्च देयो मात्रार्धगुञ्जया ॥ ३ ॥ श्वासं कासं च हृद्रोगं कफं पञ्चविधं तथा । नाशयेत् सर्वरोगांश्च रसोऽयं कफकुञ्जरः ॥ ४ ॥

## ॥ अथ कफरोगे नागरसः ॥

लवङ्गजातीफलजातिपत्रिकास्तथैव नागोषणग्रन्थिकानि । कर्षप्रमाणानि तथैकशाणं कस्तूरिकाकुङ्कुमयोः प्रयुञ्ज्यात् ॥ १ ॥ आर्द्राम्बुनाथ विहिता वटिका त्रिगुञ्जा चार्द्राम्भसापि विनिहन्ति कफक्षयादीन् । किं श्वासकासं जठरस्य शूलं नानानुपानैः सकलामयघ्नम् ॥ २ ॥

## ॥ अथोन्मत्तभैरवरसः ॥

पारदं दरदं शुद्धं गन्धकं कज्जलाकृति । गजकणावत्सनागं शुण्ठी चोन्मत्तबी-

---

1 ( छ० ) कज्जल्यां ।

लकम् ॥ १ ॥ जातीफलं जातिपत्रं लवङ्गमरिचं तथा । अकल्लकरं समानं स्यान्मर्दयेच्च दिनत्रयम् ॥ २ ॥ आर्द्रकस्य रसेनैव गुटिकां वल्लसन्निभाम् । मधुना चपला चैव क्षयश्वासनिबर्हणः ॥३ ॥ कफरोगविनाशाय रस उन्मत्तभैरवः । अनुपानविशेषेण धातुपुष्टिकरः स्मृतः ॥ ४ ॥ इति रसाः ।

## ॥ अथ पथ्यापथ्यम् ॥

शालिषष्टिकगोधूममाषमुद्गकुलत्थकाः । छाग्याः पयो घृतं बिम्बी वार्ताकं बालमूलकम् ॥ १ ॥ कासमर्दकजीवन्तीवास्तुकं बीजपूरकम् । गोस्तनी लशुनं लाजा व्योषमुष्णोदकं मधु ॥ २ ॥ पथ्यमेतद्यथादोषमुक्तं कासगदातुरे । मैथुनं स्निग्धमधुरं दिवा स्वापं पयो दधि ॥ पिष्टान्नं पायसादीनि कासी धूमं च वर्जयेत् ॥३॥ इति पथ्यापथ्यम् । इति कासचिकित्सा ॥

---

## ॥ अथातो हिक्कानिदानं व्याख्यास्यामः ॥

विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः । शीतपानाशनस्नानरजोधूमातपानिलैः ॥ १ ॥ व्यायामकर्मभाराध्ववेगाघातापतर्पणैः । हिक्का श्वासश्च कासश्च नृणां समुपजायते ॥ २ ॥

## ॥ अथ सम्प्राप्तिमाह ॥

मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन् । स घोषवानाशु हिनस्ति यस्मात्ततस्तु हिक्केत्यभिधीयते बुधैः ॥ १ ॥ अथ तासां पूर्वरूपमाह ॥ कण्ठोरसोर्गुरुत्वं च वदनस्य कषायता । हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च ॥१॥

## ॥ अथ तासां नामान्याह ॥

अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा । वायुः कफेनानुगतः पञ्च हिक्काः करोति हि ॥ १ ॥

## ॥ अथान्नजालक्षणमाह ॥

पानान्नैरातसम्भुक्तैः सहसा पीडितोऽनिलः । हिक्कयत्यूर्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् ॥ १ ॥

## ॥ अथ यमलामाह ॥

चिरेण यमलैर्वेगैर्या हिक्का सम्प्रवर्तते । कम्पयन्ती शिरोग्रीवं यमलां तां विनिर्दिशेत् ॥ १ ॥

## ॥ अथ क्षुद्रामाह ॥

विकृष्टकालैर्या वेगैर्मन्दैः समभिवर्तते । क्षुद्रिका नाम सा ज्ञेया सर्वगात्रप्रकम्पिनी॥१॥

## ॥ अथ गम्भीरामाह ॥

नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी । अनेकोपद्रववती गम्भीरा नाम सा स्मृता ॥ १ ॥

## ॥ अथ महतीमाह ॥

मर्माण्यापीडयन्तीव सततं या प्रवर्तते । महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी ॥ १ ॥

## ॥ अथासाध्यत्वलक्षणमाह ॥

आयम्यते हिक्कतो यस्य देहो दृष्टिश्चोर्ध्वं ताम्यते यस्य नित्यम् । क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्रं तौ द्वौ चान्त्यौ वर्जयेद्धिक्कमानौ ॥ १ ॥ अतिसञ्चितदोषस्य भक्तच्छेदेकरस्य च । व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः ॥ २ ॥

## ॥ अथ पुनरसाध्यत्वमाह ॥

एषां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम् । यमिका च प्रलापार्तिमोहतृष्णासमन्विता ॥ १ ॥ अक्षीणश्चाप्यदीनश्च स्थिरधात्विन्द्रियश्च यः । तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ॥ २ ॥ वातेन हिक्काः प्रभवन्ति पञ्च तासामसाध्यत्वमुदाहरन्ति । अक्षीणमांसस्य भवेच्च साध्या प्रान्ते च हिक्के परिवर्जनीये ॥ ३ ॥ इति हिक्कानिदानम् ॥

## ॥ अथ हिक्काचिकित्सा ॥

नारीपयःपिष्टसुशुक्लचन्दनं कृतं सुखोष्णं च ससैन्धवं च । पिष्टं तथा सैन्धवमम्बुना वा निहन्ति हिक्कां ननु नावनेन ॥१॥ इति नारायणीयात् ॥ मधुकं मधुसंयुक्तं पिप्पली शर्करान्विता । नागरं गुडसंयुक्तं हिक्काघ्नं नावनत्रयम्॥१॥इति वृन्दात् ॥

## ॥ अथ यवागूः ॥

दशमूलीशटीरास्नापिप्पलीविश्वपौष्करैः । शृङ्गीतामलकीभार्गीगुडूचीनागरादिभिः ॥ १ ॥ यवागूं मधुना सिद्धां कषायं वा पिबेन्नरः । कासहृद्ग्रहपार्श्वार्तिहिक्काश्वासप्रशान्तये ॥२॥ इति वृन्दात् । हिङ्गुसौवर्चलाजाजीबिडपौष्करचित्रकैः । सटीकर्कटशृङ्गी च यवागूः श्वासहिक्किनाम् ॥१॥ इति हिङ्ग्वादियवागूः । चिकित्सासारात्॥

१ ( च० ) जत्रुमूलात्प्रधावति । २ ( च० ) भक्तद्वेषकृशस्य च । ३ ( च० ) चामलकी ।

## ॥ अथ यूषः ॥

कासमर्दकपत्राणां यूषः शोभाञ्जनस्य च। शुष्कमूलकयूषश्च हिक्काश्वासनिवारणः॥ सदधिव्योपसर्पिष्को यूषो वार्ताकजो हितः ॥ १ ॥ इति वृन्दात् ॥

## ॥ अथ क्वाथः ॥

दशमूलीजलयुतं सूतं हिक्किषु योजयेत् । श्वासकासहरः सर्वो विधिरत्रापि युज्यते ॥ १ ॥ इति रसरत्नदीपात्।पाटल्याः फलतोयेन क्षौद्रेण च समन्वितम् । हेमभस्म निहन्त्येव हिक्काः पञ्चातिदुस्तराः ॥ १ ॥ दशमूलीकषायेण मधुना च समन्वितम् । कान्तायोभस्म हिक्कानां पञ्चतां पञ्चतां नयेत् ॥ २ ॥ कुलित्थयवकोलाम्बुदशमूलबलाजलम् । पानार्थं कल्पयेत्कासहिक्काश्वासप्रशान्तये ॥ ३ ॥ इति वृन्दात् । धात्री च मागधी शुण्ठी क्वाथश्चैषां सितायुतः । हिनस्ति हृदयोद्भूतां हिक्कां प्राणापनोदिनीम् ॥ इति वैद्यविलासात् ॥ १ ॥

## ॥ अथ चूर्णम् ॥

शिखिपिच्छभस्म कृष्णाचूर्णं मधुमिश्रितं मुहुर्लीढम् । हिक्कां हरति प्रबलां श्वासं चैवातिदुस्तरं छर्दिम् ॥ १ ॥ इति चिकित्सादीपात् ॥ कृष्णामलकशुण्ठीनां चूर्णं मधुसितायुतम् । मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवारणम् ॥ १ ॥ हिक्काश्वासी पिबेद् भार्गीं सविश्वामुष्णवारिणा । नागरं वा सिताभार्गीसौवर्चलसमन्वितम् ॥ २ ॥ ॥ इति वृन्दात् ॥ शृङ्गीकटुत्रिकफलत्रयकण्टकारी—भार्गीसपुष्करजटालवणानि चैषाम् । चूर्णं पिबेदशिशिरेण जलेन हिक्काश्वासोर्ध्ववातकसनारुचिपीनसेषु ॥ १ ॥ इति शृङ्ग्यादिचूर्णम् । योगशतकात् ॥ विश्वामिसी[3]कणाचूर्णः ससितः समधुः स्मृतः । गुडूचीनागरं नस्यं हिक्काधिक्कारकारकम् ॥१॥ इति वैद्यजीवनात् ॥

## ॥ अथ सामान्यप्रतीकारः ॥

हिक्कार्तस्य पयश्छागं हितं नागरसाधितम् । रसान् पचेत्फ[4]लाम्लांश्च लाजाचूर्णं ससैन्धवम् ॥ १ ॥ इति नारायणीयात् ॥ यष्ट्याह्वं वा माक्षिकेणावलीढं कृष्णाचूर्णं शर्कराढ्यं च किं वा । सर्पिः कोष्णं क्षीरमुष्णं रसो वा हन्यादिक्षोः पानतः पञ्च हिक्काः ॥ १ ॥ इति सुश्रुतात् ॥ मधुसौवर्चलोपेतं मातुलिङ्गरसं पिबेत् । हिक्कार्तो मधुना लिह्याच्छुण्ठीधात्रीकणान्वितम् ॥ १ ॥ योगतरङ्गिण्याम् ॥ कपित्थस्वरसो वापि रस आमलकस्य च । पिप्पलीक्षौद्रसंयुक्तो हिक्काश्वासनिवारणः ॥ १ ॥ पिप्पलीमूलमधुकगुडगोऽश्वशकृद्रसान् । हिध्माभिष्यन्दकासघ्नाँल्लिह्यान्मधुघृतान्वितान् ॥ २ ॥ खर्जूरः पिप्पली द्राक्षा शर्करा चेति तत्समम् । मधुसर्पिर्युतो लेहो हिक्काश्वासनिवारणः ॥३॥ इति चिकित्सासारात् ॥ कटुकागैरिकाभ्यां च मुक्ताभस्म

---

१ ( क० ) वाताकं—२ ( क० ) स्रतं । ( छ० ) स्तम् । ३ ( ग० ) मिश्री । ( च० छ० ) मिश्र ।
४ ( घ० ) पला—

तथैव च । बीजपूरस्य तोयेन ताम्रं तद्वत्समाक्षिकम् ॥१॥ हेममुक्तार्ककान्तानां भस्म वल्लमितं वरम् । बीजपूररसक्षौद्रसौवर्चलसमन्वितम् ॥ २ ॥ हन्ति हिक्काशतं सत्यमेकमात्राप्रयत्नतः । का कथा पञ्चहिक्कानां हरणे सूत उच्यते ॥ ३ ॥ इति बोद्धसर्वस्वात् ॥

## ॥ अथ शङ्खचूलो रसः ॥

रसरत्नप्रदीपात् ॥ रसाभ्रहेमभस्मानि वैक्रान्तं सर्वतुल्यकम् । सर्वैः पञ्चगुणं शङ्खचूर्णं श्लक्ष्णं विमर्दयेत् ॥ १ ॥ लेहयेन्मधुना माषचतुष्कं सानुपानकम् । हिक्कां पञ्चविधां हन्ति मुमूर्षोरपि तत्क्षणात् ॥ २ ॥ इति शङ्खचूलो रसः ॥ कासप्रकरणोक्तं च भिषगत्र नियोजयेत् । क्षयोक्तं वात्र कासे च हिक्काश्वासे नियोजयेत् ॥१॥

## ॥ अथ पथ्यापथ्यम् ॥

स्वेदनं वमनं नस्यं धूमपानं विरेचनम् । निद्रा स्निग्धानि चान्नानि मृदूनि लवणानि च ॥ १ ॥ जीर्णाः कुलित्था गोधूमाः शालयः षष्टिका यवाः । एणतित्तिरलावाद्या जाङ्गला मृगपक्षिणः ॥ २ ॥ उष्णोदकं मातुलिङ्गं पटोलं बालमूलकम् । पक्वं कपित्थं लशुनं क्षौद्रं चेष्टानि हिक्किनाम् ॥३॥ निष्पावमाषपिण्याकवारिजानूपमामिषम् । अविदुग्धं दन्तकाष्ठं वस्तिं मत्स्यांश्च सर्षपान् ॥ ४ ॥ आम्लं तुम्बीफलं कन्दं तैलभृष्टमुपोदिकाम् । गुरुशीतं चान्नपानं हिक्कारोगी विवर्जयेत् ॥ ५ ॥ इति हिक्काचिकित्सा ॥

## ॥ अथ श्वासचिकित्सां व्याख्यास्यामः ॥

कासवृद्ध्या भवेच्छ्वासः पूर्वैर्वा दोषकोपनैः । आमातिसारवमथुविषपाण्डुज्वरैरपि ॥ १ ॥ रजोधूमानिलैर्मर्मघातादपि हिमाम्बुना । यैरेव कारणैर्हिक्का बहुभिः सम्प्रवर्तते ॥ २ ॥ तैरेव कारणैः श्वासो घोरो भवति देहिनाम् । विहाय प्रकृतिं वायुः प्राणोऽथ कफसंयुतः ॥ श्वासयत्यूर्ध्वगो भूत्वा तं श्वासं परिचक्षते ॥ ३ ॥ दोषाणामप्यनेकत्वाच्छोषितस्यापि सम्भवात् । श्वासो नैकप्रकारः स्यादिति तावद्व्यवस्थितम् ॥ ४ ॥ महोर्ध्वच्छिन्नतमकक्षुद्रभेदैस्तु पञ्चधा । भिद्यते स महाव्याधिः श्वास एको विशेषतः ॥ ५ ॥

## ॥ अथ तस्य पूर्वरूपमाह ॥

प्राग्रूपं तस्य हृत्पीडा शूलमाध्मानमेव च । आनाहो वक्त्रवैरस्यं शङ्खनिस्तोद एव च ॥ १ ॥

## ॥ अथ महाश्वासलक्षणमाह ॥

यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः । विष्वग्व्रजति संरुद्धस्तदा श्वासान् करोति सः ॥ १ ॥ उद्धूयमानवातो यः शब्दवद्दुःखितो नरः । उच्चैः श्वसिति सं-

क्रुद्धो मत्तर्षभ इवानिशम् । प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः ॥२॥ विकृताक्षाननो बद्धमूत्रवर्चा विशीर्णवाक् । दीर्घं प्रश्वसितं चास्य दूराद्विज्ञायते भृशम् । महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते ॥ ३ ॥

## ॥ अथोर्ध्वश्वासलक्षणमाह ॥

ऊर्ध्वं श्वसिति यो दीर्घं न च प्रत्याहरत्यधः । श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः॥१॥ऊर्ध्वदृष्टिर्विपश्यंस्तु विभ्रान्ताक्ष इतस्ततः। प्रमुह्यन्वेदनार्तश्च शुष्कास्यो रतिपीडितः ॥ २ ॥ ऊर्ध्वश्वासे प्रकुपिते ह्यधः श्वासो निरुध्यते । मुह्यतस्ताम्यतश्चोर्ध्वं श्वासस्तस्यैव हन्त्यसून् ॥ ३ ॥

## ॥ अथ विच्छिन्नश्वासलक्षणमाह ॥

यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीडितः । न वा श्वसिति दुःखार्तो मर्मभेदरुगर्दितः ॥ १ ॥ आनाहस्वेदमूर्च्छार्तो दह्यमानेन बस्तिना । विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः ॥ २ ॥

## ॥ अथ व्याधिप्रभावादसाध्यत्वमाह ॥

विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः । छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून् ॥ १ ॥

## ॥ अथ तमकलक्षणमाह ॥

प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते । ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य च ॥ १ ॥

## ॥ अथ तेन कफेन रुद्धो वायुरेतानि करोति ॥

करोति पीनसं तेन रुद्धो घुर्घुरकं तथा । अतीवतीव्रवेगं च श्वासं प्राणप्रपीडकम् ॥ १ ॥

## ॥ अथ तेन श्वासवेगेन प्रताम्यति ॥

प्रताम्यति स वेगेन तस्यान्तिः सन्निरुध्यते । प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः ॥ १ ॥ श्लेष्मणा मुच्यमानेन भृशं भवति दुःखितः । तस्यैव च विमोक्षान्ते मुहूर्तं लभते सुखम् ॥२॥ तथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम् । न चापि निद्रां लभते शयानः श्वासपीडितः ॥ ३ ॥ पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः । आसीनो लभते सौख्यमुष्णं चैवाभिकाङ्क्षति॥४॥उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्तिमान् । विशुष्कास्यो मुहुः श्वासो मुहुश्चैवावधम्यते ॥५॥ मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्धते । स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः ॥ ६ ॥

---

१ ( च० ) संगृह्य । २ ( च० ) हीनः । ३ ( च० ) त्रस्यते । ४ ( च० ) नन्दति ।

## ॥ अथ तमकस्यैव पित्तानुबन्धाज्ज्वरादियोगेन प्रतमकसंज्ञामाह ॥

ज्वरमूर्च्छापरीतस्य विद्यात्प्रतमकं तु तम् । उदावर्तरजोऽजीर्णक्लिन्नकायनिरोधजः ॥ १ ॥ तमसा वर्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति । मज्जतस्तमसीवास्य विद्यात्प्रतमकं तु तम् ॥ २ ॥

## ॥ अथ क्षुद्रश्वासलक्षणमाह ॥

रूक्षायासोद्भवः कोष्ठे क्षुद्रवातमुदीरयेत्[1] । क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः ॥ १ ॥ हिनस्ति न स गात्राणि न च दुःखो यथेतरे । न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥ २ ॥ इन्द्रियाणां व्यथां वापि काञ्चिदापादयेद्रुजम् । स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः ॥ ३ ॥

## ॥ अथ साध्यासाध्यानाह ॥

वाताधिको भवेत्क्षुद्रस्तमकश्च कफाधिकः । कफवाताधिकः पित्तसंसर्गाच्छिन्नसंज्ञकः ॥ १ ॥ श्वासो मारुतभूयिष्ठो महानूर्ध्वस्तथा तमः । क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते ॥ त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च ॥ २ ॥ कामं प्राणहरा रोगा बहवो न तु ते तथा । यथा श्वासश्च हिक्का च हरतः प्राणमाशु वै ॥ ३ ॥ इति श्वासनिदानम् ॥

## ॥ अथ श्वासचिकित्सा ॥

स्नेहवस्तिमृते केचिदूर्ध्वं चाधश्च शोधनम् । मृदु प्रणयतां श्रेष्ठं श्वासिनामादिशन्ति हि ॥ १ ॥ सर्वेषु श्वासरोगेषु वातश्लेष्मनिबर्हणम् । विदधीत विधिं विद्वानादौ स्वेदं मृदुं तथा ॥ २ ॥

## ॥ अथ क्वाथः ॥

कुलत्थनागरव्याघ्रीवासाभिः क्वथितं जलम् । पीतं पौष्करसंयुक्तं श्वासकासनिवारणम् ॥ १ ॥ इति कुलत्थादिः । दशमूलीकृतः क्वाथः पौष्करेणावचूर्णितः । श्वासकासप्रशमनः पार्श्वशूलनिवारणः ॥ १ ॥ इति दशमूलादिः ॥ देवदारुवचाव्याघ्रीविश्वकट्फलपौष्करैः । कृतः क्वाथो जयत्याशु श्वासकासावशेषतः ॥ १ ॥ इति देवदार्वादिः ॥ सिंहीनिशासिंहमुखीगुडूचीविश्वोपकुल्याभृगुजाघनानाम् । कृष्णामरीचैर्मिलितः कषायः श्वासाटवीदाहपयोद एषः ॥ १ ॥ इति वैद्यविलासात् ॥ वासाहरिद्रामगधागुडूचीभार्गीघनानागररिङ्गिणीनाम् । क्वाथेन मारीचकणान्वितेन श्वासः शमं याति न कस्य पुंसः ॥ १ ॥ अयि प्राणप्रिये जातीफललोहितलोचने । भार्गीनागरयोः क्वाथं श्वासत्रासाय पाययेत् ॥ २ ॥ इति वैद्यजीवनात् ॥ द्राक्षामृता-

---

[1] ( च० ) उदीरयन् ।

नागरमुष्णतोयं कृष्णाविपाकं बहुरोगनिघ्नम्। श्वासं च शूलं कसनं च मान्द्यं जीर्णज्वरं चैव जले च तृष्णाम् ॥ १ ॥ इति शङ्कराख्यात् ॥

## ॥ अथ चूर्णम् ॥

कूष्माण्डकशिफाचूर्णं पीतं कोष्णेन वारिणा। शीघ्रं शमयति श्वासं कासं चैव सुदारुणम् ॥१॥ इति योगतः। शृङ्गीकटुत्रयफलत्रयकण्टकारीभार्गीसिपुष्करजटालवणानि पञ्च। चूर्णं पिबेदशिशिरेण जलेन हिक्कां श्वासोर्ध्ववातकसनारुचिपीनसेषु ॥ १ ॥ शृङ्ग्यादियोगशतात्। शटीभार्गीवचाव्योषपथ्यारुचककट्फलम्। तेजोह्वा पौष्करं शृङ्गी सक्षौद्रं श्वासकासनुत् ॥ १ ॥ गुडोषणनिशारास्नाद्राक्षामागधिकाः समाः। तैलेन चूर्णिता लीढास्तीव्रश्वासनुदः स्मृताः ॥ २ ॥ वृन्दात्। शुण्ठीकणामरिचनागदलत्वगेलं चूर्णीकृतं क्रमविवर्धितमूर्ध्वमन्त्यात्। खादेदिदं समसितं गुदजाग्निमान्द्यगुल्मारुचिश्वसनकण्ठहृदामयेषु ॥ १ ॥ इति योगशतात्। मर्कटीनां तु बीजानां चूर्णं माक्षिकसर्पिषा। प्रलिह्यात्प्रातरुत्थाय श्वासार्तः स्वास्थ्यमाप्नुयात् ॥ १ ॥ इति चिकित्सासारात् ॥

## ॥ अथावलेहः ॥

गुडं कटुकतैलेन मिश्रयित्वा समं लिहेत्। त्रिःसप्ताहप्रयोगेण श्वासो निःशेषतां व्रजेत् ॥ १ ॥ इति गुडावलेहः। हरिद्रा मरिचं द्राक्षा गुडो रास्ना कणा सटी। तैले नैम्बे लिहन् हन्याच्छ्वासान्प्राणहरानपि ॥ १ ॥ इति हरिद्रादिः ॥ भार्गीनागरयोश्चूर्णं लीढमार्द्रकवारिणा। श्वासं निहन्ति दुर्धर्षं पञ्चानन इव द्विपम् ॥ १ ॥ इति भार्ग्यादिः। व्याघ्रीशतं स्यादभयाशतं च द्रोणे जलस्य प्रपचेत्कषायम्। तुलाप्रमाणेन गुडेन युक्तं पक्त्वाभयाभिः सह ताभिरत्र ॥ १ ॥ शीते क्षिपेत्षण्मधुनः पलानि एतानि च त्रीणि कटुत्रयस्य। त्वक्पत्रकैलाकरिकेसराणां चूर्णात्पलं चेति विदेहदक्षः ॥ २ ॥ क्षुद्रावलेहः कफजान्विकारान् सश्वासशोषानपि पञ्च कासान्। हिक्कामुरोरोगमपस्मृतिं च हत्वा विवृद्धिं कुरुतेऽनलस्य ॥ ३ ॥ इति क्षुद्रावलेहः। योगतरङ्गिण्यामित्यादियोगः। भार्गीजटापलशतं सलिलार्मणस्थं युक्पञ्चमूलतुलया सहितं विपाच्य। पादस्थिते तु शतमत्र हरीतकीनां पक्तव्यमुज्ज्वलगुडस्य शतेन साकम् ॥ १ ॥ उत्तार्य तत्र शिशिरे मधुनः पलानि चत्वारि च द्विगुणितानि फलत्रयं च। व्योषं तृटीत्वगिभकेसरपत्रकाणामेषां पलं खलु निधेयमथोपयोज्यम् ॥२॥ श्वासं च कासमपि शोषमथातिहिक्कामैकाहिकं ज्वरमथोत्कफपीनसं च। हन्याद्रसायनमिदं हि पुरन्दरस्य प्रोक्तं सहस्रकरपुत्रभिषग्वराभ्याम्। ॥ ३ ॥ इति वीरसिंहावलोकाद्भार्गीहरीतक्यवलेहः। पक्त्वा पञ्च तुलागुडामलशिखिच्छिन्नादशाङ्घ्यम्भसा पथ्यापात्रवतीकृताशिखिशिवाव्योषं .चतुर्जातकात्। क्षौद्राच्च त्रिपलाञ्जलीद्विकुडवैः क्षाराच्च शुण्ठ्या युतां शोफार्शःक्षयकुष्ठपीनसकृमिश्वासास्र-

१ ( क० ङ० छ० ) नस्य। २ ( च० ) व्योषात्। ३ ( ङ० च० ) शुक्त्या। ४ ( च० ) युतः। ५ ( च० ) श्वासान्त।

गुल्मान्तकृत् ॥ १ ॥ इति चित्रकहरीतक्यवलेहः । बोपदेवशतात् । द्राक्षां हरीतकीं मुस्तां कर्कटाख्यां दुरालभाम् । सर्पिर्मधुभ्यां विलिहञ्श्वासान्हन्ति सुदारुणान् ॥ १ ॥ प्रलिह्यान्मधुसर्पिर्भ्यां भार्गीमधुकसंयुताम् । पथ्यां तिक्ताकणाव्योषयुक्तां वा श्वासनाशिनीम् ॥ २ ॥ गुडदाडिममृद्वीकापिप्पलीविश्वभेषजैः । मातुलुङ्गरसं क्षौद्रं लीढं श्वासनिबर्हणम् ॥ ३ ॥ इति द्राक्षाहरीतक्याद्यवलेहो वृन्दात् ॥

## ॥ अथ रसाः ॥

रसं गन्धं विषं चैव टङ्कणं च मनःशिला । एतानि टङ्कमात्राणि मरिचं षाष्टटङ्ककम् ॥ १ ॥ एकैकं मरिचं दत्वा खल्वे सूक्ष्मं विमर्दयेत् । त्रिकटुं टङ्कमात्रं च दत्वा पश्चाद्विचूर्णयेत् ॥ २ ॥ सर्वमेकत्र संयोज्य काचकूप्यां विनिक्षिपेत् । कासे श्वासे च मन्दाग्नौ वातश्लेष्मामयेषु च ॥ ३ ॥ गुञ्जामात्रं प्रदातव्यं पर्णखण्डेन धीमता । सन्निपाते च मूर्च्छायामपस्मारे तथा पुनः ॥ ४ ॥ अतिमोहत्वमापन्ने नस्यं दत्वा विचक्षणः । रसः श्वासकुठारोऽयं सर्वश्वासविकारहा ॥ ५ ॥ इति श्वासकुठारः ॥

## ॥ अथ पथ्यापथ्यम् ॥

विरेचनस्वेदनधूमपानप्रच्छर्दनानि स्वपनं दिवा च । पुरातनाः षष्टिकरक्तशालिकुलत्थगोधूमयवाः प्रशस्ताः ॥ १ ॥ शशाहिभुक्तित्तिरलावदक्षशुकादयो धन्वमृगा द्विजाश्च । पुरातनं सर्पिरजाप्रभूतं पयो घृतं चापि सुरा मधूनि ॥ २ ॥ पटोलवार्ताकरसोनबिम्बीजम्बीरतण्डूलियवास्तुकं च । द्राक्षा त्रुटिः पौष्करमुष्णवारि निदिग्धिका श्वासिनि पथ्यवर्गः ॥ ३ ॥ रक्तस्रावः पूर्ववातान्नपानं मेषीसर्पिर्दुग्धमम्भोऽपि दुष्टम् । मत्स्याः कन्दाः सर्षपाश्चान्नपानं रूक्षं शीतं गुर्वपि श्वासिवर्ज्यम् ॥ ४ ॥ इति पथ्यापथ्यम् । इति श्वासरोगचिकित्सा ॥

---

# ॥ अथ स्वरभेदनिदानं व्याख्यास्यामः ॥

### ॥ अथ स्वरभेदाः ॥

अत्युच्चभाषणविषाध्ययनाभिघातसन्दूषणैः प्रकुपिताः पवनादयश्च । स्रोतस्सु ते स्वरवहेषु गताः प्रदुष्टिं हन्युः स्वरं भवति चापि हि षड्विधः सः ॥ १ ॥

## ॥ अथ वातिकमाह ॥

वातेन कृष्णनयनाननमूत्रवर्चा भिन्नं शनैर्वदति गर्दभवत्स्वरं च ॥ १ ॥

## ॥ अथ पैत्तिकमाह ॥

पित्तेन पीतनयनाननमूत्रवर्चा ब्रूयाद्गलेन स विदाहसमन्वितेन ॥ १ ॥

---

१ ( च० ) प्रतिष्ठाम् ।

## ॥ अथ कफजमाह ॥

ब्रूयात् कफेन सततं कफरुद्धकण्ठः स्वल्पं शनैर्वदति चापि दिवा विशेषात्॥ १ ॥

## ॥ अथ संनिपातजमाह ॥

सर्वात्मके भवति सर्वविकारलिङ्गं तं चाप्यसाध्यमृषयः स्वरभेदमाहुः ॥ १ ॥

## ॥ अथ क्षयजमाह ॥

धूम्येत वाक् क्षयकृते क्षयमप्नुयाच्च वाक्येषु चापि हतवाक् परिवर्जनीयः ॥१॥

## ॥ अथ मेदोजमाह ॥

अन्तर्गतस्वरमलक्षपदं चिरेण मेदोऽन्वयाद्वदति दिग्धगलस्तृषालुः ॥ १ ॥

## ॥ अथासाध्यमाह ॥

क्षीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यश्च सहोपजातः। मेदस्विनः सर्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति ॥ १ ॥ इति स्वरभेदनिदानम्।

## ॥ अथ तच्चिकित्सा ॥

वातस्वरभेदः। स्वरोपघातेऽनिलजे भुक्तोपरि घृतं पिबेत्। मरीचचूर्णसहितं मरुत्स्वरहतिप्रणुत् ॥ १ ॥ कासमर्दरसं दत्वा भार्गीकल्कं शनैः शनैः। सिद्धं सर्पिर्हितं पीतं स्वरभेदं मरुद्भवम् ॥ २ ॥ इति कासमर्दघृतम्। आद्ये कोष्णजलं पेयं जग्ध्वा घृतगुडौदनम्। पीतं घृतं हन्त्यनिलं सिद्धं मार्कवजे रसे ॥ १ ॥

## ॥ अथ पित्तस्वरभेदः ॥

पैत्तिके तु विरेकः स्यात्पयश्च मधुरैः शृतम्। लिह्यान्मधुरवस्तूनां चूर्णं मधुसमन्वितम् ॥ १ ॥ अश्नीयाच्च ससर्पिष्कं यष्टीमधुकषायकम्। शर्करामधुमिश्राणि शृतानि मधुरैः सह ॥ २ ॥ पिबेत्पयांसि यस्योच्चैर्वदतोऽपि हतः स्वरः। शतावरीचूर्णयोगं बलाचूर्णमथापि वा ॥ लाजाशतावरीचूर्णं लिह्यान्मधुसमायुतम् ॥ ३ ॥

## ॥ अथ शुण्ठीघृतम्[1] ॥

शुण्ठीत्वचो दुग्धवतां द्रुमाणां सम्पिष्य दुग्धे विपचेत्तु तेन। कल्केन यष्टीमधुकस्य सर्पिः सशर्करं पित्तरुजामयघ्नम् ॥ १ ॥ इति पित्तस्वरभेदः ॥

## ॥ अथ कफस्वरभेदः ॥

पिप्पली पिप्पलीमूलं मरीचं विश्वभेषजम्। पिबेन्मूत्रेण मतिमान्कफजे स्वरसंक्षये ॥ १ ॥ इति पिप्पल्यादिचूर्णम्।

---

१ ( च० ) सम्पत्।

## ॥ अथ सन्निपातस्वरभेदः ॥

अजमोदा निशा धात्री क्षारं वह्निं विचूर्णयेत् । मधुसर्पिर्युतं लीढ्वा त्रिदोषस्वरभङ्गनुत् ॥ १ ॥ फलत्रिकत्र्यूषणयावशूकचूर्णानि हन्युः स्वरभङ्गमाशु । किं वा कुलत्थं वदनान्तरस्थं स्वरामयं हन्त्यथ पौष्करं वा ॥२॥ अथ क्षयमेदःस्वरभङ्गौ । क्षयजे स्वरभेदे तु तत्रोक्तविधिमाचरेत् । कटुतिक्तकषायाद्यैर्मेदःस्वरहार्तिं जयेत् ॥ १ ॥ अथ सामान्यविधिः। चव्याम्लवेतसकटुत्रयतित्तिडीकतालीसजीरकतुगादहनैः समांशैः। चूर्णं गुडप्रमृदितं त्रिसुगन्धयुक्तं वैस्वर्यपीनसकफारुचिषु प्रशस्तम् ॥ १ ॥ इति चव्यादिचूर्ण योगशतात् ॥

## ॥ अथ व्याघ्रीघृतम् ॥

व्याघ्रीस्वरसविपक्कं रास्नावाट्यालगोक्षुरव्योषैः । सर्पिः स्वरोपघातं हन्यात् कासं च पञ्चविधम् ॥१॥ इति चिकित्सासारात् । बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् । स्वरोपघाते कासे च लेहमेनं प्रयोजयेत् ॥ १ ॥ इति कदम्बात् । विहितघुसृणचूर्णान्यारनालेन सार्धं कलितरुफलकृष्णासैन्धवानि प्रलिह्यात् । अभिलषति विजेतुं यः स्वरस्य प्रणाशं स हि पिबतु सदुग्धं चामलक्याः फलं वा ॥ १ ॥ इति सारसङ्ग्रहात् । वाते सलवणं तैलं पित्ते सर्पिः समाक्षिकम् । कफे सक्षारकटुकं क्षौद्रं केवलमिष्यते ॥ १ ॥ गले तालुनि जिह्वायां दन्तमूलेषु चाश्रितः । तेन निष्क्रमते श्लेष्मा स्वरश्चाशु प्रसीदति ॥ २ ॥ तैलाक्तं स्वरभेदे वा खादिरं धारयेन्मुखे । पथ्यापिप्पलियुक्तं वा संयुक्तं नागरेण वा ॥ ३ ॥ इति वृन्दात् ॥

## ॥ अथ रसाः ॥

रसभस्मार्कलोहस्य भावितस्य त्रिसप्तधा । क्षुद्राफलरसैर्मुद्गतुल्या कार्या वटी शुभा ॥ १ ॥ मुखस्था हरते सर्वं स्वरभङ्गमसंशयम् । गोरक्षनाथैर्गदिता स्वरामयिकृपालुभिः ॥ २ ॥ इति गोरक्षवटी ॥

## ॥ अथ पथ्यम् ॥

द्राक्षा पथ्या मातुलुङ्गं लशुनं लवणार्द्रकम् । ताम्बूलं मरिचं सर्पिः पथ्यानि स्वरभेदिनाम् ॥ १ ॥ इति स्वरभेदचिकित्सा ॥

## ॥ अथातोऽरोचकनिदानं व्याख्यास्यामः ॥

पृथग्दोषैः समस्तैर्वा तथाप्यागन्तवो हि ये । भवन्त्यरोचकाः पञ्च तेषां लक्षणमुच्यते ॥ १ ॥

---

१ (च०) मसृण । २ (ह० च० छ०) श्वासः ।

## ॥ अथ वातिकमाह ॥

वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनरूपगन्धैः । अरोचकाः स्युः परिहृष्टदन्तकषायवक्त्रश्च मतोऽनिलेन ॥ १ ॥

## ॥ अथ पित्तजमाह ॥

कट्वम्लमुष्णं विरसं च पूति पित्तेन विद्याल्लवणं च वक्त्रम् ॥ १ ॥

## ॥ अथ कफजमाह ॥

माधुर्यपैच्छिल्यगुरुत्वशैत्यस्निग्धत्वदौर्गन्ध्ययुतं कफेन ॥ १ ॥

## ॥ अथ शोकजन्यमाह ॥

अरोचके शोकभयातिलोभक्रोधाद्यहृद्याशुचिगन्धजे स्यात् ॥ १ ॥

## ॥ अथ त्रिदोषजमाह ॥

स्वाभाविकं चास्यमथारुचिश्च त्रिदोषजेऽनेकरसं भवेत्तु ॥ १ ॥

## ॥ अथ विकृतिमाह ॥

हृच्छूलपीडनयुतं पवनेन पित्तात्तृड्दाहशोषबहुलं सकफप्रसेकम् । श्लेष्मात्मकं बहुरुजं बहुभिश्च विद्याद्वैगुण्यमोहजडताभिरथापरं च ॥ १ ॥ प्रतिक्षिप्तमुखे चान्नं जन्तुर्नास्वादते मुहुः । अरोचकः स विज्ञेयो भक्तद्वेषमतः शृणु ॥ २ ॥ चिंतयित्वा तु मनसा दृष्ट्वा श्रुत्वा तु भोजनम् । द्वेषमायाति यो जन्तुर्भक्तद्वेषः स उच्यते ॥ ३ ॥ इत्यरोचकनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

बस्तिः समीरणे पित्ते विरेको वमनं कफे । सर्वजे सर्वकामार्थं हर्षणं स्यादरोचके ॥ १ ॥ अरुचौ कवलग्राहो धूमः सुमुखधावनः । मनोज्ञमन्नपानं वा हर्षणाश्वासनानि च ॥ २ ॥ सात्म्यान्स्वदेशरचितान्विविधांश्च भक्ष्यान्पानानि मूलफलखाण्डवरागलेहान् । सेवेद्रसांश्च विविधान्विविधैः प्रयोगैर्भुञ्जीत चापि लघुरूक्षमनःसुखानि ॥ ३ ॥

## ॥ अथ मुखधावनम् ॥

अजाजी मरिचं कुष्ठं बिडं सौवर्चलं तथा । मधुकं शर्करा तैलं वातिके मुखधावनम् ॥ करञ्जदन्तकाष्ठं च विधेयमरुचौ सदा ॥ १ ॥ त्र्यूषणानि त्रिफलारजनीद्वयं च चूर्णीकृतानि यवशूकविमिश्रितानि । क्षौद्रान्वितानि वितरेन्मुखधावनार्थमन्यानि तिक्तकटुकानि च भेषजानि ॥ २ ॥

---

१ ( च० ) विवद्धसम्बद्ध—२ ( च० ) चोषबहुलम् । ३ ( च० ) मुखेसुधावनः ।

## ॥ अथ गण्डूषः ॥

किञ्चिल्लवणसंयुक्तमारनालं विपाचयेत् । तेन गण्डूषमात्रेण आस्यवैरस्यशान्तये ॥ १ ॥

## ॥ अथ पानककवलग्रहौ ॥

अम्लिकामुद्गतोयं च त्वगेलामरिचान्वितम्। अभक्तच्छन्दरोगेषु शस्तं कवलधारणे ॥ १ ॥ इत्यम्लिकापानकम् । भागैकं निम्बुजं तोयं षड्भागं शर्करोदकम्। लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम् ॥ १ ॥ निम्बूरसभवं पानमत्यम्लं वातनाशनम् । वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम् ॥ २ ॥ इति निम्बूपानकम् । कुष्ठसौवर्चलाजाजीशर्करामरिचं विडम् । धान्यैलापद्मकोशीरपिप्पलीचन्दनोत्पलम् ॥ १ ॥ लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम् । आर्द्रदाडिमनिर्यासश्चाजाजीशर्करायुतः ॥ २ ॥ सतैलमाक्षिकाश्चैते चत्वारः कवलग्रहाः । चतुरोऽरोचकान्हन्युर्वाताद्येकजसर्वजान् ॥ ३ ॥ इति कुष्ठाद्याश्चत्वारः कवलग्रहाः । विडङ्गचूर्णं कर्षैकं क्षौद्रं कर्षचतुर्मितम् । असाध्यमपि संहन्यादरुचिं वक्त्रधारणात् ॥ १ ॥

## ॥ अथ गुटिका ॥

कारव्यजाजीमरिचं द्राक्षा वृक्षाम्लदाडिमम् । सौवर्चलं गुडः क्षौद्रमेषां कार्या वटी शुभा ॥ बदरास्थिमिता सास्ये धार्यारोचकनाशिनी ॥ १ ॥ इति कारव्यादिगुटिका । सिताव्योषकपित्थानां चूर्णं क्षौद्रकृतां वटीम् । सर्वारोचकशान्त्यर्थं धारयेद्वदनाम्बुजे ॥ १ ॥

## ॥ अथ चूर्णानि ॥

यवानीतिन्तिडीकं च नागरं चाम्लवेतसम् । दाडिमं बदरं साम्लं कार्षिकाण्युपकल्पयेत् ॥ १ ॥ धान्यसौवर्चलाजाजीवराङ्गं चार्धकार्षिकम् । पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च ॥ २ ॥ शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् । यवानीखाण्डवाख्यं तु चूर्णमेतदरोचकम् ॥ ३ ॥ हन्त्येव प्रातरेतत्तु स्थापितं च मुखे मुहुः । जिह्वाविशोधनं हृद्यं दीपनं भक्तरोचकम् ॥ ४ ॥ हृत्पीडापार्श्वशूलघ्नं विबन्धानाहनाशनम् । कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥ ५ ॥ इति यवानीखाण्डवचूर्णम् ॥

## ॥ अथ खाण्डवचूर्णम् ॥

तुल्यं तालीसचव्योषणलवणगजद्विष्कणाग्रन्थ्यजाजीवृक्षाम्लाग्नित्वचं त्रिर्धनबदरधनैलाजमोदाम्लविश्वम् । सार्धश्वेताङ्घ्रिसारोऽतिसृतिकृमिवमौ खाण्डवोऽरुच्यजीर्णे गुल्माध्मालपानलास्योद्रवणगदमरुद्धृद्गदश्वासकासे ॥१॥ इति खाण्डवचूर्णम् बोपदेवशतात् ॥

---

१ ( इ० छ० ) मूलग्रन्द ।

## ॥ अथामलक्यादिचूर्णम् ॥

आमलं चित्रकं पथ्या पिप्पली सैन्धवं तथा । चूर्णितोऽयं गणो ज्ञेयः सर्वज्वरविनाशनः । भेदी रुचिकरः श्लेष्मजेता दीपनपाचनः ॥ १ ॥ इति शार्ङ्गधरात् ॥

## ॥ अथ कर्पूराद्यं चूर्णम् ॥

कर्पूरचोचकक्कोलजातीफलदलाः समाः । लवङ्गनागमरिचकृष्णाशुण्ठीविवर्धिताः ॥ १ ॥ चूर्णं सितासमं ग्राह्यं रोचनं क्षयकासजित् । वैस्वर्यश्वासगुल्मार्शश्छर्दिकण्ठामयापहम् ॥ प्रयुक्तं चान्नपानेषु भिषजा रोगिणां हितम् ॥२॥ इति शार्ङ्गधरात्॥

## ॥ अथ तालीसाद्यं चूर्णम् ॥

तालीसं मरिचं शुण्ठी पिप्पली वंशलोचना । एकद्वित्रिचतुष्पञ्चकर्षैर्भागान्प्रकल्पयेत् ॥ १ ॥ एलात्वचोस्तु कर्षार्धं प्रत्येकं भागमावहेत् । द्वात्रिंशत्कर्षतुलिता प्रदेया शर्करा बुधैः ॥ २ ॥ तालीसाद्यमिदं चूर्णं रोचनं पाचनं स्मृतम् । कासश्वासज्वरहरं छर्द्यतीसारनाशनम् ॥ ३ ॥ शोषाध्मानहरं प्लीहग्रहणीपाण्डुरोगजित् । पक्त्वा वा शर्कराचूर्णं क्षिपेत्सा गुटिका तथा ॥ ४ ॥ इति शार्ङ्गधरात् ॥

## ॥ अथावलेहः ॥

शार्ङ्गधरात् । आर्द्रकमातुलुङ्गावलेहः । आर्द्रकस्वरसं प्रस्थं तदर्धांशं गुडं क्षिपेत् । कुडवं बीजपूराम्लं गालयित्वा विचक्षणः ॥१॥ सर्वं मन्दाग्निना पक्त्वा तत्रेमानि विनिक्षिपेत् । त्रिजातकं त्रिकटुकं त्रिफलायाममेव च ॥ २ ॥ चित्रकं ग्रन्थिकं धान्यं जीरकद्वयमेव च । कर्षांशं श्लक्ष्णचूर्णं तु मेलयित्वा तु भक्षयेत् ॥ ३ ॥ अरोचकक्षयहरमग्निदीप्तिकरं परम् । कामलापाण्डुशोफघ्नं श्वासकासहरं परम् ॥ आध्मानोदरगुल्मानि प्लीहशूले च नाशयेत् ॥ ४ ॥

## ॥ अथ खण्डार्द्रकयोगः ॥

योगसारात् । आर्द्रकस्य सितायाश्च द्विगुणाष्टपलानि च । निष्कद्वादशकं तीक्ष्णमष्टनिष्का च मागधी ॥१॥ अष्टनिष्कं च तन्मूलं पञ्चनिष्कं च नागरम् । जातीफलैलादहनं वंशाद्याः पञ्चनिष्ककाः ॥२॥ सर्वाण्येतानि शुष्काणि चूर्णं कृत्वा पृथक्पृथक् । आर्द्रकं खण्डशः कृत्वा गोघृतेऽष्टपले पचेत् ॥ ३ ॥ शर्करापूर्वचूर्णं च चार्द्रकं सह मेलयेत् । मण्डलं सेवयेन्नित्यं महापित्तविनाशनम् ॥ ४ ॥ आम्लपित्तं निहन्त्याशु सर्वपित्तविकारनित् । सर्वारुचिं वातरोगं मन्दाग्निं च नियच्छति ॥ ५ ॥ इति खण्डार्द्रकयोगः ॥

## ॥ अथार्द्रकयोगः ॥

मदनपालात् ॥ धौतं खण्डितमार्द्रकं च सलिलैः क्षिप्तं सुतप्ते घृते सिन्धूत्थं मरिचं सुजीरयुगुलं चूर्णीकृतं प्रक्षिपेत् । चूर्णं भ्रष्टयवोद्भवं च वितुषं हिङ्ग्वाज्यधूमे दहेदित्थं दोषविहीनमार्द्रकवरं सुस्वादु सञ्जायते ॥ १ ॥

## ॥ अथ मातुलुङ्गादियोगः ॥

मातुलुङ्गफलकेसरोद्धृतः सिन्धुजन्ममरिचान्वितो मुखे । हन्ति वातकफरोगमास्यगं शोषमास्यजडतामरोचकम् ॥ १ ॥

## ॥ अथ मातुलुङ्गकेसरगुणाः ॥

केसरं मातुलुङ्गस्य सैन्धवं मधुनापि वा । आस्यवैरस्यशमनं भक्षयेत्कर्षसम्मितम् ॥ १ ॥ शमयति केसरमरुचिं सलवणघृतमाशु मातुलुङ्गस्य । दाडिमचर्वणमथवा चरको रुचिकारि सूचयामास ॥ २ ॥ इति चिकित्सासारात् ॥

## ॥ अथ शर्करादियोगः ॥

शर्करा दाडिमं चाथ द्राक्षा खर्जूरमेव च ॥ १ ॥ अथार्द्रकदाडिमयोगद्वयम् । जिह्वाकण्ठविशोधनं तदनु च स्याच्छृङ्गबेरान्वितं सिन्धूत्थं हितमत्र चाथ मधुना शस्तो रसो दाडिमः । अग्न्युद्बोधकराण्यजीर्णशमनान्याहुस्तथा भेषजान्यत्रारोचकरुत्प्रयोगमसकृत्तत्तत्प्रदेयानि च ॥ १ ॥ इति लघुयोगतः ॥

## ॥ अथ सारसङ्ग्रहाजीरकाद्यं घृतम् ॥

पिष्ट्वाजाजीं सधान्याकं घृतप्रस्थं विपाचयेत् । कफपित्तारुचिहरं मन्दानलवमीं जयेत् ॥ १ ॥ इति जीरकाद्यं घृतम् ॥

## ॥ अथ रसाः ॥

### ॥ अथ सूतादिगुटिका ॥

सूतगन्धाभ्रमगधाम्लिकामरिचसैन्धवैः । गुटिकारोचकहरी जिह्वावदनशुद्धिकृत् ॥ १ ॥ योगतरङ्गिण्याः ॥ गदनिग्रहाल्लघुचुक्रसन्धानम् । गुडक्षौद्रारनालानि समस्तानि यथोत्तरम् । शंसन्ति द्विगुणान्भागान्सम्यक् चुक्रस्य सिद्धये ॥१॥ यन्मस्त्वादि शुचौ भाण्डे सक्षौद्रगुडकाञ्जिकम् । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥ २ ॥

## ॥ अथ पथ्यापथ्यम् ॥

गोधूममुद्गारुणशालिषष्टिका मांसं वराहाजशशैणसम्भवम् । चेङ्गोझषाण्डं मधुरालिकं लिशः प्रोष्ठी खलेशः कवरी च रोहितः ॥ १ ॥ कर्कारुवेत्राग्रनवीनमूलकं वार्ताकसौभाञ्जनमोचदाडिमम् । भव्यं पटोलं रुचकं पयो घृतं बालानि तैलानि रसोनसूरणम् ॥ २ ॥ द्राक्षारसालं नलदाम्बु काञ्जिकं कोलं रसालां दधि तक्रमार्द्रकम् । स्वाद्वम्लतिक्तानि च देहमार्जनं वर्गोऽयमुक्तोऽरुचिरोगिणां हितः ॥३॥ तृष्णोद्गारक्षुधानेत्रवारिवेगविधारणम् । असृद्यान्नमसंह्मोक्षं क्रोधं लोभं भयं शुचम् ॥ दुर्ग-

---

१ (च०) प्रयोगसमये तानि । २ (च०) मूलानि ।

न्धानूपसेवां च न कुर्यादरुचौ नरः ॥ ४ ॥ इति पथ्यापथ्यम् । इत्यरोचकचिकित्सा ॥

## ॥ अथातश्छर्दिनिदानं व्याख्यास्यामः ॥

दुष्टैर्दोषैः पृथक् सर्वैर्बीभत्सालोकनादिभिः । छर्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥ १ ॥

## ॥ तासां सम्प्राप्तिमाह ॥

अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरपि । अकाले चातिमात्रैश्च तथा सात्म्यैश्च भोजनैः ॥ १ ॥ श्रमाद्भयात्तथोद्वेगादजीर्णात्क्रिमिदोषतः । नार्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः ॥ २ ॥ बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् । छादयत्याननं वेगैरर्दयत्यङ्गभञ्जनैः ॥ निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावति ॥ ३ ॥

## ॥ अथ तस्याः पूर्वरूपमाह ॥

हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः । द्वेषोऽन्नपाने च भृशं वमीनां पूर्वलक्षणम् ॥ १ ॥

## ॥ अथ वातजामाह ॥

हृत्पार्श्वपीडामुखशोषशीर्षनाभ्यर्तिकासस्वरभेदतोदैः । उद्गारशब्दं प्रबलं सफेनं विच्छिन्नकृष्णं तनुकं कषायम् ॥१॥ कृच्छ्रेण चाल्पं महता च वेगेनार्तोऽनिलाच्छर्दयतीह दुःखम् ॥ २ ॥

## ॥ अथ पित्तजामाह ॥

मूर्च्छापिपासामुखशोषमूर्धताल्वक्षिसन्तापतमोभ्रमार्तः । पीतं भृशोष्णं हरितं च तिक्तं धूम्रं च पित्तेन वमेत्सदाहम् ॥ १ ॥

## ॥ अथ कफजामाह ॥

तन्द्रास्यमाधुर्यकफप्रसेकसन्तोषनिद्रारुचिगौरवार्तः । स्निग्धं घनं स्वादु कफाद्विशुद्धं सरोमहर्षोऽल्परुजं वमेत्तु ॥ १ ॥

## ॥ अथ त्रिदोषजामाह ॥

शूलाविपाकारुचिदाहतृष्णाश्वासप्रमोहप्रबलप्रसक्तम् । छर्दिस्त्रिदोषाल्लवणाम्लनीलसान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥ १ ॥ असाध्यामाह । विट्स्वेदमूत्राम्बुवहानि वायुः स्रोतांसि संरुध्य यदोर्ध्वमेति । उत्पन्नदोषस्य समाचितं तं दोषं समु-

---

* उत्क्लिश्यान्नं न निर्गच्छेत्प्रसेकष्ठीवनैस्ततः । हृदयं पीड्यते चास्य तमुत्क्लेशं विनिर्दिशेत् ॥ १ ॥

१ (च०) लवणास्यता । २ (च०) उत्सन्न ।

द्रूय नरस्य कोष्ठात् ॥ १ ॥ विण्मूत्रयोस्तत्समगन्धवर्णं तृट्श्वासकासार्तियुतं प्रस क्तम् । प्रच्छर्दयेद्दुष्टमिहातिवेगात्तयार्दितश्चाशु विनाशमेति ॥ २ ॥

## ॥ अथागन्तुजामाह ॥

बीभत्सजा दौर्हृदजामजा वा ह्यसात्म्यजा वा क्रमिजा च या स्यात् । स पञ्चमी तां च विभावयेच्च दोषान्वयेनैव यथोक्तमादौ ॥ १ ॥

## ॥ अथ क्रमिजाया विशेषलक्षणमाह ॥

शूलहृल्लासबहुला क्रमिजा च विशेषतः । क्रमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥ १ ॥

## ॥ अथ साध्यामसाध्यां चाह ॥

क्षीणस्य या छर्दिरतिप्रसक्ता सोपद्रवा शोणितपूययुक्ता । सचन्द्रकां तां प्रवदेदसाध्यां साध्यां चिकित्सेन्निरुपद्रवां च ॥ १ ॥

## ॥ अथ तस्यां उपद्रवानाह ॥

कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्यमेव च । हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्देरुपद्रवाः ॥ १ ॥ इति छर्दिनिदानम् ॥

## ॥ अथ छर्दिचिकित्सां व्याख्यास्यामः ॥

आमाशयोत्क्लेशभवा हि सर्वाः स्युश्छर्दयो लङ्घनमेव तस्मात् । प्राक्कारयेन्मारुतजां विना तु संशोधनं वा कफपित्तहारि ॥ १ ॥

## ॥ अथ वातच्छर्दिः ॥

॥ योगतरङ्गिण्याः ॥

## ॥ अथ धान्यकादियोगः ॥

धान्याकविश्वदैशमूलकषायसिद्धान्यूषान् रसान्पवनवम्यरुचिप्रशान्त्यै । पीत्वा सुखानि लभते मधुमिश्रितं वा शङ्खाह्वयास्वरसमूषणचूर्णयुक्तम् ॥ १ ॥

## ॥ अथ लवणादियोगः ॥

लवणत्रयसंयुक्तं संयुक्तं लवणेन वा । हन्यात्क्षीरोदकं पीतं छर्दिं पवनसम्भवाम् ॥ १ ॥

## ॥ अथ सैन्धवादियोगः ॥

ससैन्धवं पिबेत्सर्पिर्वातच्छर्दिनिवारणम् ॥

## ॥ अथ पित्तच्छर्दिः । चन्दनपानकम् ॥

चन्दनेनाक्षमात्रेण संयोज्यामलकीरसम्[१] । पिबेन्माक्षिकसंयुक्तं पित्तच्छर्दिनिवृत्तये ॥ १ ॥

---

१ ( च० ) समुद्धृय । २ ( च० ) दोषोच्छ्रयेणैव ।

## ॥ अथ लाजादियूषः ॥

लाजामसूरयवमुद्गकृता यवागूश्छर्द्यां हिता मधुयुता बहुपित्तजायाम् । यूषः सुगन्धिमधुतिक्तरसप्रयुक्तो मृद्भृष्टलोष्टभवमम्बु हितं तृषायाम् ॥१॥ इति सारसङ्ग्रहात् ॥

## ॥ अथ चन्दनावलेहः ॥

चन्दनं च मृणालं च वालकं नागरं वृषम् । सतण्डुलोदकक्षौद्रः पीतः कल्को वमीर्जयेत् ॥ १ ॥ इति शार्ङ्गधरात् ॥

## ॥ अथोदीच्यादिः ॥

सोदीच्यं गैरिकं देयं सेव्यं वा तण्डुलाम्बुना । धात्रीरसेन वा पीता सिता लाजाश्च हन्ति ताम् ॥ १ ॥ इति चिकित्सासारात् ॥

## ॥ अथ मुद्गकषायः ॥

कषायो भृष्टमुद्गानां सलाजमधुशर्करः । छर्द्यतीसारदाहघ्नो ज्वरघ्नः सम्प्रकाशितः ॥ १ ॥

## ॥ अथ योगतरङ्गिण्यां पर्पटक्वाथः ॥

क्वाथः पर्पटजः पीतः सक्षौद्रः शिशिरीकृतः । पित्तच्छर्दिं शिरस्तापं चक्षुर्दाहं व्यपोहति ॥ १ ॥

## ॥ अथ मक्षिकाविडवलेहः ॥

सिताचन्दनमध्वाढ्यं विलिहेन्मक्षिकाशकृत् । सोपद्रवा पित्तभवा छर्दिरेतेन शाम्यति ॥ १ ॥

## ॥ अथ लाजसक्त्ववलेहिका ॥

सर्पिःक्षौद्रसितोपेता ल्लाजसक्तू ल्लिहेत्ततः । पित्तच्छर्दिरनेनाशु प्रशाम्यति सुदुस्तरा ॥ १ ॥

## ॥ अथ गुडूच्यादिक्वाथः ॥

गुडूचीत्रिफलारिष्टपटोलैः क्वथितं जलम् । क्षौद्रयुक्तं निहन्त्याशु च्छर्दिं पित्तसमुद्भवाम् ॥ १ ॥ इति योगसारात् ॥

## ॥ अथ कफच्छर्दिः ॥

छर्द्यां कफोद्भवायां तु वमनं कारयेद्भिषक् । तोयैः सर्षपसिन्धूत्थराठनिम्बकणायुतैः ॥ १ ॥ शस्यन्ते शालिगोधूमयवमुद्गमकुष्ठकाः । षष्टिकास्तत्र यूषाश्च पटोल्याद्याश्च भोजने ॥ २ ॥

## ॥ अथ विडङ्गादिचूर्णम् ॥

विडङ्गत्रिफलाव्योषचूर्णं मधुयुतं लिहेत् । शाम्यत्यनेन कफजा छर्दिः सोपद्रवा नृणाम् ॥ १ ॥ इति योगतरङ्गिण्याः ॥

## ॥ अथ रक्तशाल्यादियोगः ॥

अथ रक्तशालिभक्तं गोदधिशर्कराविमिश्रं च । कुर्याद्भोजनमेतत्कफच्छर्दिच्छिदं जन्तोः ॥ १ ॥ इति चिकित्सासारात् ॥

## ॥ अथ जाम्बवादियोगः ॥

॥ योगसागरात् ॥

सजाम्बवं बादरचूर्णमम्लं मुस्तायुतं कर्कटकः सशृङ्गी । दुरालभा वा मधुना च युक्ता लिह्यात्कफच्छर्दिविनिग्रहार्थम् ॥ १ ॥

## ॥ अथ त्रिदोषच्छर्दिः ॥

॥ अथ धात्रीफलादिपानकम् ॥

पिष्ट्वा धात्रीफलं द्राक्षां शर्करां च पलोन्मिताम् । दत्वा मधुपलं चैव कुडवं सलिलस्य च ॥ वाससा गालितं पीतं हन्ति च्छर्दिं त्रिदोषजाम् ॥१॥ अथ मसूरसक्तुः । मसूरसक्तवः क्षौद्रमर्दिता दाडिमाम्भसा । पीता निवारयन्त्याशु च्छर्दिं दोषत्रयोद्भवाम् ॥ १ ॥

## ॥ अथैलादिचूर्णम् ॥

एलालवङ्गगजकेशरकोलमज्जालाजप्रियङ्गुघनचन्दनपिप्पलीनाम् । चूर्णं सितामधुयुतं मनुजो विलिह्य च्छर्दिं निहन्ति कफमारुतपित्तजाताम् ॥१॥ योगरत्नावलितः ॥

## ॥ अथ शार्ङ्गधराद्बिल्वादिः ॥

बिल्वत्वचो गुडूच्या वा क्वाथः क्षौद्रेण संयुतः । जयेत्त्रिदोषजां छर्दिं पर्पटः पित्तजां तथा ॥ १ ॥

## ॥ अथ सामान्यच्छर्दिः ॥

कोलामलकमज्जानो मक्षिकाविट् सिता मधु । सकृष्णा तण्डुलो लेहश्छर्दिमाशु व्यपोहति ॥ १ ॥ इति कोलाद्यवलेहः ॥

## ॥ अथ मनःशिलादियोगः ॥

योगशतात् । मनःशिलामागधिकोषणानां चूर्णं कपित्थाम्लरसेन युक्तम् । लाजैः समांशैर्मधुनावलीढं छर्दिं प्रसक्तामसकृन्निहन्ति ॥ १ ॥

## ॥ अथ योगसारादश्वत्थवल्कलादिः ॥

अश्वत्थवल्कलं शुष्कं दग्धं निर्वापितं जले । तज्जलं पानमात्रेण च्छर्दिं जयति दुर्जयाम् ॥ १ ॥ योगतरङ्गिण्याः ॥

## ॥अथ लाजादियोगत्रयम् ॥

लाजाकपित्थमधुमागधिकोषणानां क्षौद्राभयात्रिकटुधान्यकजीरकाणाम् । पथ्यामृतामरिचमाक्षिकपिप्पलीनां लेहास्त्रयः सकलवम्यरुचिप्रशान्त्यै ॥ १ ॥ अथ योगतरङ्गिण्या आम्रास्थिक्काथः । आम्रास्थिबिल्वनिर्यूहः पीतः समधुशर्करः । निहन्ति च्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ १ ॥

## ॥ अथ योग० जम्बूपल्लवादिः ॥

जम्ब्वाम्रपल्लवशृतं क्षौद्रं दत्वा सुशीतलं तोयम् । लाजैरवचूर्ण्य पिबेच्छर्द्यतिसारे परं सिद्धम् ॥ १ ॥

## ॥ अथ योगतः पद्मकाद्यं घृतम् ॥

पद्मकामृतनिम्बानां धान्यचन्दनयोः पचेत् । कल्के क्काथे च हविषः प्रस्थं छर्दिनिवारणम् ॥ १ ॥

## ॥ अथ मयूरपक्षभस्मावलेहः ॥

योगतरङ्गिण्याः । मयूरपक्षं निर्दह्य तद्भस्म मधुमिश्रितम् । लीढ्वा निवारयत्याशु च्छर्दिं सोपद्रवामपि ॥ १ ॥

## ॥ अथ सारसंग्रहात् गोण्याद्यम् ॥

पुराणगोणिभस्माम्भो मधुयुक्तं निपीय तु । छर्दिं छिनत्ति मनुजस्तृणानीव हताशनः ॥ १ ॥ अथ चिकित्सासारात् जातीपत्रादिः । जातीपत्ररसं कृष्णा मरिचं शर्करान्वितम् । एतानि मधुयुक्तानि घ्नन्ति च्छर्दिं चिरोद्भवाम् ॥ १ ॥

## ॥ अथ कोलमज्जादिः ॥

चिकित्सासारात् । कोलमज्जा कणा बर्हिपक्षभस्म सशर्करम् । मधुना लेहयेच्छर्दिहिक्काकोपस्य शान्तये ॥ १ ॥

## ॥ अथ शार्ङ्गधराद्बीजपूरादिः ॥

बीजपूराम्रजम्बूनां पल्लवानि जटाः पृथक् । विपचेत्पुटपाकेन क्षौद्रयुक्तश्च तद्रसः ॥ छर्दिं निवारयेद्घोरां सर्वदोषसमुद्भवाम् ॥ १ ॥

## ॥ अथ चिकित्सासाराज्जम्ब्वाम्रपल्लवादिः ॥

जम्ब्वाम्रपल्लवोशीरवटशृङ्गावरोहजः । क्काथः क्षौद्रयुतः पीतः शीतो वा विनियच्छति ॥ छर्दिं ज्वरमतीसारं मूर्च्छां तृष्णां च दुर्जयाम् ॥ १ ॥

## ॥ अथ पटोलाद्यं घृतम् ॥

पटोलशुण्ठ्योः कल्काभ्यां केवलं कुलकेन वा । घृतप्रस्थं विपक्तव्यं कफपित्तवमीहरेत् ॥ १ ॥

## ॥ अथ हिङ्ग्वादिः ॥

हिङ्गुना सारिवामूलं सर्ववान्तिहरं परम् । रम्भा कन्दरसो वापि मधुना छर्दिनाशकृत् ॥ १ ॥

## ॥ अथ दध्युत्थरसादिः ॥

दध्युत्थरससंयुक्तं पिप्पलीमाक्षिकान्वितम् । मुहुर्मुहुर्नरो लिह्याच्छर्दिभ्यः प्रतिमुच्यते ॥ १ ॥ इति सुश्रुतात् ॥

## ॥ अथ करञ्जादिः ॥

कोमलकरञ्जपत्रं सलवणमम्लेन संयुक्तम् । यः खादति दीनवदनश्छर्दिकफौ तस्य कुत्रेह ॥ १ ॥ इति सारसंग्रहात् ।

## ॥ अथ करञ्जबीजादिः ॥

ईषद्भृष्टं करञ्जस्य बीजं खण्डीकृतं पुनः । मुहुर्मुहुर्नरो भुक्त्वा छर्दिं जयति दुस्तराम् ॥ १ ॥

## ॥ अथ शङ्खपुष्पीरसादिः ॥

शङ्खपुष्पीरसं टङ्कद्वयं समरिचं मुहुः । स क्षौद्रं मनुजः पीत्वा छर्दिभ्यः किल मुच्यते ॥ १ ॥ इति लघुयोगतः ।

## ॥ अथ हरीतक्यवलेहः ॥

हरीतकीनां चूर्णं तु लिह्यान्माक्षिकसंयुतम् । अधोभागे कृते दोषे छर्दिस्तेनैव शाम्यति ॥ १ ॥

## ॥ अथ योगसाराज्जीरकाद्यो धूपः ॥

जीरान्वितं पट्टवस्त्रं वर्तिं कृत्वाथ धूपयेत् । आघ्राणाद्विलयं याति सर्वा छर्दिश्चिरोद्भवा ॥ १ ॥ इति सामान्यविधिः ।

## ॥ अथ बीभत्सादिपञ्चवमिषु ॥

बीभत्सजामबीभत्सैर्हेतुभिः संहरेद्वमिम् । दौर्हृदस्थां वमिं हृद्यैः काङ्क्षितैर्वस्तुभिर्जयेत् ॥ १ ॥ लङ्घनैर्वमनैर्वापि सात्म्यैर्वासात्म्यसम्भवाम् । कृमिहृद्रोगवच्चापि साधयेत्कृमिजां वमिम् ॥ २ ॥ यथादोषं च वितरेच्छस्तं विधिमनन्तरम् । पवनघ्नी चिरोत्थासु प्रयोज्या छर्दिषु क्रिया ॥ ३ ॥

## ॥ अथ रसाः ॥

### ॥ अथ पारदादिचूर्णम् ॥

रसरत्नदीपात् । रसबलिघनसारकोलमज्जामरकुसुमाम्बुधरप्रियङ्गुलाजाः । मलयजमगधात्वगेलपत्रं दलितमिदं परिभाव्य चन्दनाद्भिः ॥ मधुमरिचयुतं रजोऽस्य माषं जयति वमिं प्रबलां विलिह्य मर्त्यः ॥ १ ॥

## ॥ अथ योगरत्नावल्याः ॥

### ॥ जीरकादिरसः ॥

अजाजिधान्यपथ्याभिः सक्षौद्रैः सकटुत्रिकैः । एतैः सार्धं सूतभस्म सद्यो वान्तिं विनाशयेत् ॥ १ ॥

## ॥ अथ योगसाराद्वमनामृतयोगः ॥

गन्धकः कमलाक्षश्च यष्टी मधु शिलाजतु । रुद्राक्षष्टङ्कणश्चैव सारङ्गस्य च शृङ्गकम् ॥ १ ॥ चन्दनं च तवक्षीरी गोरोचनमिदं समम् । बिल्वमूलकषायेण मर्दयेद्याममात्रकम् ॥ २ ॥ मात्रां चैव प्रकुर्वीत वल्लस्यैव प्रमाणतः । नानाविधानुपानेन च्छर्दिं हन्ति त्रिदोषजाम् ॥ वमनामृतयोगोऽयं कमलाकरभाषितः ॥ ३ ॥

## ॥ अथ द्वितीयो वान्तिरुद्रसः ॥

अयः शङ्खो बलिसूतः खल्वे तुल्यं विमर्दयेत् । कन्याकनकचाङ्गेरीरसैर्गोलं विधाय च ॥ १ ॥ सप्तमृत्कर्पटैर्लिप्त्वा पुटितो वान्तिरुद्रसः । द्विवल्लः क्रिमिरोगेऽपि साजमोदः सवेल्लकः ॥ २ ॥ वान्तिहारेण मुनिना प्रोक्तोऽयं मधुना युतः । पिप्पलक्षारपानीयं पाययेद्वान्तिरुद्भिषक् ॥ ३ ॥

## ॥ अथ छर्द्यन्तकरसः ॥

रसभस्म पलांशं स्यात्तत्पादः स्वर्णभस्म च । ताम्रं भुजङ्गवङ्गे च मौक्तिकं तत्समांशकम् ॥ १ ॥ तेषां सममयश्चूर्णमभ्रकं तत्समं भवेत् । तत्समं गन्धकं दत्वा बीजपूरार्द्रकाम्बुना ॥ २ ॥ सर्वं खल्वे विनिक्षिप्य मर्दयेत्त्रिदिनावधि । तत्कल्कं भावयेत्सप्त दिनान्यामलकद्रवैः ॥ ३ ॥ पश्चात्तन्मूलमूषायां रुद्ध्वा भाण्डे विनिक्षिपेत् । पांसुभिः परिपूर्याथ क्रमवृद्धेन वह्निना ॥ ४ ॥ पचेद्यामत्रयं चुल्ल्यां स्वाङ्गशीतलमुद्धरेत् । ततः सर्वं समाकृष्य चूर्णयेत्पट्टगालितम् ॥ ५ ॥ अजाजी दीप्यकं व्योषं त्रिफला कृष्णजीरकम् । क्रिमिशत्रु वरालं च प्रत्येकं निष्कमानकम् ॥ ६ ॥ ततः सर्वं चूर्णयित्वा योजयेत्पूर्वभस्मना । इत्थं पञ्चरसेनेन प्रोक्तश्छर्द्यन्तको रसः ॥ ७ ॥ तत्तद्रोगहरैस्तै[1]र्द्रवैर्दद्याद्वल्लप्रमाणतः । अम्लपित्तमसृक्पित्तं छर्दिं गुल्ममरोचकम् ॥ ८ ॥

---

१ (च०) द्रव्यैः ।

आमवातं च दुःसाध्यं प्रसेकच्छर्दिहृद्रुजम् । सर्वलक्षणसम्पूर्णं विनिहन्ति क्षयामयम् ॥ स्वस्थचित्ते हितकरः सर्वेषाममृतोपमः ॥ ९ ॥ इति रसाः ॥

## ॥ अथ पथ्यापथ्यम् ॥

कलायययवगोधूममुद्गषष्टिकशालयः । शशतित्तिरलावाद्या मृगजाङ्गलसंज्ञिताः ॥ १ ॥ रागखाण्डववेत्राग्रकोलद्राक्षाफलानि च । वमिरोगेषु पथ्यानि मुनिभिः कथितानि तु ॥ २ ॥ लंबा बिम्बीकोशवत्यौ मधूकं चित्रामेलां सर्षपं देवदालीम् । व्यायामं वा सात्म्यदुष्टान्नपानं छर्द्यां सद्यो वर्जयेदप्रमत्तः ॥ ३ ॥ इति पथ्यापथ्यविधिः ॥ इति छर्दिचिकित्सा ॥

## ॥ अथ तृष्णानिदानं व्याख्यास्यामः ॥

भयश्रमाभ्यां बलसंक्षयाद्वा ऊर्ध्वं चितं पित्तविवर्धनैश्च । पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत्पिपासाम् ॥ १ ॥ सततं यः पिबेत्तोयं न तृप्तिमधिगच्छति । पुनः काङ्क्षति तोयं च तं तृष्णार्दितमादिशेत् ॥ २ ॥

## ॥ अथ कफजानां संप्राप्तिमाह ॥

स्रोतःस्वपां वाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तोः । तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथान्यामसमुद्भवा च ॥ १ ॥ भुक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्वशश्च । ताल्वोष्ठकण्ठस्य वितोददाहसन्तापमोहभ्रमविप्रलापाः ॥ पूर्वाणि रूपाणि भवन्ति तासामुत्पत्तिकालेषु विशेषतो हि ॥ २ ॥

## ॥ अथ वातजां तृष्णामाह ॥

शुष्कास्यता मारुतसम्भवायां तोदस्तथा शङ्खशिरःसु चापि । स्रोतोनिरोधो विरसं च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति ॥ १ ॥

## ॥ अथ पित्तजामाह ॥

मूर्च्छान्नविद्वेषविलापदाहा रक्तेक्षणत्वं प्रततश्च शोषः । शीताभिनन्दो मुखतिक्तता च पित्तात्मिकायां परिधूपनं च ॥ १ ॥

## ॥ अथ श्लेष्मजामाह ॥

बाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णा बलासेन भवेन्नरस्य । निद्रा गुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रम् ॥ कण्ठोपलेपो मुखपिच्छिलत्वं शीतज्वरच्छर्दिररोचकाश्च ॥ १ ॥ कफात्मिकायां गुरुगात्रता च शाखासु शोषस्त्वविपाक एव । एतानि रूपाणि भवन्ति तस्यां तयार्दितः काङ्क्षति नातिचाम्भः ॥ २ ॥

## ॥ अथ क्षतजामाह ॥

क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा भवेत्सा ॥ १ ॥

---

१ ( च० ) स्वस्थोचितो ।

## ॥ अथ क्षयजामाह ॥

रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतस्तु निशादिनेषु । पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः ॥ १ ॥

## ॥ अथामजामाह ॥

रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत् । त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादकर्त्री ॥ १ ॥

## ॥ अथ भुक्तोद्भवामाह ॥

स्निग्धं तथाम्लं लवणं च भुक्तं गुर्वन्नमेवाशु तृषां करोति ॥ १ ॥ दीनस्वरः प्रताम्यन् दीनाननशुष्कहृदयगलतालुः । भवति खलु सोपसर्गा तृष्णा सा शोषणी मता कष्टा ॥ २ ॥

## ॥ अथोपसर्गानाह ॥

ज्वरमोहक्षयकासश्वासाद्युपसृष्टदेहानाम् । सर्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रसक्तानाम् ॥ १ ॥

## ॥ अथासाध्यामाह ॥

ताल्वोष्ठकण्ठस्य तु सोददाहाः सन्तापमोहभ्रमविप्रलापाः । सर्वाणि रूपाणि भवन्ति तासां मृत्युर्विकाले तु विशेषतो हि ॥ १ ॥ घोरोपद्रवयुक्ता सा तृष्णा मरणाय विज्ञेया ॥ क्षीणं विभिन्नं बधिरं तृषार्तं विवर्जयेन्निर्गतजिह्वमाशु ॥ २ ॥ ज्वरो मोहः क्षयः कासः श्वासो बाधिर्यमेव च । बहिर्निर्गतजिह्वत्वं सप्तैते तृडुपद्रवाः ॥ ३ ॥ सन्ततं यः पिबेत्तोयं न तृप्तिमधिगच्छति । पुनः काङ्क्षति तोयं च तं तृष्णार्दितमादिशेत् ॥ ४ ॥ इति तृष्णानिदानम् ॥

॥ अथ तृष्णाचिकित्सां व्याख्यास्यामः ॥

## ॥ अथ वाततृष्णा ॥

वातघ्नमन्नपानं मिष्टं शीतं च वाततृष्णायाः । स्याज्जीवनीयसिद्धं क्षीरघृतं वातजे तर्षे ॥ १ ॥ इति वृन्दात् ॥

## ॥ अथ पित्ततृष्णा ॥

पित्तजायां सितायुक्तः पक्वोदुम्बरजो रसः । प्रपिबेत्ससितं मन्थं पयः कोलजसक्तुभिः ॥ १ ॥

## ॥ अथ काश्मर्यादि ॥

काश्मर्यशर्करायुक्तं चन्दनोशीरपद्मकम् । द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत् ॥ १ ॥ इति चिकित्सासारात् ॥

## ॥ अथ कफतृष्णा ॥

यथोक्तं कफतृष्णायां छर्द्यां तथैव कार्यं स्यात् । स्तम्भारुच्यविपाकालस्यच्छर्दिषु कफानुगां तृष्णाम् ॥ १ ॥ ज्ञात्वा मधुदधितर्पणलवणेन जलैर्वमनमभीक्ष्णम् । दाडिमम्लफलं वाप्यन्यत्सकषायमवलेह्यम् ॥ २ ॥ पयसाथ वा मदद्याद्रजनीमधुशर्करायुक्तम् ॥ ३ ॥ इति वृन्दात् ॥

## ॥ अथ सामान्यविधिः ॥

तृष्णातिवृद्धावुदरे च पूर्णे सत्रुच्छर्दयेन्मागधिकोदकेन । विलोमसञ्चाररहितं विधेयं स्याद्दाडिमाम्रातकमातुलिङ्गैः ॥ १ ॥ सुवर्णरौप्यादिभिरग्नितप्तैर्लोष्टैः कृतं वा सिकतोपलैर्वा । जलं सुखोष्णं शमयेच्च तृष्णां सशर्करं क्षौद्रयुतं हिमं वा ॥ २ ॥ कसेरुशृङ्गाटकपद्मबीजविसेक्षुसिद्धंससितं सवारि । तृष्णां क्षतोत्थामपि पित्तजातां निहन्ति पित्तं शिशिरीकृतं च ॥ ३ ॥ इति सारसङ्ग्रहात् । तुलसीमञ्जरीशुण्ठीकणाद्राक्षालवङ्गकैः । नागवल्लीपर्णवृन्तत्वक्खर्जूरैश्चकार्षिकैः ॥ १ ॥ कर्पार्धलोध्रसंयुक्तैर्विहितोऽयं कषायकः । तृष्णादाहग्लानिहरस्त्रिदोषशमनः परः ॥ २ ॥ मधुयुक्तं जलं शीतं पिबेदाकण्ठमातुरः । पश्चाद्वमेदशेषं तत्तृष्णा तेन प्रशाम्यति॥३॥ इति योगतरङ्गिण्याः । मधुरैः सुजीवनीयैः शीतैश्च सतिक्तकं शृतं क्षीरम् । पानाभ्यञ्जनसेके त्विष्टं मधुशर्करायुक्तम् ॥ १ ॥ तज्जं वा घृतमिष्टं पानाभ्यङ्गेषु नस्यमपि किञ्चित् । जम्ब्वाम्रातकबदर्यम्लवेतसवल्कलपञ्चाम्लैः ॥ हृन्मुखशिरःप्रदेहाः सघृता मूर्च्छार्तिभ्रमतृषाघ्नाः ॥ २ ॥ इति वृन्दात् । सजीरकाण्यार्द्रकशृङ्गबेरसौवर्चलान्यर्थपरिप्लुतानि । मद्यानि हृद्यानि च गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णां ॥ १ ॥ आम्रजम्बूकषायं वा पिबेन्माक्षिकसंयुतम् । सर्वां छर्दिं प्रणुदति तृष्णां चैवापकर्षति ॥ २ ॥ गोस्तनीक्षुरसक्षीरयष्टीमधुमधूत्पलैः । नियतं वाम्यतो पीतैस्तृष्णा शाम्यति तत्क्षणात् ॥ ३ ॥ जीरकुस्तुम्बरीद्राक्षाचन्दनोत्पलशीतलम् । शीतलेन समं दद्यात्तृष्णां हन्त्यतिशीलितम् ॥ ४ ॥ निर्वापितं तप्तलोष्टं कपालसिकतादिभिः । तृष्णायां वमनोत्थायां सगुडं दधि शस्यते ॥ ५ ॥ इति चिकित्सासारात् ॥

## ॥ अथ लघुमधूकादिफाण्टः ॥

शार्ङ्गधरात् । मधूकपुष्पगम्भारीचन्दनोशीरधान्यकैः । द्राक्षया च कृतः फाण्टः शीतः शर्करयायुतः ॥ तृष्णापित्तहरः प्रोक्तो दाहमूर्च्छाभ्रमाञ्जयेत् ॥ १ ॥

## ॥ अथ गण्डूषः ॥

सक्षौद्रमाम्रजम्बूत्थं पिबेत्क्वाथं सुपाचितम् । सतृष्णो मधुना कुर्याद्गण्डूषान् शिशिरस्थितः ॥१॥ इति रसरत्नप्रदीपात् । क्षीरेक्षुरसमृद्वीकाक्षौद्रसिन्धुगुडोदकैः । सह वृक्षाम्लगण्डूषस्तालुशोषतृडन्तकृत् ॥ १ ॥ इति योगतरङ्गिण्याः ॥

## ॥ अथ लेपाः ॥

दाडिमकपित्थलोध्रैः सविदारीबीजपूरकैः शिरसः। लेपो गौरामलकैः शृतारनालयुतैः सहितैः ॥ १ ॥ इति वृन्दात्। अरुणचन्दनचन्दनवालकैर्नलदपद्मकतुल्यकृतांशकः। शिरसि लेपनमाचरतां नृणां तृडुपयात्युपशान्तिमसंशयम् ॥ १ ॥ इति कदम्बात्। दाडिमं बदरं लोध्रं कपित्थं बीजपूरकम्। पिष्ट्वा लेपः शिरस्येषां पिपासादाहनाशनः ॥ १ ॥ इति योगतरङ्गिण्याः ॥ इति लेपाः ॥

## ॥ अथ गुटिका ॥

नीलाम्बुजाब्दमधुलाजवटावरोहैः श्लक्ष्णीकृतैर्विरचिता गुटिका मुखस्था। तृष्णां निवारयति तत्क्षणमेव तीव्रां मृत्योः स्पृहामिव यतेः परमार्थचिन्ता ॥ १ ॥ इति राजमार्तण्डात्। वटप्ररोहं मधुकुष्ठमुत्पलं सलाजचूर्णं गुटिका प्रकल्प्या। सुसंहिता सा वदने च धारिता तृष्णां सुवृद्धामपि हन्ति सज्वराम् ॥ १ ॥ इति योगशतात्। रुग्लाजाब्दवटप्ररोहमधुकैर्मध्वन्वितैः कल्पिताप्युग्रामाशु तृषं भृशं प्रशमयेदास्यान्तरस्था गुटी। एलालाजलवङ्गनागचपलाश्रीकोलमज्जाम्बुदश्रीखण्डं मधुयुक् प्रिये प्रशमयेद्भ्रान्तिं त्रिदोषोद्भवाम् ॥ १ ॥ इति वैद्यजीवनात्। रोगोपसर्गजातायां धान्याम्बु ससिता मधु। वटप्ररोहयष्ट्याह्वकणामधुकृता वटी ॥ मुखस्था चिरकालोत्था तृष्णां हन्यात्सुदुस्तराम् ॥१॥ इति चिकित्सासारात्। इति सामान्यविधिः। क्षतोद्भवां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः। क्षयोत्थितां क्षीरजलं निहन्यान्मांसोदकं वा मधुकोदकं वा॥१॥आमोद्भवां बिल्ववचायुतानां जयेत्कषायैरपि दीपनानाम्। उल्लेखनैर्गुर्वशनप्रजातां जयेत्क्षयोत्थां तु विना पिपासाम् ॥ २ ॥ स्निग्धेऽन्ने भुक्ते या तृष्णा स्यात्तां गुडाम्बुना शमयेत्। अतिरूक्षदुर्बलानां तृष्णां शमयेन्नृणामिहाशु पयः ॥ ३॥ छागमांसरसं साज्यं शीतं समधुशर्करम्। पीत्वा जयति दुर्दाहमूर्च्छाछर्दिमदात्ययान् ॥ ४ ॥ सात्म्यान्नपानभैषज्यैस्तृष्णार्त्तस्य जयेत्तृषाम्। तस्यां जितायामन्योऽपि व्याधिः शक्यश्चिकित्सितुम् ॥ ५ ॥ तृषितो मोहमायाति मोहात्प्राणान्विमुञ्चति। तस्मात्सर्वास्ववस्थासु न क्वचिद्वारि वार्यते ॥ ६ ॥ अन्नेनापि विना जन्तुः प्राणान्सन्धारयेच्चिरम्। तोयाभावे पिपासार्तः क्षणात्प्राणान् विमुञ्चति ॥ ७ ॥

## ॥ अथ रसाः ॥

### ॥ अथ रसादिगुटिका ॥

रसरजतगुटीं पटीयसीं यो वदनसरोरुहमध्यगां दधाति। स जयति तृषितस्तृषां मनुष्यो भृशमघपुञ्जमिव त्रिमार्गगाम्भः ॥ १ ॥

## ॥ अथ रसादिचूर्णम् ॥

रसगन्धककर्पूरैः शैलोशीरमरीचकैः। ससितैः क्रमवृद्धैश्च श्लक्ष्णं कृत्वा ...

॥ १ ॥ त्रिगुञ्जाप्रमितं खादेत्पिबेत्पर्युषिताम्बु च । भृशं तृषां निहन्त्येवमश्विभ्यां च प्रकाशितम् ॥ २ ॥ इति सारसङ्ग्रहात् ॥ इति रसाः ॥

## ॥ अथ पथ्यापथ्यम् ॥

षष्टिकाः शालयः पेया विलेपी लाजसक्तवः । अन्नमण्डो धान्यरसः शर्करारागखाण्डवौ ॥ १ ॥ भृष्टैर्मुद्गैर्मसूरैर्वा चणकैर्वा कृतो रसः । रम्भापुष्पं तक्रकूर्ची कूष्माण्डकमुपोदिका ॥ २ ॥ खर्जूरं दाडिमं धात्री बीजपूरं गवां पयः । जम्बीरं करमर्दश्च पथ्यमेतत्तृषातुरे ॥३॥ गुर्वन्नमम्लं लवणं कषायं कटुत्रयं दुष्टजलानि तीक्ष्णम् । एतानि सर्वाणि हिताभिलाषी तृषातुरो नैव भजेत्कदाचित् ॥४॥ इति तृष्णाचिकित्सा ॥

## ॥ अथ मूर्च्छानिदानम् ॥

क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः । वेगाघातादभीघाताद्धीनसत्त्वस्य वा पुनः ॥ १ ॥ करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च । निवसन्ति यदा दोषास्तदा मूर्च्छन्ति मानवाः ॥ २ ॥ संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः । तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥ ३ ॥ सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् । मोहो मूर्च्छेति तामाहुः षड्विधा सा प्रकीर्तिता ॥ ४ ॥ वातादिभिः शोणितेन मद्येन च विषेण च । षट्स्वप्येतासु पित्तं च प्रभुत्वेनावतिष्ठति ॥ ५ ॥

## ॥ अथ तस्याः पूर्वरूपमाह ॥

हृत्पीडा जृम्भणं ग्लानिः संज्ञादौर्बल्यमेव च । सर्वासां पूर्वरूपाणि यथास्वं च विभावयेत् ॥ १ ॥

## ॥ अथ वातजामाह ॥

नीलं वा यदि वा कृष्णमाकाशमथ वारुणम् । पश्यंस्तमः प्रविशति शीघ्रं च प्रतिबुध्यते ॥ १ ॥ वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च । कार्श्यं श्यावारुणच्छाया मूर्च्छा सा वातसम्भवा ॥ २ ॥

## ॥ अथ पित्तजामाह ॥

रक्तं हरितवर्णं वा वियत्पीतमथापि वा । पश्यंस्तमः प्रविशति सस्वेदः प्रतिबुध्यते ॥ १ ॥ सपिपासः ससन्तापो रक्तपित्ताकुलेक्षणः । जातमात्रे च पतति शीघ्रं च प्रतिबुध्यते ॥ सम्भिन्नवर्चाः पीताभो मूर्च्छा सा पित्तसम्भवा ॥ २ ॥

## ॥ अथ श्लेष्मजामाह ॥

मेघसङ्काशमाकाशमाच्छन्नं वा तमोघनैः । पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥ १ ॥ गुरुभिः प्रावृतैरङ्गैर्यथा वार्द्रेण चर्मणा । सप्रसेकः सहृल्लासो मूर्च्छा सा कफसम्भवा ॥ २ ॥

---

१ ( च० ) प्रियम् । २ ( च० ) ससन्तोषो ।

## ॥ अथ सन्निपातजामाह ॥

सर्वाकृतिः सन्निपातादपस्मार इवागता । सा जन्तुं घातयत्याशु विना बीभत्सचेष्टितैः ॥ १ ॥

## ॥ अथ रक्तगन्धजमूर्च्छामाह ॥

पृथिव्यम्भस्तमोरूपं रक्तगन्धश्च तन्मयः । तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः ॥ द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति ॥ १ ॥

## ॥ अथ विषमद्यजे आह ॥

गुणास्तीव्रतरत्वेन स्थिताश्च विषमद्ययोः । त एव तस्मात्ताभ्यां तु मोहौ स्यातां यथेरितौ ॥ स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः ॥ १ ॥

## ॥ अथ मद्यजामाह ॥

मद्येन विलपन् शेते नष्टविभ्रान्तमानसः । गात्राणि विक्षिपन् भूमौ पक्तिं यावन्न याति तत् ॥ १ ॥

## ॥ अथ विषजामाह ॥

वेपथुस्वप्नतृष्णाः स्युः स्तम्भश्च विषमूर्च्छितः । वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः ॥ १ ॥

## ॥ अथ संज्ञानाशसाधर्म्यान्मूर्च्छाया भेदानाह ॥

मूर्च्छा पित्ततमःप्राया रजःपित्तानिलाद्भ्रमः। तमोवातकफात्तन्द्रा निद्रा श्लेष्मतमोभवा ॥ १ ॥ इन्द्रियार्थेष्वसम्प्राप्तिर्गौरवं जृम्भणं क्लमः। निद्रार्तस्येव यस्यैते तस्य तन्द्रां विनिर्दिशेत् ॥ २ ॥ उत्क्लिश्यं न च निर्गच्छेत्प्रसेकष्ठीवनेरितः। हृदयोद्वेष्टनं चास्य तमुत्क्लेदं विनिर्दिशेत् ॥३॥ आर्द्रचर्मावनद्धं च यो गात्रं मन्यते सदा। तथा गुरु शिरो नित्यं गौरवं तद्विनिर्दिशेत् ॥ ४ ॥ योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः। क्लमः स इति विज्ञेय इन्द्रियार्थप्रबोधकः ॥ ५ ॥

## ॥ अथ सन्यासस्य मूर्च्छादिभ्यो भेदमाह ॥

दोषेषु मदमूर्च्छाया गतवेगेषु देहिनाम् । स्वयमेवोपशाम्यन्ति सन्यासो नौषधैर्विना ॥ १ ॥ वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः । सन्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः ॥ २ ॥ स ना सन्याससंन्यस्तः काष्ठीभूतो मृतोपमः । प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यः फलक्रियाम् ॥ ३ ॥ वादित्रगीतानुनयैरपूर्वैर्विस्मापनैर्गुप्तफलावघर्षैः । आभिः क्रियाभिश्च न लब्धसंज्ञो सानाहलालश्च नरश्च वर्ज्यः ॥ ४ ॥

## ॥ अथ तच्चिकित्सा ॥

मूर्च्छा मोहो द्विधा स प्रभवति सहजागन्तुभेदेन भिन्नस्तत्रागन्तुस्त्रिधा स्या-

---

१ (च०) इवापरः। २ (च०) जराम्। ३ (च०) तमश्च।

रुधिरविषसुराजन्यभेदाद्विभिन्नः । प्रत्येकं दोषभेदाद्भवति च सहजः स त्रिधा षट्सु पित्तं प्राधान्येनेह तिष्ठेदभिदधति च तां द्वन्द्वजां सन्निपाते ॥ १ ॥ सेकावगाहा मणयः सहाराः शीताः प्रदेहा व्यजनानिलाश्च । शीतानि पानानि च गन्धवन्ति सर्वासु मूर्च्छास्वनिवारितानि ॥ २ ॥ कोलमज्जोषणोशीरकेसरं शीतवारिणा । पीतं मूर्च्छां जयेल्लीढा कृष्णा वा मधुसंयुता ॥ ३ ॥ इति वृन्दात् ॥ महौषधामृताद्राक्षापुष्करग्रन्थिकोद्भवम् । पिबेत्कणायुतं क्वाथं मूर्च्छायां च मदेषु च ॥ १ ॥ इति वृन्दात् ॥ नारीकेलाम्बुना पीताः सक्तवः समशर्कराः । पित्तत्दृत्कफतृण्मूर्च्छाभ्रमादीन् घ्नन्ति दारुणान् ॥ १ ॥ इति चिकित्सासारात् ॥ दुरालभाकषायस्य घृतयुक्तस्य सेवनात् । भ्रमः शाम्यति गोविन्दस्मरणादिव पातकम् ॥ १ ॥ इति वैद्यजीवनात् ॥ मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुडार्द्रकं प्रातः । सप्ताहात् पथ्यभुजो मदमूर्च्छाकामलोन्मादान् ॥ १ ॥ इति चिकित्सासारात् ॥ स्विन्नमामलकं पिष्ट्वा द्राक्षया सह संसृजेत् । विश्वभेषजसंयुक्तं मधुना सह लेहयेत् ॥ तेनास्य शाम्यते मूर्च्छा कासः श्वासस्तथैव च ॥ १ ॥ इति वृन्दात् ॥

## ॥ अथ योगतरङ्गिण्यां घृतम् ॥

पथ्याक्वाथेन संसिद्धं घृतं धात्रीरसेन वा । सर्पिः कल्याणकं वापि मदमूर्च्छापहं पिबेत् ॥ १ ॥ रक्तजायां तु मूर्च्छायां हितः शीतक्रियाविधिः । मद्यजायां पिबेन्मद्यं निद्रां सेवेद्यथासुखम् ॥ २ ॥ विषजायां विषघ्नानि भेषजानि प्रदापयेत् । अञ्जनान्यवपीडांश्च धूमान् प्रधमनानि च ॥ ३ ॥ सूचिभिस्तोदनं शस्तं दाहपीडा नखान्तरे । लुञ्चनं नखलोम्नां च दन्तैर्दशनमेव च ॥ ४ ॥ आत्मगुप्तावघर्षश्च हितस्तस्यावबोधने । अण्डयोर्घर्षणं चापि हितमेतैर्विबोधनम् ॥ ५ ॥ नासावदनरोधेन नस्यैर्मरिचनिर्मितैः । नरं जागरयेद्भूमौ मूर्च्छितं मन्दमारुतैः ॥ ६ ॥

## ॥ अथ रसाः ॥

कणामधुयुतं सूतं मूर्च्छायामनुशीलयेत् । शीतसेकावगाहादि सर्वं वा पीडनं हितम् ॥ १ ॥ इति रसरत्नप्रदीपात् ॥

## ॥ अथ पथ्यम् ॥

जीर्णा यवा लोहितशालयश्च कौम्भं हविर्मुद्गसतीनयूषः । धन्वोद्भवा मांसरसाश्च रागसखाण्डवा गव्यपयः सिता च ॥ १ ॥ पुराणकूष्माण्डपटोलमोचहरीतकीदाडिमनारिकेलम् । मधूकपुष्पाणि च तण्डुलीयमुपोदिकान्नानि लघूनि चापि ॥ २ ॥ अत्युच्चशब्दोऽद्भुतदर्शनं च गीतानि वाद्यान्यपि चोत्कटानि । श्रमः श्रुतिश्चिन्तनमात्मबोधो धैर्यं च मूर्च्छास्विति पथ्यवर्गः ॥ ३ ॥ नासामुखद्वारमरुन्निरोधो विरेचनं छर्दनलङ्घनानि । छायानभोऽम्भः शतधौतसर्पिर्मधूनि तीक्ष्णानि च लाजमण्डः ॥ ४ ॥

## ॥ अथापथ्यम् ॥

ताम्बूलं पत्रशाकानि दन्तघर्षणमातपम् । विरुद्धान्यन्नपानानि व्यवायं स्वेदनं कटुम् ॥ विण्मूत्रवेगरोधं च तक्रं मूर्च्छामयी त्यजेत् ॥ १ ॥ इति मूर्च्छाचिकित्सा ॥

## ॥ अथ पानात्ययपरमदपानाजीर्णपानविभ्रमनिदानचिकित्से ॥

ये विषस्य गुणाः प्रोक्तास्ते च मद्ये प्रकीर्तिताः । तेन मिथ्योपयुक्तेन भवत्युग्रो मदात्ययः ॥ १ ॥ किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् । अयुक्तियुक्तं रोगाय युक्तियुक्तं यथामृतम् ॥ २ ॥ शुद्धकायः पिबेत्प्रातः सोपदंशं पलद्वयम् । मध्याह्ने द्विगुणं तच्च स्निग्धाहारेण पाययेत् ॥ ३ ॥ प्रदोषेऽष्टपलं तद्वन्मात्रा मद्यरसायने । आरोग्यं धातुसाम्यं च वह्निकान्तिबलप्रदम् ॥४॥ अनेन विधिना सेव्यं मद्यं नित्यमतन्द्रितैः । बुद्ध्यादयो गुणा यावदुल्लसन्ति निरत्ययाः ॥ मात्रा या विहिता मद्यपाने रोगाय चापरा ॥५॥ लघुतीक्ष्णोष्णसूक्ष्माम्लव्यवाय्याशुगमेव च । रूक्षं विकाशि विशदं मद्यं दशगुणं स्मृतम् ॥ ६ ॥ मद्यस्याम्लस्वभावस्य चत्वारस्तु रसाः स्मृताः । मधुरश्च कषायश्च कटुकस्तिक्त एव च ॥ ७ ॥ मद्यं प्राणहरं तद्वद्युक्तियुक्तं रसायनम् । प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून् ॥ ८ ॥ मद्यमुष्णं तथा तीक्ष्णं सूक्ष्मं विशदमेव च । रूक्षमाशुकरं चैव व्यवायि च विकाशि च ॥९॥ औष्ण्याच्छीतोपचारं च तैक्ष्ण्याद्धन्ति मनोगतिम् । विशत्यवयवान्सौक्ष्म्याद्वैशद्यात्कफशुक्रनुत् ॥ १० ॥ मारुतं कोपयेद्रौक्ष्यादाशुत्वादाशुकारि च । हर्षदं च व्यवायित्वाद्विकाशित्वाद्विसर्पति ॥ ११ ॥ तदम्लं रसतः प्रोक्तं लघुदीपनपाचनम् । केचिल्लवणवर्ज्यास्तु रसांस्तत्रादिशन्ति हि ॥ १२ ॥

## ॥ अथ विधिनोपयुक्तस्य फलमाह ॥

विधिना मात्रया काले हितैरन्नैर्यथाबलम् । प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतं यथा ॥ १ ॥ स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् । भवेदायुष्प्रकर्षाय बलायोपचयाय च ॥ २ ॥ काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च । विधिवत्सेव्यमाने तु मद्ये सन्निहिता गुणाः ॥ ३ ॥

## ॥ अथ सलक्षणतन्मदानाहं ॥

तत्र प्रथमः । बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्ननिद्रारतिवर्धनश्च । सम्पाठगीतस्वरवर्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि ॥ १ ॥

## ॥ अथ मध्यममदमाह ॥

अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः सोन्मत्तलीलाकृतिरप्रशान्तः । आलस्यनिद्राभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन ॥ १ ॥

## ॥ अथ तृतीयमदमाह ॥

गच्छेदगम्यां न गुरुं च मन्येत्खादेदभक्ष्याणि च नष्टसंज्ञः। ब्रूयाच्च गुह्यानि हृदि स्थितानि मदे तृतीये पुरुषोऽस्वतन्त्रः॥ १॥

## ॥ अथ सुश्रुतोक्तं चतुर्थमदमाह ॥

चतुर्थे तु मदे मूढो भग्नदार्विव निष्क्रियः। कार्याकार्यविभागाज्ञो मृतादप्यपरो मृतः॥ १॥ को मदं तादृशं गच्छेदुन्मादमिव चापरम्। बहुदोषमिवामूढः कान्तारं स्ववशः कृती॥ २॥ श्लैष्मिकानिलपीतांश्च स्निग्धमात्रोपसेविनः। पानं न बाधतेऽत्यर्थं विपरीतं तु बाधते॥ ३॥

## ॥ अथाविधिमद्यपानस्य विकारकारणत्वमाह ॥

निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यम्। आपादयेत्कष्टतरान्विकारानापादयेच्चापि शरीरभेदम्॥ १॥

## ॥ अथ क्रुद्धादिकारणत्वेन विविधान् विकारानाह ॥

क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन। व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन वापि॥ १॥ अत्यम्लभक्षावततोदरेण साजीर्णभुक्तेन तथा बलेन। उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान्॥ २॥

## ॥ अथ तानेव विकारान् विवृणोति ॥

पानात्ययं परमदं पानाजीर्णमथापि वा। पानविभ्रममुग्रं च तेषां वक्ष्यामि लक्षणम्॥ १॥

## ॥ अथ तत्र वातिकमदात्ययमाह ॥

हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः। विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम्॥ १॥

## ॥ अथ पैत्तिकमाह ॥

तृष्णादाहज्वरस्वेदमोहातीसारविभ्रमैः। विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम्॥१॥ज्ञेयानि तत्र भिषजा सुविनिश्चितानि पित्तप्रकोपजनितानि च लक्षणानि॥२॥

## ॥ अथ श्लैष्मिकमाह ॥

छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः। विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम्॥ १॥

## ॥ अथ त्रिदोषद्विदोषजमाह ॥

ज्ञेयस्त्रिदोषजश्चापि सर्वलिङ्गैर्मदात्ययः। द्विदोषसम्भवैर्लिङ्गैर्विज्ञेयस्तु द्विदोषजः॥ १॥

## ॥ अथ परमदमाह ॥

श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च । लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञास्तृष्णा रुजा शिरसि सन्धिषु चापि भेदः॥१॥

## ॥ अथ पानाजीर्णपानभ्रमावाह ॥

आध्मानमुग्रमथ चोद्गिरणं विदाहः पाने त्वजीर्णमुपगच्छति लक्षणानि । हृद्गात्रभेदकफसंस्रवकण्ठधूममूर्च्छावमिज्वरशिरोरुजनप्रदेहाः ॥ द्वेषः सुरान्नविकृतेष्वपि तेषु तेषु तं पानविभ्रममुशन्त्यखिलेन धीराः ॥ १ ॥

## ॥ अथासाध्यलक्षणमाह ॥

हीनोत्तरोष्ठमतिशीतममन्ददाहं तैलप्रभास्यमतिपानहतं त्यजेत्तम् । जिह्वौष्ठदन्तमसितं त्वथ वापि नीलं पीते च यस्य नयने रुधिरप्रभे च ॥ १ ॥

## ॥ अथ तस्योपद्रवमाह ॥

हिक्का ज्वरो वमथुवेपथुपार्श्वशूलाः कासभ्रमावपि च पानहतं त्यजेत्तम् ॥ १ ॥

## ॥ अथ तच्चिकित्सा ॥

मद्यं सौवर्चलं व्योषं युक्तं किञ्चिज्जलान्वितम् । जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥ १ ॥ शुक्तं सौवर्चलं शृङ्गीत्र्यूपणार्द्रकदीपकैः । मद्यं पीत्वा जयत्युग्रं पवनोत्थं मदात्ययम् ॥ २ ॥

## ॥ अथ पित्तपानात्ययचिकित्सा ॥

पित्तपानात्यये पेयं वटशृङ्गं हिमाम्बुना । सशर्करं पुनर्मद्यं पिबेत्किञ्चिज्जलान्वितम् ॥ १ ॥ क्षुद्रामलकखर्जूरपरूषकहिमं पिबेत् । सिताविमिश्रितं पीतं पानात्ययविकारनुत् ॥ २ ॥

## ॥ अथ कफपानात्ययचिकित्सा ॥

पानात्यये कफोत्थे तु तत्पीत्वोल्लेखनं चरेत् । यथाबलं लङ्घनं च दीपनीयौषधानि च ॥१॥ अथाष्टाङ्गलवणम् । सौवर्चलमजाजी च वृक्षाम्लं साम्लवेतसम् । त्वगेलामरिचार्धांशं शर्कराभागयोजितम् ॥ १ ॥ एतल्लवणमष्टाङ्गमग्निसन्दीपनं परम् । मदात्यये कफोत्थे तु दद्यात्स्रोतोविशोधनम् ॥ २ ॥ इति कफपानात्ययचिकित्सा ॥ सर्वजे सर्वमेवेद प्रयोक्तव्यं चिकित्सितम् । आभिः क्रियाभिः सिद्धाभिः शान्ति याति मदात्ययः ॥ १ ॥

## ॥ अथ सामान्यप्रतीकारः ॥

मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुडार्द्रकं प्रातः । सप्ताहात्पथ्यभुजो मदमूर्च्छा-

१ ( च० ) मधुरास्यता ।

कामलोन्मादान् ॥ १ ॥ दुःस्पर्शेन समुस्तेन मुस्तपर्पटकेन वा । जलमुस्तैः शृतं वापि दद्याद्दोषविपाचनम् ॥ २ ॥ एतदेव च पानीयं सर्वत्रापि मदात्यये । निरत्ययं पीयमानं पिपासाज्वरनाशनम् ॥३॥ इति वृन्दात् । चव्यं सौवर्चलं हिङ्गु पूरकं विश्वभेषजम् । चूर्णं मद्येन पातव्यं पानात्ययरुजापहम् ॥ १ ॥ इति चिकित्सासारात् । मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लिकदाडिमैः । परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ १ ॥ इति वृन्दात् । मथितं गोदधिसहितं तैलं कर्पूरसंमिश्रम् । आस्वाद्य पीतमाशु क्षपयति पानात्ययं रोगम् ॥ १ ॥ इति लघुयोगतः ॥ शतावरीरसक्षीरयष्टीकल्कैः शृतं घृतम् । पुनर्नवाक्वाथयुतं पानात्ययमपोहति ॥ १ ॥ इति शतावरीपुनर्नवासर्पिः । कट्फलमुस्तगुडूचीमाषैः क्रमविवर्धितैश्च तत्सर्वम् । घृतमुदितं माषघृतं हन्याद्गन्धं सुराभवं सपदि ॥१॥ इति माषघृतम् ॥ मद्यं पीत्वा यदि वा तत्क्षणमवलिह्य शर्करां सघृताम् । मदयति न जातु मद्यं मनागपि प्रथितवीर्यमपि ॥ १ ॥ इति सामान्यप्रतीकारः ॥ अहानि सप्त चाष्टौ वा नृणां पानात्ययः स्मृतः । पानं हि मज्जतेऽजीर्णमत ऊर्ध्वं विमार्गगम् ॥ पानाजीर्णविनाशायकुर्यात्कफहरं विधिम् ॥ १ ॥

## ॥ अथ पूगमदप्रतीकारः ॥

पूगान्मदं प्रशमयत्यचिरेण जन्तोराघ्राय शङ्खरजसः प्रबलस्य गन्धम् । पानेन वा शिशिरपुष्करिणीजलस्य संसेवितैरतिहितैर्व्यजनानिलैश्च ॥ १ ॥ इति वृन्दात् ॥

## ॥ अथ कोद्रवधत्तूरप्रतीकारः ॥

कूष्माण्डरसः सगुडः शमयति मदमाशु कोद्रवजम् । धत्तूरजं च दुग्धं सशर्करं पानयोगेन ॥ १ ॥

## ॥ अथ कज्जली ॥

धात्री स्वरसनिपीता रसगन्धककज्जली सितासहिता । हरति मदात्ययरोगान् गरुत्मानिवोरगान्सहसा ॥ १ ॥

## ॥ अथ पथ्यम् ॥

गोधूमयवमुद्गाश्च माषषष्टिकशालयः । तण्डुलीयं पटोलं च दक्षबर्हिशशामिषम् ॥ शीताम्बु चन्दनं स्नानं सेव्यमेतन्मदात्यये ॥ १ ॥ इति पानात्ययचिकित्सा ॥

---

## ॥ अथ दाहनिदानम् ॥

तीक्ष्णमुष्णं पिबन्मद्यं दाहं प्राप्नोति मानवः । दाहः सप्तविधः प्रोक्तो वैद्यशास्त्रप्रकल्पितः ॥१॥ अथ मद्यज माह । त्वचं प्राप्तस्तु पानोष्मा पित्तरक्ताभिमूर्च्छितः । दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥१॥ अथ रक्तजमाह । कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति

---

१ (क०) पयः ।

ध्रुवम् । संशुष्यंते चोष्यते वा ताम्राभस्ताम्रलोचनः ॥ १ ॥ अथ तिक्तजमाह ॥ लोहगन्धाङ्गवदनो वह्निनेवावकीर्यते ॥ १ ॥ अथ पित्तजमाह । पित्तज्वरसमः पित्तात्स चास्यापि विधिः स्मृतः ॥१॥ अथ तृष्णानिरोधजमाह । तृष्णानिरोधादब्धातौ क्षीणे तेजः समुद्धतम् । सबाह्याभ्यन्तरं देहं प्रदहेन्मन्दचेतसः ॥ संशुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य वेपते ॥ १ ॥ अथ कोष्ठजमाह । असृजा पूर्णकोष्ठस्य दाहोऽन्यः स्यात्सुदुस्तरः ॥ १ ॥ अथ धातुक्षयजमाह । धातुक्षयोत्थो यो दाहस्तेन मूर्च्छा-तृषान्वितः । क्षामस्वरः क्रियाहीनः स सीदेद्भृशपीडितः ॥ १ ॥ अथ क्षतजमाह । क्षतजेनाश्रितश्चान्यः शोचतो ऽप्यनेकधा । तेनाङ्गं दह्यतेऽत्यर्थं तृष्णामूर्च्छा-प्रलापवान् ॥ १ ॥ अथ मर्माभिघातजमाह । मर्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः । सर्वे एव विवर्ज्याः स्युः शीतगात्रेषु देहिषु ॥१॥ इति दाहनिदानम् ॥

## ॥ अथ दाहचिकित्सा ॥

दाहेऽतिशिशिरं तोयं क्रिया कार्या सुशीतला । सर्वाङ्गे चन्दनालेपश्चन्द्रकस्तूरि-कायुतः ॥ १ ॥ शीतनीरजलेपो वा धारागारनिवेशनम् । सहजस्नेहसोत्साहमुग्ध-मञ्जुललापिनाम् ॥ २ ॥ बालकानां समाश्लेषस्तापं निर्वापयेज्जवात् । उशीरागार-शयनं तालवृन्तानुवर्तनम् ॥ ३ ॥ साहित्यसरसा वाणी कवीनां तापहृच्चयम् । उत्तुङ्गकुचसंसर्गी वीणानां हरिणीदृशाम् ॥ ४ ॥ गायनं सुकुमारीणां दाहमुत्साद-येद्द्रुतम् । रसौषधसमुद्भूते तापेऽपि सकले हितम् ॥ ५ ॥ पानीयामलकं द्राक्षानालिकेरेक्षुशर्कराः । सेवनाय हितास्तापे कोमलं मूत्रलं फलम् ॥ ६ ॥ तण्डुलीयकमूलानि धान्यजीरकजं पयः । तुलसीस्वरसं टङ्कं तापे पिबेत् रसे हितम् ॥ ७ ॥ फलिनीलोध्रसेव्याम्बुहेमपत्रं कुष्ठं नटम् । कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥ ८ ॥ ह्रीबेरपद्मकोशीरचन्दनक्षोदवारिणा । सम्पूर्णामवगाहेत द्रोणीं दा-हार्दितो नरः ॥ ९ ॥ प्रातःपर्युषितं धान्यसलिलं सितया युतम् । अन्तर्दाहं हरेत्पीतं दुःखं दुर्गार्चनं यथा ॥ १० ॥ सशर्करं सेन्दुशैलं शीतमम्भः पिबेन्नरः । तृष्णानि-रोधजं दाहं हन्ति तोयमिवानलम् ॥ ११ ॥

## ॥ अथ शार्ङ्गधराद्धान्यकादिहिमः ॥

धान्याकधात्रीवासानां द्राक्षापर्पटयोर्हिमः । रक्तपित्तं ज्वरं दाहं तृष्णां शोषं च नाशयेत् ॥ १ ॥ पीत्वा वेणुत्वचः क्वाथं सक्षौद्रं शिशिरं नरः । रक्तसंपूर्णकोष्ठोत्थं दाहं जयति दुस्तरम् ॥ २ ॥

## ॥ अथ शार्ङ्गधरात्सक्तुमन्थः ॥

पाचितैः शीतनीरेण सघृतैर्यवसक्तुभिः । नातिसान्द्रद्रवैर्मन्थस्तृष्णादाहार्ति-पित्तहा ॥ १ ॥

---

१ ( च० ) समुष्यते । २ ( च० ) तृप्यते । ३ ( च० ) तापेऽपि रसजे ।

## ॥ अथ दशसारचूर्णम् ॥

यष्टीधात्रीफलं द्राक्षा एलाचन्दनवालकम् । मधूकपुष्पं खर्जूरं दाडिमं पेषयेत्समम् ॥ १ ॥ सर्वतुल्या सिता योज्या पलार्धं भक्षयेत्सदा । दशसारमिदं ख्यातं सर्वपित्तविकारनुत् ॥ २ ॥

## ॥ अथ मृतसञ्जीवनी वटिका ॥

यष्टी मधु लवङ्गं च शिलावल्कं त्रुटिस्तथा । सहस्रभावनाः कार्या नवतण्डुलवारिणा ॥ १ ॥ याममात्रं दृढं मर्द्यं वटिका कोलसंमिता । कृष्णकार्पासनीरेण तृष्णादाहज्वराञ्जयेत् ॥२॥ मूर्च्छाभ्रमोग्ररोगं च वान्तिं पित्तं च नाशयेत् । मृतसञ्जीवनी प्रोक्ता पूज्यपादैरुदीरिता ॥ ३ ॥

## ॥ अथ चन्दनादिचूर्णम् ॥

चन्दनोशीरकुष्ठाब्दधात्रीचोरकमुत्पलम् । मधुकं मधुपुष्पं च द्राक्षाखर्जूरकं तथा ॥ १ ॥ चूर्णं कृतं समसितं प्रातः शीताम्बुना पिबेत् । रक्तपित्तं तथा श्वासं पैत्त्यं गुल्मं समुद्धरेत् ॥ २ ॥ अङ्गदाहं शिरोदाहं शिरोविभ्रममेव च । कामलां च प्रमेहांश्च पित्तज्वरविनाशनम् ॥ चन्दनाद्यमिदं चूर्णं पूज्यपादेन भाषितम् ॥ ३ ॥

## ॥ अथ खर्जूरादिचूर्णम् ॥

खर्जूरामलबीजानि पिप्पली च शिलाजतु । एलामधुकपाषाणचन्दनोर्वारुबीजकम् ॥ १ ॥ धान्याकं शर्करायुक्तं पातव्यं ज्येष्ठवारिणा । अङ्गदाहं लिङ्गदाहं गुदवङ्क्षणशुक्रजम् ॥ २ ॥ शर्कराश्मरिशूलघ्नं वृष्यं बलकरं परम् । नाशयेन्मूत्ररोगांश्च तथा शुक्रभवानपि ॥ शर्करासहितं यष्टीकषायं प्रपिबेत्तदा ॥ ३ ॥ ॥ अथ वैद्यजीवनात् ॥ अयि नितम्बिनि खेलनलालसे मधुरवाणि निकाममदालसे । वपुषि दाहवतां विहितं हितं हिमहिमांशुजलैरनुलेपनम् ॥ १ ॥ सहस्रधौतेन घृतेन दिग्धदेहस्य दाहः कृशतां बिभर्ति । अन्याङ्गनासङ्गमसादरस्य स्वीयेषु दारेषु यथाभिलाषः ॥ २ ॥ तृड्दाहमोहाः प्रशमं प्रयान्ति निम्बप्रवालोत्थितफेनलेपात् । यथा नराणां धनिनां धनानि समागमाद्वारविलासिनीनाम् ॥ ३ ॥

## ॥ अथ कुशाद्यतैलघृते ॥

कुशादिशालिपर्णीयजीवकर्षभसाधितम् । तैलं घृतं वा दाहघ्नं वातपित्तविनाशनम् ॥ १ ॥ शाखाश्रयां यथान्यायं रोहिणीं व्यधयेच्छिराम् । रक्तजात्स्ततो दाहः प्रशाम्यति न संशयः ॥ २ ॥ धातुक्षयोत्थदाहं तु जयेदिष्टार्थसाधनैः । क्षीरमांसरसाहारैर्विधिनोक्तेन तत्र च ॥ ३ ॥ पित्तज्वरहरः सर्वः पित्तदाहे विधिर्मतः । औदुम्बरस्य निर्यासः सितया दाहनाशनः । छिन्नासारः सितायुक्तः पित्तज्वरनिषूदनः ॥ ४ ॥

## ॥ अथ रसाः ॥

रसरत्नप्रदीपाद्रसादिगुटिका । रसबलिघनसारचन्दनानां सनलदसेव्यपयोदजी-

वनानाम् । अपहरति गुटी मुखस्थितेयं सकलसमुत्थितदाहमश्रमेण ॥ १ ॥ अथ रसमञ्जर्याश्चन्द्रकलारसः ॥ गगनदरदयुक्तं शुद्धसूतं च गन्धं प्रहरमधुस्तुपिष्टं वल्लयुग्मं नरोऽद्यात् । ज्वरहरगजसिंहः शृङ्गबेरोदकेन प्रथमजनितदाहे तक्रभक्तं च भोज्यम् ॥ १ ॥ मुस्तादाडिमदूर्वोत्थैः केतकीस्तनजद्रवैः । सह देव्याः कुमार्याश्च पर्पटस्यापि वारिणा ॥ २ ॥ रामशीतलिकातोयैः शतावर्या रसेन च । भावयित्वा प्रयत्नेन दिवसे दिवसे पृथक् ॥ ३ ॥ तिक्तागुडूचिकासत्त्वं पर्पटोशीरमाधवी । श्रीगन्धं सारिवा चैषां समानं सूक्ष्मचूर्णितम् ॥ ४ ॥ द्राक्षाधिककषायेण सप्तधा परिभावयेत् । ततो धान्याश्रयं कृत्वा वट्यः कार्याश्चणोपमाः ॥ ५ ॥ अयं चन्द्रकलानाम्ना रसेन्द्रः परिकीर्तितः । सर्वपित्तगदध्वंसी वातपित्तगदापहः ॥ ६ ॥ अन्तर्बाह्यमहादाहविध्वंसनमहाघनः । ग्रीष्मकाले शरत्काले विशेषेण प्रशस्यते ॥ ७ ॥ कुरुते नाग्निमान्द्यं च महातापज्वरं हरेत् । भ्रममूर्च्छाहरश्चाशु स्त्रीणां रक्तं महास्रवम् ॥ ८ ॥ ऊर्ध्वाऽधो रक्तपित्तं च रक्तवान्ति विशेषतः । मूत्रकृच्छ्राणि सर्वाणि नाशयेन्नात्र संशयः ॥ ९ ॥ इति रसाः ॥

## ॥ अथ पथ्यापथ्यम् ॥

शालयः षष्टिका मुद्गा मसूराश्चणका यवाः । धन्वमांसं रसा लाजा मण्डो वै सक्तवस्तथा ॥ १ ॥ शतधौतघृतं दुग्धं नवनीतं पयोभवम् । कूष्माण्डं कर्कटीमोचं पनसं स्वादुदाडिमम् ॥ २ ॥ पटोलं खर्जुरं तुम्बी बिम्बी द्राक्षा कसेरुकम् । इति दाहवतां नृणां पथ्यवर्ग उदाहृतः ॥ ३ ॥ व्यायाममातपं तक्रं ताम्बूलं मधु रामठम् । व्यवायं कटुतिक्तोष्णं दाहवान् परिवर्जयेत् ॥ ४ ॥ इति दाहचिकित्सा ॥

## ॥ अथोन्मादनिदानं चिकित्सा च ॥

मदयन्त्युद्धता दोषा यस्मादुन्मार्गमास्थिताः । मानसोऽयमतो व्याधिरुन्माद इति कीर्तितः ॥ १ ॥ एकैकशः सर्वशश्च दोषैरुन्मार्गगामिभिः । मानसेन च दुःखेन स पञ्चविध उच्यते ॥ २ ॥ विषाद्भवति षष्ठश्च यथास्वं तत्र भेषजम् । स चाप्रवृद्धतरुणो मदसंज्ञां बिभर्ति च ॥ ३ ॥ भयोद्वेगौ तमः शोषो गात्राणामपकर्षणम् । मृत्युत्साहोऽरुचिश्चान्ने स्वप्नेष्वम्बुषु मज्जनम् ॥ ४ ॥ वायुनोन्मादनं चैव भ्रमक्रमगतस्य च । यस्य स्यादचिरेणैवमुन्मादं सोऽपि गच्छति ॥ ५ ॥ विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम् । उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः ॥ ६ ॥ तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य । स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः ॥ ७ ॥

## ॥ अथ साधारणोन्मादलक्षणम् ॥

धीविभ्रमः सत्त्वपरिप्लवश्च पर्याकुला दृष्टिरधीरता च । अबद्धवाक्यं हृदयं च शून्यं सामान्यमुन्मादमदस्य लिङ्गम् ॥ १ ॥

१ (च०) सिता । २ (च०) रत्यर्थमुच्छ्रितैः ।

## ॥ अथ वातोन्मादलक्षणम् ॥

रूक्षाल्पशीतान्नविरेकधातुक्षयोपवासैरनिलः प्रवृद्धः । चिन्तादिदुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम् ॥१॥ अस्थानहासस्मितनृत्यगीतवाद्याङ्गविक्षेपणरोदनानि । पारुष्यकार्श्यारुणवर्णतश्च जीर्णे बलं चानिलजस्य रूपम् ॥ २ ॥

## ॥ अथ पित्तोन्मादलक्षणम् ॥

अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम् । उन्मादमत्युग्रमनात्मकस्य हृदि स्थितं पूर्ववदाशु कुर्यात् ॥१॥ अमर्षसंरम्भविनग्नभावाः सन्तर्जनाभिद्रवणौष्ण्यरोषाः । प्रच्छायशीतान्नजलाभिलाषाः पीता च भा पित्तकृतस्य लिङ्गम् ॥ २ ॥

## ॥ अथ कफोन्मादलक्षणम् ॥

सम्पूरणैर्मन्दविचेष्टितस्य सोष्मा कफो मर्मणि सम्प्रवृद्धः । बुद्धिं स्मृतिं चाप्युपहन्ति चित्तं प्रमोहयन्सञ्जनयेद्विकारम् ॥ १ ॥ वाक्चेष्टितं[1] मन्दमरोचकश्च नारीविविक्तप्रियता च निद्रा । छर्दिश्च लाला च बलं च भुंक्ते[2] नखादिशौक्ल्यं च कफात्मके स्यात् ॥ २ ॥

## ॥ अथ सान्निपातिकमाह ॥

यः सन्निपातप्रभवोऽतिघोरः सर्वैः समस्तैरपि हेतुभिः स्यात् । सर्वाणि रूपाणि बिभर्ति तादृग् विरुद्धभैषज्यविधिर्विवर्ज्यः ॥ १ ॥

## ॥ अथ मनोदुःखजमाह ॥

चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यैर्वित्रासितस्य धनबान्धवसंक्षयाद्वा । गाढं क्षते मनसि च प्रियया रिरंसोर्जायेत चोत्कटतरो मनसो विकारः ॥ १ ॥

## ॥ अथ तस्य रूपमाह ॥

चित्रं ब्रवीति च मनोऽनुगतं विसंज्ञो गायत्यथो हसति रोदिति चातिमूढः ॥ १ ॥

## ॥ अथ विषजमाह ॥

रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः श्यावाननो विषकृतेन भवेद्विसंज्ञः ॥ १ ॥

## ॥ अथासाध्यलक्षणमाह ॥

अवाङ्मुखश्चोन्मुखो वा क्षीणमांसबलो नरः । जागरूको ह्यसन्देहमुन्मादेन विनश्यति ॥ १ ॥ इत्युन्मादनिदानम् ॥

## ॥ अथोन्मादचिकित्सा ॥

आश्वासयेत्सुहृद्वाक्यैर्ब्रूयादिष्टविनाशनम् । दर्शयेदद्भुतं कर्म ताडयेद्वा कशादिभिः

---

१ (च०) वागङ्ग । २ (च०) भुङ्क्ते ।

॥१॥ सुबद्धं विजने गेहे त्रासयेदहिभिर्धिया । बद्धं सर्षपतैलाक्तं न्यसेदुत्तानमातपे ॥ २ ॥ कपिकच्छ्वाथ वा तप्तलोहतैलजलैः स्पृशेत् । वक्त्राभिधाने कूपे वा सततं च निवेशयेत् ॥३॥ सततं धूपयेच्चैनं गोमांसैश्च सपूतिभिः । कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान् ॥ ४ ॥ परस्परप्रतिद्वन्द्वैरेभिरेव शमं नयेत् । जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा ॥ ५ ॥ रक्षेदुन्मादिनं चैव सद्यः प्राणहरं हि यत् । यच्चोपदेक्ष्यते किञ्चिदपस्मारे चिकित्सितम् ॥ ६ ॥ उन्मादे तच्च कर्तव्यं सामान्याद्दोषदुष्ययोः । स्नेहादिना क्रमेणादावुन्मादिनमुपाचरेत् ॥ ७ ॥ बस्तिभिः स्नेहकल्कैश्च निरूहैः स्वेदनाञ्जनैः । वातिके स्नेहपानं प्राग्विरेकः पित्तसम्भवे ॥ कफजे वमनं कार्यं परो बस्त्यादिकः क्रमः ॥ ८ ॥

## ॥ अथ शार्ङ्गधराद्ब्राह्म्यादिस्वरसः ॥

ब्राह्मीकूष्माण्डषड्ग्रन्थाशङ्खिनीस्वरसाः पृथक् । मधुकुष्ठयुताः पीताः सर्वोन्मादापहारिणः ॥ १ ॥

## ॥ अथ ब्राह्म्यादिकल्को वीरसिंहावलोकतः ॥

ब्राह्मीरसः स्यात्सवचः सकुष्ठः सशङ्खपुष्पः ससुवर्णचूर्णः । उन्मादिनामुन्मदमानसानामपस्मृतेर्भूतहतात्मनां हि ॥ नस्येऽञ्जने पानविधौ च शस्तो ब्राह्मीरसोऽयं सवचादिचूर्णः ॥ १ ॥

## ॥ अथ त्र्यूषणादिवर्तिः ॥

त्र्यूषणं हिङ्गुलवणं वचा कटुकरोहिणी । शिरीषनक्तमालानां बीजं श्वेताश्च सर्षपाः ॥ १ ॥ गोमूत्रपिष्टैरेतैस्तु वर्तिर्नेत्राञ्जने हिता । चातुर्थिकमपस्मारमुन्मादं च नियच्छति ॥ २ ॥

## ॥ अथ शिरीषादिः ॥

शिरीषं लशुनं हिङ्गु नागरं मधुकं वचा । कुष्ठं च बस्तमूत्रेण पिष्टं स्यान्नावनाञ्जनम् ॥ १ ॥ तद्वद्व्योषं हरिद्रे द्वे मञ्जिष्ठा गौरसर्षपाः । शिरीषबीजमुन्मादग्रहापस्मारनाशनम् ॥ २ ॥ इति वृन्दात् ॥

## ॥ अथ चिकित्सासारात् सिद्धार्थकादियोगः ॥

सिद्धार्थकवचाहिङ्गु करञ्जो देवदारु च । मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक्कटुत्रयम् ॥ १ ॥ समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम् । बस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥२॥ नस्यमालेपनं चैव स्नानमुद्वर्तनं तथा । अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः ॥ ३ ॥ भूतेभ्यश्च भयं हन्ति[1] राजद्वारे च शस्यते । सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥ ४ ॥

---

१ ( च० ) पानभोजने ।

## ॥ अथ योगतरङ्गिण्याः सितकुसुमबलादियोगः ॥

सितकुसुमबलायाः सार्धकर्षत्रयं यः शिखरिचरणकेन क्षीरपाकेन पक्वम् । पिबति तदनु नित्यं प्रातरुत्थाय शीतं जयति झटिति घोरं व्याधिमुन्मादसंज्ञम् ॥ १ ॥

## ॥ अथ योगतरङ्गिण्या दशमूलादियोगः ॥

दशमूलाम्बु सघृतं युक्तं मांसरसेन वा । ससिद्धार्थकचूर्णं वा केवलं वा नवं घृतम् ॥ १ ॥ उन्मादशान्तये पेयो रसो वा कालशाकजः । प्रयोज्यं सार्षपं तैलं नस्याभ्यञ्जनयोः सदा ॥ २ ॥

## ॥ अथ घृतानि ॥

अथ हिङ्ग्वादिघृतम् वृन्दात् । हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम् । चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥ १ ॥ अथ कल्याणघृतम् ॥ योगतरङ्गिण्याः । विशाला त्रिफला कौन्ती देवदार्वेलवालुकम् । स्थिरानन्ता हरिद्रे द्वे सारिवे द्वे प्रियङ्गुका ॥ १ ॥ नीलोत्पलैलामञ्जिष्ठादन्तीदाडिमवल्कलम् । विडङ्गं पृश्नीपर्णी च कुष्ठचन्दनपद्मकैः ॥ २ ॥ तालीसपत्रं बृहती मालत्याः कुसुमं नवम् । एतैः कर्षसमैः कल्कैर्विंशत्यष्टाभिरेव च ॥ ३ ॥ चतुर्गुणं जलं दत्वा घृतप्रस्थं विपाचयेत् । अपस्मारे ज्वरे शोषे कासे मन्दानले क्षये ॥ ४ ॥ वातरक्ते प्रतिश्याये तृतीयकचतुर्थके । वाताऽर्शोमूत्रकृच्छ्रेषु विसर्पोपहतेषु च ॥ ५ ॥ कण्डूपाण्ड्वामयोन्मादविषमेहगदेषु च । भूतोपहतचित्तानां गण्डदानामचेतसाम् ॥ ६ ॥ शस्तं स्त्रीणां च वन्ध्यानां धन्यमायुर्बलप्रदम् । अलक्ष्मीपापरक्षोघ्नं सर्वग्रहनिवारणम् ॥ कल्याणकमिदं सर्पिः श्रेष्ठं पुंस्त्वप्रदं नृणाम् ॥ ७ ॥ पञ्चमूली च काश्मर्यो रास्नैरण्डत्रिवृद्बला । मूर्वा शतावरी चेति क्वाथैर्द्विपलिकैः शुभैः ॥ ८ ॥ कल्याणकस्य चाङ्गेन चैतसं नाम तद्घृतम् । सर्वचेतोविकाराणां शमनं परमं मतम् ॥ ९ ॥ कार्यः कषायो द्विगुणः क्वाथान्मस्तुकलागुणम् । कल्याणकोक्तकल्केन पादांशेन घृतं पचेत् ॥१०॥ इति योगतरङ्गिण्यां चैतसघृतम् ॥

## ॥ अथ रसरत्नप्रदीपादुन्मादगजकेसरी रसः ॥

सूतं गन्धं शिलातुल्यं स्वर्णबीजं विचूर्ण्य च । भावयेदुग्रगन्धायाः क्वाथे मुनिदिनैः पृथक् ॥ १ ॥ रास्नाक्वाथेन सप्तैव भावयित्वा विचूर्णयेत् । रसः सञ्जायते नूनमुन्मादगजकेसरी ॥२॥ अस्य माषः ससर्पिष्को लीढो हन्ति हठाद्ध्रुवम् । उन्मादाख्यमपस्मारं भूतोन्मादमपि ज्वरम् ॥ ३ ॥ इत्युन्मादगजकेसरी रसः ॥ प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसामपि । धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ १ ॥

## ॥ अथ पथ्यापथ्यम् ॥

गोधूममुद्गारुणशालयश्च धारोष्णदुग्धं शतधौतसर्पिः । घृतं नवीनं च पुरातनं च

१ ( घ० ङ० ) केसरम् । २ ( च० ) दन्तादाना—।

कूर्मामिषं धन्वरसा रसाला ॥ १ ॥ पुराणकूष्माण्डफलं पटोलं ब्राह्मीदलं वास्तुकतण्डुलीयम् । द्राक्षा कपित्थं पनसं च वैद्यैर्विधेयमुन्मादगदेषु पथ्यम् ॥ २ ॥ मद्यं विरुद्धाशनमुष्णभोजनं निद्राक्षुधावृद्कृतवेगधारणम् । तिक्तानि तीक्ष्णानि भिषक् समादिशेदुन्मादरोगापहतेषु गर्हितम् ॥ ३ ॥ इत्युन्मादचिकित्सा ॥

## ॥ अथ भूतोन्मादनिदानमाह ॥

अमर्त्यवाग्विक्रमवीर्यचेष्टो ज्ञानादिविज्ञानबलादिभिर्यः । उन्मादकालो नियतश्च यस्य भूतोत्थमुन्मादमुदाहरन्ति ॥ १ ॥

## ॥ अथ देवजुष्टमाह ॥

सन्तुष्टः शुचिरतिदिव्यमाल्यगन्धो निस्तन्द्रोऽत्यवितथसंस्कृताभिभाषी । तेजस्वी स्थिरनयनो वरप्रदाता ब्रह्मण्यो भवति च देवभूतजुष्टः ॥ १ ॥

## ॥ अथासुरजुष्टमाह ॥

संस्वेदी द्विजगुरुदेवदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः । सन्तुष्टो न भवति चान्नपानजातैर्दुष्टात्मा भवति स देवशत्रुजुष्टः ॥ १ ॥

## ॥ अथ गन्धर्वजुष्टमाह ॥

हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः । नृत्यन्वै प्रहसति चारु चाल्पशब्दं गन्धर्वग्रहपरिपीडितो मनुष्यः ॥ १ ॥

## ॥ अथ यक्षग्रहजुष्टमाह ॥

ताम्राक्षः प्रियतनुरक्तवस्त्रधारी गम्भीरो[1] द्रुतगतिरल्पवाक् सहिष्णुः । तेजस्वी वदति च किं ददामि कस्मै यो यक्षग्रहपरिपीडितो मनुष्यः ॥ १ ॥

## ॥ अथ पितृग्रहजुष्टमाह ॥

प्रेतानां स दिशति संस्तरेषु पिण्डान् शान्तात्मा[2] जलमपि चापसव्यहस्तः । मांसेप्सुस्तिलगुडपायसाभिकामस्तद्भक्तो भवति पितृग्रहाभिजुष्टः ॥ १ ॥

## ॥ अथ सर्पग्रहजुष्टमाह ॥

यस्तूर्व्यां प्रसरति सर्पवत्कदाचित्सृक्किण्यौ विलिहति जिह्वया तथैव । क्रोधालुर्गुडमधुदुग्धपायसेप्सुर्विज्ञेयो भवति भुजङ्गमेन जुष्टः ॥ १ ॥

## ॥ अथ राक्षसजुष्टमाह ॥

मांसासृग्विविधसुराविकारलिप्सुर्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः । क्रोधान्धो विपुलबलो निशाविहारी शौचद्विट् स भवति[3] राक्षसाभिजुष्टः ॥ १ ॥

---

१ (च०) गम्भीराद्भुत—२ (च०) भ्रान्तात्मा । ३ (च०) वक्तः ।

## ॥ अथ पिशाचजुष्टमाह ॥

उद्धस्तः कृशपरुषश्चिरप्रलापी दुर्गन्धो भृशमशुचिस्तथापि लोलः । बह्वाशी विजनवनान्तरोपसेवी व्याचेष्टन्भ्रमति रुदन्पिशाचजुष्टः ॥ १ ॥

## ॥ अथ तस्यासाध्यलक्षणमाह ॥

स्थूलाक्षो द्रुतमटनः स फेनवामी निद्रालुः पतति च कम्पते च योऽति । यश्चाद्रिद्विरदनगादिविच्युतः स्यात्सोऽसाध्यो भवति तथा त्रयोदशेऽब्दे ॥ १ ॥

## ॥ अथ देवग्रहाणां ग्रहणकालमाह ॥

देवग्रहाः पौर्णमास्यामसुराः सन्ध्ययोरपि । गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यथ ॥ १ ॥ पितरः कृष्णपक्षे स्युः पञ्चम्यामपि चोरगाः । रक्षांसि रात्रौ पैशाचाश्चतुर्दश्यां विशन्ति हि ॥ २ ॥ दर्पणादौ यथा छाया शीतोष्णं प्राणिनो यथा । स्वमणिं भास्करार्चिश्च तथा देहं च देहधृक् ॥ ३ ॥ प्रविशन्ति न दृश्यन्ते ग्रहास्तद्वच्छरीरिणाम् । प्रविश्याशु शरीरे हि पीडां कुर्वन्ति दुःसहाम् ॥ ४ ॥ तपांसि तीव्राणि तथैव दानं व्रतानि धर्मा नियमाश्च सत्यम् । गुणास्तथाष्टावपि तेषु नित्यं व्यस्ताः समस्ताश्च यथा प्रभावः ॥ ५ ॥ अष्टौ ग्रहास्तत्परिचारकाश्च ते तुल्यसत्त्वेषु वसन्ति दुष्टाः । त्रयोदशाब्दे च भवन्त्यसाध्या यथास्वभावं परिवर्तयन्ति ॥ ६ ॥ इति भूतोन्मादनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

बुद्ध्वा दोषं वयः सात्म्यं देशकालं बलाबलम् । चिकित्सितमिदं कुर्यादुन्मादे दोषभूतजे॥१॥देवर्षिपितृगन्धर्वैरुन्मत्तेषु च बुद्धिमान् । त्यजेन्नस्याञ्जनादीनि तीक्ष्णानि क्रूरकर्म च । सर्पिष्पानादिगायत्रीहोममन्त्रादिरिष्यते ॥ २ ॥ पूजाबल्युपहारशान्तिविषयो होमेष्टिमन्त्रक्रिया दानं स्वस्त्ययनं व्रतादिनियमः सत्यं जपो मङ्गलम् । प्रायश्चित्तविधानमञ्जलिरथो रत्नौषधीधारणं भूतानामधिपस्य विष्टपपतेर्गौरीपतेरर्चनम् ॥ ये च स्युर्भुवि गुह्यकाश्च प्रमथास्तेषां समाराधनं देवब्राह्मणपूजनं च शमयेदुन्मादमागन्तुकम् ॥३॥ शिरीषनक्तमालानां बीजानि मधुसर्पिषा । भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरुच्यते ॥ ४ ॥ ऋक्षजम्बूकरोमाणि शल्लकीलशुनं तथा । हिङ्गु मूत्रं च बस्तस्य धूपमस्य प्रयोजयेत् ॥ ५ ॥ धूपेन शाम्यति क्षिप्रं बलवानपि यो ग्रहः । शिरीषपुष्पं लशुनं शुण्ठी सिद्धार्थकं वचा ॥ ६ ॥ मञ्जिष्ठा रजनी कृष्णा बस्तमूत्रेण पेषयेत् । वटी छायाविशुष्का स्यात् सा हिता नावनाञ्जने॥७॥इति वृन्दात् । अथ माहेश्वरधूपो योगशतात् । कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिण्डीतकत्वङ्मांसीवृषदंश-

१ ( च० ) उद्धस्तः । २ ( च० ) परुषोऽचिरप्रलापी । ३ ( च० ) फेनलेही । ४ ( च० ) मन्त्रा । ५ ( च० ) शल्लकीलसमम् ।

विण्नखवचाकेशाहिनिर्मोचनैः । नागेन्द्रद्विजशृङ्गहिङ्गुमरिचैस्तुल्यैस्तु धूपः कृतः स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नः स्मृतः ॥ १ ॥

## ॥ अथ महापैशाचघृतम् । योगतरङ्गिण्याः ॥

जटिला पूतना केशी मर्कटी चारटी वचा । त्रायमाणा जया वीरा चोरकं कटुरोहिणी॥१॥कायस्था शूकरी छत्रा सातिच्छत्रा पलङ्कषा । महापुरुषदन्ता च वयस्था नाकुलीद्वयम् ॥ २ ॥ कटम्भरा वृश्चिकाली स्थिरा चैतैर्घृतं पचेत् । तत्तु चातुर्थिकोन्मादग्रहापस्मारनाशनम् ॥ ३ ॥ महापैशाचकं नाम घृतमेतद्यथामृतम् । बुद्धिमेधास्मृतिकरं बालानां चाङ्गवर्धनम् ॥ ४ ॥ इति महापैशाचघृतम् ॥ कल्याणकं प्रयुञ्जीत महद्वा चैतसं घृतम् । तैलं नारायणं वापि महानारायणं तथा ॥ १ ॥अथ रसरत्नप्रदीपाद्भूतभैरवरसः ॥ रसः सतालः सशिलः सलोहः स्रोतोऽञ्जनं सार्कमिदं हि गन्धम् । पिष्टं नृमूत्रेण समं समन्ताद्देयो द्विभागोऽथ बलिः पचेच्च ॥ १ ॥ लोहे क्षणं हन्ति घृतेन माषोऽपस्मारमप्युन्मदमानसत्वम् । पिबेदनुत्र्यूषणहिङ्गुयुक्तं सर्पिर्नृमूत्रं रुचकेन सार्धम् ॥ २ ॥ भूतोन्मादेषु सर्वेषु रसोऽयं भूतभैरवः । स्वर्णजैः पञ्चभिर्बीजैर्देयः सर्पिर्विमिश्रितः ॥ ३ ॥ इति भूतभैरवः । इति भूतोन्मादचिकित्सा ॥

---

## ॥ अथापस्मारनिदानमाह ॥

चिन्ताशोकादिभिर्दोषाः क्रुद्धा हृत्स्रोतसि स्थिताः । कृत्वा स्मृतेरपध्वंसमपस्मारं प्रकुर्वते ॥ १ ॥

## ॥ अथ सामान्येन तल्लक्षणमाह ॥

तमःप्रवेशः संरम्भो दोषोद्रेकहतस्मृतिः । अपस्मार इति ज्ञेयो गदो घोरश्चतुर्विधः ॥ वातपित्तकफैः सर्वैर्दोषैः स स्याच्चतुर्विधः ॥ १ ॥

## ॥ अथ तस्य पूर्वरूपमाह ॥

हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता । निद्रानाशश्च तस्मिंस्तु भविष्यति भवन्त्यथ ॥ १ ॥

## ॥ अथ वातिकमाह ॥

कम्पते प्रदशेद्दन्तान्फेनोद्वामी श्वसित्यपि । परुषारुणकृष्णानि पश्येद्रूपाणि चानिलात् ॥ १ ॥

## ॥ अथ पैत्तिकमाह ॥

पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः । स तृष्णोष्णानिलव्याप्तलोकदर्शी च पैत्तिकः ॥

---

१ ( च० ) हेतुचतुष्टयात् । २ ( क० ) व्याप्तम् ।

## ॥ अथ श्लैष्मिकमाह ॥

शुक्लफेनाङ्गवक्त्राक्षः शीतो हृष्टाङ्गजो गुरुः । पश्येद्रूपाणि शुक्लानि श्लैष्मिको मुच्यते चिरात् ॥ १ ॥

## ॥ अथ सान्निपातिकमाह ॥

सर्वैरेभिः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः । अपस्मारः स चासाध्यो यः क्षीणश्चानवश्च यः ॥ १ ॥

## ॥ अथासाध्यमाह ॥

प्रस्फुरन्तं स बहुशः क्षीणं प्रचलितभ्रुवम् । नेत्राभ्यां च विकुर्वाणमपस्मारो विनाशयेत् ॥ १ ॥

## ॥ अथ कालनियममाह ॥

पक्षाद्वापि दशाहाद्वा मासाद्वा कुपिता मलाः । अपस्माराय कुर्वन्ति वेगं किञ्चिदथोत्तरम् ॥ १ ॥ देवे वर्षत्यपि यथा भूमौ बीजानि कानि चित् । शरदि प्रविरोहन्ति तथा रोगसमुद्भवः ॥ २ ॥ इत्यपस्मारनिदानम् ॥.

## ॥ अथापस्मारचिकित्सा ॥

पूर्वं युञ्ज्यादपस्मारे छर्दनादीनि बुद्धिमान् । वातिकं बस्तिभिः प्रायः पैत्तिकं च विरेचनैः ॥ कफजं वमनप्रायैरपस्मारमुपाचरेत् ॥ १ ॥

## ॥ अथ करञ्जादियोगः ॥

करञ्जदारुसिद्धार्थकटभीरामठं वचा । समङ्गा त्रिफला व्योषं प्रियङ्गुश्च समांशकः ॥ १ ॥ बस्तमूत्रेण सम्पिष्य नस्यपानाञ्जनादिषु । योज्यो योगोऽयमुन्मादेऽपस्मारे भूतरोगिषु ॥ २ ॥

## ॥ अथ योगतो निर्गुण्ड्यादिनावनम् ॥

निर्गुण्डीभववन्दाकनावनस्योपयोगतः । उपैति सहसा नाशमपस्मारो न संशयः॥१॥

## ॥ अथ यष्ट्याह्वादिनावनाञ्जने चिकित्सासारात् ॥

यष्टीहिङ्गुवचावज्रीशिरीषलशुनामयैः । साजमूत्रैरपस्मारे सोन्मादे नावनाञ्जने॥१॥

## ॥ अथ चिकित्सारादञ्जनधूपने ॥

पुष्पोद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् । तदेव सर्पिषा युक्तं धूपनं परमं हितम् ॥ १ ॥ अथ मनोह्वाद्यञ्जनम् ॥ मनोह्वाताक्ष्यैकं चैव शकृत्पारावतस्य च । अञ्जनं हन्त्यपस्मारमुन्मादं च विशेषतः॥ १ ॥ अथ श्वशृगालादि । वृन्दात् ।

---

१ ( च० ) क्षीणस्या- । २ ( च० ) पुष्योद्धृतम् ।

श्वशृगालबिडालानां कपिलानां गवामपि । पित्तानि नस्यतो हन्युरपस्मारं पृथक् पृथक् ॥ १ ॥ अथ त्रपुसीनस्यम् ॥ अरण्यत्रपुसीचूर्णं नस्येनापस्मृतिं जयेत् ॥ १ ॥

## ॥ अथ मधुवचायोगः ॥

यः खादेत्क्षीरभक्ताशी माक्षिकेण वचारजः । अपस्मारं महाघोरं सुचिरोत्थं जयेद्ध्रुवम् ॥ १ ॥

## ॥ अथ मुस्तकमूलयोगः ॥

उत्तरदिग्गतमुस्तकमूलं बुद्ध्वा[1] समुद्धृतं पुष्ये । पीतं पयसा हन्यादपस्मृतिं गोः सवर्णवत्सायाः ॥ १ ॥

## ॥ अथ योगतः कूष्माण्डादिः ॥

कूष्माण्डकगिरोत्थेन रसेन परिपेषितम् । अपस्मारविनाशाय यष्ट्याह्वं स पिबेत्र्यहम् ॥ १ ॥

## ॥ अथ घृतानि ॥

अथ चिकित्सासाराद्रसायनभैरवः ॥ वचामृतव्योपमधूकसाररुद्राक्षसिन्धूद्भवबार्हतानि । फलं समुद्रस्य रसोनकल्कं ध्मातं हि नासापुटमध्यदेशे ॥ १ ॥ अपस्मृतिश्लेष्ममरुच्छिरोरुक्प्रलापतन्द्राभ्रमजाड्यमोहान् । स संनिपातं श्रुतिकाक्षिभङ्गान् सपीनसं हन्ति हलीमकं च ॥ २ ॥ रसायनं भैरवनामधेयं ज्ञातं विचारात् कविविठ्ठलेन ॥ ३ ॥ अथ ब्राह्मीघृतम् ॥ ब्राह्मीरसे वचाकुष्ठशङ्खपुष्पीभिरेव च । पक्कं पुरातनं सर्पिरपस्मारहरं ध्रुवम् ॥ १ ॥ अथ सैन्धवाद्यं घृतम् ॥ घृतसैन्धवहिङ्गुभ्यः कर्षैर्वा तच्चतुर्गुणैः । मूत्रैः सिद्धमपस्मारत्दद्ग्राहग्रामनाशनम् ॥ १ ॥ अथ स्वल्पपञ्चगव्यघृतम् ॥ गोशकृद्रसदध्यम्लक्षीरमूत्रैः समं घृतम् । सिद्धं चातुर्थिकोन्मादग्रहापस्मारनाशनम् ॥ १ ॥ अथ वृन्दात् कूष्माण्डादि घृतम् ॥ कूष्माण्डकरसे सर्पिरष्टादशगुणे पचेत् । यष्ट्याह्वकल्के तत्सिद्धमपस्मारहरं परम् ॥ १ ॥

## ॥ अथ तैलचूर्णानि ॥

अथ योगत० कटभ्यादितैलम् ॥ कटभीनिम्बककुद्धुममधुशिग्रुत्वचारसे । सिद्धं मूत्रयुतं तैलं लेपाद्धन्यादपस्मृतिम् ॥१॥ अथ वृन्दात् सार्षपं तैलम् ॥ अभ्यङ्गे सार्षपं तैलं बस्तमूत्रे चतुर्गुणे । सिद्धं स्याद्गोशकृन्मूत्रे स्नानाच्छादनमेव च[2] ॥ १ ॥ अथ धूपनम् ॥ नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः । तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥१॥ दुश्चिकित्स्यो ह्यपस्मारश्चिरकारी महागदः । तस्माद्रसायनैरेतैः प्रायशः समुपाचरेत् ॥ २ ॥ त्दत्कम्पोऽक्षिरुजा यस्य स्वेदो हस्तादिशीतता । दशमूलीजलं तस्य कल्याणाज्यं च योजयेत् ॥ ३ ॥ अथ कल्याणकं चूर्णम् ॥ पञ्चकोलं समरिचं

---

१ (च०) बुद्ध्या । २ (च०) स्नानोद्वर्तनमेव च ।

त्रिफला बिडसैन्धवम् । कृष्णाविडङ्गपूतीकयवानीधान्यजीरकम् ॥ १ ॥ पीतमुष्णाम्बुना चूर्णं वातश्लेष्मामयापहम् । अपस्मारे तथोन्मादे दुर्नामग्रहणीगदे । एतत्कल्याणकं चूर्णं नष्टस्याग्नेश्च दीपनम् ॥ २ ॥ इति कल्याणकं चूर्णम् ॥

## ॥ अथ जलमृतलक्षणम् ॥

विष्टब्धपायुमूर्धाक्षं शीतपादकरोदरम् । विद्याज्जलमृतं जन्तुं शूनपक्वाभिमेहनम् ॥ १ ॥

## ॥ अथ रसरत्नप्रदीपात्स्मृतिसागररसः ॥

रसगन्धकतालानां सशिलाताम्रभस्मनाम् । शुद्धानां मूर्च्छितानां च चूर्णं भाव्यं वचामृतैः ॥ १ ॥ एकविंशतिधा पश्चाद्ब्राह्मी वारा तथैव च । कटभीबीजतैलेन भावयेदेकवारकम् ॥ २ ॥ स्मृतिसागरनामायं रसोऽपस्मारनाशनः । सर्पिषा माषमात्रोऽयं भुक्तो हन्यादपस्मृतिम् ॥ ३ ॥ इति स्मृतिसागररसः । उन्मादोक्तो विधिः सर्वो ह्यपस्मारे प्रयुज्यते ॥ ४ ॥

## ॥ अथ पथ्यापथ्यम् ॥

लोहिताः शालयो मुद्गा गोधूमाः प्रतप्तं हविः । कूर्मामिषं धन्वरसा दुग्धं ब्राह्मीदलं वचा ॥ १ ॥ पटोलं वृद्धकूष्माण्डं वास्तुकं स्वादु दाडिमम् । सौभाञ्जनं पयः पेटी द्राक्षा धात्री परूषकम् । अपस्मारगदे नृणां पथ्यमेतदुदीरितम् ॥ २ ॥ मद्यं मत्स्यं विरुद्धान्नं तीक्ष्णोष्णं गुरुभोजनम् । अतिव्यवायमायासं पूज्यपूजाव्यतिक्रमम् ॥ ३ ॥ पत्रशाकानि सर्वाणि बिम्बीमाषाढकं फलम् । तृषानिद्राक्षुधावेगानपस्मारी नरस्त्यजेत् ॥ ४ ॥ इत्यपस्मारचिकित्सा ।

## ॥ अथ वातरोगनिदानं व्याख्यास्यामः ॥

पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः । वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवत् ॥ १ ॥

## ॥ अथ सम्प्राप्तिपूर्वकनिदानमाह ॥

शक्त्यानुमासशक्त्याथ ज्वरादौ प्रतिपद्यते । सर्वव्याधिनिदानं वा वातव्याधिनिरूपणम् ॥ १ ॥ रूक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः । विषमादुपचाराच्च दोषासृक्स्रावणादपि ॥ २ ॥ लङ्घनप्लवनात्यध्वव्यायामातिविचेष्टितैः । धातूनां संक्षयाच्चिन्ताशोकरोगातिकर्षणात् ॥ ३ ॥ वेगसन्धारणादामादभिघातादभोजनात् । मर्मघाताद्गजोष्ट्राश्वशीघ्रयानापसर्पणात् ॥ ४ ॥ एतैः कारणैर्व्याधीन् करोतीत्याह ॥ देहे स्रोतांसि रिक्तानि पूरयित्वानिलो बली । करोति विविधान्व्याधीन्सर्वाङ्गैकाङ्गसंश्रयान् ॥ अव्यक्तं लक्षणं तेषां पूर्वरूपमिदं स्मृतम् ॥ ५ ॥

---

१ (च०) प्रतनम् । २ (च०) रक्तानि ।

## ॥ अथ तदेव व्यक्तरूपमाह ॥

आत्मरूपं तु तद्व्यक्तमपाये लघुता पुनः। सङ्कोचः पर्वणां स्तम्भो भङ्गोऽस्थ्नां पर्वणामपि ॥ लोमहर्षः प्रलापश्च पाणिपृष्ठशिरोग्रहः ॥ १ ॥ खाञ्ज्यं पाङ्गुल्यकुब्जत्वं शोषोऽङ्गानामनिद्रता । गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता ॥ २ ॥ शिरोनासाक्षिजत्रूणां ग्रीवायाश्चापि हुण्डनम् । भेदस्तोदार्तिराक्षेपो मोहश्चायास एव च ॥ ३ ॥ एवंविधानि रूपाणि करोति कुपितोऽनिलः । हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत् ॥ ४ ॥

## ॥ अथ स्थानविशेषमाह ॥

वायुरामाशये क्रुद्धश्छर्द्यादीन् कुरुते सदा । तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः ॥ वर्ध्मत्हृद्रोगगुल्मार्शः पार्श्वशूलं च मारुते ॥ १ ॥

## ॥ अथ सर्वाङ्गकुपितलक्षणमाह ॥

सर्वाङ्गकुपिते वाते गात्रस्फुरणभञ्जनम् । वेदनाभिः परीतस्य स्फुटन्तीवास्य सन्धयः ॥ १ ॥

## ॥ अथ पक्वाशयकुपितस्य लक्षणमाह ॥

ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः । जङ्घोरुत्रिकपार्श्वेषु रुक् शोफश्च गुदस्थिते ॥ १ ॥

## ॥ अथामाशयकुपितमाह ॥

रुक् पार्श्वोदरहृन्नाभौ तृष्णोद्गारविषूचिकाः । कासः कण्ठास्यशोषश्च छर्दिश्चामाशये स्थिते ॥ १ ॥

## ॥ अथ पक्वाशयगतलक्षणमाह ॥

पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च । कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥ १ ॥

## ॥ अथ श्रोत्रादिगतलक्षणमाह ॥

श्रोत्रादिष्विन्द्रियवधं कुर्यात्क्रुद्धः समीरणः ॥ १ ॥ अथ धातुकुपितलक्षणम् । तत्र रसकुपितलक्षणमाह ॥ त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते । आतन्यते सरागा च पर्वरुक् त्वग्गतेऽनिले ॥ १ ॥ अश्रद्धा गौरवालस्यं ज्वरो रसगतेऽनिले । रुजस्तीव्राः ससन्तापा वैवर्ण्यं कृशतारुचिः ॥ गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥३॥ अथ मांसमेदोगतमाह ॥ सर्वाङ्गं तुद्यते दण्डस्तब्धमुष्टिहतं तथा । सरुक् स्तिमितमत्यर्थं मांसमेदोगते ऽनिले ॥ १ ॥ अथ मज्जाकुपितमाह ॥ भेदोऽ-

---

१ (च०) जृम्भणम् । २ (च०) हृत्पृष्ठ । ३ (च०) श्वास । ४ (च०) स्तब्धं दण्डमुष्टिहतं यथा ।

स्थिपर्वणां सन्धिशूलं मांसबलक्षयः । अस्वप्नः सतता रुक्च मज्जास्थिकुपितेऽनिले ॥ १ ॥ अथ शुक्रगतमाह ॥ क्षिप्रं मुञ्चति बध्नाति गर्भं शुक्रमथापि वा । विकृतिं जनयेद्वापि शुक्रस्थः कुपितोऽनिलः ॥ १ ॥ अथ शिरागतमाह ॥ कुर्याच्छिरागतः शूलं शिराकुञ्चनपूरणम् । बाह्याभ्यन्तरमायामं खल्लीं कुब्जत्वमेव च ॥ १ ॥ अथ स्नायुगतमाह ॥ सर्वाङ्गैकाङ्गरोगांश्च कुर्यात्स्नायुगतोऽनिलः ॥ १ ॥ अथ सन्धिगतमाह ॥ हन्ति सन्धिगतः सन्धीञ्छूलशोफौ करोति च । प्राणोदानौ समानश्च व्यानश्चापान एव च ॥ १ ॥ स्थानस्था मारुताः पञ्च व्यापयन्ति शरीरिणाम् । हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले ॥ २ ॥ उदानः कण्ठदेशे स्याद्यानः सर्वशरीरगः । प्राणे पित्तावृते छर्दिर्दाहश्चैवोपजायते ॥ ३ ॥ दौर्बल्यं सदनं तन्द्रा वैरस्यं च कफावृते । उदाने पित्तयुक्ते तु दाहो मूर्च्छा भ्रमः क्लमः ॥ ४ ॥ अस्वेदहर्षौ मन्दाग्निः शीतता च कफावृते । स्वेददाहौष्ण्यमूर्च्छाः स्युः समाने पित्तसंयुते ॥ ५ ॥ कफेन सङ्गो विण्मूत्रे गात्रहर्षश्च जायते । अपाने पित्तसंयुक्ते दाहौष्ण्यं रक्तमूत्रता ॥ ६ ॥ अधः काये गुरुत्वं च शीतता च कफावृते । व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ॥ ७ ॥ स्तम्भनो दण्डकश्चापि शोफशूलौ कफावृते । गुरूणि सर्वगात्राणि स्तम्भनं चास्थिपर्वणाम् ॥ लिङ्गं कफावृते व्याने चेष्टास्तम्भस्तथैव च ॥ ८ ॥

## ॥ अथाक्षेपकादिरोगलक्षणान्याह ॥

यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः । तदा क्षिपत्याशुमुहुर्मुहुर्देहं बहिश्चरः । मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः ॥ १ ॥ क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रपद्यते । पीडयन्हृदयं गत्वा शिरः शङ्खौ च पीडयेत् ॥ २ ॥ धनुर्वन्नामयेद् गात्राण्याक्षिपेन्मोहयेत्ततः । अथास्यैवावस्थाविशेषावपतन्त्रकापतानकावाह । स कृच्छ्रादुच्छ्वसित्युच्चैः स्तब्धाक्षोऽथ निमीलकः । कपोत इव कूजेच्च विसंज्ञः सोऽपतन्त्रकः ॥ १ ॥ दृष्टिं संस्तभ्य संज्ञां च हत्वा कण्ठेन कूजति । हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः ॥ २ ॥ मर्माश्रितं व्रणं प्राप्य वायुवत्सर्वदेहगः । तेन गौरो भवेद्देहः प्राणघ्नमपि तं त्यजेत् ॥ वायुना दारुणं प्राहुरेके तमपतानकम् ॥ ३ ॥ अथ तेषां लक्षणमाह । तत्र दण्डापतानकमाह । कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति । दण्डवत् स्तम्भयेद्देहं स तु दण्डापतानकः ॥ १ ॥ धनुस्तुल्यं नमेद्यस्तु स धनुस्तम्भसंज्ञकः । विवर्णबद्धवदनः स्रस्ताङ्गो नष्टचेतनः ॥ प्रस्विद्यंश्च धनुस्तम्भी दशरात्रं न जीवति ॥ २ ॥ अथाभ्यन्तरायामस्य साधारणं रूपमाह ॥ अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः । स्नायुप्रतानमनिलो यदा क्षिपति वेगवान् ॥ १ ॥ विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन् । अभ्यन्तरं धनुरिव यदा नमति मानवः ॥ तदा सोऽभ्यन्तरायामं कुरुते मारुतो बली ॥ २ ॥ अथ बहिरायामलक्षणम् ॥ बाह्यस्नायुप्रतानस्थो बाह्यायामं करोति च । तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनम् ॥ १ ॥ अथ

निमित्तभेदेन चतुर्थाक्षेपमाह ॥ कफपित्तान्वितो वायुर्वायुरेव च केवलः । कुर्यादाक्षेपकं त्वन्यं चतुर्थमभिघातजम् ॥ १ ॥ अथासाध्यमाह । गर्भपातनिमित्तश्च शोणितातिस्रवाच्च यः । अभिघातनिमित्तश्च न सिध्यत्यपतानकः ॥ १ ॥ अथ पक्षवधमाह ॥ गृहीत्वार्धं तनोर्वायुः शिरः स्नायूर्विशोष्य च । पक्षमन्यतरं हन्ति सन्धिबन्धान् विमोक्षयन् ॥ १ ॥ कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः । एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ॥ २ ॥ अथ तस्यैव सर्वाङ्गवधमाह ॥ सर्वाङ्गरोगं तद्वच्च सर्वकायाश्रितेऽनिले । दाहसन्तापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ॥ १ ॥ शैत्यशोफगुरुत्वानि तस्मिन्नेव कफावृते । शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः ॥ २ ॥ साध्यमन्येनसंयुक्तमसाध्यं क्षयहेतुकम् । गुर्विणीसूतिकाबालवृद्धक्षीणेष्वसृक्क्षयात् ॥ पक्षाघातं परिहरेद्वेदनारहितं च यत् ॥ ३ ॥ अथार्दितलक्षणमाह ॥ उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च । हसतो जृम्भतो भाराद्विषमाच्छयनासनात् ॥१॥ शिरोनासौष्ठचुबुकललाटेक्षणसन्धिषु । अर्दयत्यनिलो वक्त्रमर्दितं जनयेत्ततः ॥२॥ अभिघातादिवास्वापाज्जिह्वानिर्लेखनात्पुनः । व्रणपाकात्कराघश्च शिरोव्यधनतस्तथा ॥ ३ ॥ मर्मसंछेदनान्नेत्रकर्णनासाविकर्षणात् । तीक्ष्णमद्यासवापानाद्धारणाद्वेगनिग्रहात् ॥४॥ वर्तमानोऽनिलस्तेषु वक्त्रं मर्दयति ध्रुवम् । वक्रीभवति वक्त्रार्धं ग्रीवा चाप्यपवर्धते ॥५॥ शिरश्चलति वाक्सङ्गो नेत्रादीनां च वैकृतम् । ग्रीवाचुबुकदन्तानां तस्मिन्पार्श्वे च वेदना ॥६॥ तस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम् । वायुरूर्ध्वं त्वचि स्वप्नं तोदं मन्याहनुग्रहौ ॥७॥ तमर्दितमिति प्राहुर्व्याधिं व्याधिविशारदाः । वातात्पित्तात्कफाच्चैव त्रिधा स स्यात्समासतः ॥८॥ लालातिप्रस्रवः कम्पः स्फुरणं हनुसङ्ग्रहः । ओष्ठयोः श्वयथुः शूलमर्दिते वातजे भवेत् ॥९॥ पीतमास्यं ज्वरस्तृष्णा पित्ते मूर्च्छा च धूपनम् । गण्डे शिरसि मन्यायां शोफः स्तम्भः कफोद्भवे ॥ १० ॥ अथ तस्यासाध्यलक्षणमाह ॥ क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः । न सिध्यत्यर्दितं गाढं त्रिवर्षं वेपनस्य च ॥ गते वेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपकादिषु ॥ १ ॥ अथ हनुस्तम्भमाह ॥ जिह्वानिर्लेखनाच्छुष्कभक्षणादभिघाततः । कुपितो हनुमूलस्थः स स्रंसित्वानिलो हनुम् ॥ १ ॥ करोति विवृतास्यत्वमथवा संवृतास्यताम् । हनुग्रहः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम् । हनुग्रहे पूर्वरूपं हनुस्तम्भश्च वेपथुः ॥२॥ अथ मन्यास्तम्भमाह॥ दिवास्वप्नासनस्थानविकृतोऽर्ध्वनिरीक्षणैः । मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणा वृतः ॥ १ ॥ अथ जिह्वास्तम्भमाह ॥ वाग्वाहिनीशिरासंस्थो जिह्वां स्तम्भयतेऽनिलः । जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ॥१॥ हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् । क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत् ॥ २ ॥ अथ शिरोग्रहमाह । रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः शिराः । रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिरोग्रहः ॥१॥ अथ गृध्रसीमाह ॥ स्फिक्पूर्वं कटिपृष्ठोरुजानुजङ्घापदं क्रमात् । गृध्रसीस्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥ १ ॥ वाताद्वातकफाभ्यां वा विज्ञेया सा द्विधा पुनः । वातजायां भवेत्तोदो देहस्यापि प्रवक्रता ॥ २ ॥ जानुकट्यूरुसन्धीनां

स्फुरणं सुप्तता भृशम् । वातश्लेष्मोद्भवायां तु स्तैमित्यं वह्निमार्दवम् ॥ ३ ॥ तन्द्रा मुखप्रसेकश्च भक्तद्वेषस्तथैव च । वाताद्वातकफात्तन्द्रा गौरवारोचकान्विता ॥ ४ ॥ ॥ अथ विश्वाचीमाह ॥ तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः । बाह्वोः कर्मक्षयकरी विश्वाचीति हि सोच्यते ॥ १ ॥ अथ क्रोष्टुशीर्षमाह ॥ वातशोणितजः शोथो जानुमध्ये महारुजः । ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत् ॥१॥ अथ खञ्जपङ्ग्वोर्लक्षणमाह ॥ वायुः सक्थ्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा । खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥ १ ॥ अथ कलायखञ्जमाह ॥ प्रक्रामन्वेपते यस्तु खञ्जन्निव च गच्छति । कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ १ ॥ अथ वातकण्टकमाह ॥ रुक्पादे विषमे न्यस्ते श्रमाद्वा जायते यदा । वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥ १ ॥ न्यस्ते तु विषमे पादे रुजः कुर्यात्समीरणः । पादकण्टक इत्येष विज्ञेयस्तलकाश्रितः ॥ २॥ अथ पाददाहमाह ॥ पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः । विशेषतश्चङ्क्रमणात्पाददाहं तमादिशेत् ॥ १ ॥ अथ पादहर्षमाह ॥ हृष्यतश्चरणौ यस्य भवतस्तु प्रसुप्तवत् । पादहर्षः स विज्ञेयः कफवातप्रकोपजः ॥ १ ॥ अथांसशोषमाह ॥ अंसदेशे स्थितो वायुः शोषयित्वांसबन्धनम् ॥ अथावबाहुकमाह ॥ शिराश्चाकुञ्च्य तत्रस्थो जनयत्यवबाहुकम् ॥ १ ॥ अथ मूकमिम्मिनगद्गदानाह ॥ आवृत्य सकफो वायुर्धमनीः शब्दवाहिनीः । नरान्करोत्यक्रियकान्मूकमिम्मिनगद्गदान् ॥ १ ॥ अथोर्ध्ववातमाह ॥ अधः प्रतिहतो वायुः श्लेष्मणा मारुतेन वा । करोति भृशमुद्गारमूर्ध्ववातः स उच्यते ॥ १ ॥ अथ तूनीलक्षणमाह ॥ अधो या वेदना याति वर्चोमूत्राशयोत्थिता । भिनत्तीव गुदोपस्थं सा तूनी नाम नामतः ॥१॥ अथ प्रतूनीमाह ॥ गुदोपस्थस्थिता सैव प्रतिलोमं प्रधावति । वेगैः पक्वाशये याति प्रतूनीति हि सोच्यते ॥ १ ॥ अथ बाधिर्यमाह ॥ यदा शब्दवहं स्रोतो वायुरावृत्य तिष्ठति । शुद्धः श्लेष्मान्वितो वापि बाधिर्यं तेन जायते ॥१॥ अथाध्मानलक्षणमाह ॥ साटोपमत्युग्ररुजमाध्मातमुदरं भृशम् । आध्मानमिति जानीयाद् घोरं वातनिरोधजम् ॥ १ ॥ अथामाशयसम्भवात्प्रत्याध्मानमाह । विमुक्तपार्श्वहृदयं तदेवामाशये स्थितम् । प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम् ॥ २ ॥ अथाष्ठीलामाह ॥ नाभेरधस्तात्संजातः संचारी यदि वाचलः । अष्ठीलावद्घनो ग्रन्थिरूर्ध्वमायत उन्नतः ॥ १ ॥ अथ वाताष्ठीलामाह ॥ विण्मूत्रानिलसङ्गश्च तत्राध्मानं च जायते । वाताष्ठीलां विजानीयाद्बहिर्मार्गनिरोधिनीम् ॥ १ ॥ अथ प्रत्यष्ठीलामाह ॥ एतामेव रुजोपेतां वातविण्मूत्ररोधिनीम् । प्रत्यष्ठीलामिति वदेज्जठरे तिर्यगुत्थिताम् ॥ १ ॥ अथ वातविकृतिं मूत्ररोधिनीमाह ॥ मारुतेऽनुगुणे बस्तौ मूत्रं सम्यक्प्रवर्तते । विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि ॥ १ ॥ अथ सर्वाङ्गकम्पवातमाह ॥ सर्वाङ्गकम्पः शिरसो वायुर्वेपथुसंज्ञकः ॥ १ ॥ अथ खल्लीमाह ॥ खल्ली तु पादजङ्घोरुकरमूलावमोटिनी ॥ १ ॥

## ॥ अथानुक्तवातरोगसङ्ग्रहार्थमाह ॥

स्थानानामनुरूपैश्च लिङ्गैः शेषान्विनिर्दिशेत् । सर्वेषु तेषु संसर्गं पित्ताद्यैरुपलक्षयेत् ॥ १ ॥ हिमन्तीव च गात्राणि रोमाञ्चाद्धुरितानि च । शिरोऽक्षिवेदनालस्यं शीतवातस्य लक्षणम् ॥ २ ॥ अङ्गेषु तोदनं प्रायो दाहः स्पर्शं न विन्दति । मण्डलानि च दृश्यन्ते स्पर्शवातस्य लक्षणम् ॥ ३ ॥ पादयोश्च भवेद्दाहः त्वक्स्फोटः श्वयथुः क्लमः । रक्तस्रावः स्पन्दनं च रक्तवातस्य लक्षणम् ॥ ४ ॥ हनुशङ्खशिरोग्रीवं यो भिनत्ति तु चानिलः । कर्णयोः कुरुते शूलं कर्णशूलः स उच्यते ॥ ५ ॥

## ॥ अथ साध्यासाध्यमाह ॥

हनुस्तम्भार्दिताक्षेपपक्षाघातापतानकाः । कालेन महता वाता यत्नात्सिध्यन्ति वा न वा ॥ १ ॥ नवान्बलवतश्चैतान्साधयेन्निरुपद्रवान् । विसर्पदाहरुक्सङ्गमूर्च्छारुच्यग्निमार्दवैः ॥ क्षीणमांसबलं वाताः घ्नन्ति पक्षवधादयः॥२॥शूनं सुप्तत्वचं भुग्नं कम्पाध्मानिपीडितम् । नरं रुजार्तिमन्तं च वातव्याधिर्विनाशयेत् ॥३॥ अव्याहतगतिर्यस्य स्थानस्थः प्रकृतौ स्थितः । वायुः स्यात्सोऽधिकं जीवेद्वीतरोगः समाः शतम् ॥ ४ ॥ इति वातव्याधिनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

अभ्यङ्गं स्वेदनं बस्तिर्नस्यं स्नेहविरेचनम् । स्निग्धाम्ललवणं स्वादु वृष्यं वातामयापहम् ॥ १ ॥ स्वाद्वम्ललवणैः स्निग्धैराहारैर्वातरोगिणः । अभ्यङ्गस्नेहबस्त्याद्यैः सर्वानेवोपपादयेत् ॥ २ ॥ पित्तस्यावरणे वातरोगे शीतोष्णभेषजम् । कफस्यावरणे वायौ रूक्षोष्णं भक्ष्यभेषजम् ॥ ३ ॥ केवले पवनव्याधौ स्निग्धोष्णं भक्ष्यभेषजम् । स्निग्धोष्णशीतरूक्षाद्यैर्वातजो यो न शाम्यति ॥ विकारस्तत्र विज्ञेयो दुष्टशोणितसम्भवः ॥ ४ ॥ अथ वस्तिगते वाते ॥ कार्यो वस्तिगते वाते विधिर्बस्तिविशोधनः । विशेषतस्तु कोष्ठस्थे वाते क्षीरं पिबेन्नरः ॥ १ ॥ व्योषसौवर्चलाजाजीपथ्यालवणपञ्चकम् । सारिवाबृहतीपाठाकलिङ्गाग्नियवाग्रजम् ॥ २ ॥ चूर्णीकृतं दधिसुरातन्मण्डोष्णाम्बुकाञ्जिकैः । पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं परम् ॥ ३ ॥ अथ गुदाश्रिते ॥ दशमूलीकषायेण मातुलिङ्गरसेन वा । पिबेदैरण्डतैलं च बस्तिकुक्षिगुदाश्रिते ॥ १ ॥ अथामाशयगते ॥ आमाशयगते वाते छर्दिस्वापौ यथाक्रमम् । देयः षट्चरणो योगः सप्तरात्रं तथाम्बुना ॥ १ ॥ चित्रकेन्द्रयवापाठाकटुकातिविषाभयाः । महाव्याधिप्रशमनो योगः षट्चरणः स्मृतः ॥ २ ॥ अन्यच्च । पूतीकपथ्याशटिपुष्कराणि बिल्वं गुडूची सुरदारु शुण्ठी । विडङ्गपाठातिविषा कणा च क्वाथास्त्रयः साम[1]समीरणघ्नाः ॥ १ ॥ कार्पासास्थिकुलत्थिकातिलयवैरेरण्डमाषातसीवर्षाभूशणबीजकाञ्जिकयुतैरेकीकृतैर्वा पृथक् । स्वेदः स्यादिति कूर्परोदरहनुस्फिक्पाणिपादाङ्गुलीगुल्फस्तम्भकटीरुजो विजयते सामः समीरोद्भवः ॥ २ ॥ अथ पक्वाशये ॥ पक्वाश-

१ (च०) भग्नम् ।

यगते वाते हितं स्नेहैर्विरेचनम् । बस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥ १ ॥ ॥ अथ श्रोत्रादिषु ॥ श्रोत्रादिषु प्रकुपिते कार्यो वातहरः क्रमः । स्नेहाभ्यङ्गोपनाहांश्च मर्दनालेपनानि च ॥ १ ॥ अथ त्वङ्मांसासृक्शिरागते ॥ त्वङ्मांसासृक्शिराप्राप्ते कुर्याद्रक्तविमोक्षणम् । स्नेहोपनाहाग्निकर्मबन्धनोन्मर्दनानि च ॥ १ ॥ अथ मांसमेदोमज्जास्थिकुपिते ॥ विरेको मांसमेदःस्थे निरूहः शमनानि च । बाह्याभ्यन्तरगस्नेहैरस्थिमज्जागतं जयेत् ॥ १ ॥ अथ स्नायुसन्ध्यस्थिगते ॥ स्नायुसन्ध्यस्थिसम्प्राप्ते कुर्याद्वाते विचक्षणः । स्वेदोपनाहसंमर्दस्नेहनादिकमादरात् ॥ १ ॥ अथ शुक्रस्थे कुपिते ॥ शुक्रप्राप्तेऽनिले कार्यं शुक्रदोषचिकित्सितम् ॥ १ ॥ अथ वक्षआदिमन्यागते ॥ वक्षस्त्रिकस्कन्धगते वाते मन्यागते तथा । वमनं मर्दनं नस्यं कुशलेन प्रयोजयेत् ॥ १ ॥ अथाशीतिवातजरोगाणां संक्षेपेण चिकित्सा ॥ अथ पक्षाघातस्य ॥ माषात्मगुप्तकैरण्डवाट्यालकशृतं जलम् । हिङ्गुसैन्धवसंयुक्तं पक्षाघातनिवारणम् ॥ १ ॥ इति माषादिक्काथः ॥ अथ वृन्दात् माषादिसप्तकम् ॥ माषबलाशूकशिम्बीकतृणरास्नाश्वगन्धारुबुकाणाम् । क्काथः प्रातः पीतो रामठलवणान्वितः कोष्णः ॥ १ ॥ अपनयति पक्षघातं मन्यास्तम्भं सकर्णनादरुजम् । दुर्जयमर्दितवातं सप्ताहाज्जयति चावश्यम् ॥ २ ॥ अथ माषतैलम् सारसंग्रहात् ॥ ग्रन्थिकाग्निकणारास्नाकुष्ठनागरसैन्धवम् । माषक्काथेन तत्तैलं पक्षवातविनाशनम् ॥१॥ अथार्दितस्य चिकित्सा ॥ नवनीतेन संयुक्तां खादेन्माषेण्डरीं नरः । दुर्वारमर्दितं हन्ति सप्तरात्रान्न संशयः ॥ १ ॥ अथ लशुनविधिः ॥ पलमर्धपलं वापि रसोनस्य सुकुट्टितम् । हिङ्गुजीरकसिन्धूत्थसौवर्चलकटुत्रिकैः ॥ १ ॥ चूर्णितैर्माषकोन्मानैरवचूर्ण्यावलोडितम् । यथाग्निभक्षितं प्रातरेरण्डबुकाथानुपानतः ॥ २ ॥ दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम् । वातामयं निहन्त्येवमर्दितं चापतन्त्रकम् ॥ ३ ॥ एकाङ्गरोगिणां रोगं तथा सर्वाङ्गरोगिणाम् । ऊरुस्तम्भं गृध्रसीं च शूलं क्रुन्दक्रमीनपि ॥ ४ ॥ कटिपृष्ठामयं हन्याज्जाठरं च समीरणम् । अथावबाहुके ॥ माषतैलरसो नाभ्यां बाह्वोश्च परिमर्दयेत् । दशाङ्घ्रिमाषक्काथेन जयेद्वैद्योऽवबाहुकम् ॥ १ ॥ इति वृन्दात् ॥ अथ माषाद्यं तैलम् ॥ माषातसीयवकुरण्टककण्टकारीगोकण्टटुण्टुकजटाकपिकच्छुतोयैः । कार्पासकास्थिशणबीजकुलत्थकोलक्काथेन बस्तपिशितस्य रसेन वापि ॥ १ ॥ शुण्ठ्या च मागधिकया शतपुष्पया च सैरण्डमूलसपुनर्नवया सरेण्वा । रास्नाबलामृतलताकटुकैर्विपक्वं माषाख्यमेतदवबाहुकहारि तैलम् ॥ २ ॥ अर्धाङ्गशोषमपतानकमाढ्यवातमाक्षेपकं सभुजकम्पशिरःप्रकम्पम् । नस्येन बस्तिविधिना परिषेचनेन हन्यात्कटीजघनजानुशिरःसमीरान् ॥ ३ ॥ इति माषाद्यं तैलम् ॥ अथ प्रत्यष्ठीलाष्ठीलकयोगः ॥ प्रत्यष्ठीलाष्ठीलकयोर्गुल्मेऽभ्यन्तरविद्रधौ । क्रिया हिङ्ग्वादि चूर्णं च शस्यतेऽत्र विशेषतः ॥ १ ॥

---

१ (च०) सरण्या ।

## ॥ अथ हिङ्ग्वादिचूर्णम् ॥

हिङ्ग्वाम्लत्रिपटूग्रषट्कटुशटीवृक्षाम्लदीप्याल्लिकापाठाजाज्यजगन्धमूलहपुषाद्विक्षारसाराभया । हिध्माध्मानविबन्धवर्ध्मकसनश्वासाग्निसादारुचिप्लीहार्शोऽखिलशूलगुल्मगलहृद्रोगाश्मपाण्डुप्रणुत् ॥१॥ इति बोपदेवशतात्॥अथ योगशतात् हिङ्ग्वादि चूर्णम् । हिङ्ग्वग्रगन्धाबिडशुण्ठ्यजाजीहरीतकीचित्रकमूलकुष्ठम् । भागोत्तरं चूर्णितमेतदिष्टं गुल्मोदराष्ठीलविषूचिकासु ॥ १ ॥ अथ नादेयादि ॥ नादेयीकुटजार्कशिग्रुबृहतीस्नुग्विल्वभल्लातकव्याघ्रीकिंशुकपारिभद्रकरजोऽपामार्गनीपाग्निकान् । वासामुस्तकपाटलान्सलवणान्दग्ध्वा रसं पाचितं हिङ्ग्वादि प्रतिवापमेतदुचितं गुल्मोदराष्ठीलिषु ॥ १ ॥ अथ गदनिग्रहाद्विडङ्गासवः ॥ विडङ्गं पिप्पलीमूलं पाठाधात्र्येलवालुकम् । कुटजत्वक्पलं रास्ना भार्गी पञ्चपलोन्मितान् ॥ १ ॥ अष्टद्रोणेऽम्भसः पक्त्वा द्रोणशेषं तु कारयेत् । पूते शीते क्षिपेत्तस्मिन्माक्षिकस्य शतत्रयम् ॥ २ ॥ धातक्या विंशतिपलं चूर्णं कृत्वा तु दापयेत् । व्योषस्य तु पलान्यष्टौ त्रिजातं द्विपलं तथा ॥ ३ ॥ फलिनी हेमतोयानां सरोधाणां पलं पलम् । घृतभाण्डे समाधाय मासमेकं विधारयेत् ॥ ४ ॥ एष योगो हरत्येव प्रत्यष्ठीलाभगन्दरान् । ऊरुस्तम्भाश्मरीमेहगण्डमालां सविद्रधिम् ॥ आढ्यवातं हनुस्तम्भं विडङ्गाख्यो महासवः ॥ ५ ॥ इति विडङ्गासवः ॥ अथ विश्वाच्याम् ॥ दशमूलीबलामाषक्वाथं तैलाज्यमिश्रितम् । सायं भुक्त्वा चरेन्नस्यं विश्वाच्यां चावबाहुके ॥ १ ॥ इति दशमूलादिक्वाथः ॥ ॥ अथ मिम्मिण्याः ॥ दशमूलस्य निर्यूहो हिङ्गुपुष्करचूर्णितः । शमयेत्परिपीतस्तु वातं मिम्मिणसंज्ञितम् ॥ १ ॥ अथ कुब्जे ॥ हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् । क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत् ॥ १ ॥ वातघ्नैर्दशमूल्या च नवं कुब्जमुपाचरेत् । स्नेहैर्मांसरसैश्चापि प्रवृद्धं तं विवर्जयेत् ॥ २ ॥ अथ तूनीप्रतितून्योः ॥ पिपल्यादिरजस्तूनीप्रतितून्योः सुखाम्बुना । पिबेद्वा स्नेहलवणं सघृतं क्षारहिङ्गु वा ॥ १ ॥ अथाध्माने ॥ आध्माने लेपनं पाणितापश्च फलवर्तयः । दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥१॥ अम्लपिष्टैः सुखोष्णैश्च प्रदिह्यादुदरे भिषक् । दीपनं पाचनं चैवाध्मानबस्तिविशोधनम् ॥ २ ॥ इति दारुषट्कम् ॥

## ॥ अथ प्रत्याध्मानोरुस्तम्भयोः कल्कादि ॥

प्रत्याध्माने तु वमनं लङ्घनं दीपनौषधम् । ऊरुस्तम्भं जयेद्रूक्षस्वेदमर्दनकौशिकैः ॥ १ ॥ पिप्पली पिप्पलीमूलं भल्लातकफलानि च । एतत्कल्कश्च सक्षौद्र ऊरुस्तम्भनिवारणः ॥ २ ॥ इति पिप्पलीकल्कः ॥ पञ्चमूलीकषायं तु सुखोष्णं त्रिवृतायुतम् । गृध्रसीं गुल्मशूलं च सद्यः पीतं नियच्छति ॥ १ ॥ इति पञ्चमूलीकषायः ॥ वाजिगन्धाबलाबिल्वदशमूल्यम्बुसाधितम् । गृध्रस्यां तैलमैरण्डं वस्तौ पाने च शस्यते ॥ १ ॥ इति वाजिगन्धाद्यं तैलम् ॥ द्वे पले सैन्धवात्पञ्च शुण्ठ्या ग्रन्थिकचित्रकात् । द्वे पले भल्लकास्थीनि विंशती द्वे तथाढके ॥ १ ॥ आरनाले पचेत्प्रस्थं तैलस्यैते-

रपत्यदम् । गृध्रस्यूरुग्रहार्शोऽर्ते सर्ववातविकारनुत् ॥ २ ॥ इति सैन्धवाद्यं तैलम् ॥ विध्येच्छिरां मेण्ढ्रबस्तेरधस्ताच्चतुरङ्गुले । यदि नोपशमं गच्छेद्दहेत्पादकनिष्ठिकाम् ॥ ३ ॥ इति वृन्दात् ॥ महानिम्बजटाकल्को गृध्रसीनाशनः स्मृतः ॥ ४ ॥ इति शार्ङ्गधरात् ॥

## ॥ अथ जिह्वास्तम्भे ॥

जिह्वास्तम्भे क्रिया श्रेष्ठा सामान्योक्ता तु यार्दिते ॥ अथ कल्याणकावलेहः ॥ सहरिद्रावचाकुष्ठं पिप्पलीविश्वभेषजम् । अजाजी चाजमोदा च यष्टी मधुयुतं घृतम् ॥ १ ॥ एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः । मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिस्वनः ॥ जडगद्गदमूकत्वं लेहः कल्याणको जयेत् ॥ २ ॥ इति योगतः ।

## ॥ अथ गृध्रसीकलायखञ्जपङ्गुषु ॥

विशोध्यैरण्डबीजानि पिष्ट्वा क्षीरे विपाचयेत् । पायसं तत्कटीशूले गृध्रस्यां चौषधं परम् ॥ १ ॥ रास्नायास्तु पलं चैकं कर्षान्पञ्च च गुग्गुलोः । सर्पिषा वटकान्कृत्वा खादेद् गृध्रसिनाशनम् ॥ २ ॥ इति रास्नाद्यो गुग्गुलुः ॥ तैलमेरण्डजं वापि गोमूत्रेण पिबेन्नरः । मासमेकं प्रयोगोऽयं गृध्रस्यूरुग्रहापहः ॥ जयेत्कलायखञ्जं तु हेतुत्यागरसोनतः ॥ १ ॥

## ॥ अथ कटिशूले ॥

दशमूलीकषायेण पिबेद्वा नागराम्भसा । कटिशूलेषु सर्वेषु तैलमेरण्डसम्भवम् ॥१॥ हल्लावं खाखसं खाद्यं खर्जूरं मेथिकातिलाः । मिशिद्वयं च भल्लास्थि वातामं बब्बुलं तथा ॥ २ ॥ सारं चैकपलं ग्राह्यं गुडोऽब्धिकुडवस्तथा । घृतं द्विकुडवं चैव लड्डुकान् कारयेद्भिषक् ॥ ३ ॥ द्विकर्षं भक्षयेत्प्रातः कटिवातविनाशनः । धातुस्तम्भं धातुवृद्धिं कुरुते नात्र संशयः ॥ ४ ॥ तैलं घृतं चार्द्रकमातुलुङ्ग्यो रसं सचुक्रं सगुडं पिबेद्वा । कट्यूरुपृष्ठत्रिकगुल्मशूलगृध्रस्युदावर्तहनुग्रहेषु ॥ ५ ॥

## ॥ अथ क्रोष्टुशीर्षे ॥

गुडूचीत्रिफलाक्वाथैर्गुग्गुलुः पिण्डितो वरः । क्रोष्टुशीर्षं निहन्त्युच्चैः सेवितो मासमात्रतः ॥ १ ॥

## ॥ अथावशिष्टानां प्रतीकारः ॥

हनुग्रहे हनुस्तम्भे मन्यास्तम्भेऽर्दिते पिबेत् । दशमूल्यम्भसा कृष्णा अश्वत्थस्वरसेन वा ॥ १ ॥ बाह्यायामान्तरायामपार्श्वशूलकटिग्रहान् । खल्लीदण्डापतानौ च स्नेहस्वेदपुरैर्जयेत् ॥ २ ॥ वामनत्वाङ्गसङ्कोचभङ्गभेदग्रहव्यथाः । मर्दनैर्बस्तिभिः क्वाथैः स्वेदनैश्च भिषग् जयेत् ॥ ३ ॥ अपतानव्रणायामौ स्नेहैर्व्रणचिकित्सितैः । अङ्गरौक्ष्यस्तम्भकम्पकार्श्यं कपिशतोदने ॥ ४ ॥ दौर्बल्ये स्फुरणे भ्रंशे स्नेहैर्मर्दनमिष्यते ।

शुक्रकार्श्ये शुक्रनाशे शुक्रस्यातिप्रवर्तने ॥ ५ ॥ विड्ग्रहे बद्धविट्के च स्नेहपानं हितं मतम् । मलापे भीरुतापे च प्रसुप्तौ चित्तवैकृते ॥ ६ ॥ स्वेदनाशे बलक्षैण्ये कौशिकः सघृतो हितः । शब्दाज्ञतामये चापि लेहः कल्याणको हितः ॥ ७ ॥ शीततां रोमहर्षं च शिरापूरणमेव च । कटुतिक्तैर्जयेद्द्रव्यैः स्नेहस्वेदनमर्दनैः ॥ ८ ॥ वाताप्रवृत्तिमुद्गारमन्त्रकूजनमेव च । निरूहबस्तिनाथाङ्गकाठिन्यं स्नेहगाहनात् ॥ ९ ॥ शिरोग्रहे तु कर्तव्या शिरोगतमरुत्क्रिया । रक्तावसेचनं कुर्यादभीक्ष्णं वातकण्टके । पिबेदैरण्डतैलं वा दहेत्सूचिभिरेव च ॥ १० ॥ इत्यशीतिवातजरोगाणां संक्षेपेण पृथक् पृथक् चिकित्सा ॥

## ॥ अथ सर्ववातरोगाणां सामान्यप्रतीकारानाह ॥

अथ क्वाथाः ॥ सहचरामरदारुसनागरं क्वथितमम्भसि तैलविमिश्रितम् । पवनपीडितदेहगतिः पिबन्द्रुतविलम्बितगो भवतीच्छया ॥ १ ॥ इति योगतरङ्गिण्याः सहचरादिः । अथ योगसारान्महारास्नादिः ॥ रास्नैरण्डामृतोग्रासहचरचविकारामसेनाब्दभार्गीदीप्यानन्तायवानीवृकिसुरक्रमिजिच्छृङ्गिशुण्ठीबलाभिः । मूर्वातिक्तासमङ्गाद्विविपशटिवरापिप्पलीयावशूकै रक्तश्रीखण्डकारग्वधकटुकफलैर्वत्सवृश्चीवयुक्तैः ॥ १ ॥ सर्वैरेतैर्दशाङ्घ्रिप्रयुतसमलवैः साधितोऽष्टावशेषः क्वाथो रास्नादिरादौ महदुपपदवान्कौशिकाक्तो निहन्ति । सर्वाङ्गैकाङ्गवातान्‌ श्वसनकसनहृत्स्वेदशैत्यादितन्द्रामूलं तूनीप्रतूनीगलगदनिखिलाङ्गव्यथाकम्पखल्लीः ॥ २ ॥ विश्वाचीश्लीपदामानिलनिखिलमहासूतिकारोगसुप्तिं जिह्वास्तम्भापतानं स्फुटनविमथनक्लीबताक्षेपकौब्जम् । शोफाटोपापतन्त्रार्दितखुडनहेनुगृध्रसीपादशूलं वायुश्लेष्मोत्थरोगानपि गिरितनयावल्लभेनोपदिष्टः ॥ ३ ॥ इति महारास्नादिः ॥ अथ शार्ङ्गधरान्महारास्नादिः ॥ रास्ना द्विगुणभागा स्यादेकभागास्तथापरे । धन्वयासबलैरण्डदेवदारुशटीवचाः ॥ १ ॥ वासको नागरं पथ्या चव्यं मुस्तं पुनर्नवा । गुडूचीवृद्धदारुश्च शतपुष्पा च गोक्षुरः ॥ २ ॥ अश्वगन्धा प्रतिविषा कृतमालः शतावरी । कृष्णा सहचरश्चैव धान्यकं बृहतीद्वयम् ॥ ३ ॥ एभिः कृतं पिबेत्क्वाथं शुण्ठीचूर्णेन संयुतम् । कृष्णाचूर्णेन वा योगराजगुग्गुलुनाथवा ॥ ४ ॥ आजमोदादिना वापि तैलेनैरण्डजेन वा । सर्वाङ्गकम्पे कुब्जत्वे पक्षाघातेऽवबाहुके ॥ ५ ॥ गृध्रस्यामामवाते च श्लीपदे चापतानके । अन्त्रवृद्धौ तथाध्माने जङ्घाजानुगदेऽर्दिते ॥ ६ ॥ शुक्रामये मेण्ढ्रवाते वन्ध्यायोन्यामयेषु च । महारास्नादिराख्यातो ब्रह्मणा गर्भधारणे ॥ ७ ॥ अथ महाबलाक्वाथः । महाबलामूलमहौषधाभ्यां क्वाथं पिबेन्मिश्रितपिप्पलीकम् । शीतं सकम्पं परिदाहयुक्तं विनाशयेद्द्वित्रिदिनप्रयुक्तः ॥ १ ॥ इति योगसारात् ॥ अथ योगरत्नावलितः पञ्चमूलादिः । पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा । रूक्षः स्वेदस्तथा नस्यं मन्यास्तम्भे प्रशस्यते ॥ १ ॥ अथैरण्डादिः । एरण्डबिल्वं बृहतीद्वयं च सौ-

---

१ ( च० ) शूलम् । २ ( च० ) खुडहनुरुक् ।

वर्चेलं व्योषसुरामठं च । समातुलुङ्गीलवणोत्तमं च क्वाथो धनुर्वातहरः प्रशस्तः ॥ १ ॥
अथ वाजिगन्धादिः । वाजिगन्धाबलास्तिस्रो दशमूलीमहौषधम् । गृध्रनख्यौ च रास्ना च
क्वाथो मारुतनाशनः ॥ १ ॥ अथ समीरदावानलः । भल्लातकानां शकलानि कृत्वा त्रि-
कोलमानं परिगृह्य वैद्यः । चतुष्पलं तोयसमन्वितोऽयं क्वाथश्चतुर्थांशक एष सम्यक् ॥१॥
सिताघृतं गोपयमिश्रितेन कोलं पलार्धं पलमेकयुक्तम् । क्रमेण पीतः खलु हन्ति वातान्
समीरदावानलनामधेयः ॥ २ ॥ इति क्वाथाः

## ॥ अथ चूर्णानि ॥

रास्नाकुष्ठनतत्रुपट्कटुशटीपाठावचासारिवाभूनिम्बत्रिफलाबलादशजटानिर्गुण्डिकै-
रण्डकम् । हिङ्ग्वाम्लार्द्रकवस्तगन्धकबरीक्षारौ पटूनां त्रयं चूर्णं पुष्करतैलयुक्तम-
खिलान्वातानशीतिं जयेत् ॥१॥ अथाभादिचूर्णं वृन्दात् ॥ आभा रास्ना गुडूची च
शतावर्यौ महौषधम् । शतपुष्पाश्वगन्धा च हपुषा वृद्धदारकः॥१॥यवानी चाजमोदा
च समभागानि कारयेत् । सूक्ष्मचूर्णमिदं कृत्वा बिडालपदकं पिबेत् ॥ २ ॥ मद्यै-
र्मांसरसैर्यूषैस्तक्रैरुष्णोदकेन वा । सर्पिषा वापि लेह्यं तु दधिमण्डेन वा पुनः ॥ ३ ॥
अस्थिसन्धिगतं वायुं स्नायुमज्जाश्रितं च यम् । कटिग्रहं गृध्रसीं च मन्यास्तम्भं हनु-
ग्रहम् ॥ ४ ॥ ये च कोष्ठगता रोगास्तांश्च सर्वान्प्रणाशयेत् । आभाद्यो नाम चूर्णो-
ऽयं सर्वव्याधिनिबर्हणः ॥ ५ ॥ इत्याभाद्यं चूर्णम् ॥ इति चूर्णानि ॥

## ॥ अथ गुग्गुलवः ॥

अथ त्रयोदशाङ्गगुग्गुलुः ॥ आभाश्वगन्धा हपुषा गुडूची शतावरीगोक्षुरकं च रास्ना ।
श्यामा शटी घोषवती यवानी सनागरा चेति समं विचूर्ण्य ॥ १ ॥ सर्वैः समं गुग्गु-
लुमत्र दत्वा कुर्यात्ततोऽर्धं प्रणिधाय सर्पिः । अर्धाक्षमात्रा गुटिकास्ततोऽस्य कार्याः
पुरस्याथ दिनाननेऽद्यात् ॥ २ ॥ एकां ससर्पिर्मधुना यथा न स्पर्शो भवेद्दन्ततते:
कथंचित् । ततः कवोष्णं सलिलं सुरां वा गव्यं पयो वाप्यथ मुद्गयूषम् ॥ ३ ॥
किं वा रसैर्मांसभवैर्निपीय लवङ्गमेकं वदने निदध्यात् । कटिग्रहे गृध्रसिबद्ध[1]खञ्जे
हनुग्रहे जानुपदग्रहे च ॥ ४ ॥ सन्धिस्थिते चास्थिगते समीरे मज्जाश्रिते स्नायुगते
ऽतिदुष्टे । शूलद्वये पार्श्वशिरोरुजायां मन्याग्रहे कण्ठहृदिग्रहे च ॥ ५ ॥ त्रयोद-
शाङ्गोऽयमतिप्रशस्तो जयेद्गदान्वातकफप्रभूतान् ॥ ६ ॥ इति योगतरङ्गिणीतस्त्रयो-
दशाङ्गगुग्गुलुः ॥ अथ वीरसिंहावलोकतो द्वात्रिंशको गुग्गुलुः ॥ त्रिकटु
त्रिफला मुस्तं विडङ्गं चव्यचित्रकौ । वचैलपिप्पलीमूलं हपुषा सुरदारु च ॥१॥ तुम्बुरुं
पौष्करं कुष्ठं विषा च रजनीद्वयम् । बाष्पिका जीरकं शुण्ठी सपत्रा च दुरालभा ॥२॥
सौवर्चलं विडङ्गं च क्षारौ द्विरदपिप्पली । सैन्धवं च समाने तत्तुल्यं दत्वा च गुग्गु-
लुम् ॥ ३ ॥ साधयित्वा विधानेन कोलमात्रां वटीं चरेत् । घृतेन मधुना वापि भक्ष-
येत्तामहर्मुखे ॥ ४ ॥ आमं हन्यादुदावर्तमन्त्रवृद्धिं गुदक्रिमीन् । महाज्वरोपसृष्टानां

१ ( ख० ग० घ० ) गोमय ।

भूतोपहतचेतसाम् ॥ ५ ॥ आनाहोन्मादकुष्ठानि पार्श्वशूलत्त्वदामयाम् । गृध्रसीं च हनुस्तम्भपक्षाघातापतानकान् ॥ ६ ॥ शोफं प्लीहानमत्युग्रं कामलामपचीं तथा । नाम्ना द्वात्रिंशको ह्येष गुग्गुलुः कथितो महान् ॥ धन्वन्तरिकृतो योगः सर्वरोगनिकृन्तनः ॥ ७ ॥ अथ सारसङ्ग्रहाद् योगराजगुग्गुलुः ॥ चित्रकं पिप्पलीमूलं यवानी कारवी तथा । विडङ्गान्यजमोदा च जीरकं सुरदारु च ॥ १ ॥ चव्यैलासैन्धवं कुष्ठं रास्ना गोक्षुरधान्यकम् । त्रिफला मुस्तकं व्योषं त्वगुशीरं यवाग्रजम् ॥ २ ॥ तालीसपत्रं गोक्षूरं लवङ्गं सर्जिका सटी। दन्ती गुडूची हपुषा वाजिगन्धा शतावरी ॥ ३ ॥ प्रत्येकं कर्षमात्रं स्याच्चतुष्कर्षमथोऽमृतम् । एतानि सुभिषक् पट्टे सूक्ष्मचूर्णानि कारयेत् ॥ ४ ॥ यावन्त्येतानि चूर्णानि तावन्मात्रो हि गुग्गुलुः । संमर्द्य सर्पिषा गाढं स्निग्धभाण्डे निधाय च ॥ ५ ॥ ततो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि । योगराज इति ख्यातो योगोऽयममृतोपमः ॥ ६ ॥ आमवातादिवातादीन् क्रमीन् दुष्टव्रणानपि । प्लीहगुल्मोदरानाहदुर्नामानि विनाशयेत् ॥ ७ ॥ अग्निं च कुरुते दीप्तं रेतोवृद्धिं बलं तथा । वातरोगाञ्जयत्याशु सन्धिमज्जगतानपि ॥८॥ पादग्रहं क्रोष्टुशीर्षं मन्यास्तम्भं हनुग्रहम् । कर्णग्रहं कर्णशूलं शिरःशूलं मरुत्कृतम् ॥ रास्नाक्काथेन हन्त्येष केवलो वा प्रशस्यते ॥ ९ ॥ इति योगराजगुग्गुलुः ॥ अथ षडशीतिगुग्गुलुः॥ सैर्यपासविषादारुव्याघ्रीयुक् चविकावृषम् । कृष्णाब्दोग्राधनाभीरुवाप्याल्यं मिशिवेल्लरी ॥१॥ पथ्या शुण्ठी छिन्नरुहा शम्पाकग्वधगोक्षुरम् । विशाखा मोदकी तिक्ता ग्रन्थिभार्गी विदारिका ॥ २ ॥ अलम्बुषा हस्तिकर्णी वस्तगन्धा विषाणिका । शिवाक्षमुशलीकौन्तीकाकोलीदीप्यंयुग्मकम् ॥ ३ ॥ त्रिवृद्दन्ती शिखी शृङ्गी कोकिलाक्षो दुरालभा । पञ्चमूलं महद्वीरतरुः कुष्ठं च जोङ्गकम् ॥ ४ ॥ जातीपत्रीफलैलं च केशरं त्वक्किरातकम् । कुङ्कुमं देवकुसुमं विशाला निशिसैन्धवम् ॥ ५ ॥ मन्दारमूलं कृमिजिद्धेमदुग्धा रविप्रिया । गजपिप्पल्यपामार्गो वानरी नक्तमालकः ॥ ६ ॥ एतैः समा रसा चाभा द्विगुणा तैः पुरः समः । सूतगन्धकहिङ्गुलं टङ्कणं लोहभस्मकम् ॥ ७ ॥ शुल्वं वङ्गं सूतभस्म नागं ताप्यमयोरजः । मीलितं पुरपादं च सर्वमेकत्र कारयेत् ॥ ८ ॥ पचेच्चतुर्गुणे क्वाथे पुरं पट्कट्ठजे पुरा । तुर्यांशशेषिते क्वाथे पूते चात्र विनिक्षिपेत् ॥ ९ ॥ चूर्णानि पुरमुख्यानि पाचयेन्मृदुवह्निना । यावद्धनतरं तावद् गुटिकाः कारयेत्ततः ॥ १० ॥ स्वर्णप्रमाणाः सेव्यास्ता मधुसर्पिःसमन्विताः । सप्तधातुगतान्वातान् शिरास्नाय्वस्थिसन्धिगान् ॥ ११ ॥ सामान्निरामान्संसृष्टान् श्लेष्मजान्हन्ति केवलान् । यक्ष्माणमग्निमान्द्यं च ज्वरं धातुगतं तथा ॥ १२ ॥ गुल्फजानूरुकस्फूरुदरत्त्वत्कुक्षिकक्षगान् ।अंसमन्याहनुश्रोत्रभ्रूललाटाक्षिशङ्खगान्॥१३॥ प्रमेहं मूत्रकृच्छ्रं च शूलमाध्मानमश्मरीम् । किं पुनर्भेदकान् वातान् प्रत्यङ्गस्थाञ्जयत्यलम् ॥ १४ ॥ गुग्गुलुः षडशीतिर्वै नाम्ना भोजेन कीर्तितः । क्षीयमाणेन शि-

---

१ ( च० ) मिसी । २ ( च० ) मालकः ।

ष्येण प्रार्थितेन पुनः पुनः ॥ १५ ॥ स एष राजयोगोऽयं न देयो यस्य कस्यचि-त् । वत्सरेणास्य योगेन षण्ढोऽपि प्रमदाप्रियः ॥ १६ ॥ वाजीकरणमन्यच्च परं नास्माद्विशेषतः । गुणोऽस्य सेवनान्नित्यं यः स्यात्स स्याद्ब्रवीमि कम् ॥ १७ ॥ एष ते परिहार्यस्तु पानभोजनमैथुनैः ॥ इति षडशीतिगुग्गुलुः ॥ अथ रास्नाद्यो गुग्गु-लुः ॥ रास्नामृतैरण्डसुराह्वविश्वं तुल्येन गाढं च पुरेण मर्द्यम् । खादेत्समीरी सशिरोग-दी च नाडीव्रणी चापि भगन्दरी च ॥ १ ॥ इति गुग्गुलवः ॥

## ॥ अथ तैलानि ॥

अथ लघुविषगर्भतैलम् ॥ तैलाढके समतुषाम्बुहयारिहेमनिर्गुण्डिभास्करशिफा-स्रुतया तु सिद्धम् । धत्तूरकुष्ठफलिनीविषहेमदुग्धारास्नाहयारिकटभीमरिचोपचित्राः॥१॥ मांसीवचादहनसर्षपदेवदारुदार्वीनिशारुबुजतुत्रिफलासमङ्गाः । पिष्ट्वा क्षिपेत्पलमिता विषगर्भमेतत्तैलं समस्तपवनामयनाशनं स्यात् ॥२॥ अथ द्वितीयलघुविषगर्भतैलम् । धत्तूरस्य रसस्य पञ्चकुडवं तैलं तथा काञ्जिकं प्रस्थानां च चतुष्टयं गदवचा त्रिंशत्परं शाणकाः । त्वद्धात्रीमरिचात्पृथङ् नवविषात्षट्स्वर्णबीजात्पटोः स्युः सप्ताधिकविंशतिः परिमितं तीव्रानिलध्वंसनम् ॥ १ ॥ पक्षाघातं हनुस्तम्भं मन्या-स्तम्भं कटिग्रहम् । पृष्ठत्रिकशिरःकम्पं सर्वाङ्गग्रहणं तथा ॥ २ ॥ इति द्वितीयम् । अथ महाविषगर्भतैलम् ॥ कनकस्य च निर्गुण्डी तुम्बिनी च पुनर्नवा । वातारिश्चाश्व-गन्धा च प्रपुन्नाटं सचित्रकम् ॥ १ ॥ सौभाञ्जनं काकमाची कलिकारी च निम्बकम् । महानिम्बेश्वरी चैव दशमूलं शतावरी ॥ २ ॥ कारवल्ली सारिवा च श्रावणी च विदारिका । वज्रार्कौ मेषशृङ्गी च करवीरद्वयं वचा ॥ ३ ॥ काकजङ्घा त्वपामार्गो बला चातिबलाद्वयम् । व्याघ्री महाबला वासा सोमवल्ली प्रसारिणी ॥ ४ ॥ पलो-न्मितानि चैतानि द्रोणेऽम्भसि विनिक्षिपेत् । पचेत्पादावशेषेऽस्मिन्कल्कस्य कुडवं क्षिपेत् ॥ ५ ॥ त्रिकटुं विषतिन्दुं च रास्ना कुष्ठं विषं घनम् । देवदारुर्वत्सनाभो द्वौ क्षारौ लवणानि च ॥ ६ ॥ तुत्थकं कट्फलं पाठा भार्गी च नवसागरम् । त्र्यूषन्ती धन्वयासं च जीरकं चेन्द्रवारुणी ॥ ७ ॥ तैलप्रस्थं समादाय पाचयेन्मृदुवह्निना । विषगर्भमिदं नाम्ना सर्वान्वातान्व्यपोहति ॥ ८ ॥ वक्षोरुकटिजङ्घानां सन्धानं श्रेष्ठमेव च । गृध्रसीं च महावातान् सर्वाङ्गग्रहणं तथा ॥ ९ ॥ दण्डापतानकं चैव कर्णनादं च शून्यताम् । वनमध्ये यथा सिंहात् पलायन्ते यथा मृगाः ॥ १० ॥ तथाश्वगजभग्नानां नराणां च चतुष्पदाम् । नाशयेन्नात्र सन्देहो विषगर्भ-स्य लेपनात् ॥ ११ ॥ इति महाविषगर्भतैलम् ॥ अथ प्रसारिणीतैलम् ॥ समूलपत्रामुत्पाट्य जातसारां प्रसारिणीम् । कुट्टयित्वा पलशतं कटाहे समधि-श्रयेत् ॥ १ ॥ दध्नस्तत्राढकं दद्याद्द्विगुणं चाम्लकाञ्जिकम् । भेषजानि तु पेष्याणि तत्रेमानि समावपेत् ॥ २ ॥ शुण्ठीपलानि पञ्चैव रास्नायाश्च पलद्वयम् । प्रसारिणी-

१ (ख० ग० घ० ङ० च० छ०) चित्रात्परम् । २ (क०) कनकस्य ।

पले द्वे च द्वे पले मधुकस्य च ॥ ३ ॥ एतत्सर्वं समालोड्य शनैर्मृद्वग्निना पचेत्। एतत्प्रभञ्जने श्रेष्ठं नस्यकर्मणि शस्यते ॥ ४ ॥ एकाङ्गग्रहणं वापि सर्वाङ्गग्रहणं तथा। अपस्मारं तथोन्मादं विद्रधिं मन्दवह्निताम् ॥ ५ ॥ त्वग्गताश्चापि ये वाताः शिरासन्धिगताश्च ये। अस्थिसन्धिगता ये च ये च शुक्रान्तरे स्थिताः ॥६॥ सर्वान्वातामयान्नूनं नाशयत्येव सर्वथा। हयं नरं गजं वापि वातजर्जरितं भृशम् ॥ ७ ॥ सद्यः प्रशमयेत्तैलमेतन्नात्र विचारणा। इन्द्रियस्य प्रजननं वन्ध्यानां च प्रजाकरम् ॥ ८ ॥ वृद्धानां बालकानां च स्त्रीणां राज्ञां हितं परम्। पङ्गुर्वा पीठसर्पी वा पीत्वैतत्सम्प्रधावति ॥ ९ ॥ इति प्रसारणीतैलम् ॥ अथ नारायणतैलम् ॥ बिल्वाग्निमन्थस्योनाकपाटलापारिभद्रकाः। प्रसारिण्यश्वगन्धा च बृहती कण्टकारिका ॥ १ ॥ बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा। एषां दशपलान्भागांश्चतुर्द्रोणाम्भसा पचेत् ॥ २ ॥ पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत्। शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥ ३ ॥ चन्दनं तगरं कुष्ठमेलापर्णी चतुष्टयम्। रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥ ४ ॥ एषां द्विपलिकान्भागान् पेषयित्वा विनिक्षिपेत्। शतावरीरसं चैव तैलतुल्यं प्रदापयेत् ॥ ५ ॥ आजं वा यदि वा गव्यं क्षीरं दत्वा चतुर्गुणम्। पाने बस्तौ तथाभ्यङ्गे भोज्ये नस्ये प्रयोजयेत् ॥ ६ ॥ अश्वो वा वातभग्नो वा गजो वा यदि वा नरः। पङ्गुर्वा भग्नहस्तो वा भग्नपादोऽथवा नरः ॥ ७ ॥ अधोभागे च ये वाताः शिरामध्यगताश्च ये। दन्तशूले हनुस्तम्भे मन्यास्तम्भेऽपतन्त्रके ॥ ८ ॥ एकाङ्गग्रहणे वापि सर्वाङ्गग्रहणे तथा। क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ॥ ९ ॥ लालाजिह्वाश्च बधिरा विस्वरा मन्दमेधसः। मन्दप्रज्ञा च या नारी या च गर्भं न विन्दति ॥ १० ॥ वातार्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा। एतत्तैलं वरं तेषां नाम्ना नारायणं स्मृतम् ॥ ११ ॥ इति नारायणतैलम् ॥ अथ लघुनारायणं तैलम् ॥ एलाबलानतकुचन्दनदारुसौम्याशैलेयकुष्ठकुटिलावरुणशृ-ते... तैलं सदुग्धमिति सिद्धमभीरुकन्दतोयेन तेन तुलितेन समीरणघ्नम् ॥ १ ॥ अथ शतावरीनारायणतैलम् ॥ शतावरी चांशुमती पृश्निपर्णी शटी बला। एरण्डस्य च मूलानि बृहत्यौ पूतिकस्य च ॥ १ ॥ गवेधुकस्य मूलानि तथा सहचरस्य च। एषां दशपलान्भागाञ्जलद्रोणे पचेद्बुधः ॥ २ ॥ पादावशेषे पूते च गर्भं चैतान्समावपेत्। पुनर्नवा वचा दारु शताह्वा चन्दनोऽगरुः ॥ ३ ॥ शैलेयं तगरं कुष्ठं त्रुटी मांसी स्थिरा बला। अश्वाह्वा सैन्धवं रास्ना मञ्जिष्ठा घनचोरकम् ॥ ४ ॥ कौन्तीप्रियङ्गुस्थौणेयं पलार्धं कल्पयेत्पृथक्। गव्याजपयसोः प्रस्थौ द्वौ वा तत्र प्रयोजयेत् ॥ ५ ॥ शतावरीरसप्रस्थं तैलप्रस्थं भिषक् पचेत्। लवङ्गनखकक्कोलवेल्लकं जातिकोशकम् ॥ ६ ॥ त्वक्कटुकं च कर्पूरं तुरुष्कं श्रीनिवासकम्। स्पृक्काकुङ्कुमकस्तूरीर्दद्यादत्रावता-

---

१ (क० ग०) पीट (ङ० ) पिट। २ (ख० ग०) लोल (ङ० च०) ललत् (छ०) लाल। ३ (क०) समावपेत्।

रिते ॥ ७ ॥ अस्य तैलस्य सिद्धस्य शृणु वीर्यमतः परम्। अश्वानां वातरुग्णानां कुञ्जराणां तथा नृणाम् ॥ ८ ॥ तैलमेतत्प्रयोक्तव्यं सर्ववातविकारनुत्। आयुष्मांश्च नरः पीत्वा निश्चयेन दृढो भवेत् ॥ ९ ॥ गर्भमश्वतरी विन्द्यात्किं पुनर्मानुषी तथा। हृच्छूलं पार्श्वशूलं च तथैवार्धावभेदकम् ॥ १० ॥ अपचीं गण्डमालां च वातरक्तं हनुग्रहम्। कामलामश्मरीं पाण्डुमुन्मादं विनियच्छति ॥११॥ नारायणेन गदितं तैलमेतत्कृपालुना। नारायणमिति ख्यातं नाम्ना तस्मादिदं भुवि ॥१२॥ इति शतावरीनारायणतैलम् ॥ अथ शतावरीतैलम् ॥ रुग्दारुद्रविडिप्रियङ्गुतगरं त्वक्पत्रकौन्तीनखैर्मांसीसर्जरसाम्बुचन्दनवचाशैलेयलामज्जकैः। मञ्जिष्ठासरलागुरुद्विपबलारास्नाश्वगन्धावरीवर्षाभूमिसिसिन्धुभिश्च सकलैरेभिः पचेत्कार्षिकैः ॥१॥ तुल्यं गोपयसा वरीरससमं तैलं विपक्कं मृदु स्याद्वातघ्नमिदं नृणामिति वरीतैलं भिषक्पूजितम् ॥ २ ॥ अथ दशमूलादितैलम् ॥ दशमूलकषायविपक्कमथो पयसा च समेन बलाब्दनलैः। त्रुटिचन्दनदारुलतानलदैररुणाजतुकुष्ठवचाकुटिलैः ॥ १ ॥ इति पक्कमिदं तिलजं जयति प्रसभं पवनामयमाशु नृणाम्। बलशुक्रविभारुचिवह्निकरं नृपवृद्धशिशुप्रमदासु हितम् ॥ २ ॥ अथ सुगन्धितैलम् ॥ तगरागुरुकुङ्कुमकुन्दुरुभिः सलवङ्गवराङ्कुरङ्गमदैः। सरलामरदारुदलद्रविडीनखकेसररुङ्नलिनीनलदैः ॥ १॥ सतुरुष्कहरेणुबलाक्थनैरिति तैलमिदं पयसा विपचेत्। नृपतिप्रमदाशिशुभिः स्थविरैरुपयोज्यमिदं पवनामयजित् ॥२॥ अथैलादि ॥ एलामुरासरलशैलजदारुकौन्तीचण्डाशटीनलदचम्पकहेमपुष्पम्। स्थौणेयगन्धरसपूतिदलामृणालश्रीवासकुन्दुरुनखाम्बुलवङ्गकुष्ठम् ॥१॥ कालीयकं जलदकर्कटचन्दनश्रीजात्याः फलं सविकसं सह कुङ्कुमेन। स्पृक्कातुरुष्कलघुलम्भतया विनीय तैलं बलाक्वथनदुग्धदधिप्रपक्कम् ॥२॥ मन्दानले न हितमेतदुदाहरन्ति वातामयेषु बलवर्णहुताशकारि ॥३॥ अथ महालक्ष्मीनारायणतैलम्। सुश्रुतात् ॥ दशशताङ्घ्रिशिवेतरमल्लिका दहननागबलारुबुवाष्पिका। कितवलाङ्गलकीवनमल्लिका कुटजहेदुवृकीखरशृङ्गिका ॥ १ ॥ मधुकबीजकचम्पकमालतीस्नुहिबलाक्रमिहाप्रपुनाटकाः। शतदलाश्वराहकवासनीरुबुकधन्वनपिप्परिरक्तिका ॥ २ ॥ अतिबलाद्विविषाशकदाडिमीशिखरिशाल्मलिसिन्धुकतुण्डिका। सुषिरपङ्कलकाशसुमर्कटीवरककुम्भनिकुम्भजयन्तिका ॥ ३ ॥ कुसरिपिच्छलिकाकरमर्दिकाकसनमर्दनकेवणिरूपिका। अतसिवत्सकगृध्रमहीरुहो विदुलकुञ्जरिकाद्वितयोच्चटाः ॥ ४ ॥ दधिफलस्नुववृक्षमृगादनीमधुरसामगधाजलपत्रिका। रुदतिका पृथगेभ्यजटाः सुधीः समनुगृह्य तथैव दशाङ्घ्रिकम् ॥५॥ बिल्वाग्निमन्थस्योनाककाश्मरीपाटलायुतैः। शालिपर्णीपृश्निपर्णीबृहतीद्वयगोक्षुरैः ॥ ६ ॥ मुनितरुमलयतपनापामार्गबीजनक्तमालशृङ्गाटी। प्रपुन्नाटो हेमदुग्धाफलेरुहाणां च बीजानि ॥ ७ ॥ धात्रीशिग्रुकरञ्जबब्बुलमधुष्ठीलेङ्गुदीनेपती—नीपारग्वधरक्तसारबदरीविस्फूर्जनः काञ्चनः। चिञ्चोदुम्बरतापसीद्रुमयुगं कोलद्वयं सल्लकी गायत्रीकलिवृक्षभण्डिकदराश्वत्थाभयापादपाः ॥ ८ ॥

भल्लीकिंशुकमेषशृङ्गिकिणिहीभूताङ्कुशः शल्यकः कोशाम्रार्जुनपारिभद्रकमहावृक्षाः कुमार्यासनैः । कुम्भी रक्तधनञ्जयो नियमनो वातारिमोखाह्वया एतेषां परिगृह्य वल्कलमथो रम्भा विदारी वरी ॥ आलुकक्षिरकन्दवाजिमुवहा कर्कोटिका वृश्चिका खर्जूरी सुरसूरणप्रभृतिकान्कन्दांश्च साधूनपि ॥ ९ ॥ छिन्नाटरूषकशिवप्रियमाषपर्णीज्योतिष्मती युगुलपर्पटमेषवल्ली । भूपर्णिकासजटिकाभृगुराजमुण्डीपुष्कतेरीकुलकयुग्मफलार्कभक्ता ॥ १० ॥ भूनिम्बवह्निदमनो गिरिकर्णिकायुक् चिल्लारकाखदिरकाविजयाकुमार्यः । गङ्गावती युगकवैष्णविका सुगन्धा लम्बा सुपर्वलतिका सहदेविका च ॥ ११ ॥ गोर्गुगं मृगखुरी सरणी च कङ्गुमोर्यश्च नागदमनी मधुपुष्पिका च । एतानि गृह्य निखिलानि तथाब्दयुग्मं चूतास्थितोतरुरुहो वटसंप्ररोहान् ॥ १२ ॥ भूशर्करामदकराकुसुमं च पीलुबर्हैः शिखां कनककेतकिसंप्ररोहान् । व्याघ्राटिकाङ्घ्रिकरकं तिमिरोत्थसारं कण्डूकपित्थभवलोहजटां गृहीत्वा ॥ १३ ॥ मुष्टिप्रमाणं विधिनोद्धृतानि द्रोणैर्जलानां तिसृभिर्विपाच्य । पादावशेषं परिगृह्य पूतं प्रस्थत्रयं तत्र तिलोत्थतैलम् ॥ १४ ॥ हिंस्रा रक्ता वरिष्ठा सुररजनिगुगं सैंहलं गन्धसारं शृङ्गारं नागपुष्पं पलितकटुफलं रक्तकाष्ठं नतं च । पद्मग्रन्थाजोङ्गकाश्वारुचककरुहं रोचनारक्तसारं कोरञ्जीपालकाह्वं क्रिमिरिपुमधुकं सिन्धुजं स्निग्धदारु ॥ १५ ॥ तालीसं जातिसस्यं मलयजममृतं पद्मकं जातिपत्री सेव्यं पद्मं यवानी कनकतुरवती केसरं पद्मकस्य । पाठीनो राजपुत्रीजलधरचविका सोमवल्को मधूकं पाक्यः स्वर्जी शताह्वा वनजमगधजा मत्स्यपीता शटी च ॥ १६ ॥ कारुञ्जी पुत्रजीवास्तपनकनकजं बीजभृङ्गाररंची वृक्षाम्लं देवधूपो जरणसररसाकल्कराकुट्टिमं च ॥ मृद्वीकासाकुरण्डं नियमनधनिका धन्वयासं च ब्राह्मी विश्वं कैरातकेक्षुक्षुरककरिकणामोदकं बस्तमोदा । १७ ॥ शक्राह्वा तिल्वलाख्योच्चुरपुरसुषवी मेथिका शृङ्गिका च प्रत्येकं संगृहीत्वा पिचुदलतुलिता मुञ्च . सक्रत्प्रविष्टा । तान्क्षिप्याशु पात्रे शुचिजनविहतं निर्मलं वैद्यवर्यो गव्यं वा दुग्धमाजं युगपरिगणितं पूर्वमुक्ताच्च तैलात् ॥ १८ ॥ नारायण्यः स्वरसकमथो रङ्गमाता रसं च तैलोन्मानं विपच रविजे भोजयेत्प्रत्यहं वा । तस्मिन्पाकं गतवति यथाविध्यनुप्रक्षिपेच्च सौगन्ध्याप्त्यै शिशिरकिरणं कुङ्कुमं वेधमुख्यम् ॥ १९ ॥ गोधूमाख्यं सुसुरभियुतं गन्धकर्चूरकं च जातीपुष्पं शतदलसमं मल्लिकं चम्पकं च । लोहाह्वेन त्वतिसुरभिते काचभाण्डे निधाय तैलं चैतन्नृपतिसदने धारयेद्वैद्यवर्यः ॥ २० ॥ पाने बस्तौ विहितशमने नावनेऽभ्यञ्जने च मातङ्गे वा मनुजहययोर्वातरोगाभिभूते । वाताष्ठीलागलहनुशिरोगृध्रसीपादशूलं . पक्षाघातश्रवणनयनभ्रूललाटे तु शूलम् ॥ २१ ॥ ऊरुस्तम्भार्दितबधिरतैकाङ्गरोगापतानं मन्यास्तम्भं त्रिकहृदयरुङ्मूकताक्षेपखाङ्ग्यम् । जिह्वास्तम्भं गतिविकलताकुब्जतादन्तशूलं तून्यौ गुल्मद्वयं वा गुदकटिचरणभ्रंशगुल्फौ च सुप्तिम् ॥ २२ ॥ विश्वाचीं वा वृषणपवनं धातुवा-

तापतानं मूकं कम्पं जयति सकलान्वातरोगाननुक्तान् । रेतोवृद्धिं जनयति नवं यौवनं पुंस्त्ववृद्धिं बुद्धिं प्राणं वितरति तथा पुष्टिमायुष्यकारि ॥ वन्ध्यायाः पुत्रदं स्याज्ज्वरविहिततनौ शोषदौर्भाग्यहन्तृ तैलं भूपोपयोग्यं विनिगदितमिदं नाम नारायणं च ॥ २३ ॥ इति महालक्ष्मीनारायणतैलम् ॥ अथ माषतैलम् ॥ माषक्काथे बलाक्काथे रास्नाया दशमूलजे । यवकोलकुलत्थानां छागमांसरसे पृथक् ॥१॥ प्रस्थं तैलस्य च प्रस्थं क्षीरं दद्याच्चतुर्गुणम् । रास्नात्मगुप्तासिन्धूत्थशताह्वैरण्डमुस्तकैः ॥२॥ जीवनीयवलाव्योषैः पचेदक्षमितैः पृथक् । हस्तकम्पे शिरःकम्पे बाहुकम्पेऽवबाहुके ॥३॥ बस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् । माषतैलमिदं श्रेष्ठमूर्ध्वजत्रुगदापहम् ॥ ४॥ इति माषतैलम् ॥ अथ महाबलातैलम् ॥ बलामूलकषायस्य दशमूलीकृतस्य च । यवकोलकुलत्थानां क्काथस्य पयसस्तथा ॥१॥ अष्टावष्टौ शुभान्भागांस्तैलादन्ये तदेकतः । पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ॥२॥ तथागुरुं सर्जरसं सरलं देवदारु च । मञ्जिष्ठाचन्दनं कुष्ठमेला कोलाञ्जनं वरा ॥ ३ ॥ मांसीशैलेयकं पत्रं तगरं सारिवा वचा । शतावरी चाश्वगन्धा शतपुष्पा पुनर्नवा ॥ ४ ॥ तत्संसिद्धं च सौवर्णे राजते मृन्मयेऽथ वा । प्रक्षिप्य सकलं सम्यक् सुगुप्तं स्थापयेद्बुधः ॥ ५ ॥ बलातैलमिदं ख्यातं सर्ववातविकारनुत् । यथाबलं भिषङ्मात्रां सूतिकायै प्रदापयेत् ॥ ६ ॥ या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् । क्षीणो वातैर्मर्महते मथिते पीडिते तथा ॥ ७ ॥ भग्ने च च्छिन्नभिन्ने च सर्वथैव प्रयोजयेत् । सर्वानाक्षेपकादींश्च वातव्याधीन् व्यपोहति ॥८॥ प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः । राज्ञा त्वेतद्धि कर्तव्यं राजमान्यैस्तथानरैः ॥ ९ ॥ इति महाबलातैलम् ॥ अथ विजयभैरवतैलम् ॥ रसं गन्धं शिलातालं सर्वं कुर्यात् समांशकम् । चूर्णयित्वा ततः श्लक्ष्णमारनालेन पेषयेत् ॥ १ ॥ तेन कल्केन संलेप्य क्षौमं वस्त्रं ततः परम् । घृताक्तां कारयेद्वर्तिमूर्ध्वभागे प्रदीपयेत् ॥ २ ॥ तस्याधःस्थापिते पात्रे तैलं पतति शोभनम् । लेपयेत्तेन गात्राणि भक्षयेदातुरः सदा ॥ ३ ॥ नाशयेत्सूत्रतैलं तद्वातरोगानशेषतः । बाहुकम्पं शिरःकम्पं जङ्घाकम्पं ततः परम् ॥ ४ ॥ एकाङ्गं च तथा वातं हन्ति लेपान्न संशयः । रोगशान्त्यै सदा भक्ष्यं तैलं विजयभैरवम् ॥ ५ ॥ इति विजयभैरवतैलम् ॥ अथ रास्नापूतिकतैलम् ॥ दशमूलबलादारु अश्वगन्धा शतावरी । वरुणैरण्डनिर्गुण्डीतर्कारीशिग्रुमोरटम् ॥१॥ सहाचरं चित्रमूलं करञ्जं कोलमूलकम् । पुनर्नवां च भूपीलु अर्कपुङ्खी दुरालभा ॥२॥ जीवन्ती विषतिन्दुश्च वातारिर्हिंस्रशिग्रुकम् । अलर्कयवकोलं च कुलित्थानां कषायकम् ॥३॥ एतेषां च समां रास्नां पूतिकं च तयोः समम् । अष्टभागावशेषं तु कषायमवतारयेत् ॥४॥ तत्पादं तिलतैलं च त्वजाक्षीरं च तत्समम् । गुग्गुलुं तगरं मांसीं त्रिकटु त्रिफलानि च ॥ ५ ॥ चातुर्जातं कचोरं च विडङ्गामरदारु च । हिङ्गुरास्नावचातिक्तापाठायष्टिकचित्रकम् ॥ ६ ॥ प्रियङ्गु-

१ ( च० ) धत्ते । २ ( च० ) सूततैलम् । ३ ( च० ) पुष्पी ।

पिप्पलीमूलं चन्दनं चव्यदीप्यकम् । वरालं चम्पकं कुष्ठं मञ्जिष्ठामिशिसर्षपम् ॥ ७ ॥ जातीफलं सुगन्धं च पाठोशीरं समांशकम् । एतत्तैलस्य षष्ठांशं कल्कद्रव्याणि दापयेत् ॥ ८ ॥ सुमुहूर्ते सुनक्षत्रे नववस्त्रेण पीडयेत् । पानलेपननस्याद्यशिरोबस्तिषु पूजितम् ॥ ९ ॥ धनुर्वातान्तरायामं गृध्रसीमवबाहुकम् । आक्षेपके व्रणायामे विश्वाच्यामपतन्त्रके ॥ १० ॥ आढ्यवाते हनुस्तम्भे शिरोवातापतानके । भ्रूशङ्खकर्णनासाक्षिजिह्वास्तम्भेऽवदारुके ॥ ११ ॥ कलायखञ्जतापङ्गुसर्वाङ्गैकाङ्गमारुते । अर्दिते पादहर्षे च पक्षाघाते प्रशस्यते ॥ १२ ॥ ऊरुस्तम्भं सुप्तवातं नाशयेन्नात्र संशयः । रास्नापूतीकनामैतत्तैलमात्रेयनिर्मितम् ॥ १३ ॥ इति तैलानि ॥

## ॥ अथ पञ्चतिक्तघृतम् ॥

निम्बामृतावृषपटोलनिदिग्धिकानां भागान्पृथग् दशपलानि पचेद्घटेऽपाम् । अष्टावशेषितरसेन पुनश्च तेन प्रस्थं घृतस्य विपचेत्पिचुभागकल्कैः ॥ १ ॥ रास्नाविडङ्गसुरदारुगजोपकुल्याद्विक्षारनागरनिशामिशिचव्यकुष्ठैः । तेजोवतीमरिचवत्सकदीप्यकाग्निरोहिण्यपुष्करवचाकणमूलयुक्तैः ॥ २ ॥ मञ्जिष्ठया तु विषया त्रिवृता यवान्या संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः । तत्सेवितं घृतमतिप्रबलं समीरं सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ ३ ॥ नाडीव्रणार्बुदभगन्दरगण्डमालाजत्रूर्ध्ववातगुदगुल्मगुदोत्थमेहान् । यक्ष्मारुजश्वसनपीनसकासशोफहृत्पाण्डुरोगमथ विद्रधिवातरक्तम् ॥ ४ ॥ इति पञ्चतिक्तघृतम् ॥

## ॥ अथाजमोदादिवटी ॥

अजमोदा कणा वेल्लं शतपुष्पा सनागरम् । मरीचं सैन्धवं देवं भागैकं च पृथक् पृथक् ॥ १ ॥ पञ्चभागा हरीतक्याः शुण्ठी च दशभागिका । वृद्धदारोर्दशांशः स्यात् षट्त्रिंशद् गुडभागकाः ॥ २ ॥ गुडपाकैर्वटीं कृत्वा मात्राकर्षः प्रकीर्तितः । संधिवाते प्रदेयं तत्त्वामवाते सुदारुणे ॥ उष्णोदकानुपानेन सर्ववातं नियच्छति ॥ ३ ॥

## ॥ अथ वाते कढी ॥

निर्गुण्डीदीप्यकं वह्निहरिद्राविश्वभेषजम् । तक्रं काञ्जिकसम्पक्वं वातघ्नं वह्निवर्धनम् ॥ १ ॥

## ॥ अथ स्वेदलेपविधिः ॥

एरण्डार्ककरञ्जमोरटबलातर्कारिसोमस्नुहीनिर्गुण्डीतलपोटशिग्रुवरणास्फोताश्वगन्धादिजैः । पत्रैः काञ्जिकमूत्रचुक्रसहितैः स्विन्नैर्घटस्थैः कृतैः स्वेदः क्रुद्धसमीरणार्तवपुषां सद्यः सुखोत्पादकः ॥ १ ॥ निर्गुण्ड्या चोपनाहं च सकरञ्जैः सपित्तलैः । भेषजैः सेकलेपादि त्वभिषेकादिकं चरेत् ॥ २ ॥ शतपुष्पसुरद्रुदिनेशपयो

१ ( च० ) बाहुके । २ ( च० ) मात्राकर्षप्रमाणतः ।

गदरामठसिन्धुभवं हरति । अपि लेपनतोऽस्थिगतं मरुतं कटिसन्धिभवं त्रिदिनात्सततम् ॥ ३ ॥

## ॥ अथ महाशाल्वणयोगः शार्ङ्गधरात् ॥

कुलत्थमापगोधूमैरतसीतिलसर्षपैः । शतपुष्पं देवदारुशेफालीस्थूलजीरकैः ॥१॥ एरण्डबिल्वमूलैश्च रास्नामूलैश्च शिग्रुभिः । मिशिकृष्णाकुठेरैश्च लवणैरम्लसंयुतैः ॥२॥ प्रसारण्यश्वगन्धाभ्यां बलाभिर्दशमूलकैः । गुडूच्या वानरीबीजैर्यथालाभं समाहृतैः ॥ ३ ॥ क्षुण्णैः स्विन्नैश्च वस्त्रेण घृतैः संस्वेदयेन्नरम् । महाशाल्वणसंज्ञोऽयं योगः सर्वानिलार्तिजित् ॥ ४ ॥

## ॥ अथ स्वेदलेपविधिः ॥

तक्षयित्वा क्षुरेणाङ्गं केवलानिलपीडितम् । तत्र प्रदेहं दद्याच्च पिष्टा गुञ्जाफलैः कृतम् ॥ १ ॥ तेनावबाहुजा पीडा विश्वाची गृध्रसी तथा । अन्यापि वातजा पीडा प्रशमं याति वेगतः ॥ २ ॥ इति स्वेदलेपविधिः ॥

## ॥ अथ वातहा पोटली ॥

पुन्नागैरण्डबिम्बैर्बकुलधनदहङ्गनारिकेलैः करञ्जैः कार्पासैः शिग्रुडोलाफलमुनिषण्णकैः सर्षपाङ्कोलबीजैः । रास्नाकुष्ठैः कुलत्थैस्तिललशुनवचाहिङ्गुसिद्धार्थविश्वैः सर्वैः स्नेहैः कृतं तत्सकलपटु युतं पोटलं वातभञ्जि ॥ १ ॥ इति योगसारात् ॥

## ॥ अथ शार्ङ्गधराल्लशुनकल्कः ॥

पक्वकन्दरसोनस्य गुलिका निस्तुषीकृताः । पाटयित्वा च मध्यस्थं दूरीकुर्यात्तदङ्कुरम्॥१॥तदुग्रगन्धनाशाय रात्रौ तक्रे विनिक्षिपेत् ॥ अपनीय च तन्मध्याच्छिलायां पेषयेत्ततः॥२॥तन्मध्ये पञ्चमांशेन चूर्णमेषां विनिक्षिपेत् । सौवर्चलं यवानी च भर्जितं हिङ्गु सैन्धवम् ॥ ३ ॥ कटुत्रिकं जीरकं च समभागानि चूर्णयेत् । एकीकृत्य ततः सर्वं कल्कं कर्षप्रमाणतः ॥ ४ ॥ खादेदग्निबलापेक्षी ऋतुदोषाद्यपेक्षया । अनुपानं ततः कुर्यादेरण्डस्तमन्वहम् ॥ ५ ॥ सर्वाङ्गैकाङ्गजं वातमर्दितं चापतन्त्रकम् । अपस्मारं तथोन्मादमूरुस्तम्भं च गृध्रसीम् ॥ ६ ॥ उरःपार्श्वकटीपार्श्वकुक्षिपीडाकृमीञ्जयेत् । अजीर्णमातपं रोषं तप्तनीरं पयो गुडम् ॥७॥ रसोनमश्नन् पुरुषस्त्यजेदेतन्निरन्तरम् । मद्यं मांसं तथाम्लं च रसं सेवेत नित्यशः ॥ ८ ॥ अन्यच्च । शुद्धः कल्को रसोनस्य तिलतैलेन मिश्रितः । वातरोगाञ्जयेत्तीव्रान्विषमज्वरनाशनः ॥ १ ॥ इति लशुनकल्कः ॥

## ॥ अथैरण्डपाकः ॥

वातारितैलप्रस्थं तु सुपक्वं निस्तुषीकृतम् । क्षीरद्रोणार्धसंयुक्तं भिषङ् मन्दाग्नि-

ना पचेत् ॥१॥ घृतप्रस्थार्धयुक् पक्कं खण्डप्रस्थद्वयं क्षिपेत् । त्र्यूषणं सचतुर्जातं ग्रन्थिकं वह्निचव्यकम् ॥ २ ॥ छत्रा मिशिः शटी बिल्वदीप्यौ जीरे निशायुगम् । अश्वगन्धा बला पाठा हपुषा वेल्लपुष्करम् ॥ ३ ॥ श्वदंष्ट्रारुग्वरादारुवेल्लर्यावालुकावरी । एतानि पिचुमात्राणि चूर्णितानि विनिक्षिपेत् ॥ ४ ॥ वातव्याधींश्च शूलं च शोफं वृद्धिं तथोदरम् । आनाहं बस्तिरुग्गुल्ममामवातं कटिग्रहम् ॥ ऊरुग्रहं हनुस्तम्भं नाशयेदपि योगतः ॥ ५ ॥ इत्यैरण्डपाकः ॥

## ॥ अथ रसाः ॥

शार्ङ्गधरात् स्वच्छन्दभैरवरसः ॥ शुद्धसूतं मृतं लोहं ताप्यं गन्धं च तालकम् । पथ्याग्निमन्थनिर्गुण्डीत्र्यूषणं टङ्कणं विषम् ॥ १ ॥ तुल्यांशं मर्दयेत् खल्वे दिनं निर्गुण्डिकाद्रवैः । मुण्डीद्रावैर्दिनैकं तु द्विगुञ्जं वटकीकृतम् ॥ २ ॥ भक्षयेद्वातरोगार्तो नाम्ना स्वच्छन्दभैरवः । रास्नामृतादेवदारुशुण्ठीवातारिजं शृतम् ॥ सगुग्गुलुं पिबेत्कोष्णमनुपानं सुखावहम् ॥ ३ ॥ इति स्वच्छन्दभैरवः ॥ अथ समीरपन्नगः । अभ्रगन्धविषव्योपरसटङ्कान्समांशकान् । भावयेत्सप्तधा भृङ्गरसेन स्यात्समीरहा ॥ १ ॥ आर्द्रद्रवेण वल्लो वा खण्डव्योषेण योजितः । महावाताञ्जयत्याशु नासाध्मातः सुसंज्ञकृत् ॥ २ ॥ अथ वातविध्वंसनो रसः ॥ रसं गन्धकं नागवङ्गं च लोहं तथा ताम्रजं व्योम निश्चन्द्रिकं च । कणा टङ्कणं त्र्यूषणं नागरं वै पृथग् भागमेकं विमर्द्यैकयामम् ॥१॥ ततो वत्सनाभं चतुःसार्धभागं दृढं मर्दयेद्भावना व्योषसंज्ञा । वराचित्रकैर्मार्कवैः कुष्ठजाद्भिस्त्रिभिर्भावयेन्निर्गुडीभानुदुग्धैः ॥ २ ॥ महीधात्रिकाचन्द्रिकानिम्बुनीरैः समं भावयेद्वातविध्वंसनोऽयम् । समीरे च शूले महाश्लेष्मरोगे ग्रहण्यां तथा सन्निपाते च सर्वे ॥ स्त्रियाः सूतिकावातरोगेषु दद्यात्पिबेत गुञ्जाद्वयं सूतमेनम् ॥ ३ ॥ इति वातविध्वंसनो रसः ॥ अथ वातराक्षसरसः ॥ मृतं सूतं तथा गन्धं कान्तं चाभ्रकमेव च । ताम्रभस्मकृतं सम्यग् मर्दयित्वा समांशकम् ॥ १ ॥ पुनर्नवागुडूच्यग्निसुरसात्र्यूषणं तथा । एतेषां स्वरसेनैव भावयेत्त्रिदिनं पृथक् ॥ २ ॥ दत्वा लघुपुटं सम्यक् स्वाङ्गशीतं समुद्धरेत् । वातराक्षसनामायं वातरोगे प्रयोजयेत् ॥ ३ ॥ तत्तद्रोगानुपानेन द्विगुञ्जामात्रसेवनात् । ऊरुस्तम्भे वातरक्ते गात्रभङ्गे तथैव च ॥४॥ आमवातं धनुर्वातं वेदनावातमेव च । पक्षाघातं कम्पवातं सर्वसन्धिगतं तथा ॥ ५ ॥ सुप्तिवातं च शूलं च उन्मादं च विनाशयेत् । तत्तद्रोगानुपानेन वाताशीतिविनाशनः ॥ ६ ॥ इति रससारसंग्रहे वातराक्षसरसः ॥ अथ धनुर्वाते सूतिकाभरणरसः ॥ सुवर्णं रजतं ताम्रं प्रवालं पारदं समम् । गन्धकं चाभ्रकं तालं शिला त्रिकटु रोहिणी ॥ १ ॥ एतानि समभागानि रविक्षीरेण मर्दयेत् । चित्रमूलकषायेण पुनर्नवारसेन च ॥ २ ॥ दिनं गजपुटे पाच्यं मूषायां धारयेत् पृथक् । अनुपानविशेषेण देयं गुञ्जार्धकं च तत् ॥ ३ ॥ सूतिकारोगमतुलं धनुर्वातं

---

१ (च०) धात्र्या । २ (च०) मनो—

विशेषतः । त्रिदोषोत्थान् हरेद्व्याधीनिच्छापथ्यं प्रदापयेत् ॥ सूतिकाभरणं नाम सर्वरोगहरं च तत् ॥ ४ ॥ अथ वातरोगे प्रतापाग्निकुमारो रसः ॥ पारदं शुल्बजं भस्म विषं मरिचनागरम् । त्रिक्षारं पञ्चलवणमेभिर्मर्द्यार्द्रकद्रवैः ॥ १ ॥ काचकूप्यन्तरे क्षिप्त्वा मृदा संलेपयेद्बहिः । शनैर्मृद्वग्निना पाच्यं वालुकायन्त्रके दिनम् ॥ २ ॥ स्वाङ्गशीतलमुद्धृत्य दशांशं च विषं क्षिपेत् । सूक्ष्मचूर्णं कृतं खल्वे गुञ्जामात्रं प्रदापयेत् ॥ ३ ॥ सन्निपातान्निहन्त्याशु आर्द्रकद्रवसंयुतः । प्रतापाग्निकुमारोऽयं सर्ववातहरः परम् ॥ ४ ॥ अथ प्रसूतवाते लक्ष्मीनारायणरसः ॥ शुद्धगन्धकमेतच्च टङ्कणं विषहिङ्गुलम् । रोहिण्यतिविपाकृष्णावत्सकाभ्रकसैन्धवम् ॥ १ ॥ एतानि समभागानि खल्वमध्ये विनिक्षिपेत् । दन्तिद्रावैः फलद्रावैर्मर्दयेच्च दिनत्रयम् ॥२॥ वल्लद्वयां वटीं कृत्वा आर्द्रकस्य जलैर्ददेत् । दोषज्वरे सन्निपाते विषूच्यां विषमज्वरे ॥ ३ ॥ अतिसारे ग्रहण्यां च रक्तामे मेहशूलजित् । सूतिकावातदोषघ्नो लङ्केशमिव राघवः ॥ ४ ॥ इष्टान्नं भोजयेत्पथ्यमभ्यङ्गं स्नानमाचरेत् । कर्पूरमिश्रताम्बूलं प्रसूनं हरिचन्दनम् ॥५॥ नारिकेलोदकं पीत्वा नारीणां संगमेव च । लक्ष्मीनारायणो नाम रसानामुत्तमो रसः ॥ ६ ॥ इति रसाः ॥

## ॥ अथ पथ्यापथ्यम् ॥

कुलत्थमाषगोधूमाः रक्ताभाः शालयो हिताः । पटोलं शिग्रुवार्ताकं दाडिमं च परूषकम् ॥ १ ॥ मत्स्यपण्डिका घृतं दुग्धं किलाटं दधिकूर्चिका । बदरं लशुनं द्राक्षा ताम्बूलं लवणं तथा ॥ २ ॥ चटकः कुक्कुटो बर्हीं तित्तिरश्चेति जाङ्गलाः । शिलीन्द्रः पर्वतो नक्रो गर्गरः खुडिशो झषः ॥ ३ ॥ यथाश्रयं यथावस्थं यथाचरणमेव च । वातव्याधौ समुत्पन्ने पथ्यमेतन्नृणां भवेत् ॥ ४ ॥ चिन्ताप्रजागरणवेगविधारणानि छर्दिःश्रमोऽनशनता चणकाः कलायाः । श्यामाकचूर्णकुरुबिन्दुनिवारकङ्गुमुद्रास्तडागतटिनीसलिलं करीरम् ॥ ५ ॥ क्षौद्रं कषायकटुतिक्तरसा व्यवायो हस्त्यश्वयानमपि चङ्क्रमणं च खट्वा । आध्मानिनोऽर्दितवतोऽपि पुनर्विशेषात्स्नानं प्रदुष्टसलिलैर्द्विजघर्षणं च ॥ ६ ॥ निःशेषतस्त्रपरिकीर्तित एष वर्गो नृणां समीरणगदेषु मुदं न दत्ते ॥ ७ ॥ इति पथ्यापथ्यविधिः ॥ वातरोगस्त्वसाध्योऽयं दैवयोगात्सुसिध्यति । अनुमानेन कुर्वन्ति वैद्यकं न प्रतिज्ञया ॥ ८ ॥ वातरोगचिकित्सा समाप्ता ॥

---

## ॥ अथ वातरक्तनिदानम् ॥

कृतं तावत्समासेन वातव्याधिनिरूपणम् । वातव्याधिप्रसङ्गेन वातरक्तं निरूप्यते ॥ १ ॥ लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः । क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥ २ ॥ कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः । दध्यारनालसौवीरशुक्ततक्रसुरासवैः ॥ ३ ॥ विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः । प्रायशः सुकु-

माराणां मिथ्याहारविहारिणाम् ॥ स्थूलानां सुखिनां चापि प्रकुप्येद्वातशोणितम् ॥४॥ तस्य संप्राप्तिमाह॥हस्त्यश्वोष्ट्रैर्गच्छतोऽन्यैश्च वायुः कोपं प्राप्तः कारणैः सेवितैः स्वैः। तीक्ष्णोष्णाम्लैः क्षारशाकादिभोज्यैः सन्तापाद्यैर्भूयसा सेवितैश्च॥ १॥ शीघ्रं रक्तं दुष्टिमायाति तच्च वायोर्मार्गं संरुणद्ध्याशु जातः। क्रुद्धोऽत्यर्थं मार्गरोधात्स वायुरत्युद्रिक्तं दूषयेद्रक्तमाशु॥ २॥ कृत्स्नं रक्तं निर्दहत्याशु दुष्टं स्रस्तं शीघ्रं पादयोश्चीयते तु। तत्सम्पृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम्॥ तद्वत्पित्तं दूषितेनासृजाक्तं श्लेष्मा दुष्टो दूषितेनासृजाक्तः॥ ३॥ क्रुद्धो रुद्धगतिर्मरुत्प्रकुपितेनास्रेण सन्दूष्यते प्राप्यादौ तदनु प्रधावति वपुः कण्डूर्तिसुप्त्यादयः। जायन्ते करपादसन्धिषु मुहुर्वातास्रमेतत्कफे क्रुद्धो दोषवदादिशेत्तु विषवत्कृत्स्नं वपुर्धावति॥४॥ स्पर्शोद्विग्नौ तोदभेदप्रशोषस्वापोपेतौ वातरक्तेन पादौ। पित्तासृग्भ्यामुग्रदाहौ भवेतामत्यर्थोष्णौ रक्तशोथौ मृदू च॥ ५॥ कण्डूमन्तौ श्वेतशीतौ सशोफौ पीनस्तब्धौ श्लेष्मदुष्टे च रक्ते। सर्वैर्दुष्टे शोणिते चापि दोषाः स्वं स्वं रूपं पादयोर्दर्शयन्ति॥ ६॥ अथ तस्य पूर्वरूपमाह॥ स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक्। सन्धिशैथिल्यमालस्यं सदनं पिटिकोद्गमः॥ १॥ जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु। निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च॥ २॥ कण्डूः सन्धिषु रुग् दाहो भूत्वा नश्यति चासकृत्। वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम्॥ ३॥ दोषान्तरसंसर्गेण कारणमाह। तत्र वाताधिकलक्षणम्॥ वाताधिकेऽधिकं तत्र शूलस्फुरणतोदनम्। शोथश्च रौक्ष्यं कृष्णत्वं श्यावता वृद्धिहानयः॥१॥ धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक्। शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तताः॥ २॥ अथ रक्ताधिकलक्षणमाह॥ रक्ते शोथोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते। स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः॥ १॥ अथ पित्ताधिकमाह॥ पित्ते विदाहः सम्मोहः स्वेदो मूर्च्छा मदस्तृषा। स्पर्शासहत्वं रुग्दाहः शोथः पाको भृशोष्णता॥ १॥ अथ कफाधिकमाह॥ कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः॥ अथ द्वन्द्वलक्षणम्॥ कण्डूर्मन्दा च रुग् द्वन्द्वे॥ अथ सन्निपातलक्षणमाह॥ सर्वलिङ्गं च सङ्करे॥ १॥ पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि। आखोर्विषमिव क्रुद्धं तद्देहमनुसर्पति॥ २॥ अथैतस्यैवासाध्ययाप्यत्वमाह॥ आजानुस्फुटितं यच्च प्रभिन्नं प्रस्रुतं च यत्। उपद्रवैश्च यज्जुष्टं प्राणमांसक्षयादिभिः॥ वातरक्तमसाध्यं स्याद्याप्यं संवत्सरोत्थितम्॥१॥ अथ तस्योपद्रवानाह॥ अस्वप्नारोचकश्वासमांसकोथशिरोग्रहः। संमूर्च्छा मदरुक्तृष्णा ज्वरमोहप्रलेपकाः॥ १॥ हिक्कापाङ्गुल्यवैसर्पपाकतोदभ्रमक्लमाः। अङ्गुलीवक्रता स्फोटदाहमर्मग्रहार्बुदाः॥ २॥ एतैरुपद्रवैर्युक्तं मोहेनैकेन वापि यत्। वातरक्तमसाध्यं स्याद्यच्चातिक्रान्तवत्सरम्॥३॥ अकृत्स्नोपद्रवं

---

१ (च०) रुग्माहः। २ (च०) मन्द। ३ (च०) वैज्यर्म्।

याप्यं साध्यं स्यान्निरुपद्रवम् । एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ॥ त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः ॥ ४ ॥ इति वातरक्तनिदानम् ॥

## ॥ अथ वातरक्तचिकित्सा ॥

वातरक्तं द्विधा ज्ञेयं गम्भीरोत्तानभेदतः । त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम् ॥ १ ॥ कालातिक्रान्तमेतत्तु कष्टं भवति दुर्धरम् । विरेकास्थापनस्नेहैर्गम्भीरं तदुपाचरेत् ॥ २ ॥ उत्तानं लेपनाभ्यङ्गपरिषेकावगाहनैः । वाताधिकं वातरक्तं स्नेहाद्यैः समुपाचरेत् ॥ ३ ॥ रक्ताढ्यं रक्तमोक्षाद्यैः पित्ताद्यं रेचनादिभिः । कफाद्यं वमनाद्यैश्च प्रोक्तैरत्रौषधैर्भिषक् ॥ ४ ॥ संसर्गे सन्निपाते च क्रियां मिश्रां समाचरेत् । वातरक्ते द्वित्रिलिङ्गे द्वित्रिहेतुसमुत्थिते ॥ ५ ॥ वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत् । अल्पाल्पं रक्षता युक्तं यथादोषं यथाबलम् ॥ ६ ॥ सर्वत्रासृक्स्रुतिः सूचीजलूकाशृङ्गयलाबुभिः । शतधौतघृताभ्यङ्गो मेषीदुग्धावसेचनम् ॥ ७ ॥ रूक्षैर्वा मृदुभिः शस्तमसकृद्वस्तिकर्म च । न हि बस्तिसमं किञ्चिद्वातरक्ते चिकित्सितम् ॥ ८ ॥

## ॥ अथ क्वाथाः ॥

अथ वासादिक्काथः । वासागुडूचीचतुरङ्गुलानामेरण्डतैलेन पिबेत्कषायम् । क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारम् ॥ १ ॥ योगशतात् ॥ अथ नवकार्षिकक्काथः॥ दार्वीगुडूचीकटुकोग्रगन्धामञ्जिष्ठनिम्बत्रिफलाकषायः । वातास्रमुच्चैर्नवकार्षिकाख्यो जयेच्च कुष्ठानखिलान्नराणाम् । पञ्चतिक्तकषायेण योजयेन्नवकार्षिकम् ॥१॥ इति सारसङ्ग्रहान्नवकार्षिकक्काथः ॥ अथ गुडूच्यादिः । वत्सादन्युद्भवः क्काथः पीतो गुग्गुलुमिश्रितः । समीरेण समायुक्तं शोणितं संप्रणाशयेत् ॥ १ ॥ इति गुडूच्यादिः कदम्बात् ॥ अथ काश्मर्यादिः ॥ पित्तोत्तरे तु काश्मर्यद्राक्षारग्वधचन्दनैः । मधुकक्षीरकाकोलीयुक्तैः क्काथं सुशीतलम् ॥ शर्करामधुसंयुक्तं वातरक्ते पिबेन्नरः ॥१॥ इति योगतः । अथ पटोलादिः । पटोलत्रिफलाभीरुकटुकामृतसाधितम् । क्काथं पीत्वा जयत्याशु सदाहं वातशोणितम् ॥ १ ॥ इति वृन्दात् ॥ अथ कोकिलादिः ॥ कोकिलाक्षामृताक्काथं पिबेत्कोष्णं यथाबलम् । पथ्यभोजी त्रिसप्ताहान्मुच्यते वातशोणितात् ॥ १ ॥ इति वृन्दात् ॥ अथ लघुमञ्जिष्ठादिः ॥ मञ्जिष्ठा त्रिफला तिक्ता वचा दारु निशामृता । निम्बश्चैषां कृतः क्काथो वातरक्तविनाशनः ॥ पामाकपालिकाकुष्ठरक्तमण्डलजिन्मतः ॥ १ ॥ इति शार्ङ्गधरात् ॥ अथ बृहन्मञ्जिष्ठादिः ॥ मञ्जिष्ठामुस्तकुटजगुडूचीकुष्ठनागरैः । भार्गीक्षुद्रावचानिम्बनिशाद्वयफलत्रिकैः ॥ १ ॥ पटोलकटुकामूर्वाविडङ्गासनचित्रकैः । शतावरीत्रायमाणाकृष्णेन्द्रयववासकैः ॥ २ ॥ भृङ्गराजमहादारुपाठाखदिरचन्दनैः । त्रिवृद्वरुणकैरातबाकुचीकृतमालकैः ॥ ३ ॥ शाखोटकमहानिम्बकरञ्जातिविषाजलैः । इन्द्रवारुणिकानन्तासारिवापर्पटैः समैः

१ (च०) कुष्ठम् ।

॥ ४ ॥ एभिः कृतं पिबेत्क्वाथं कणागुग्गुलुसंयुतम् । अष्टादशेषु कुष्ठेषु वातरक्तार्दिते तथा ॥ ५ ॥ उपदंशे श्लीपदे च प्रसुप्तौ पक्षघातके । मेदोदोषे नेत्ररोगे मञ्जिष्ठादिः प्रशस्यते ॥ ६ ॥ इति बृहन्मञ्जिष्ठादिः शार्ङ्गधरात् ॥ इति क्वाथाः ॥

## ॥ अथ गुग्गुलू ॥

तत्र प्रथमस्तु कैशोरगुग्गुलुः । त्रिफलायास्त्रयः प्रस्थाः प्रस्थैकममृता भवेत् । संक्षुद्य लोहपात्रे तु सार्धद्रोणाम्बुना पचेत् ॥१॥ जलमर्धं शृतं ज्ञात्वा गृह्णीयाद्वस्त्रगालितम् । ततः क्वाथे क्षिपेच्छुद्धं गुग्गुलुं प्रस्थसम्मितम् ॥२॥ पुनः पचेदयस्पात्रे दर्व्या संघट्टयेन्मुहुः । सान्द्रीभूतं च तं ज्ञात्वा गुडपाकसमाकृतिम् ॥ ३ ॥ चूर्णीकृत्य ततस्तत्र द्रव्याणीमानि निक्षिपेत् । त्रिफला द्विपला ज्ञेया गुडूची पलिका मता ॥ ४ ॥ षडक्षं त्र्यूषणं प्रोक्तं विडङ्गं च पलार्धकम् । दन्ती कर्षमिता कार्या त्रिवृत्कर्षमिता स्मृता ॥ ५ ॥ ततः पिण्डीकृतं सर्वं घृतभाण्डे विनिक्षिपेत् । गुटिकाः शाणिकाः कृत्वा युञ्ज्याद्दोषाद्यपेक्षया ॥ ६ ॥ अनुपानं भिषग् दद्यात्कोष्णं नीरं पयोऽथवा । मञ्जिष्ठादिशृतं वापि युक्तियुक्तमतः परम् ॥ ७ ॥ जयेत्सर्वाणि कुष्ठानि वातरक्तं त्रिदोषजम् । सर्वव्रणांश्च गुल्मांश्च प्रमेहपिटकास्तथा ॥८॥ प्रमेहोदरमन्दाग्निकासश्वयथुपाण्डुताः । हन्ति सर्वामयान्नित्यमुपयुक्तो रसायनः ॥ ९ ॥ कैशोरकाभिधानोऽयं गुग्गुलुः कान्तिकारकः । वासादिना नेत्रगदान् गुल्मादीन्वरुणादिना ॥ १० ॥ क्वाथेन खदिरस्यापि व्रणान्कुष्ठान्विनाशयेत् । आम्लं तीक्ष्णमजीर्णं च व्यवायं श्रममातपम् ॥ मद्यं रोषं त्यजेत्सम्यग्गुणार्थी पुरसेवकः ॥११॥ इति शार्ङ्गधरात् कैशोरगुग्गुलुः ॥ अथामृतगुग्गुलुः ॥ वृन्दात् ॥ प्रस्थमेकं गुडूच्याश्च सार्धप्रस्थं तु गुग्गुलोः । प्रत्येकं त्रिफलायाश्च तत्प्रमाणं विनिर्दिशेत् ॥ १ ॥ सर्वमेकत्र संक्षिप्य क्वाथयेन्नल्वणेऽम्भसि । पादशेषं परिश्राव्य कषायं ग्राहयेद्भिषक् ॥ २ ॥ पुनः पचेत्कषायं तु यावत्सान्द्रत्वमाप्नुयात् । दन्तीव्योषविडङ्गानि गुडूचीत्रिफलात्वचः ॥ ३ ॥ ततश्चार्धपलं पूतं गृह्णीयाद्वा प्रति प्रति । कर्षं तु त्रिवृतायाश्च सर्वमेकत्र चूर्णयेत् ॥ ४ ॥ तस्मिन्सुसिद्धं विज्ञाय कोष्णं पात्रे विनिक्षिपेत् । ततश्चाग्निबलं दृष्ट्वा तस्य मात्रां प्रयोजयेत् ॥ ५ ॥ वातरक्तं तथा कुष्ठं गुदजानग्निसादनम् । दुष्टव्रणं प्रमेहं च आमवातभगन्दरान् ॥ ६ ॥ खाञ्ज्यांढ्यवातान् श्वयथूंन्सर्वान् वातान्व्यपोहति । अश्विभ्यां निर्मितः पूर्वममृताद्यश्च गुग्गुलुः ॥ ७ ॥ इति गुग्गुलू ॥

## ॥ अथ तैलानि ॥

अथ लघुमरिचाद्यं तैलम् । मरिचालशिलार्कपयःकलिनीविषमुष्टिविषामरनिम्बघनैः । कुटजं सचतुर्गुणगोऽम्बुसृतं किल तैलमसृक्पवनापहरम् ॥ १ ॥ अथ बृहन्मरिचाद्यं तैलम् ॥ मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रसः । देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥ १ ॥ विशाला करवीरं च हरितालं मनःशिला । चित्रकं ला-

१ (च०) परिश्राव्य । २ (च०) नाम्नाऽयं । ३ (च०) घनैः । ४ (च०) शृतम् ।

ङ्गुली चापि विडङ्गं चक्रमर्दकम् ॥ २ ॥ शिरीषं कुटजो निम्बः सप्तपर्णामृता स्नुही । शम्याको नक्तमालश्च खदिरः पिप्पली वचा ॥ ३ ॥ ज्योतिष्मती च पलिका विषस्य द्विपलं मतम् । आढकं कटुतैलस्य गोमूत्रं च चतुर्गुणम् ॥ ४ ॥ मृत्पात्रे लोहपात्रे वा शनैर्मृद्वग्निना पचेत् । एतत्तैलं विशेषेण नाशयेत्कुष्ठजान्व्रणान् ॥ वातरक्तभवान्व्याधीन्पामाविस्फोटचर्चिकाम् ॥ ५ ॥ इति सारसंग्रहात् ॥ अथ पिण्डतैलं शार्ङ्गधरात् ॥ मञ्जिष्ठासारिवासर्जयष्टीसिक्थपयोन्वितैः । पिण्डाख्यं साधयेत्तैलमभ्यङ्गाद्वातरक्तनुत् ॥ १ ॥ अथ वृन्दात् सारिवादितैलम् ॥ सारिवासर्जयष्ट्याह्वमधूच्छिष्टपयोन्वितैः । सिद्धमेरण्डजं तैलमभ्यङ्गाद्वातरक्तनुत् ॥१॥ अथ पद्मकाष्ठादि तैलम् ॥ पद्मकोशीरयष्ट्याह्वं रजनीक्वाथसाधितम् । स्यात्पिष्टैः सर्जमञ्जिष्ठावीराकाकोलिचन्दनैः ॥ पद्मकाद्यमिदं तैलं वातासृग्दाहनाशनम् ॥ १ ॥ इति पद्मकाष्ठादि वृन्दात् ॥ अथ गुडूच्यादि ॥ गुडूचीक्वाथकल्काभ्यां तैलं लाक्षारसेन वा । सिद्धं मधूककाश्मर्यरसे वा वातरक्तनुत् ॥ १ ॥ इति वृन्दात् ॥ अथ वृन्दात् शताह्वादि ॥ शताह्वया च कुष्ठेन मधुकेन नवेन वा । एकैकं साधितं तैलं वातरक्तरुजापहम् ॥ १ ॥ इति तैलानि ॥

## ॥ अथ घृतानि ॥

अथ शार्ङ्गधरादमृताद्यं घृतम् ॥ अमृताक्वाथकल्काभ्यां सक्षीरं विपचेद् घृतम् । वातरक्तं जयत्याशु कुष्ठं जयति दुस्तरम् ॥ १ ॥ अथ सारसङ्ग्रहान्महातिक्तं घृतम् ॥ भूनिम्बाम्बुदनिम्बवत्सककणात्रायन्त्यनन्तामृतातिक्ताभीरुफलत्रिकप्रतिविषामूर्वाविषालाजलैः । पाठापर्पटसारिवाद्वयनिशायुग्मयष्टिकापद्मकैः सोशीरैः सपटोलचन्दनवचाशम्याकसप्तच्छदैः ॥ १ ॥ इत्येभिर्गदितैर्जलाष्टगुणितैः प्रस्थं पचेत्सर्पिषो गव्यस्यामलकीरसद्विगुणितं नाम्ना हि तिक्तं घृतम् । हन्त्येतद् गलगण्डमण्डलरुजं कण्डूंसपाण्ड्वामयां शोफश्लीपदवातरक्तविकृतीः कुष्ठानि चाष्टादश ॥ २ ॥ इति घृतानि ॥

## ॥ अथ योगादि ॥

छिन्नोद्भवाकषायेण सेव्यं शुद्धं शिलाजतु । पञ्चकर्मविशुद्धेन वातरक्तप्रशान्तये ॥ १ ॥ अथामृताद्यवलेहिका ॥ अमृता कटुका शुण्ठी यष्टीकल्कं समाक्षिकम् । गोमूत्रपीतं जयति सकफं वातशोणितम् ॥ १ ॥ अथ गुडूचीयोगः ॥ गुडूच्याः स्वरसं कल्कं चूर्णं वा क्वाथमेव च । प्रभूतकालमासेव्य मुच्यते वातशोणितात् ॥ १ ॥

## ॥ अथ लेपनम् ॥

ग्रन्थान्तरात् । प्रपौण्डरीकमञ्जिष्ठादार्वीमधुकचन्दनैः । सितोपलैलासक्तुश्च मसूरोशीरपद्मकैः ॥ १ ॥ लेपो रुग्दाहवीसर्परागशोफनिवारणः । लेपः पिष्टा-

---

१ ( च० ) लेप्याः ।

स्तिलास्तद्वद्घृष्टाः पयसि निर्वृताः ॥ २ ॥ क्षीरपिष्टान्युपालेप्यान्यैरण्डस्य फलानि च । कुर्याच्छूलनिवृत्त्यर्थं शताह्वां बाधिकेऽनिले ॥ ३ ॥ मूत्रक्षीरसुरासिद्धं घृतमभ्यञ्जने हितम् । सिद्धं समधुसूक्तं तु सेकाभ्यङ्गे कफोत्तरे ॥४॥ गृहधूमवचाकुष्ठशताह्वारजनीद्वयम् । प्रलेपः शूलनुद्वातरक्ते वातकफोत्तरे ॥ प्रभूतकालमासेव्य मुच्यते वातशोणितात् ॥ ५ ॥ अथ लेपनम् ॥ उभे शताह्वे मधुकं विशालां बलां प्रियालं च कसेरुयुग्मम् । घृतं विदारीं च सितोपलां च कुर्यात्प्रदेहं पवने सरक्ते ॥ १ ॥ सहस्रशतधौतेन घृतेन रुधिरोत्तरे । लेपनं चोष्मशीतेन घृतसर्जरसेन वा ॥२॥ आरनालाढके तैलं पादसर्जरसं शृतम् । प्रस्थस्थे निर्जिते तोये ज्वरदाहार्तिनुत्परम् ॥३॥ समधूच्छिष्टमञ्जिष्ठा ससर्जरससारिवा । पिण्डतैलं तथाभ्यङ्गाद्वातरक्तरुजापहम् ॥ ४ ॥ इति वातरक्ते ॥

## ॥ अथ पञ्चामृतरसः ॥

रसरत्नप्रदीपात् । पारदं च क्रियाशुद्धं तत्तुल्यं शुद्धगन्धकम् । अभ्रकं तु द्वयोस्तुल्यं त्रिभिस्तुल्यस्तु गुग्गुलुः ॥ १ ॥ सर्वांशममृतासत्त्वं भावयेदौषधैः पृथक् । निर्गुण्डीगोक्षुरच्छिन्नाकोकिलाक्षाङ्घ्रिजै रसैः ॥ २ ॥ सप्तवारं ततो गुञ्जयाद्वातरक्ते त्रिवल्लकम् । कोकिलाक्षस्य मूलानां पानीयमनुपाययेत् ॥ ३ ॥ इति पञ्चामृतरसः ॥

## ॥ अथ पथ्यापथ्यम् ॥

यवषष्टिकनीवारकलमारुणशालयः । गोधूमाश्चणका मुद्गास्तुवर्योऽपि मकुष्ठकाः ॥ १ ॥ अव्यजामाहिषीणां च गवामपि पयांसि च । उपोदिका काकमाची वेत्राग्रं सुनिषण्णकम् ॥ २ ॥ वास्तुकं कारवेल्लं च तण्डुलीयं पटोलकम् । धात्रीफलं शृङ्गबेरं सूरणं श्वेतशर्करा ॥ ३ ॥ मृद्वीका वृद्धकूष्माण्डनवनीतं नवं घृतम् । लावतित्तिरवर्तीकताम्रचूडविविष्किराः ॥ ४ ॥ प्रतुदाः शुकदात्यूहकपोतचटकादयः । शशिनागरुदेवाह्वसरलस्नेहमर्दनम् ॥ ५ ॥ तिक्तं च पथ्यमुद्दिष्टं वातरक्तगदे नृणाम् । दिवास्वप्नाग्निसंतापव्यायामातपमैथुनम् ॥ ६ ॥ माषाः कुलत्था निष्पावाः कलायाः क्षारसेवनम् । अण्डजानूपमांसानि विरुद्धानि दधीनि च ॥ ७ ॥ इक्षवो मूलकं मद्यं ताम्बूलं काञ्जिकं तिलान् । कटूष्णं गुर्वभिष्यन्दि लवणानि च सक्तवः ॥ एतानि वातरक्तेषु नैव युञ्ज्याद्भिषग्वरः ॥ ८ ॥ इति वातरक्तचिकित्सा ॥

## ॥ अथोरुस्तम्भनिदानमाह ॥

शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः । जीर्णाजीर्णैस्तथायाससंक्षोभस्वप्नजागरैः ॥१॥ सश्लेष्ममेदःपवनमाममत्यर्थसंचितम् । अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते ॥ २ ॥ सक्थ्यस्थीनि प्रपूर्यान्तः श्लेष्मणा स्तिमितेन च । तदा कफान्वितेनोरू स्तब्धौ शीतावचेतनौ ॥ ३ ॥ परकीयाविव गुरू स्यातामतिभृशव्यथौ । ध्मानाङ्गमर्दस्तैमित्यतन्द्रा-

---

१ ( च० ) स्तभ्राति तेनोरू । २ ( च० ) ध्याना — ।

छर्द्यरुचिज्वरैः ॥ ४ ॥ संयुक्तः पादसदनकृच्छ्रोद्धरणसुप्तिभिः। तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥ ५ ॥ प्राग्रूपं तस्य निद्रातिध्यानं स्तिमितता ज्वरः। रोमहर्षोऽरुचिश्छर्दिर्जङ्घोर्वोः सदनं तथा ॥ ६ ॥ वातशङ्किभिरज्ञानात्तस्य स्यात्स्नेहनात्पुनः। पादयोः सदनं सुप्तिः कृच्छ्राद्धुद्धरणं तथा ॥ ७ ॥ जङ्घोरुग्लानिरत्यर्थं शश्वच्चादाहवेदनाः। पदं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥ ८ ॥ संस्थाने पीडने गत्यां चलने चाप्यनीश्वरः। अन्यस्येव हि सम्भग्नावूरू पादौ च मन्यते ॥ ९ ॥ ऊर्वोर्व्यथा च पारुष्यं तन्द्रा स्तैमित्यमङ्गरुक्। पादस्योद्धरणं कृच्छ्रात्तमूरुस्तम्भमादिशेत् ॥ १० ॥ यदा दाहार्तितोदार्तो वेपनः पुरुषो भवेत्। ऊरुस्तम्भस्तदा हन्यात्साधयेदन्यथा नवम् ॥ ११ ॥ इत्यूरुस्तम्भनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

स्नेहासृक्स्राववमनबस्तिकर्म च रेचनम्। वर्जयेदाढ्यवातेषु तैश्च तस्य विरोधतः ॥ १ ॥ तस्मादत्र सदा कार्यं स्वेदलङ्घनरूक्षणम्। आममेव कफाधिक्यान्मारुतं परिरक्षता ॥ २ ॥ यत्स्यात्कफप्रशमनं न च मारुतकोपनम्। तत्सर्वं सर्वदा कार्यमूरुस्तम्भस्य भेषजम् ॥ ३ ॥ सर्वौषधक्रमः कार्यस्तत्रादौ कफनाशनः। पश्चाद्वातविनाशाय कृत्स्ना कार्या क्रिया यथा ॥ ४ ॥ रूक्षणाद्वातकोपाच्च निद्रानाशार्तिसूचिका। स्नेहस्वेदक्रमस्तत्र कार्यो वातामयापहः ॥ ५ ॥ प्रतारयेत्प्रतिस्रोतो नदीं शीतजलाशयम्। सरश्चैवामलं शीतं स्थिरतोयं पुनः पुनः ॥६॥ तथा विशुष्केऽस्य कफे शान्तिमूरुग्रहो व्रजेत्। शरीरं बलमग्निं च कार्यैषा रक्षतामयम् ॥ ७ ॥

## ॥ अथ क्वाथचूर्णकल्कादि ॥

अथ पुनर्नवादिक्वाथः॥ पुनर्नवानागरदारुपथ्याभल्लातकच्छिन्नरुहाकषायः। दशाङ्घ्रिमिश्रः परिपेय ऊरुस्तम्भेऽथवा मूत्रपुरः प्रयोगः ॥१॥ अथ ग्रन्थिकादिक्वाथः॥ ग्रन्थिकारुष्ककृष्णानां क्वाथं क्षौद्रान्वितं पिबेत्। चव्याभयाग्निदारूणां कल्कं वा मधुसंयुतम् ॥ १ ॥ अथ पिप्पल्यादिक्वाथः ॥ पिप्पलीं वर्धमानां वा माक्षिकेण गुडेन वा ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव च ॥१॥ अथ त्रिफलादि चूर्णम् ॥ त्रिफलाचव्यकटुकाग्रन्थिकं मधुना लिहेत्। ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ॥ १॥ अथ शिलाजत्वादियोगः ॥ शिलाजतुं गुग्गुलुं वा पिप्पलीमथ नागरम्। ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलीरसेन वा ॥१॥ अथ पिप्पल्यादिकल्कः ॥ पिप्पली पिप्पलीमूलं भल्लातकफलानि च। कल्कं मधुयुतं पीत्वा ऊरुस्तम्भात्प्रमुच्यते ॥ १ ॥ अथ त्रिफलादियोगः ॥ लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम्। सुखाम्बुना पिबेद्वापि चूर्णं षड्चरणं नरः ॥ १ ॥ अथ कुष्ठादि तैलम् ॥ कुष्ठं श्रीवेष्टकोदीच्यं सरलं दारु केशरम्। अजगन्धाश्वगन्धा च तैलं तैः सार्षपं पचेत् ॥ सक्षौद्रं मात्रया

१ (च०) मलम्।

तस्मादूरुस्तम्भार्दितः पिबेत् ॥ १ ॥ अथ कट्वरतैलम् ॥ बलाभ्यां पिप्पलीमूलनागरादष्टकट्वरः । तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः ॥१॥ अष्टकट्वरतैलेन तैलं सार्षपमुच्यते । पिप्पलीनागरायाश्च प्रत्येकं द्विपलं स्मृतम् ॥ २ ॥ वृन्दात् ॥

## ॥ अथ स्वेदनलेपनसेचनानि ॥

सक्षारमूत्रस्वेदांश्च रूक्षान्यस्वेदनानि च । कुर्याद्दिहेच्च मूत्राद्यैः करञ्जफलसर्षपैः ॥१॥ मूलैर्वाप्यश्वगन्धाया मूलैरर्कस्य वा भिषक् । पिचुमन्दस्य वा मूलैरथ वा देवदारुणा ॥ २ ॥ क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतैर्भिषक् । गाढमुत्साधितं कुर्यादूरुस्तम्भे प्रलेपनम् ॥ ३ ॥ दन्तीद्रवन्तीक्षुरसासर्षपैश्चातिबुद्धिमान् । तर्कारीसुरसाशिग्रुबिल्ववत्सकनिम्बजैः ॥ पत्रमूलफलैस्तोयैः गृतमुष्णाम्बुसेचनम् ॥ ४ ॥

## ॥ अथ गुञ्जागर्भो रसः ॥

निष्कत्रयं शुद्धसूतं निष्कद्वादशगन्धकम् । गुञ्जाबीजं विषं निष्कं निम्बबीजं जया तथा ॥ १ ॥ प्रत्येकं निष्कमात्रं तु माषं जेपालबीजकम् । जातीजम्बीरधत्तूरकाकमाचीद्रवैर्दिनम् ॥ २ ॥ मर्द्यं सर्वं वटीं कुर्याद्घृतैर्गुञ्जाद्वयं लिहेत् । गुञ्जागर्भो रसो नाम हिङ्गुसैन्धवसंयुतः ॥ समण्डं दापयेत्पथ्यमूरुस्तम्भप्रशान्तये ॥ ३ ॥ इति रससमुच्चयात् ॥

## ॥ अथ पथ्यापथ्यम् ॥

रूक्षः सर्वविधिः स्वेदः कोद्रवा रक्तशालयः । यवाः कुलत्थाः श्यामाका उद्दालाश्च पुरातनाः ॥ १ ॥ सौभाञ्जनं कारवेल्लं पटोलं वास्तुकं तथा । सुनिषण्णं काकमाची वेत्राग्रं तप्तवारि च ॥ २ ॥ जाङ्गलैरघृतैर्मांसैः शाकश्चालवणैर्हितैः । एतत्पथ्यं समुद्दिष्टमूरुस्तम्भविकारिणाम् ॥ ३ ॥ गुरुशीतद्रवस्निग्धविरुद्धासात्म्यभोजनम् । विरेचनं स्नेहनं च वमनं रक्तमोक्षणम् ॥ बस्तिं च न हितं प्राहुरूरुस्तम्भविकारिणाम् ॥ ॥ ४ ॥ इत्यूरुस्तम्भचिकित्सा ॥

---

## ॥ अथामवातनिदानप्रारम्भः ॥

अथ तस्य निदानपूर्वकसम्प्राप्तिमाह ॥ विरुद्धाहारचेष्टस्य मन्दाग्नेर्निश्चलस्य च । स्निग्धं भुक्तवतो ह्यन्नं व्यायामं चापि कुर्वतः ॥ १ ॥ वायुना प्रेरितो ह्यामः श्लेष्मस्थानं प्रधावति । तेनात्यर्थं विदग्धोऽसौ धमनीः प्रतिपद्यते ॥ २ ॥ वातपित्तकफैर्भूयो दूषितः सोऽन्नजो रसः । स्रोतांस्यभिष्यन्दयति नानावर्णोऽतिपिच्छिलः॥ ३ ॥ जनयत्यग्निदौर्बल्यं हृदयस्य च गौरवम् । व्याधीनामाश्रयो ह्येष आमसंज्ञोऽतिदा-

---

* अथात्र लशुनम् प्रयोज्यम् ।

१ ( च० ) स्तु घृतैर्मांसैः ।

रुणः ॥ ४ ॥ अजीर्णान्नरसो जातः क्रमशः सञ्चितश्च यः । आमसंज्ञां स लभते शिरोगात्ररुजाकरः ॥ ५ ॥ अथ तस्य रूपमाह ॥ युगपत् कुपितावेतौ त्रिकसन्धिप्रवेशकौ । स्तब्धं वा कुरुते गात्रमामवातः स उच्यते ॥ १ ॥ अथ तस्य लक्षणमाह अङ्गमर्दोऽरुचिस्तृष्णा ह्यालस्यं गौरवं ज्वरः। अपाकः शून्यताङ्गानामामवातस्य लक्षणम् ॥१॥ मन्यापृष्ठकटीजानुत्रिकसन्धीन् विकुञ्चयन् । सशब्दस्रस्तगात्रश्च आमवातः स उच्यते ॥ २ ॥ जठरानलदौर्बल्यादविपक्वस्तु यो रसः । स आमसंज्ञको देहे सर्वदोषप्रकोपनः ॥ ३ ॥ अथ तस्यैवोपद्रवानाह ॥ स कष्टः सर्वरोगाणां यदा प्रकुपितो भवेत् । हस्तपादशिरोगुल्फत्रिकजानूरुसन्धिषु ॥ १ ॥ करोति सरुजं शोफं यत्र दोषः प्रपद्यते । स देशो रुजतेऽत्यर्थं व्याविद्ध इव वृश्चिकैः ॥ २ ॥ जनयेत्सोऽग्निदौर्बल्यं प्रसेकारुचिगौरवम् । उत्साहहानिं वैरस्यं दाहं च बहुमूत्रताम् ॥ ३ ॥ करोति ग्रहणीदोषं विशेषादामसंज्ञकम् । अपक्वं सृजते चान्नं केवलं चाममेव च ॥ ४ ॥ कुक्षौ कठिनता शूलं तथा निद्राविपर्ययम्। तृट्छर्दिभ्रमभूर्च्छाश्च हृद्ग्राहं विड्विबन्धनम् ॥ जाड्यान्त्रकूजमानाहं कष्टांश्चान्यानुपद्रवान् ॥ ५ ॥ अथ पित्तादियुक्तस्य विशेषलक्षणमाह ॥ पित्तात्सदाहरागं च सशूलं पवनानुगम् । स्तैमित्यं गुरुकण्डूकं कफदुष्टं तमादिशेत् ॥१॥ अथ साध्यासाध्यत्वमाह ॥ एकदोषानुगः साध्यो द्विदोषो याप्य उच्यते । सर्वदेहचरः शोथः सकृच्छ्रं सान्निपातिकः ॥ १ ॥ इत्यामवातनिदानम् ।

## ॥ अथ तच्चिकित्सा ॥

लङ्घनं स्वेदनं तिक्तदीपनानि कटूनि च । विरेचनं स्नेहपानं बस्तयश्चाममारुते ॥ १ ॥ रूक्षः स्वेदो विधातव्यो वालुकापोटलैस्तथा । उपनाहाश्च कर्तव्यास्तेऽपि स्नेहविवर्जिताः ॥ २ ॥

## ॥ अथ क्वाथाः ॥

अथ वृन्दात् । रास्नापञ्चकम् ॥ रास्नागुडूचिकैरण्डं देवदारु महौषधम् । पिबेत्सर्वाङ्गगे वाते सामे सन्ध्यस्थिमज्जगे ॥ १ ॥ अथ रास्नासप्तकम् ॥ रास्नामृतारग्वधदेवदारुत्रिकण्टकैरण्डपुनर्नवानाम् । क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपृष्ठत्रिकपार्श्वशूली ॥ १ ॥ अथ रास्नाद्वादशकम् ॥ रास्ना शतावरी वासा गुडूच्यतिविषाभया । शुण्ठीदुरालभैरण्डदेवदारुवचाघनैः॥ १ ॥ क्वाथः पीतो जयत्याशु आमवातं सुदारुणम् । कट्यूरुत्रिकजङ्घाङ्घ्रिगुल्फजानुसमाश्रितम्॥ २ ॥ अथ शुण्ठ्यादिः ॥ शुण्ठीगोक्षुरकक्वाथः प्रातः प्रातर्निषेवितः । आमवाते कटीशूले पाचनो रुक्प्रणाशनः ॥१॥ इति वृन्दात् ॥ अथ शट्यादिः ॥ शटी शुण्ठ्यभया चोग्रा देवाह्वातिविषामृता । कषायमामवातस्य पाचनं रूक्षभोजिनाम् ॥ १ ॥ अथ पिपल्यादिः ॥ पिप्पलीपिप्पलीमूलं चव्यचित्रकनागरम् । क्वथितं वारयत्येतदामवातं सुदारुणम् ॥ १ ॥ अथ दश-

१ ( च० ) शूनता । २ ( च० ) कफजुष्टम् ।

मूलादियोगः ॥ दशमूलकषायमिश्रितं वा लङ्घने विश्वकषायमिश्रितं वा। प्रपिबे-त्कटिकुक्षिबस्तिशूले ध्रुवमेरण्डजमेकमेव तैलम् ॥ १ ॥ इति वैद्यजीवनात् ॥ अथ रास्नादिपञ्चदशकम् ॥ रास्नामृतानागरदेवदारु पञ्चाङ्घ्रियुग्मेन्द्रयवैः कषायः। एर-ण्डतैलेन समन्वितोऽयं भेत्ता भवेदामसमीरणस्य ॥ १ ॥ इति वैद्यजीवनात् ॥ अथ महौषधादिर्वैद्यविलासात्। महौषधामृताभवः कषायकश्च सेवितः। हिनस्ति चाम-मारुतं चिराय सन्धिसंश्रितम् ॥ १ ॥ इति क्वाथाः ॥

## ॥ अथ चूर्णानि ॥

अथ भल्लातकादि ॥ भल्लाततिलपथ्यानां चूर्णं गुडसमन्वितम्। आमवातं कटी-शूलं हन्याद्वा गुडनागरम् ॥ १ ॥ अथाजमोदाद्यं चूर्णम् ॥ शार्ङ्गधरात् ॥ अजमोदा विडङ्गानि सैन्धवं देवदारु च। चित्रकः पिप्पलीमूलं शतपुष्पा च पिप्पली ॥ १ ॥ ॥ १ ॥ मरिचं चेति कर्षांशं प्रत्येकं कारयेद्बुधः। कर्षास्तु पञ्च पथ्यायाः दश स्युर्वृद्धदारकात् ॥ २ ॥ नागराच्च दशैव स्युः सर्वाण्येकत्र चूर्णयेत्। पिबे-त्कोष्णजलेनैतच्चूर्णं श्वयथुनाशनम् ॥ ३ ॥ आमवातरुजं हन्ति सन्धिपीडां च गृध्रसीम्। कटिपृष्ठगुदस्थां च जङ्घयोश्च रुजं जयेत् ॥ ४ ॥ तूनीप्रतूनीविश्वा-चीकफवातामयाञ्जयेत्। समेन वा गुडेनास्य वटकान्कारयेद्बुधः ॥ ५ ॥ अथ शार्ङ्गधरात्पञ्चसमचूर्णम् ॥ शुण्ठी हरीतकी कृष्णा त्रिवृत्सौवर्चलं तथा। समभागानि सर्वाणि सूक्ष्मचूर्णानि कारयेत् ॥१॥ ज्ञेयं पञ्चसमं चूर्णमेतच्छूलहरं परम्। आध्मा-नजठरार्शोघ्नमामवातहरं स्मृतम् ॥ २ ॥ अथ फलत्रिकादि ॥ त्रिफला नागरं चैव सूक्ष्मचूर्णानि कारयेत्। मस्त्वारनालतक्रेण पयोमांसरसेन वा ॥ आमवातं निहन्त्याशु श्वयथुं संधिसंस्थितम् ॥१॥ अथ हिङ्ग्वादि ॥ हिङ्गुचव्यं विडं शुण्ठी कृष्णाजाजी स-पुष्करम्। भागोत्तरमिदं चूर्णम् पीतं वातामजिद्भवेत् ॥ १ ॥ अथ नागरादि ॥ कर्षं नागरचूर्णस्य काञ्जिकेन पिबेत्सदा। आमवातप्रशमनं कफवातविनाशनम् ॥ १ ॥ अथ पञ्चकोलादि ॥ पञ्चकोलकचूर्णं च पिबेदुष्णेन वारिणा। मन्दाग्निशूलगु-ल्मामकफारोचकनाशनम् ॥ १ ॥ अथ वैश्वानरचूर्णम् ॥ माणिमन्थस्य भागौ द्वौ यवक्षारश्च तत्समः। त्रयोऽजमोदाभागाश्च नागराद् भागपञ्चकम् ॥ १ ॥ दश द्वौ च हरीतक्याः सूक्ष्मचूर्णं कृतं शुभम्। मस्त्वारनालमूत्रैश्च सुरयोष्णोदकेन वा ॥ २ ॥ पीतं जयेच्चामवातं गुल्महृद्बस्तिजान् गदान्। प्लीहानमथ शूलादीनानाहं चार्शसां हितम् ॥ वातानुलोमनमिदं चूर्णं वैश्वानरं स्मृतम् ॥३॥ इति वृन्दात् ॥ अथ चित्रकादि वृ-न्दात् ॥ चित्रकं कटुका पाठा कलिङ्गातिविषामृताः। देवदारु वचा मुस्ता नागराति-विषाभयाः ॥ पिबेदुष्णाम्बुना नित्यं चूर्णमाममरुत्प्रणुत् ॥ १ ॥ अथालम्बुषादि ॥ अ-लम्बुषागोक्षुरकौ त्रिफला नागरामृता। यथोत्तरं भागवृद्ध्या श्यामाचूर्णं च तत्समम् ॥१॥ पिबेत्सुरामस्तुतक्रकाञ्जिकोष्णोदकेन वा। आमवातं जयत्याशु सशोफं वातशोणि-तम् ॥ २ ॥ इति वृन्दात्। इति चूर्णानि ॥

## ॥ अथ सिंहनादगुग्गुलुः ॥

पलत्रयं वा तार्प्यस्य त्रिफलायाः सुचूर्णितम्। सौगन्धिकं पलं चैव कौशिकस्य पलं तथा ॥ १ ॥ कुडवं चोरुबूकस्य तैलमादाय यत्नतः। पाचयेत्पाकविद्वैद्यः पात्रे लोहमये दृढे ॥ २ ॥ हन्ति वातं तथा पित्तं श्लेष्माणं खञ्जपङ्गुताम्। श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा ॥ ३ ॥ कुष्ठानि वातरक्तं च गुल्मशूलोदराणि च। आमवातं जयेदेतदपि वैद्यैर्विवर्जितम्। ४ ॥ एतदभ्यासयोगेन जरापलितवर्जितम् सर्पिस्तैलरसोपेतमश्नीयाच्छालिषष्टिकम् ॥ ५ ॥ सिंहनाद इति ख्यातो रोगवारणदर्पहा। वह्निवृद्धिकरः पुंसां भाषितो दण्डपाणिना ॥ ६ ॥ इति सिंहनादगुग्गुलुः ॥ अथान्यश्च बोपदेवकृतशतात्॥ प्रत्येकं प्रस्थमेकं पुरत्रिफलमपां पाचयेत्सार्धराशौ तुर्यांशे तत्र पूते पुनरमरवराख्योपमुस्ताग्निवेल्लैः। छिन्नोग्रामानकार्शोरिपुशवरित्रिवृत्सूतगन्धैः पलार्धैः साहस्रैर्दन्तिबीजैः कुटजवसुपलैः सिंहनादोऽनिलाम ॥ १ ॥

## ॥ अथ योगरत्नावल्यां महारसोनपिण्डः ॥

तुला क्षुण्णरसोनस्य तदर्धं लुञ्चितास्तिलाः। पात्रे तु गव्यतक्रस्य पिष्टद्रव्यैः समं क्षिपेत् ॥ १ ॥ त्र्यूषणं धान्यकं चव्यं चित्रकं गजपिप्पली। अजमोदा त्वगेला च ग्रन्थिकं च पलांशकम् ॥ २ ॥ शर्करायाः पलान्यष्टौ पञ्चाजाज्याः पलानि च। कृष्णाजाज्याश्च चत्वारि राजिकायास्तथैव च ॥ ३ ॥ पलप्रमाणं दातव्यं हिङ्गोर्लवणपञ्चकम्। आर्द्रकस्य च चत्वारि सर्पिषोऽष्टौ पलानि च ॥ ४ ॥ तिलतैलस्य तावन्ति शुक्तस्यापि च विंशतिः। सिद्धार्थकस्य चत्वारि द्विगुणं मधुकस्य च ॥ ५ ॥ एकीकृत्य दृढे भाण्डे धान्यराशौ निधापयेत्। द्वादशाहात्समुद्धृत्य प्रातः खादेद्यथाबलम् ॥ ६ ॥ सुरां सौवीरकं चाथ मधु वापि पिबेन्नरः। जीर्णे यथेप्सितं भोज्यं दधिपिष्टकवर्जितम् ॥७॥ एकमासोपयोगेन सर्वव्याधिहरो भवेत्। अशीतिर्वातजा रोगाश्चत्वारिंशच्च पित्तजाः ॥८॥ विंशतिः श्लेष्मजास्तद्वन्नश्यन्ते तस्य सेवनात्। योनिशूलं प्रमेहांश्च कुष्ठोदरभगन्दरान् ॥ अर्शोगुल्मक्षयांश्चापि जयेद्रुचिबलप्रदः ॥ ९ ॥ इति महारसोनपिण्डः ॥

## ॥ अथ घृतकल्कावलेहादि ॥

अथैरण्डजयोगः। विशोष्यैरण्डबीजानि पिष्ट्वा तत्पायसं पिबेत्। आमवाते कटीशूले गृध्रस्यां चौषधं परम् ॥ १ ॥ एरण्डबीजमज्जा समविश्वः शर्करासहितः। गुटीकृतः प्रभाते भुक्तः सामानिलं जयति ॥ २ ॥ आमवातगजेन्द्रस्य शरीरवनचारिणः। एक एवाग्रणीर्हन्ता एरण्डस्नेहकेसरी ॥३॥ कटीतटनिकुञ्जेषु सञ्चरन्वातकुञ्जरः। एरण्डतैलसिंहस्य गन्धमाघ्राय गच्छति ॥ ४ ॥ इत्येरण्डजयोगः ॥ अथ शार्ङ्गधराच्छुण्ठीकल्कः ॥ शुण्ठीकल्कं विनिष्पिष्य रसैरेरण्डमूलजैः[1]। विपचेत्पुटपा-

१ (ख०) स्वरसै रुबुमूलजैः।

केन तद्रसः क्षौद्रसंयुतः ॥ आमवातसमुद्भूतां पीडां जयति दुस्तराम् ॥ १ ॥ अथ शुण्ठीघृतम् ॥ पुष्ट्यर्थं पयसा साध्यं दध्ना विण्मूत्रसंग्रहे । दीपनार्थं मतिमता मस्तुना च प्रकीर्तितम् ॥ १ ॥ सर्पिर्नागरकल्केन सौवीरं च चतुर्गुणम् । सिद्धमग्निकरं श्रेष्ठमामवातहरं परम् ॥ २ ॥ इति शुण्ठीघृतम् ॥ अथ खण्डशुण्ठ्यवलेहः ॥ नागरस्य तुलामेकां घृतस्य पलविंशतिः । क्षीरद्रोणार्धके पक्त्वा खण्डस्यार्धं शतं क्षिपेत् ॥१॥ व्योषं त्रिजातकं चैव केशरं पिप्पली जटा । जोङ्गकं जातिपत्रीकं जातीफलकशोरकम् ॥ २ ॥ अश्मभेदस्ताम्रभस्म वङ्गभस्म तथैव च । स्वर्णमाक्षिकमभ्रं च तथा लोहत्रयं क्षिपेत् ॥ ३ ॥ एतान्पृथक्पलान्भागान्प्रत्येकं चूर्णितं क्षिपेत् । मन्दानलविपक्कं तु लेहवत्साधु साधयेत् ॥ ४ ॥ बल्यं वर्ण्यं तथायुष्यं वलीपलितनाशनम् । आमवातप्रशमनं सौभाग्यकरमुत्तमम् ॥ १ ॥ अथ लेपौ ॥ शतपुष्पा वचा विश्वा श्वदंष्ट्रा वरुणत्वचः । पुनर्नवासदेवाह्वासटिमुण्डिनिकाः समाः ॥ १ ॥ प्रसारिणी च तर्कारी फलं च मदनस्य च । शुक्तकाञ्जिकपिष्टास्तु सुखोष्णालेपने हिताः ॥ २ ॥ इति शतपुष्पादि ः ॥ अथाहिंस्रादिः ॥ अहिंस्राकेम्बुकामूलं शिग्रुवल्मीकमृच्चयैः । मूत्रपिष्टैश्च कर्तव्य उपनाहोऽनिलामजित् ॥ १ ॥ अथ पानीयम् ॥ आमवाताभिभूताय पीडिताय पिपासया । पञ्चकोलेन संसिद्धं पानीयं हितमुच्यते ॥ १ ॥ अथामवातविध्वंसनरसः ॥ प्रक्षिप्य गन्धं रसपादभागं कलाप्रमाणं च विषं समस्तात् । कृशानुतोयेन च भावयित्वा वल्लं ददीतास्य मरुत्प्रशान्त्यै ॥ १ ॥ अपस्मारे तथोन्मादे सर्वाङ्गव्यथनेऽपि च । एकाङ्गवाते सामे वा दंष्ट्राबन्धे हिमे तथा ॥ देयोऽयं वल्लमात्रं तु सर्ववातनिवृत्तये ॥ २ ॥

## ॥ अथ पथ्यापथ्यम् ॥

यवाः कुलत्थाः श्यामाकाः कोद्रवा रक्तशालयः । वास्तुकं शिग्रु वर्षाभूः कारवेल्लं पटोलकम् ॥ १ ॥ आर्द्रकं तप्तनीरं च लशुनं तक्रसंस्कृतम् । जाङ्गलानां तथा मांसं सामवातगदे हितम् ॥ २ ॥ दधिमत्स्यगुडक्षीरोपोदिकामाषपिष्टकम् । दुष्टनीरं पूर्ववातं विरुद्धान्यशनानि च ॥ ३ ॥ असात्म्यं वेगरोधं च जागरं विषमाशनम् । वर्जयेदामवातार्तो गुर्वभिष्यन्दकानि च ॥४॥ इति पथ्यापथ्यम् ॥ इत्यामवातचिकित्सा ॥

---

## ॥ अथ शूलनिदानं व्याख्यास्यामः ॥

यदुक्तं हारीते । अनङ्गनाशाय हरस्त्रिशूलं मुमोच कोपान्मकरध्वजश्च । तमापतन्तं सहसा निरीक्ष्य भयार्दितो विष्णुतनुं प्रविष्टः ॥ १ ॥ स विष्णुहुङ्कारविमोहितात्मा पपात भूमौ प्रथितः स शूलः । स पञ्चभूतानुगतं शरीरं प्रदूषयत्यस्य हि पूर्वसृष्टिः ॥२॥ शूलरोपणवत्पीडा यस्याकस्मात्प्रजायते । त्रिशूलसम्भवं चैनं शूलमाहुः पुराविदः ॥३॥ शङ्कुस्फोटनवत्तस्य यस्मात्तीव्रा च वेदना । शूलासक्तस्य भवति तस्माच्छूल-

---

१ ( ख० ग० ङ० ) सटीमुण्डितिकाः । ( घ० ) सटीमुण्डीतिकाः ।

मिहोच्यते ॥ ४ ॥ अथ तस्य सङ्ख्यामाह ॥ पृथग्दोषैः समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् ॥ अथ प्राधान्यमाह ॥ सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः ॥ १ ॥ अथ सम्प्राप्तिमाह ॥ व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात् । कलायमुद्गाढकिकोरदूषादत्यर्थरूक्षाध्यशनाभिघातात् ॥ कषायतिक्तातिविरूढजान्नविरुद्धवल्लूरकशुष्कशाकात् ॥ १ ॥ अथ वातिकमाह ॥ विट्शुक्रमूत्रानिलवेगरोधाच्छोकोपवासादतिहास्यभाष्यात् । वायुः प्रवृद्धो जनयेद्धि शूलं । हृत्पार्श्वपृष्ठत्रिकबस्तिदेशे ॥ १ ॥ अथ तस्य कालनियममाह ॥ जीर्णे प्रदोषे च धनागमे च शीते च कोपं समुपैति गाढम् । मुहुर्मुहुश्चोपशमप्रकोपौ विड्वातसंस्तम्भनतोदभेदैः ॥ १ ॥ अथोपशयमाह ॥ संस्वेदनाभ्यञ्जनमर्दनाद्यैः स्निग्धोष्णभोज्यैश्च शमं प्रयाति ॥१॥ अथ पैत्तिकमाह ॥ क्षारातितीक्ष्णोष्णविदाहितैलनिष्पावपिण्याककुलत्थयूषैः । कट्वम्लसौवीरसुराविकारैः क्रोधानलायासरविप्रतापैः ॥ १ ॥ ग्राम्यातियोगादशनैर्विदग्धैः पित्तं प्रकुप्याशु करोति शूलम् । तृण्मोहदाहार्तिकरं हि नाभ्यां संस्वेदमूर्च्छाभ्रमशोषयुक्तम्॥१॥अथ तस्य कालनियममाह ॥ मध्यंदिने कुप्यति चार्धरात्रे निदाघकाले जलदात्यये च ॥ अथ तस्य शान्तिमाह ॥ शीते च शीतैः समुपैति शान्तिं सुस्वादुशीतैरपि भोजनैश्च ॥ १ ॥ अथ श्लैष्मिकमाह ॥ आनूपवारिजकिलाटपयोविकारैर्मांसेक्षुपिष्टकृशरातिलशष्कुलीभिः । अन्यैर्बलासजनकैरपि हेतुभिश्च श्लेष्मा प्रकोपमुपगम्य करोति शूलम् ॥ १ ॥ हृल्लासकाससदनारुचिसम्प्रसेकैरामाशये स्तिमितकोष्ठशिरोगुरुत्वैः ॥२॥ अथ तस्य कालनियममाह ॥ भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रं सूर्योदयेऽथ शिशिरे कुसुमागमे च ॥ १ ॥ अथ सान्निपातिकमाह ॥ सर्वेषु दोषेषु च सर्वलिङ्गं विद्याद्भिषक् सर्वभवं हि शूलम् । सुकष्टमेनं विषवज्रतुल्यं विवर्जनीयं प्रवदन्ति तज्ज्ञाः ॥ १ ॥ अथ आमजमाह ॥ आटोपहृल्लासवमीगुरुत्वस्तैमित्यकानाहकफप्रसेकैः । कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शूलमुदाहरन्ति ॥ १ ॥ अथ द्विदोषजमाह ॥ द्विदोषलक्षणैरेतैर्विद्याच्छूलं द्विदोषजम् । बस्तौ हृत्कण्ठपार्श्वेषु स शूलः कफवातिकः ॥ १ ॥ कुक्षौ हृन्नाभिमध्ये यः स शूलः कफपैत्तिकः । दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिकः ॥२॥ अथ तन्त्रान्तरे ॥ वातात्मकं बस्तिगतं वदन्ति पित्तात्मकं चापि वदन्ति नाभ्याम् । हृत्पार्श्वकुक्षौ कफसन्निविष्टं सर्वेषु देशेषु च सन्निपातात् ॥ १ ॥ अथ मध्ये साध्यासाध्यत्वमाह ॥ एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः । सर्वदोषोत्थितो घोरस्त्वसाध्यो भूर्युपद्रवः ॥ १ ॥ अथ भूर्युपद्रवानाह ॥ वेदनातितृषामूर्च्छा ह्यानाहो गौरवारुची । भ्रमो ज्वरः कृशत्वं च बलहानिस्तथैव च ॥ कासः श्वासश्च हिक्का च शूलस्योपद्रवाः स्मृताः॥१॥ इति शूलनिदानम् ॥

## ॥ अथ सामान्यतस्तच्चिकित्सा ॥

वमनं लङ्घनं स्वेदः पाचनं फलवर्तयः । क्षारश्चूर्णश्च गुटिकाः शस्यन्ते शूलशान्तये॥१

## ॥ अथ वातशूलचिकित्सामाह॥

ज्ञात्वा तु वातजं शूलं स्नेहस्वेदैरुपाचरेत् । पायसैः कृशरापिण्डैः स्निग्धैर्वा पिशितोत्कटैः । १ ॥ आशुकारी हि पवनस्तस्मात्तं त्वरया जयेत् । तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः ॥ २ ॥ अथ तिलकल्कस्वेदः ॥ तुषवारिविनिष्पिष्टतिलकल्कोष्णपोटली । भ्रामिता जठरस्योर्ध्वं मुहुः शूलं विनाशयेत् ॥ १ ॥ अथ लेपसेकौ ॥ नाभिलेपाज्जयेच्छूलं मदनं काञ्जिकान्वितम् । बिल्वैरण्डतिलैर्वापि पिष्टैरम्लेन पोटली ॥ १ ॥ अथ कुलत्थादियूषः ॥ वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः । ससैन्धवो व्योषयुतः सलावः सहिङ्गुसौवर्चलदाडिमाढ्यः॥१॥ अथ बलादिक्वाथः ॥ बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरैः । क्वाथः सहिङ्गुलवणः पीतो वातरुजं जयेत् ॥ १ ॥ अथ शार्ङ्गधरान्नागरादिः ॥ नागरैरण्डयोः क्वाथः क्वाथ इन्द्रयवस्य वा । हिङ्गुसौवर्चलोपेतो वातशूलनिवारणः ॥ १ ॥ अथ करञ्जाद्यं चूर्णम् । करञ्जसौवर्चलनागराणां सरामठानां समभागिकानाम् । चूर्णं कदुष्णेन जलेन पीतं समीरशूलं विनिहन्ति सद्यः ॥ १ ॥ अथ राजिकादिलेपः ॥ राजिकाशिग्रुकल्कं च गोतक्रेण च पेषितम् । तेन लेपेन हन्त्याशु शूलं वातसमुद्भवम् ॥ १ ॥ अथ हिङ्ग्वादिलेपः ॥ हिङ्गुतैलं सलवणं गोमूत्रेण विपाचितम् । नाभिस्थाने प्रदातव्यं यस्य शूलं सवेदनम् ॥ १ ॥ अथ शूले साटोपे ॥ तैलमेरण्डजं वापि दशमूलस्य वारिणा । पीतं निहन्ति साटोपं हिङ्गुसौवर्चलान्वितम् ॥ १ ॥ इति वातशूलचिकित्सा ॥

## ॥ अथ पित्तशूलचिकित्सामाह ॥

वामयेत्पित्तशूलार्तं पटोलेक्षुरसादिभिः । पश्चाद्विरेचयेत्सम्यक् पित्तगुल्मविरेचनैः ॥ १ ॥ अथ शतावर्यादिक्वाथः ॥ शतावरी सयष्ट्याह्वा वात्यालकुशगोक्षुरैः । शृतशीतं पिबेत्तोयं सगुडक्षौद्रशर्करम् । पित्तशूलास्रदाहघ्नं हिक्काज्वरवमिच्छिदम् ॥१॥ अथ बृहत्यादिक्वाथः ॥ बृहतीगोक्षुरैरण्डकुशकाशेक्षुवालकाः । पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम् ॥ १ ॥ अथ त्रिफलारग्वधादिः । त्रिफलारग्वधक्वाथः शर्कराक्षौद्रसंयुतः । रक्तपित्तहरो दाहपित्तशूलनिवारणः ॥ १ ॥ अथ त्रिफलादिः । त्रिफलारिष्टयष्ट्याह्वकटुकारग्वधैः शृतम् । पाययेन्मधुसंमिश्रं दाहशूलोपशान्तये ॥१॥ अथ शतावरीस्वरसादि वृन्दात् ॥ शतावरीरसं क्षौद्रयुक्तं प्रातः पिबेन्नरः । दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम् ॥ १॥ अथ धात्र्यादियोगः ॥ धात्र्या रसं विदार्या वा त्रायन्तीगोस्तनाम्बुना । पिबेत्सशर्करं सद्यः पित्तशूलनिवारणम् ॥ १ ॥ अथ धात्रीचूर्णादि ॥ प्रलिह्यात्पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम् । सगुडां घृतसम्मिश्रां भक्षयेद्वा हरीतकीम् ॥ १ ॥ अथ गुडादियोगः ॥ गुडशालियवक्षीरं सर्पिर्दुग्धं विरेचनम् । जाङ्गलानि च मांसानि भेषजं पित्तशूलिनः ॥ १ ॥ इति पित्तशूलचिकित्सा ॥

## ॥ अथ कफशूलचिकित्सामाह ॥

शाल्यन्नं जाङ्गलं मांसमरिष्टं कटुकं रसम् । मद्यानि जीर्णगोधूमं कफशूले प्रयोजयेत् ॥ १ ॥ अथ त्रिलवणादिचूर्णम् ॥ लवणत्रयसंयुक्तं पञ्चकोलं सरामठम् । सुखोष्णेनाम्भसा पीतं कफशूलं हरं परम् ॥ १ ॥ इति श्लेष्मशूलचिकित्सा ॥

## ॥ अथ त्रिदोषशूलचिकित्सामाह ॥

अथ शङ्खचूर्णयोगः । शङ्खचूर्णं सलवणं सहिङ्गु व्योषसंयुतम् । उष्णोदकेन तत्पीतं हन्ति शूलं त्रिदोषजम् ॥ १ ॥ अथ मण्डूरावलेहः ॥ गोमूत्रं सिद्धमण्डूरं त्रिफलाचूर्णसंयुतम् । विलिहन्मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥२॥ इति त्रिदोषशूलः ॥

## ॥ अथामशूलचिकित्सामाह ॥

आमशूले क्रिया कार्या कफशूलविनाशिनी । शेषमामहरं सर्वं यद्यदग्निविवर्धनम् ॥ १ ॥ अथ चित्रकादिक्काथः ॥ चित्रकग्रन्थिकैरण्डशुण्ठीधान्यजलैः शृतम् । सहिङ्गुसैन्धवबिडमामशूलहरं परम् ॥ १ ॥ अथैरण्डादिक्काथः ॥ एरण्डबिल्वबृहतीद्वयमातुलुङ्गपाषाणभिच्छिकटुमूलकृतः कषायः । सक्षारहिङ्गुलवणो रुबुतैलमिश्रः श्रोण्यंसपृष्ठहृदयस्तनरुक्षु पेयः ॥ १ ॥ अथैरण्डतैलादियोगः ॥ एरण्डतैलं षड्भागं लशुनस्य तथाष्टकम् । एकं हिङ्गुत्रिसिन्धूत्थं सर्वमेकत्र मर्दयेत् ॥ त्रिनिष्कं भक्षयेच्चानु ह्यामशूलप्रशान्तये ॥१॥ हिङ्गुत्रिगुणसैन्धवं तस्माच्च शुद्धतैलमैरण्डम् । तत् त्रिगुणरसोनरसं गुल्मोदावर्तशूलघ्नम् ॥ २ ॥ इत्यामशूलचिकित्सा ॥

## ॥ अथ द्वन्द्वजशूलचिकित्सा ॥

अथ कण्टकार्यादिक्काथः ॥ निदिग्धिकाबृहत्यौ च कुशकाशेक्षुवालकाः । श्वदंष्ट्रैरण्डमूलं च वारिणा सह पाचयेत् ॥ पिबेत्सशर्करक्षौद्रं शूले पित्तानिलात्मके ॥ १ ॥ ॥ अथ पटोलादिः ॥ पटोलत्रिफलारिष्टामृतं क्षौद्रयुतं पिबेत् । पित्तश्लेष्मज्वरच्छर्दिदाहशूलोपशान्तये ॥ १ ॥ अथ द्राक्षादिक्काथः ॥ द्राक्षाटरूपयोः क्वाथः श्लेष्मपित्तरुजं जयेत् । पित्तश्लेष्मोद्भवं शूलं विरेकवमनैर्जयेत् ॥ १ ॥ अथ क्षाराम्बुयोगः ॥ क्षारोदकं पिबेदुष्णं पिप्पलीलवणान्वितम् । वातश्लेष्मोद्भवं शूलं कुक्षिशूलं च नाशयेत् ॥ १ ॥ इति द्वन्द्वजशूलचिकित्सा ॥

## ॥ अथ शूले साधारणविधिः

॥ अथ त्रिफलादिविरेचनम् ॥ त्रिफलाक्काथगोमूत्रक्षौद्रक्षीररसैः पृथक् । एरण्डतैलद्विगुणैर्हितं शूले विरेचनम् ॥ १ ॥ अथ बीजपूरादिस्वरसः ॥ बीजपूररसः पानान्मधुक्षीरयुतो जयेत् । पार्श्वहृद्बस्तिशूलानि कोष्ठवायुं च दारुणम् ॥ १ ॥ अथ पथ्यादिक्काथः ॥ पथ्यासशक्रयवपुष्करमूलयुक्तां निष्क्वाथ्य हिङ्गुजटिलातिविषासमेताम् । पीत्वा सुखोष्णमथ वातकृतं सशूलमामोद्भवं कफकृतं च निहन्ति तूर्णम् ॥ १ ॥

॥ अथ मातुलुङ्गादिः ॥ मातुलुङ्गरसो वापि शिग्रुक्वाथस्तथा परः । सक्षारो मधुना पीतः पार्श्वहृद्बस्तिशूलहा ॥ १ ॥ अन्यच्च ॥ मातुलुङ्गरसे सर्पिः सहिङ्गु लवणान्वितम् । सुखोष्णं पाययेत्तद्धि विड्विबन्धानुलोमनम् ॥ कुक्षिहृत्पार्श्वशूलेषु वेदना चोपशाम्यति ॥ १ ॥ अथ बिल्वमूलादिः ॥ बिल्वमूलमथैरण्डं चित्रकं विश्वभेषजम् । हिङ्गुसैन्धवसंयुक्तं सद्यः शूलनिवारणम् ॥ १ ॥ अथ हरीतकीयोगः ॥ मूत्रान्तः पाचितां शुष्कां लोहचूर्णसमन्विताम् । सगुडामभयां दद्यात् सर्वशूलोपशान्तये ॥ १ ॥ अथ लोहत्रिफलायोगः ॥ तीक्ष्णायश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् । प्रयोज्यं मधुसर्पिभ्यां सर्वशूलनिवारणम् ॥ १ ॥ अथ चूर्णानि ॥ अथादौ तुम्बुर्वाद्यं चूर्णम् ॥ चूर्णं तुम्बुरुरामठत्रिलवणक्षाराजमोदाभयावेल्लक्रूषणपुष्कराह्वयकृतं कुम्भत्रिभागान्वितम् । मन्दोष्णेन जलेन पीतमखिलं शूलं सगुल्मोदराध्मानाजीर्णविबन्धमामपवनानाहौ च शीघ्रं जयेत् ॥ १ ॥ अथ द्विक्षाराद्यम् ॥ विश्वोरुबूकदशमूलयवाम्भसा तु द्विक्षारहिङ्गुलवणत्रयपुष्कराणाम् । चूर्णं पिबेद्धृदयपृष्ठकटिग्रहामपक्वाशयार्तिभृशरुग्ज्वरगुल्मशूली ॥१॥ अथ हिङ्ग्वादि ॥ हिङ्ग्वम्लत्रिपटूग्रषट्कटुशटीवृक्षाम्लदीप्याल्लकम् पाठाजाज्यजगन्धमूलहपुषाद्विक्षारसाराभयम् । हिध्माध्मानविबन्धवर्ध्मकसनश्वासाग्निसादारुचिप्लीहार्शोऽखिलशूलगुल्मगलहृद्रोगाश्मपाण्डुप्रणुत् ॥ १ ॥ अथ नाराचकचूर्णम् ॥ कर्षमात्रा भवेत्कृष्णा त्रिवृतं स्यात्पलोन्मितम् । खण्डात्पलं च विज्ञेयं चूर्णमेकत्र कारयेत् ॥ १ ॥ कर्षोन्मितं लिहेदेतत्क्षौद्रेणाध्मामनाशनम् । गाढविट्कोदरकफपित्तशूलानि नाशयेत् ॥ २ ॥ इति चूर्णानि ॥ अथ शङ्खवटी ॥ चिञ्चाक्षारं पञ्चपलं लवणानि पलं पलम् । सञ्चूर्ण्य निक्षिपेत्प्रस्थद्वयैर्जम्बीरवारिभिः ॥ १ ॥ शङ्खं दशपलं तप्त्वा निक्षिपेत्सप्तवारतः । तत्समस्तं विशोष्याथ हिङ्ग्वयोपं चतुष्पलम् ॥२॥ बलिसूतविषाद् भागान् पलार्धं च पृथक् पृथक् । एतत्समस्तं संमर्द्य जम्बीराम्लैर्दिनत्रयम् ॥ ३ ॥ बदरास्थिप्रमाणेन वटिकां कारयेद्बुधः । एकैकां भक्षयेत्प्रातः कोष्णतोयं पिबेदनु ॥४॥ सर्वशूलं हरेद् गुल्ममजीर्णं परिणामजम् । अतिसारगदं हन्याद्ग्रहणीं च विशेषतः ॥ ५ ॥ अथ सूर्यप्रभा वटी ॥ व्योषग्रन्थिवचाग्निहिङ्गुजरणद्वन्द्वं विषं निम्बुकद्रावैरार्द्रकजैरसैर्विमृदितं तुल्यं मरीचोपमा । कर्तव्या वटिकाथ सा दिनमुखे भुक्ता कवोष्णाम्बुना शूलं त्वष्टविधं निहन्ति सहसा सूर्यप्रभा नामतः ॥ १ ॥ अथ खण्डपिप्पली ॥ कणाचूर्णं तु कुडवं पट्पलं हविषस्तथा । पलषोडशकं खण्डं शतावर्याः पलाष्टकम् ॥ १ ॥ क्षीरप्रस्थद्वये सार्धे लेहीभूते तदुद्धरेत् । त्रिजातमुस्तधान्याकं शुण्ठीमांसीद्विजीरकम् ॥ २ ॥ अभयामलकं चैव चूर्णं द्वादशकार्षिकम् । तदर्धं मरिचं भागं सारं खादिरमेव च ॥ ३ ॥ मधुत्रिपलसंयुक्तं खादेत्सिद्धं यथाबलम् । शूलारोचकहृल्लासच्छर्दिपित्ताम्लरोगनुत् ॥ अग्निसन्दीपनी हृद्या खण्डपिप्पलिका मता ॥ ४ ॥ अथ घृतम् ॥ घृताच्चतुर्गुणो देयो मातुलुङ्गरसो दधि । शुष्कमूलककोलाम्लकषायो दाडिमाम्भसा ॥ १ ॥ विडङ्ग-

वणक्षारं पञ्चकोलयवानिभिः । पाठामूलककल्केन सिद्धं शूले घृतं मतम् ॥ २ ॥ हृत्पार्श्वशूलं वै श्वासं कासं हिक्कां तथैव च । वर्ध्मगुल्मप्रमेहार्शोवातव्याधींश्च नाशयेत् ॥ ३ ॥

## ॥ अथ रसौ ॥

अथ शूलगजकेसरी रसः ॥ रसविषगन्धकपर्दक्षारेण सिन्धुपिप्पलीविश्वैः । अहिवल्यम्बुविघृष्टः शूलेभहरिर्द्विगुञ्जोऽयम् ॥ १ ॥ अन्यच्च । क्षारं कपर्दाद्विषसैन्धवौ च व्योषं च सम्मर्द्य भुजङ्गवल्ल्याः । रसेन गुञ्जाप्रमितः प्रदिष्टः समीरशूलेभहरिः प्रचण्डः ॥ १ ॥ इति रसौ ॥

## ॥ अथ पथ्यापथ्यम् ॥

पटोलं कारवेल्लं च वास्तुकं शिग्रुजं तथा । सामुद्रं लशुनं वाथ शालिः संवत्सरोषितः ॥१॥ एरण्डतैलं सुरभीजलं च तप्ताम्बुजम्बीररसोऽपि कुष्ठम् । लघूनि च क्षाररजांसि चेति वर्गो हितः शूलगदार्दितेभ्यः ॥ २ ॥ विरुद्धान्यन्नपानानि जागरं विषमाशनम् । रूक्षतिक्तकषायाणि शीतलानि गुरूणि च ॥३॥ व्यायामं मैथुनं मद्यं वैदलं कटुकानि च । वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान्नरः ॥४॥ इति शूलरोगचिकित्सा॥

## ॥ अथ परिणामशूलनिदानप्रारम्भः ॥

स्वैर्निदानैः प्रकुपितो वायुः सन्निहितस्तदा । कफपित्ते समावृत्य शूलकारी भवेद्बली ॥१॥ अथ तन्त्रान्तरे । बलासः प्रच्युतः स्थानात् पित्तेन सह मूर्च्छितः । वायुमादाय कुरुते शूलं जीर्यति भोजने ॥ १ ॥ कुक्षौ जठरपार्श्वेषु नाभ्यां बस्तौ स्तनान्तरे। पृष्ठमूलप्रदेशेषु सर्वेष्वेतेषु वा पुनः ॥ २ ॥ भुक्तमात्रेऽथ वा वान्ते जीर्णे चान्ने प्रशाम्यति । षष्टिकव्रीहिशालीनामोदनेन च वर्धते ॥ ३ ॥ तत्परीणामजं शूलं दुर्विज्ञेयं महागदम् । आहाररसवाहानां स्रोतसां दुष्टिहेतुकम् ॥ ४ ॥ केचिदन्नद्रवं प्राहुरन्ये तत्पक्तिदोषजम् । पक्तिशूलं वदन्त्येके केचिदन्नविदाहजम् ॥ ५ ॥ अथ तस्य सामान्यलक्षणमाह ॥ भुक्ते जीर्यति यच्छूलं तदेव परिणामजम् । तस्य लक्षणमेतद्धि समासेन प्रकीर्त्यते ॥ १ ॥ अथ वातिकमाह ॥ आध्मानाटोपविण्मूत्रविबन्धरतिवेपनैः । स्निग्धोष्णोपशमं प्रायो वातिकं तद्वदेद्भिषक् ॥१॥ अथ पैत्तिकमाह ॥ तृष्णादाहारुचिस्वेदकट्वम्ललवणोत्तरम् । शूलं शीतशमं प्रायः पैत्तिकं तद्वदेद्भिषक् ॥ १ ॥ अथ श्लैष्मिकमाह ॥ छर्दिहृल्लाससंमोहस्वल्परुग् दीर्घसन्तति । कटुतिक्तोपशान्तं हि तच्च ज्ञेयं कफात्मकम् ॥१॥ अथ द्विदोषजमाह ॥ संसृष्टलक्षणं बुद्ध्वा द्विदोषं परिकल्पयेत् ।अथ सान्निपातिकमाह।त्रिदोषजमसाध्यं स्यात्क्षीणमांसबलानलम्॥१॥ अथान्नद्रवाख्यम्॥जीर्णे जीर्यत्यजीर्णे च यच्छूलमुपजायते । तदप्यसाध्यं नित्यत्वादुक्तं वैद्यविशारदैः ॥ १ ॥ पथ्यापथ्यप्रयोगेण भोजनाभोजनेन वा । न शमं याति नियमात्सोऽन्नद्रव उदाहृतः ॥ २ ॥ अथायं प्रायेण त्रिदोषविकृतित्वादसाध्यः ॥

श्वासो दाहो गौरवं छर्दिर्भ्रमस्तृष्णा ज्वरोऽरुचिः। कृशत्वं बलहानिश्च वेदमातिप्रवर्तते ॥ १ ॥ उपद्रवा दशैवैते शूले च परिणामजे। सोपद्रवोऽप्यसाध्यः स्यात्कृच्छ्रेण नि-रुपद्रवः ॥ २ ॥ इति परिणामशूलनिदानम्।

## ॥ अथ तच्चिकित्सा ॥

लङ्घनं प्रथमं कुर्याद्वमनं च विरेचनम्। बस्तिकर्म परं चात्र पक्तिशूलोपशान्तये ॥ १ ॥ वातजं स्नेहयोगेन पित्तजं रेचनादिना। कफजं वमनाद्यैश्च पक्तिशूलमुपाचरे-त् ॥ द्वन्द्वजं स्नेहयोगेन तत्रियोगेन सर्वजम् ॥ २ ॥ अथ कल्काः ॥ विष्णुक्रान्ताज-टाकल्कः सिताक्षौद्रघृतैर्युतः। परिणामभवं शूलं नाशयेत्सप्तभिर्दिनैः ॥ १ ॥ शुण्ठी-तिलगुडैः कल्कं दुग्धेन सह योजयेत्। परिणामभवं शूलमामवातं च नश्यति ॥२॥ नागरतिलगुडकल्कं पयसा संसाध्य यः पुमानद्यात्। उग्रं परिणतिशूलं सप्ताहाज्जय-ति चावश्यम् ॥ ३ ॥ अथ शम्बूकभस्मयोगः ॥ शम्बूकजं भस्म पीतं जलेनोष्णेन तत्क्षणात्। पक्तिजं विनिहन्त्याशु शूलं विष्णुरिवासुरान् ॥ १ ॥ अथ शम्बूकादिव-टिका ॥ शम्बूकमूषणं चैव पञ्चैव लवणानि च। समांशां गुटिकां कृत्वा कलम्बुक-रसेन च ॥ १ ॥ प्रातर्भोजनकाले वा भक्षयेच्च यथाबलम्। शूलाद्विमुच्यते जन्तुः सहसा परिणामजात् ॥ २ ॥ अथ क्षीरमण्डूरम् ॥ लोहकिट्टं पलान्यष्टौ गोमूत्रार्धा-ढके पचेत्। परिणामभवं शूलं सद्यो हन्ति न संशयः ॥ १ ॥ अथ तारमण्डूरम् ॥ विडङ्गं चित्रकं चव्यं त्रिफला त्र्युषणानि च। नवभागानि चैतानि लोहकिट्टसमानि च ॥ १ ॥ गोमूत्रं द्विगुणं दत्वा मूत्राद्विगुणको गुडः। शनैर्मृद्वग्निना पक्त्वा सुसिद्धं पिण्डतां गतम् ॥ २ ॥ स्निग्धभाण्डे विनिक्षिप्य भक्षयेत्कोलमात्रया। प्राङ्म-ध्यान्तक्रमेणैव भोजनस्य प्रयोजितः ॥ ३ ॥ योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम्। कामलां पाण्डुरोगं च शोथमेदोऽनिलार्शसाम् ॥ शूलार्तानां कृपाहे-तोस्तारया प्रकटीकृतः ॥ ४ ॥ अथ भीममण्डूरम्। यवक्षारकणाशुण्ठीकोलं ग्रन्थिकचित्रकात्। प्रत्येकं पलमादाय प्रस्थं लोहस्य किट्टतः ॥ १ ॥ शनैः पचेदयस्पात्रे यावद्दर्वीप्रलेपनम्। दत्वाष्टगुणगोमूत्रं किट्टाच्छुद्धाद्विचक्षणः ॥२॥ ततोऽक्षमात्रान्वटकान्योजयेत्सप्तरात्रतः। आदिमध्यावसानेषु भोजनस्योचितस्य वै ॥ स भीमवटको ह्येष परिणामरुगन्तकः ॥ ३ ॥ अथ शतावरीमण्डूरः ॥ संशोध्य चूर्णि-तं कृत्वा मण्डूरस्य पलाष्टकम्। शतावरीरसस्याष्टौ दध्नश्च पयसस्तथा ॥ १ ॥ पला-न्यादाय चत्वारि तथा गव्यस्य सर्पिषः। विपचेत्सर्वमेकस्थं यावत्पिण्डत्वमाप्नुयात् ॥ २ ॥ सिद्धं तु भक्षयेन्मध्ये प्रान्ते भुक्तस्य चाग्रतः। वातात्मकं पित्तभवं शूलं च परिणामजम् ॥ ३ ॥ निहन्त्येव हि योगोऽयं मण्डूरस्य न संशयः। दुग्धे निर्वापणं कार्यं यद्वा बहुसुतारसे ॥ ४ ॥ अथवा चोभयोरेव लोहकिट्टस्य सप्तधा। रसो गन्धः शुभः पाके वर्तिः स्याद्यदि मर्दनात् ॥ तदा पाकं विजानीयान्म-ण्डूरस्य भिषग्वरः ॥ ५ ॥ इति शतावरीमण्डूरः ॥ अथ लोहगुग्गुलुः ॥

त्रिफला मुस्तकं व्योषं विडङ्गं पौष्करं वचा । चित्रकं मधुकं चैव पलाशं श्लक्ष्णचूर्णितम् ॥ १ ॥ अयोभस्म पलान्यष्टौ गुग्गुलुस्तावदेव तु । सर्पिषा मेलयित्वाथ कर्षमात्रवटीकृतम् ॥ २ ॥ अद्यादनुपिबेत्कोष्णं वारि शूलाद्विमुच्यते । जीर्णान्नसंभवात्पाण्डोः कामलाया हलीमकात् ॥ ३ ॥ अथ विडङ्गाद्यो मोदकः ॥ विडङ्गतण्डुलं व्योषं त्रिवृद्दन्ती सचित्रकम् । सर्वाण्येतानि संहृत्य सूक्ष्मचूर्णानि कारयेत् ॥ १ ॥ गुडेन मोदकान्कृत्वा भक्षयेत्प्रातरुत्थितः । उष्णोदकानुपानेन दद्यादग्निविवर्धनम् ॥ जयेत्त्रिदोषजं शूलं परिणामसमुद्भवम् ॥ २ ॥ अथैरण्डादिभस्मयोगः ॥ एरण्डवह्निशम्बूकवर्षाभूगोक्षुरं समम् । अन्तर्दग्ध्वा पिबेदद्भिरुष्णाभिः शूलशान्तये ॥ १ ॥ अथ पथ्याद्यं लोहम् ॥ पथ्यालोहरजः शुण्ठी तच्चूर्णं मधुसर्पिषा । परिणामभवं हन्ति वातपित्तकफात्मकम् ॥ १ ॥ अथ कृष्णाद्यं लोहम् ॥ कृष्णाभयालोहचूर्णं विलिहन्मधुसर्पिषा । परिणामभवं शूलं सद्यो हन्ति सुदारुणम् ॥ १ ॥ अथ चतुःसमं लोहम् ॥ गन्धं ताम्रं रसं लोहं प्रत्येकं मारितं पलम् । सर्वमेतत्समाहृत्य विपचेत् कुशलो भिषक् ॥ १ ॥ आज्ये पलद्वादशके दुग्धे शतपले वरे । पक्त्वा तत्र क्षिपेच्चूर्णं सुपूतं घनतां नयेत् ॥ २ ॥ विडङ्गत्रिफलावह्नित्रिकटूनां तथैव च । क्षिप्त्वा पलोन्मितानेतान्यथा संमिश्रतां नयेत् ॥ ३ ॥ ततः पिष्ट्वा शुभे भाण्डे स्थापयेच्च विचक्षणः । आत्मनः शोभने घस्रे पूजयित्वा रविं गुरुम् ॥४ ॥ घृतेन मधुना मर्द्य भक्षयेन्माषसंमितम् । अष्ट माषाः क्रमाद्यावन्मात्रां संस्तम्भयेत्ततः ॥ ५ ॥ अन्नपानं च दुग्धेन नारिकेलोदकेन वा । जीर्णशाल्यन्नमुद्गाश्च सितामांसरसादयः ॥ ६ ॥ रसानामविरुद्धानि पानान्नान्यपि भक्षयेत् । हृच्छूलं पार्श्वशूलं च सामवातं कटिग्रहम् ॥ ७ ॥ गुल्मशूलं च सर्वं च यकृत्प्लीहा विशेषतः । अग्निमान्द्यं क्षयः कुष्ठं श्वासकासविचर्चिका ॥ अश्मरी मूत्रकृच्छ्रं च योगेनानेन शाम्यति ॥ ८ ॥ इति चतुःसमं लोहम् ॥ अथ सामुद्राद्यं चूर्णम् ॥ सामुद्रं सैन्धवं क्षारौ रुचकं रौमकं बिडम् । दन्ती लोहरजः किट्टं त्रिवृत्सूरणकं समम् ॥ १ ॥ दधिगोमूत्रपयसा मन्दपावकपाचितम् । तद्यथाग्निबलं चूर्णं पिबेदुष्णेन वारिणा ॥ २ ॥ जीर्णेऽजीर्णे च भुञ्जीत मांसादि घृतसाधितम् । नाभिशूलं च हृच्छूलं गुल्मप्लीहकृतं च यत् ॥ ३ ॥ विद्रध्यष्ठीलजं हन्ति कफवातोद्भवं तथा । अन्नद्रवं जरयितुमजीर्णं ग्रहणीमपि ॥ ४ ॥ शूलानामपि सर्वेषामौषधं नास्त्यतः परम् । परिणामसमुत्थस्य विशेषेणान्तकं मतम् ॥ ५ ॥ इति सामुद्राद्यं चूर्णम् ॥ अथ पिप्पल्यादियोगः ॥ समागधीगुडं सर्पिः प्रस्थं क्षीरं चतुर्गुणम् । पक्वं पीत्वा जयत्याशु पक्तिशूलं समुद्धतम् ॥ १ ॥ अथ त्रिपुरभैरवो रसः ॥ भागो रसस्य भागश्च हेम्नः पिष्टं विधाय च । तथा द्वादश भागानि ताम्रपत्राणि लेपयेत् ॥ १ ॥ ऊर्ध्वाधो गन्धकं दत्वा पलमात्रं समन्ततः । क्षारस्य मृगशृङ्गस्य चूर्णं योज्यं समन्ततः ॥ २ ॥ सिञ्चेन्मत्स्याक्षिनीरेण रुद्ध्वा यामचतुष्टयम् । पचेच्छूलहरः सूतो भवेत्त्रिपुरभैरवः ॥ ३ ॥ माषो मध्वाज्यसंयुक्तो देयोऽस्य परिणामजे । अन्येष्वेरण्डतैलेन कटुत्रयपुतो हितः ॥ ४ ॥ अथ शूलदावानलः ॥ सारसङ्ग्रहात् ॥ शुद्धसूतं विषं गन्धं

पलांशं मर्दयेद्दृढम् । मरीचं पिप्पली शुण्ठी हिङ्गु सौवर्चलं द्वयम् ॥ १ ॥ पलाष्टकं पटूनां च विश्वाक्षारं पलाष्टकम् । सप्तवारं शङ्खभस्म जम्बीराम्ले निषेचयेत् ॥ २ ॥ पलाष्टकं च संयोज्यं तत्सर्वं निम्बुकद्रवैः । दिनं मर्द्यं कोलमात्रं भक्षयेत्सर्वशूलनुत् ॥ ३ ॥ अजीर्णोदरमन्दाग्निमसाध्यमपि साधयेत् । शूलदावानलाख्योऽयं रसोऽजीर्णादिरोगहा ॥ ४ ॥ इति शूलदावानलः ॥

## ॥ अथ पथ्यापथ्यम् ॥

माषादिशिम्बिधान्यानि मद्यानि वनिताहिमम् । आतपं जागरं क्रोधं शुचं सन्धानमम्लकम् ॥ वर्जयेत्पक्तिशूलार्तस्तथाजीर्णं तिलानपि ॥ १ ॥ इति परिणामशूलचिकित्सा ॥

## ॥ अथातोदावर्तनिदानम् ॥

वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैम्[1] । क्षुत्तृष्णाश्वासनिद्राश्च[2] धृत्वोदावर्तसम्भवः ॥१॥ अथ तेषां क्रमेण लक्षणान्याह ॥ अथापानवातावरोधजमाह ॥ वातमूत्रपुरीषाणां सङ्गोऽध्मानं क्लमो ज्वरः । जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥ १ ॥ ॥ अथ पुरीषावरोधजमाह ॥ आटोपशूलौ परिकर्तिका च सङ्गः पुरीषस्य तथोर्ध्ववातः । पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ॥१॥ अथ मूत्रविग्रहजमाह ॥ बस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा । विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥ १ ॥ अथ जृम्भाविघातजमाह ॥ मन्यागलस्तम्भशिरोविकाराः जृम्भोपघातात्पवनात्मकाः स्युः । तथाक्षिनासावदनामयाश्च भवन्ति तीव्राः सह कर्णरोगैः ॥ १ ॥ ॥ अथाश्रुविघातजमाह ॥ आनन्दजं वाप्यथ शोकजं वा नेत्रोदकं प्राप्तममुञ्चतो हि । शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन ॥१॥ अथ हिक्कानिरोधजमाह ॥ मन्यास्तम्भः शिरःशूलमर्दितार्धावभेदकौ । इन्द्रियाणां च दौर्बल्यं क्षवथोः स्याद्विधारणात् ॥१॥ अथोद्गारविधारणजमाह ॥ कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथ वाप्रवृत्तिः । उद्गारवेगेऽभिहते भवन्ति घोरा विकाराः पवनप्रसूताः ॥ १ ॥ अथ च्छर्दिनिग्रहजमाह ॥ कण्डूकोठारुचिव्यङ्गशोथपाण्ड्वामयज्वराः । कुष्ठहृल्लासवीसर्पाश्छर्दिनिग्रहजा गदाः ॥ १ ॥ अथ शुक्रविधारणजमाह ॥ मूत्राशये वै गुदमुष्कयोश्च शोफो रुजा मूत्रविनिग्रहश्च । शुक्राश्मरी तत्स्रवणं भवेच्च ते ते विकारा भिहते च शुक्रे ॥ १ ॥ अथ क्षुधावरोधजमाह ॥ तन्द्राङ्गमर्दावरुचिः श्रमश्च क्षुधोऽभिघातात्कृशता च दृष्टेः ॥ १ ॥ अथ तृष्णानिरोधजमाह ॥ कण्ठास्यशोषः श्रवणावरोधस्तृष्णाभिघाताद् हृदयव्यथा च ॥ १ ॥ अथ श्वासावरोधजमाह ॥ श्रान्तस्य निश्वासविनिग्रहेण हृद्रोगमोहावथ वापि गुल्मः ॥ १ ॥ अथ निद्रानिग्रहजमाह ॥ जृम्भाङ्गमर्दोऽक्षिशिरोऽतिजाड्यं निद्राविघातादथ वापि तन्द्राः ॥ १ ॥ अथ त्रयोदशरूक्षभोजन-

---

१ ( च० ) वमीन्द्रियैः । २ ( च० ) निद्राणां धृत्वो—।

जनितविकारमाह ॥ वायुः कोष्ठानुगो रूक्षकषायकटुतिक्तकैः । भोजनैः कुपितः सद्य उदावर्तं करोति च ॥ १ ॥ अथ तस्य सम्प्राप्तिमाह ॥ वातमूत्रपुरीषाश्रुकफमेदोवहानि वै । स्रोतांस्युदावर्तयति पुरीषं चातिवर्तयेत् ॥ १ ॥ ततो हृद्बस्तिशूलार्तो हृल्लासारतिपीडितः । वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः ॥ २ ॥ श्वासकासप्रतिश्यायदाहमोहतृषाज्वरान् । वमिहिक्काशिरोरोगमनःश्रवणविभ्रमान् ॥ ३ ॥ बहूनन्यांश्च लभते विकारान्वातकोपजान् ॥ ४ ॥ अथासाध्यलक्षणमाह ॥ तृष्णार्दितं परिक्लिष्टं क्षीणं शूलैरुपद्रुतम् । शकृद्वमन्तं मतिमानुदावर्तिनमुत्सृजेत् ॥ १ ॥ इत्युदावर्तनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

सर्वेष्वेतेषु भिषजा चोदावर्तेषु कृत्स्नशः । वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये ॥ १ ॥ आस्थापनं मारुतजे स्निग्धस्विन्ने विशेषतः । पुरीषजे तु कर्तव्यो विधिरानाहकोदितः ॥ २ ॥

## ॥ अथ विण्मूत्रावरोधे ॥

॥ अथ सौवर्चलादि ॥ सौवर्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत् । एलां वाप्यथ मस्त्वन्नं क्षीरं वाथ वराम्बु वा ॥ १ ॥ अथोर्वारुबीजादियोगः ॥ उर्वारुबीजं तोयेन पिबेद्वा लवणान्वितम् । पञ्चमूलीशृतं क्षीरं द्राक्षारसमथापि वा ॥ १ ॥ अथ यवक्षारादियोगः ॥ यवक्षारं सितायुक्तं पिबेद्वा मृद्विकारसैः । वरीकूष्माण्डयोस्तोयं सितायुक्तं पिबेदथ ॥ १ ॥ अथ मूषकादियोगः ॥ मूषकस्य विशा लेपो बस्तेरुपरि वा चरेत् । किंशुकानां प्रलेपो वा कवोष्णो मूत्ररोधहा ॥ १ ॥ पिष्ट्वा श्वदंष्ट्राफलमूषिकाविष्ठैरुर्वारुबीजानि सकाञ्जिकानि । आलिप्यमानानि समानि बस्तौ मूत्रस्य निष्यन्दकराणि सद्यः ॥ अत्र सर्वं प्रयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम् ॥२॥ इति मूत्रावरोधयोगः ॥

## ॥ अथावशेषाणां चिकित्सा ॥

स्नेहस्वेदैरुदावर्तं जृम्भाजं समुपाचरेत् । अश्रुमोक्षोऽश्रुजे कार्यः स्निग्धस्विन्नस्य देहिनः ॥ १ ॥ मरीचाद्यञ्जनैर्धूमैर्निमिषाद्यवलोकनैः[1] । क्षवजे क्षवपत्रेण घ्राणस्थेनानयेत्क्षवम् ॥२॥ उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् । भक्षयेद्रुचकं सार्द्रं खण्डं वा मथितान्वितम् ॥ ३ ॥ वम्या वान्तं यथा दोषं नस्यस्नेहादिभिर्जयेत् । वस्तिशुद्धिकरैः सिद्धं चतुर्गुणजलं पयः ॥ ४ ॥ आ वारिनाशात् क्वथितं पीतं वान्तं[2] प्रकामतः । रमणेषु प्रिया नार्यः शुक्रोदावर्तिनं नरम् ॥५॥ तस्याभ्यङ्गोऽवगाहश्च[3] मदिराश्चरणायुधाः । शालिः[4] पेयो निरूहाश्च हितं मैथुनमेव च ॥ ६ ॥ क्षुद्विघाते हितं स्निग्धं रुच्यमल्पं च भोजनम् । तृषाघाते पिबेन्मन्थं यवागूं स्वादुशीतलाम् ॥७॥ रसेनाद्यात्तु विश्रान्तः श्र-

१ ( च० ) आदित्याद्यवलोकनैः । २ ( च० ) पीतवन्तम् । ३ ( च० ) नस्याभ्यङ्गावगाहाश्च । ४ ( च० ) शालीपयो ।

मद्यवासार्दितो नरः । निद्राघाते पिबेद् दुग्धं माहिषं रजनीमुखे ॥ ८ ॥ तिलतैलेन संमृज्य भूतले शयनं चरेत् । उदावर्तिनमभ्यक्तं स्निग्धगात्रमुपाचरेत् ॥ वर्तिकास्थापनस्वेदबस्तिरेचनकर्मणा ॥ ९ ॥

## ॥ अथ सामान्यविधिः ॥

अथ श्यामादिकषायो वृन्दात् ॥ श्यामा दन्ती द्रवन्ती स्नुग् महाश्यामामृता त्रिवृत् । सप्तला शङ्खिनी श्वेता राजवृक्षः सबिल्वकः ॥ १ ॥ कपिल्लकं करञ्जश्च हेमक्षीरीत्ययं गणः । सर्पिस्तैलरजःक्वाथकल्केष्वन्यतमेषु च ॥ उदावर्तोदराध्माहविषगुल्मविनाशनः ॥ २ ॥ अथ वृन्दाद्वाट्यादियूषः ॥ वाट्यायूषेण पिप्पल्या मूलकानां रसेन वा । भुक्त्वा स्निग्धमुदावर्तवातगुल्माद्विमुच्यते ॥ १ ॥ अथ वाट्यादिः ॥ वाट्यक्षीररसैः सेव्यं यच्च वातानुलोमनम् । वातघ्नैर्लवणाद्यैश्च रसाद्यैश्चान्नमाचरेत् ॥ १ ॥

## ॥ अथ चूर्णानि ॥

अथ हरीतक्यादिचूर्णम् ॥ हरीतकी यवक्षारः पीलुनी त्रिवृता तथा । घृतैश्चूर्णं त्विदं पेयमुदावर्तप्रशान्तये ॥ १ ॥ अथ द्विरुत्तरं चूर्णम् । हिङ्गुकुष्ठवचास्वर्जिबिडं चेति द्विरुत्तरम् । पीतं मद्येन तच्चूर्णमुदावर्तहरं परम् ॥ १ ॥ अथ नाराचचूर्णम् ॥ खण्डं पलं त्रिवृतासममुपकुल्याकर्षचूर्णितं सूक्ष्मम् । प्राग्भोजनस्य समधु बिडालपदकं लिहेत्प्रातः ॥ १ ॥ एतद् गाढपुरीषे पित्ते कफे च विनियोज्यम् । स्वादुर्नृपयोग्योऽयं चूर्णो नाराचको नाम ॥ २ ॥ हिङ्गुत्रिगुणसैन्धवं तस्माच्च शुद्धतैलमैरण्डम् । तत्त्रिगुणं रसोनरसं गुल्मोदावर्तशूलघ्नम् ॥ ३ ॥ अथ प्रलेपः ॥ वल्मीकमृत्करञ्जस्य त्वङ्मूलफलपल्लवम् । सिद्धार्थं चेति पिष्टानां मूत्रेणालेपनं हितम् ॥ उदावर्तेषु सर्वेषु सम्यग्वातानुलेपनम् ॥१॥ अथ फलवर्तयः ॥ तत्र मदनादिः ॥ मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः । गुडक्षीरसमायुक्ता फलवर्तिः प्रशस्यते ॥ १ ॥ अथाङ्गारधूमादिः ॥ अङ्गारधूमः पिप्पल्यो मदनं राजसर्षपाः । गोमूत्रपिष्टाः सगुडा फलवर्तिः प्रशस्यते ॥ १ ॥ अथ हिङ्ग्वादिः ॥ हिङ्गुमाक्षिकसिन्धूत्थैः पक्त्वा वर्तिं सुवर्तिताम् घृताभ्यक्तां गुदे दद्यादुदावर्तविनाशिनीम् ॥ १ ॥ इति फलवर्तयः ॥ अथोदयमार्तण्डो रसः ॥ हिङ्गूलं जयपालटङ्कणविषाण्यन्त्यार्धभागोत्तरं सर्वं खल्वतले विमर्द्य मतिमान् गुञ्जाद्वयं वै ददेत् । मार्तण्डोदयको ज्वरादिसहितान्यः सोदराध्मानके पाण्ड्वाजीर्णगदेऽनुपानवशतः पथ्यं च तक्रोदनम् ॥१॥ व्योषेणार्द्ररसेन तत्र सितया युक्तो ज्वरे दारुणे मान्द्ये गुल्मकफानले च पवने शूले च शोफोदरे । वातास्रे स्वरवर्णकुष्ठगुदजान् रोगानशेषाञ्जयेत्[1] ॥ २ ॥ अथ नाराचरसः ॥ जेपालेन समैः

---

१ ( च० ) वाक्यम् ।

सूतव्योषटङ्कणगन्धकैः । नाराचः स्याद्रसो ह्येष माषसर्पिःसितापुतः । हन्त्युदावर्तमानाहमुदराणि च गुल्मकम् ॥ १ ॥ इत्युदावर्तचिकित्सा ॥

## ॥ अथानाहनिदानम् ॥

आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन । प्रवर्तमानं न यथा स्वमेनं विकारमानाहमुदाहरन्ति ॥ १ ॥ अथामजमानाहमाह ॥ तस्मिन्भवत्यामसमुद्भवे तु तृष्णाप्रतिशायशिरोविदाहाः । आमाशये शूलमथो गुरुत्वं हृत्स्तम्भनोद्गारविघातनं च ॥ १ ॥ अथ शकृत्सञ्चयमाह ॥ स्तम्भः कटीपृष्ठपुरीषमूत्रे शूलोऽथ मूर्च्छा शकृतो वमिश्च । श्वासश्च पक्वाशयजे भवन्ति तथालसोक्तानि च लक्षणानि ॥ १ ॥ उदावर्तिनमप्येनमानाहिनमथापि वा । तृष्णोपद्रवसंयुक्तं तं त्यजेद्भिषजां वरः ॥ २ ॥

## ॥ अथानाहचिकित्सा ॥

आनाहेऽपि प्रयुञ्जीत उदावर्तहरीं क्रियाम् ॥ तत्राप्यत्र विशेषमाह । त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भावयेत् । वटिका मूत्रपीतास्ताः श्रेष्ठास्त्वानाहभेदिकाः ॥ १ ॥ हिङ्गूग्रगन्धाबिडशुण्ठ्यजाजीहरीतकीपुष्करमूलकुष्ठम् । भागोत्तरं चूर्णितमेतदिष्टं गुल्मोदरानाहविषूचिकासु ॥ १ ॥ वचाभयाचित्रकयावशूकान् सपिप्पलीकातिविषासकुष्ठान् । उष्णाम्बुनानाहविमूढवातान्पीत्वा जयेदाशु रसौदनाशी ॥ २ ॥ अथ राढधूमादिवर्तिः ॥ राढधूमबिडव्योषगुडमूत्रविपाचिता । गुदेऽङ्गुष्ठसमावर्तिर्विधेयानाहशूलनुत् ॥ १ ॥ विपाच्य मूत्राम्लरसेन दन्तीपिण्डीतकृष्णाबिडकृष्णधूमैः । वर्तिं कराङ्गुष्ठनिभां घृताक्तां गुदे रुजानाहहरीं विदध्यात् ॥ २ ॥ इत्यानाहचिकित्सा ॥ अथ पथ्यापथ्यम् ॥ विष्टम्भीनि विरुद्धानि कषायाणि गुरूणि च । उदावर्ते प्रयत्नेन वर्जयेत्सततं नरः॥१॥ उदावर्ते हितं सर्वं पाचनं लङ्घनं तथा। आनाहे तु यथायोग्यं सेवयेन्मतिमान्नरः ॥ २ ॥ इति पथ्यापथ्यम् ॥

## ॥ अथातो गुल्मनिदानं व्याख्यास्यामः ॥

अथ तस्य सम्प्राप्तिमाह । दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारतः । कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् ॥ १ ॥ तेषां स्थानान्याह ॥ तस्य पञ्चविधं स्थानं पार्श्वहृन्नाभिबस्तयः॥ तस्य लक्षणमाह ॥ हृन्नाभ्योरन्तरे ग्रन्थिः सञ्चारी यदि वाचलः वृत्तश्चयापचयवान् स गुल्म इति कीर्तितः ॥ १ ॥ विशेषलक्षणं चरके ॥ तृष्णाज्वरपरीतश्च दाहस्वेदाग्निमार्दवैः । गुल्मिनामरुचौ चापि रक्तमेवावसेचयेत्॥१॥भट्टारकहरिश्चन्द्रः॥ स्त्रीणामावर्तजो गुल्मो न पुंसामुपजायते । अन्यस्त्वसृग्भवो गुल्मः स्त्रीणां

---

१ ( च० ) कृष्णाबिडकृष्णधूमान् ।

पुंसां च जायते ॥१॥ निरूढमूलप्रभवो हि कोष्ठे स्थितः स्वतन्त्रः परसंश्रयो वा । स्पर्शोपलब्धः परिपिण्डितत्वाद्गुल्मो यथा दोषमुपैति नाम ॥२॥ सव्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः । पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः ॥ ३ ॥ तस्य पूर्वरूपमाह ॥ उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि । आटोपमाध्मानमपक्तिशक्तिरासन्नगुल्मस्य वदन्ति चिह्नम् ॥ १ ॥ सर्वगुल्मानां सामान्यलक्षणमाह ॥ अरुचिः कृच्छ्रविण्मूत्रं वातान्त्रप्रतिकूजनम् । आनाहं चोर्ध्ववातत्वं सर्वगुल्मेषु लक्षयेत् ॥ १ ॥ अथ वातजमाह ॥ रूक्षान्नपानं विषमातिमात्रं विचेष्टनं वेगविनिग्रहश्च । शोकोऽभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः ॥१॥ यः स्थानसंस्थानरुजाविकल्पं विड्वातसङ्गं गलवक्त्रशोषम् । श्यावारुणत्वं शिशिरज्वरं च हृत्कुक्षिपार्श्वांसशिरोरुजं च ॥२॥ करोति जीर्णेऽभ्यधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च । वातात्स गुल्मो न च तत्र रूक्षं कषायतिक्तं कटु चोपशेते ॥ ३ ॥ पैत्तिकमाह ॥ कट्वम्ललतीक्ष्णोष्णविदाहिरूक्षक्रोधातिमद्यार्कहुताशसेवा । आमाभिघातो रुधिरं च दुष्टं पित्तस्य गुल्मस्य निमित्तमुक्तम् ॥१॥ तस्य पूर्वरूपमाह ॥ ज्वरः पिपासा वदनाङ्गरागः शूलं महज्जीर्यति भोजने च । स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम् ॥१॥ अथ श्लैष्मिकमाह ॥ शीतं गुरु स्निग्धमचेष्टनं च सम्पूरणं प्रस्वपनं दिवा च । गुल्मस्य हेतुः कफसम्भवस्य सर्वश्च दुष्टो निचयात्मकस्य ॥१॥ अथ पुनः श्लैष्मिकरूपाण्याह ॥ स्तैमित्यशीतज्वरगात्रसादहृल्लासकासारुचिगौरवाणि । शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य ॥१॥ द्वन्द्वत्रिदोषजेष्वेकहेतुलक्षणनिर्देशार्थमाह ॥ निमित्तलिङ्गान्युपलभ्य गुल्मे द्विदोषजे दोषबलाबलं च । व्यामिश्रलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम् ॥ १ ॥ अथ त्रिदोषजस्यासाध्यत्वमाह ॥ महारुजं दाहपरीतमश्मवद् घनोन्नतं शीघ्रविदाहि दारुणम् । मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥१॥ अथ स्त्रीणां रक्तगुल्मस्य सम्प्राप्तिमाह । नवप्रसूताहितभोजना या या चामगर्भं विसृजेदृतौ वा । वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम् ॥ १ ॥ उक्तं चरके । ऋतावनाहारभयातपेन विरूक्षणैर्वेगविधारणैश्च । संस्तम्भनोल्लेखनयोनिदोषैर्गुल्मः स्त्रिया रक्तभवोऽभ्युपैति ॥१॥ तस्य लिङ्गमाह ॥ पित्तस्य गुल्मेन समानलिङ्गं विशेषणं चाप्यपरं निबोध । यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात्स शूलः समगर्भलिङ्गः ॥ स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥ १ ॥ अथ चिरजस्यावस्थायामसाध्यत्वमाह ॥ सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः । कृतः शूलः शिरोनद्धो यदा कूर्म इवोन्नतः ॥ १ ॥ दौर्बल्यारुचिहृल्लासकासवम्यरतिज्वरैः । तृष्णातन्द्राप्रतिश्यायैर्युज्यते स न सिध्यति ॥ २ ॥ पुनरसाध्यलक्षणमाह ॥ गृहीत्वा सज्वरं श्वासच्छर्द्यतीसारपीडितम् । हृन्नाभिहस्तपादेषु शोथः कर्षति गुल्मिनम् ॥ १ ॥ अथ पुनः श्वासासाध्यलक्षणमाह ॥ श्वासः शूलं

---

१ (च०) वातेनान्त्रनिकूजनम् ।

पिपासान्नविद्वेषो ग्रन्थिमूढता । जायते दुर्बलत्वं च गुल्मिनो मरणाय वै ॥ १ ॥
इति गुल्मनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

लङ्घनं दीपनं स्निग्धमुष्णं वातानुलोमनम् । बृंहणं च भवेदन्नं तद्धितं सर्वगुल्मिनाम् ॥ १ ॥ गुल्मिनामनिलशान्तिरुपायैः सर्वशो विधिवदाचरितव्या । मारुते तु विजितेऽन्यमुदीर्णं दोषमल्पमपि कर्म निहन्यात् ॥ २ ॥ सुखोष्णा जाङ्गलरसाः सुस्निग्धा व्यक्तसैन्धवाः । कटुत्रिकसमायुक्ता हिताः पानेषु गुल्मिनाम् ॥ ३ ॥ कृमिपिण्डेष्टकास्वेदान्कारयेत्कुशलो भिषक् । उपनाहाश्च कर्तव्याः सुखोष्णाः शाल्वणादयः ॥ ४ ॥ गुल्मस्थाने रक्तमोक्षो बाहुमध्ये शिराव्यधः । स्वेदानुलोमनं चैव प्रशस्तं सर्वगुल्मिनाम् ॥ ५ ॥ अथ वातगुल्मचिकित्सा ॥ प्रागेव वातजे गुल्मे सुस्निग्धं स्वेदितं नरम् । रेचितं स्नेहरेकैश्च निरूहैः सानुवासनैः ॥ उपाचरेद्भिषक् प्राज्ञो मात्राकालविशेषतः ॥ १ ॥ अथ मातुलुङ्गादियोगः ॥ मातुलुङ्गरसे हिङ्गु दाडिमं बिडसैन्धवम् । सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥ १ ॥ अथ वृन्दान्नागरादि ॥ नागरार्धपलं पिष्टं द्वे पले लुञ्चितस्य च । तिलस्यैकं गुडपलं क्षीरेणोष्णेन पाययेत् ॥ वातगुल्ममुदावर्तं योनिशूलं च नाशयेत् ॥१॥ अथ हिङ्गुपञ्चकम् ॥ हिङ्गुसैन्धववृक्षाम्लराजिकानागरैः समैः । चूर्णं गुल्मप्रशमनं स्यादेतद्धिङ्गुपञ्चकम् ॥१॥ अथ केतकीक्षारयोगः ॥ स्वर्जिकाकुष्ठसहितः क्षारः केतकिसंभवः । पीतस्तैलेन शमयेद्वातगुल्मं सुदारुणम् ॥१॥ अथैरण्डतैलादियोगः ॥ पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम् । तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ॥ १ ॥ अथ वृन्दात् हपुषाद्यं घृतम् ॥ हपुषाजाजिपृथ्वीकापिप्पलीमूलचित्रकैः । क्षीरमूलककोलानां रसैश्च विपचेद् घृतम् ॥ १ ॥ वातगुल्मारुचिश्वासशूलानाहज्वरार्शसाम् । ग्रहणीयोनिदोषाणां घृतमेतन्निवारणम् ॥ २ ॥ अथ चित्रकाद्यं घृतम् ॥ चित्रकव्योषसिन्धूत्थपृथ्वीकाचव्यदाडिमैः । दीप्यकग्रन्थिकाजाजीहपुषाधान्यकैः समैः ॥ १ ॥ दध्यारनालबदरमूलकस्वरसैर्घृतम् । पक्त्वा पिबेद्वातगुल्मदौर्बल्याटोपशूलनुत् ॥२॥ अथ पथ्यम् । तित्तिरांश्च मयूरांश्च कुक्कुटान् क्रौञ्चवर्तिकान् । सर्पिःशालिप्रपन्नांश्च वातगुल्मे च योजयेत् ॥ १ ॥ वातगुल्मप्रतीकारे प्रकुप्यति यदा कफः । शस्तमुल्लेखनं तत्र चूर्णाद्याश्च कफापहाः ॥ २ ॥ यदि कुप्यति वा पित्तं विरेकस्तत्र भेषजम् । दोषत्रैरप्यशान्ते च गुल्मे शोणितमोक्षणम् ॥ ३ ॥ इति वातगुल्मचिकित्सा ॥

## ॥ अथ पित्तगुल्मचिकित्सा ॥

अथ त्रिवृच्चूर्णम् ॥ पित्तगुल्मे त्रिवृच्चूर्णं पातव्यं त्रिफलाम्बुना । विरेचनाय ससितं कम्पिल्लं च समाक्षिकम् ॥१॥ अथ द्राक्षादियोगः ॥ द्राक्षाभयारसं गुल्मे पैत्तिके सगुडं पिबेत् । सशर्करं वा विलिहेत्त्रिफलाचूर्णमुत्तमम् ॥१॥ अथ पथ्याद्यं घृतम् । रसेनाम-

लकेक्षूणां घृतपादं विपाचयेत् । पथ्यायाश्च पिबेत्सर्पिस्तत्सिद्धं पित्तगुल्मनुत् ॥ १ ॥ ॥ अथ द्राक्षाद्यं घृतम् ॥ द्राक्षामधुकखर्जूरं विदारीं सशतावरीम् । परूषकाणि त्रिफलां साधयेत्पलसंमिताम् ॥ १ ॥ जलाढके पादशेषे रसमामलकस्य च । घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम् ॥ २ ॥ साधयेत्तद् घृतं सिद्धं शर्कराक्षौद्रपादिकम् प्रयोगः पित्तगुल्मघ्नः सर्वगुल्मविकारनुत् ॥ ३ ॥ अथ पथ्यम् ॥ शालिगोछागदुग्धं च पटोलं घृत[१]मिश्रितम् । द्राक्षा परूषकं धात्री खर्जूरं दाडिमं सिताम् ॥ पथ्यार्थं पैत्तिके गुल्मे बलातोयं च योजयेत् ॥ १ ॥ इति पित्तगुल्मचिकित्सा ॥

## ॥ अथ श्लेष्मगुल्मचिकित्सा ॥

स्नेहोपनाहनस्वेदैस्तीक्ष्णस्रंसनवस्तुभिः । योगैश्च वातगुल्मोक्तैः श्लेष्मगुल्ममुपाचरेत् ॥ १ ॥ अथ तिलादिस्वेदः ॥ तिलैरण्डातसीबीजसर्षपैः परिलिप्य च । श्लेष्मगुल्ममयस्पात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥ १ ॥ अथ यवान्यादि ॥ यवानीं चूर्णितां तक्रे बिडेन लवणीकृताम् । श्लेष्मगुल्मे पिबेद्वातमूत्रवर्चोऽनुलोमनम् ॥ १ ॥ अथ क्षीरषट्पलं घृतम् ॥ पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः । पलिकैः सयवक्षारैर्घृतप्रस्थं विपाचयेत् ॥ १ ॥ क्षीरप्रस्थेन तत्सर्पिर्हन्ति गुल्मं कफात्मकम् । ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ २ ॥ अथ मिश्रकस्नेहः ॥ त्रिवृता त्रिफला दन्ती दशमूलं पलोन्मितम् । जले चतुर्गुणे पक्त्वा चतुर्भागावशेषिते ॥ १ ॥ सर्पिरैरण्डतैलं च क्षीरं चैकत्र साधयेत् । संसिद्धो मिश्रकस्नेहः सक्षौद्रः कफगुल्मनुत् ॥ २ ॥ इति मिश्रकः स्नेहः ॥ अथ पथ्यम् ॥ कुलत्थान् जीर्णशालींश्च षष्टीकान्यवजाङ्गलान् । मद्यं तैलं घृतं तक्रं कफगुल्मे प्रयोजयेत् ॥ १ ॥ इति कफगुल्मचिकित्सा ॥

## ॥ अथ त्रिदोषगुल्मचिकित्सा ॥

वरुणादिकषायस्तु गुल्मं दोषत्रयोत्थितम् । हन्ति हृत्पार्श्वशूल[२]घ्नं सोपद्रवमसंशयम् ॥ १ ॥ अथ शार्ङ्गधराद्वरुणादिक्वाथः ॥ वरुणो बकपुष्पश्च बिल्वापामार्गचित्रकाः । अग्निमन्थद्वयं शिग्रुद्वयं च बृहतीद्वयम् ॥ १ ॥ सैरेयकत्रयं मूर्वा मेषशृङ्गी किरातकः । अजशृङ्गी च बिम्बी च करञ्जश्च शतावरी ॥ २ ॥ वरुणादिगणक्वाथः कफमेदोहरः स्मृतः । हन्ति गुल्मं शिरःशूलं तथाभ्यन्तरविद्रधीन् ॥ ३ ॥ इति त्रिदोषगुल्मचिकित्सा ॥

## ॥ अथ रक्तगुल्मप्रतीकारः ॥

पित्तवद्रक्तगुल्मिन्या नार्याः कार्यो यथाविधि । प्रस्निग्धस्विन्नकोष्ठाया योज्यं स्नेहविरेचनम् ॥ १ ॥ अथ शताह्वादिकल्कः ॥ शताह्वाचिरिबिल्वत्वग्दारुभार्गीकणोद्भवः । कल्कः पीतो जयेद् गुल्मं तिलक्वाथेन रक्तजम् ॥ १ ॥ अथ तिलक्वाथः ॥ तिलक्वाथो गुडघृतव्योषभार्गीरजोऽन्वितः । पानं रक्तभवे गुल्मे नष्टे पुष्पे

१ (च०) वस्तिभिः । २ (ख० ङ०) शूलाढ्यम् । (ग० घ०) शूलाग्र्यम् ।

च योषितः ॥ १ ॥ अथ सुश्रुतात् तिलमूलादिचूर्णम् ॥ तिलमूलं च शिग्रुं च ब्र-ह्मदण्डीयमूलकम् । मधुयष्टीत्रिकटुकैर्युतं चूर्णमुपासयेत् ॥ पुष्परोधे वातगुल्मे स्त्रीणां सद्यः सुखावहम् ॥ १ ॥ अथ भार्ग्यादिचूर्णम् ॥ भार्गी कृष्णा करञ्जत्वग् ग्रन्थि-कामरदारुजम् । चूर्णं तिलानां क्काथेन रक्तगुल्मरुजापहम् ॥ १ ॥ अथ दन्त्यादिगु-टिका ॥ दन्तीहिङ्गुयवक्षारालाबुबीजकणागुडाः । स्नुहीक्षीरेण गुटिका सर्वेषां कर्ष-मात्रिका ॥ भक्षिता रक्तगुल्मघ्नी रुधिरस्रावकारिणी ॥१॥ अथार्कपुष्पयोगः ॥ पक्कं तैले-ऽर्कजं पुष्पं रुधिरस्रावकारि च ॥१॥ अथ पलाशक्षारघृतम् ॥ पलाशक्षारतोयेन सर्पिः सिद्धं पिबेद्वधूः । यस्मिन्नवसरे क्षारतोयसाध्यघृतादिषु ॥ १ ॥ फेनोद्गमस्य निर्वृ-त्तिर्नष्टदुग्धसमाकृतिः । स एव तस्य पाकस्य कालो नेतरलक्षणः ॥२॥ इति पलाश-क्षारघृतम्* ॥ अथ वृन्दान्मुण्ड्यादि ॥ मुण्डीरोचनिकाचूर्णं शर्करामाक्षिकान्वितम् । विदधीतास्रगुल्मिन्यां मलसंरेचनाय च ॥ १ ॥ उष्णैर्वा भेदयेद्भिन्ने विधिर्वास्रग्दरे हितः । अतिप्रवृत्तमस्रं तु भिन्ने गुल्मे निवारयेत् ॥ २ ॥ इति रक्तगुल्मप्रतीकारः ॥

## ॥ अथ सामान्यविधिः ॥

अथ चित्रकादिक्काथः ॥ चित्रकग्रन्थिकैरण्डशुण्ठीक्काथः परं हितः । शूलानाहवि-बन्धेषु सहिङ्गुबिडसैन्धवः ॥ १ ॥ अथ हिङ्ग्वादिचूर्णम् ॥ हिङ्गुग्रन्थिकधान्यजीरक-वचाचव्याग्निपाठासटीवृक्षाम्लं लवणत्रयं त्रिकटुकं क्षारद्वयं दाडिमम् । पथ्या-पुष्करवेतसाम्लहपुषाजाज्यस्तदेभिः कृतं चूर्णं भावितमेतदार्द्रकरसैः स्याद्बीज-पूरस्य च ॥१॥ आध्मानग्रहणीविकारगुदजान् गुल्मानुदावर्तकान् प्रत्याध्मानगदं तथा-श्मरियुतं तूनीद्वयारोचकान् । ऊरुस्तम्भमतिभ्रमं च मनसो बाधिर्यमष्ठीलकां प्रत्यष्ठी-लिकिकामथापहरते प्राक्पीतमुष्णाम्बुना ॥ २ ॥ हृत्कुक्षिवङ्क्षणकटीजठरान्तरेषु बस्तिस्तनांसफलकेषु च पार्श्वयोश्च । शूलानि नाशयति वातबलासजानि हिङ्गु-वादि मान्द्यमिदमश्विनसंहितायाम् ॥३॥ अथ वृन्दाद्धिङ्गुनवकम् ॥ हिङ्गुपुष्करमूलानि तुम्बरूणि हरीतकी । श्यामा बिडं सैन्धवं च यवक्षारं महौषधम् ॥ १ ॥ यवक्काथो-दकेनैतद् घृतभृष्टं तु पाचयेत् । तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः ॥२॥ अथ भास्करलवणाद्यं चूर्णम् ॥ सामुद्रलवणं ग्राह्यमष्टकर्षमितं बुधैः । एवं सौवर्चलं ग्राह्यं बिडसैन्धवधान्यकम् ॥ १ ॥ पिप्पलीपिप्पलीमूलं कर्षं जीरकपत्रकम् । नागकेशर-तालीसमम्लवेतसकं तथा ॥ २ ॥ द्विकर्षमात्राण्येतानि प्रत्येकं कारयेद्बुधः । मरीचं जीरकं विश्वमेकैकं कर्षमात्रकम् ॥ ३ ॥ दाडिमस्य चतुष्कर्षं त्वगेलाचार्धकार्षिका । एतच्चूर्णीकृतं सर्वं लवणं भास्कराभिधम् ॥ ४ ॥ शाणप्रमाणं देयं तु मस्तुतक्रसुरा-सवैः । वातश्लेष्मभवं गुल्मं प्लीहानमुदरं क्षतम् ॥ ५ ॥ अर्शांसि ग्रहणीं कुष्ठं विब-न्धं च भगन्दरम् । शोथं शूलं श्वासकासमामदोषं च हृद्रुजम् ॥ ६ ॥ मन्दाग्निं ना-

---

* अकल्कमेव घृतमेतत्पक्तव्यम् ।

१ ( ख० ) निर्वृत्ति—। २ ( च० ) दशा—।

शयत्येतद्दीपनं पाचनं परम् । सर्वलोकहितार्थाय भास्करेणोदितं पुरा ॥ ७ ॥ इति शार्ङ्गधरात् ॥ अथ क्षारद्वयादि ॥ क्षारद्वयानलव्योषनीलीलवणपञ्चकम् । चूर्णितं सर्पिषा पेयं सर्वगुल्मोदरापहम् ॥ १ ॥ अथाग्निमुखरसः ॥ हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत् । पिप्पली त्रिगुणा ज्ञेया शृङ्गवेरं चतुर्गुणम् ॥ १ ॥ यवानिका पञ्चगुणा षड्गुणा च हरीतकी । चित्रकं सप्तगुणितं कुष्ठं चाष्टगुणं भवेत् ॥२॥ एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नया । पिबेद्दध्ना मस्तुना वा सुरया कोष्णवारिणा ॥३॥ उदावर्तमजीर्णं च प्लीहानमुदरं तथा । अङ्गानि यस्य शीर्यन्ते विषं वा येन भक्षितम् ॥ अर्शोहरो दीपनश्च शूलघ्नो गुल्मनाशनः ॥ ४ ॥ कासं श्वासं निहन्त्याशु तथैव क्षयनाशनः । चूर्णो ह्यग्निमुखो नाम्ना न क्वचित्प्रतिहन्यते ॥ ६ ॥ अथ काङ्कायनगुटिका ॥ यवानी जीरकं धान्यं मरिचं गिरिकर्णिका । अजमोदोपकुञ्ची च चतुःशाणाः पृथक् पृथक् ॥१॥ हिङ्गुषट्शाणकं कार्यं शाणो लवणपञ्चकात् । त्रिवृच्चाष्टमितैः शाणैः प्रत्येकं कल्पयेत्सुधीः ॥२॥ दन्ती शठी पौष्करं च विडङ्गं दाडिमं शिवा । चित्रोऽम्लवेतसः शुण्ठी शाणैः षोडशभिः पृथक् ॥३॥ बीजपूररसेनैषां गुटिकां कारयेद्बुधः । घृतेन पयसा चाम्लैः रसैरुष्णोदकेन वा ॥ ४ ॥ पिबेत्काङ्कायनप्रोक्ता गुटिका गुल्मनाशिनी । मद्येन वातिकं गुल्मं गोक्षीरेण च पैत्तिकम् ॥५॥ मूत्रेण कफगुल्मं च दशमूलैस्त्रिदोषजम् । उष्ट्रीदुग्धेन नारीणां रक्तगुल्मं निवारयेत् ॥ हृद्रोगं ग्रहणीशूलं कृमीनर्शांसि नाशयेत् ॥ ६ ॥ इति शार्ङ्गधरात् ॥ अथ विश्वाक्षारादिशङ्खवटी ॥ विश्वाक्षारं स्नुहीक्षारमर्कक्षारं पलं[1] पलम् । द्विपलं शङ्खजं भस्म रामठं च पलार्धकम् ॥१॥ लवणानि च सर्वाणि पलमात्राणि योजयेत् । क्षारद्वयं पलार्धं[2] च सर्वमेकत्र योजयेत् ॥२॥ जम्बीरकरसैर्मर्द्यमनलस्य दिनत्रयम् । भृङ्गराजस्य निर्गुण्ड्या मुण्ड्याश्चैव पृथग् द्रवैः ॥३॥ आर्द्रकस्य रसेनैव प्रत्येकं दिनमर्दितम् । बदरीबीजमात्रांस्तु वटकान्कारयेद्भिषक् ॥४॥ एकैकं भक्षयेत्प्रातः पञ्चगुल्मान् व्यपोहति । सर्वं शूलं निहन्त्याशु अजीर्णं च विषूचिकाम् ॥ ५ ॥ मन्दाग्निं नाशयेच्छीघ्रं पथ्यं तैलाम्लवर्जितम् । विश्वाशङ्खवटी नाम ग्रहणीरोगहृत्परा ॥ ६ ॥ अथ वज्रक्षारः ॥ सामुद्रं सैन्धवं काचं यवक्षारं सुवर्चलम् । टङ्कणं स्वर्जिकाक्षारं तुल्यं चूर्णं प्रकल्पयेत् ॥१॥ अर्कक्षीरैः स्नुहीक्षीरैः शोषयेदातपे त्र्यहम् । अर्कपत्रं लिपेत्तेन रुद्ध्वा भाण्डे पुटे पचेत् ॥२॥ तं क्षारं चूर्णयित्वाथ त्र्यूषणं त्रिफलारजः । क्षारार्धं योजयेत्सम्यगेकीकृत्य विचूर्णयेत् ॥३॥ जीरकं रजनीवह्निवचाऽस्य समं ततः । वज्रक्षारमिमं शुद्धं स्वयं प्रोक्तं पिनाकिना ॥४॥ सर्वोदरेषु गुल्मेषु शूले शोफे च योजयेत् । अग्निमान्द्ये त्वजीर्णे च भक्षेन्निष्कद्वयं तथा ॥ ५ ॥ वाताधिके जलैः कोष्णैः घृतैः पित्ताधिके हितः । कफे गोमूत्रसंयुक्त आरनालैस्त्रिदोषनुत् ॥ ६ ॥ अथ योगसागराच्छङ्खद्रावः ॥ प्रस्थं जम्बीरनीरं बदरपरिमितं काकतुण्डस्य मूलं कर्षार्धं स्वर्जिकायास्त्रिपटुपलयुतं नव्यसारं पलार्धम् । तत्सर्वं सूर्य-

---

१ ( च० ) पलद्वयम् । २ ( च० ) पलांशम् ।

तापे मुनिदिनपुगुलं काचकुप्यां निधाय हन्याद् गुल्मं सुतीव्रं जठरमलरुजं शङ्खक-द्रावसंज्ञः ॥ १ ॥ इति शङ्खद्रावः॥ अथान्यः शङ्खद्रावः॥ फटकीपलमेकं च सैन्धवं पलमेव च । द्विपलं च यवक्षारं द्विपलं नवसागरम् ॥ १ ॥ चतुष्पलं सुराक्षारं पलार्धं कासिसं तथा । डमरूयन्त्रयोगेन चुल्ल्यां वै बदरीन्धनैः ॥ २ ॥ साधयेल्लाघवाच्चूर्णं शङ्खद्रावरसं परम् । गुल्मादिसर्वरोगेषु देयः सर्वसुखप्रदः ॥ ३ ॥ अन्यश्च ॥ सैन्धवं च यवक्षारं नव्यसारं तथैव च । प्रत्येकं द्विपलं ग्राह्यं सुराक्षारं चतुष्पलम् ॥ १ ॥ फटकीपलमेकं च पलार्धं कासिसं तथा । सर्वमेकत्र संयोज्य डमरूयन्त्रमध्यगे ॥ २ ॥ चुल्ल्यां प्ररोहयेत्तत्तु ज्वालयेत् खदिरेन्धनैः । द्रावितं तत्समादाय तेजोरूपं जलप्रभम् ॥ ३ ॥ द्रावयेदखिलान्धातून्वराटांश्च न संशयः । शङ्खद्रावरसो नाम गुल्मोदरहरः परः ॥ ४ ॥ इति शङ्खद्रावः ॥ अथ क्रव्यादरसः ॥ द्विपलं गन्धकं शुद्धं द्रावयित्वा विनिक्षिपेत् । पारदं पलमानेन मृतशुल्बायसी पुनः ॥ १ ॥ कर्षमानेन संमिश्र्य पञ्चाङ्गुलदले क्षिपेत् । ततो विचूर्ण्य यत्नेन निक्षिप्यायसपात्रके ॥ २ ॥ चुल्ल्यां निवेश्य यत्नेन चालयेन्मृदुवह्निना । पात्रं पात्रं हि जम्बीररसं तत्र प्रचारयेत् ॥ ३ ॥ पञ्चकोलसमुद्भूतैः कषायैः साम्लवेतसैः । भावनाः खलु दातव्याः पञ्चाशत्प्रमितास्तथा ॥ ४ ॥ भृष्टटङ्कणचूर्णेन तुल्येन सह मेलयेत् । तदर्धं पञ्चलवणैः सर्वसाम्यमरीचकैः ॥ ५ ॥ सप्तधा भावयेत्पश्चाच्चणकक्षारवारिणा । ततः संशोष्य संपेष्य कूपिकाभ्यन्तरे क्षिपेत्॥६॥अत्यन्तगुरुभोज्यानि गुरुमांसान्यनेकशः । भक्षेच्चाकण्ठपर्यन्तं ततो देयो रसोत्तमः ॥ ७॥ चतुर्वल्लमितो देयस्तक्रैः सलवणैरपि । भुक्तं जीर्यति तत्क्षिप्रं जायते दीपनं परम् ॥ ८ ॥ रसः क्रव्यादनामायं प्रोक्तो मन्थानभैरवैः । सिंहलक्षोणिपालाय भूरिमांसभुजे तथा ॥ ततः क्रव्यादयं प्रोक्तो दृढं प्रत्ययकारकः ॥९॥ कुर्याद्दीपनमुद्धतं पवनजं देहे परं शोषणं तुन्दस्थौल्यनिबर्हणो गरहरो दुष्टव्रणार्तिप्रणुत् । कासश्वासविनाशनो ग्रहणिकाविध्वंसनः स्रंसनो गुल्मप्लीहजलोदरोपशमनः क्रव्यादनामा रसः ॥१०॥ विश्वहिङ्गुविडैः सार्धं क्रव्यादो भक्षितो रसः । गुल्मानशेषान्प्लीहानं विद्रधीनपि नाशयेत् ॥११॥ इति क्रव्यादः॥ अथ गदनिग्रहाच्चविकासवः ॥ चविकायास्तुलार्धं तु तदर्धं चित्रकस्य च । बाष्पिका पुष्करं मूलं षड्ग्रन्था हपुषा शटी ॥१॥ पटोलमूलत्रिफलायवानीकुटजत्वचः । विशाला धान्यकं रास्ना दन्ती दशपलोन्मिता ॥ २ ॥ कृमिघ्नमुस्तमञ्जिष्ठादेवदारुकटुत्रिकम् । भागान्पञ्चपलानेतानष्टद्रोणेऽम्भसः पचेत् ॥३॥ द्रोणशेषे रसे पूते देयं गुडशतत्रयम् धातक्या विंशतिपलं चातुर्जातं पलाष्टकम् ॥ ४ ॥ लवङ्गव्योषकङ्कोलं पलिकानि प्रकल्पयेत् । निदध्यान्मासमेकं तु घृतभाण्डे सुसंस्कृते ॥ ५ ॥ चतुष्पलां पिबेन्मात्रां प्रातः पित्तं नियच्छति । सर्वगुल्मविकारांश्च प्रमेहांश्चैव विंशतिम् ॥६॥ प्रतिश्यायं क्षयं कासमष्ठीलां वातशोणितम् । उदराण्यन्त्रवृद्धिं च चविकाख्यो महासवः ॥ ७ ॥ इति

१ (च०) दृढप्रत्ययकारकः ।

चविकासवः ॥ अथ कुमार्यासवः ॥ कुमार्याश्च रसद्रोणे गुडं पलशतं तथा । तुला-कृमिसकृल्यां विजयां क्वाथयेत्तज्जलार्मणे ॥ १ ॥ चतुर्थांशावशेषे तु पूते तस्मिन्नि-धापयेत् । मधुनश्चाढकं दत्वा धातक्या द्विपलाष्टकम् ॥ २ ॥ स्निग्धभाण्डे विनि-क्षिप्य कल्कं चैव प्रदापयेत् । जातीफलं लवङ्गं च कक्कोलं च कबाबकम् ॥ ३ ॥ जटिलाचव्यचित्रं च जातीपत्री सकर्कटम् । अक्षं पुष्करमूलं च प्रत्येकं च पलं पलम् ॥४॥ मृतं शुल्वं तथा लोहं शुक्तिमात्रं प्रदापयेत् । भूम्यां वा धान्यराशौ वा स्थापयेद्दिन-विंशतिम् ॥५॥ तमुद्धृत्य पिबेन्मात्रां यथा चाग्निबलाबलम् । पञ्चकासं तथा श्वासं क्षयरोगं च दारुणम् ॥६॥ उदराणि तथाष्टौ च षडर्शांसि च नाशयेत् । वातव्याधि-मपस्मारमन्यान् रोगान्सुदारुणान् ॥ ७॥ जाठरं कुरुते दीप्तं कोष्ठशूलं च नाशयेत् । गुल्माष्टकं नष्टपुष्पं नाशयेदेकपक्षतः ॥ कुमारिकासवो ह्येष बृहस्पतिविनिर्मितः ॥ ८ ॥ इति कुमार्यासवः ॥ अथ हिङ्ग्वादि घृतम् ॥ हिङ्गुपुष्करमूलानि तुम्बरूणि हरीतकी । श्यामा बिडं सैन्धवं च यवक्षारं महौषधम् ॥ १ ॥ यवक्वाथोदकेनैतद् घृतप्रस्थं विपाचयेत् । तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः ॥२॥ अथ दधिकादि घृतम् ॥ बिडदाडिमसिन्धूत्थहुतभुग्व्योषजीरकैः । हिङ्गुसौवर्चलक्षारचुक्रवृक्षाम्लवे-तसैः ॥१॥ बीजपूररसोपेतैः सर्पिर्दधि चतुर्गुणम् । साधितं दधिकं नाम्ना गुल्महृत्प्लीहनुत्प-रम् ॥ २ ॥ अथ वृन्दात् त्रायमाणादि ॥ जले दशगुणे साध्यं त्रायमाणं चतु-ष्पलम् । पञ्चभागान्वितैः कल्कैः संयोज्यं चैव कार्षिकैः ॥१॥ रोहिणी कटुका मुस्ता त्रायमाणा दुरालभा । द्राक्षा तामलकी वीरा जीवन्ती चन्दनोत्पलम् ॥ २ ॥ रसस्या-मलकानां च क्षीरस्य च घृतस्य च । पलानि पृथगष्टाष्टौ सम्यग् दत्वा विपाचयेत् ॥ ३ ॥ पित्तगुल्मं रक्तगुल्मं विसर्पं पित्तजं ज्वरम् । हृद्रोगं कामलां कुष्ठं हन्यादेतद् घृतोत्तमम् ॥ ४ ॥ अथ सामुद्रादिवर्तिः ॥ वातवर्चोनिरोधेषु सामुद्रार्द्रकसर्षपैः । कृत्वा पायौ विधातव्या वर्तयो मरिचान्वितैः ॥ १ ॥

## ॥ अथ रसाः ॥

अथादौ नाराचो रसः ॥ शुद्धसूतं समं गन्धं जेपालं त्रिफलासमम् । त्रिकटुं पेषये-त्क्षौद्रमिश्रं गुल्मं लिहन्हरेत् ॥ उष्णोदकं पिबेच्चानु नाराचोऽयं रसोत्तमः ॥१॥ इति नाराचो रसः ॥ अथ वडवानलरसः ॥ शुद्धसूतं समं गन्धं मृतं ताम्राभ्रटङ्-कणम् । सामुद्रं च यवक्षारं स्वर्जिसैन्धवनागरम् ॥ १ ॥ अपामार्गस्य च क्षारं पालाशं वत्सनाभकम् । प्रत्येकं सूततुल्यं स्याच्चणकाम्लेन मर्दयेत् ॥ २ ॥ हस्तिकन्याद्रवै-श्चाहो आर्द्रयुक्तं पुटेल्लघु । माषैकं भक्षयेन्नित्यं रसोऽयं वडवानलः ॥ सर्वं गुल्मं निहन्त्याशु ग्रहणीं च विशेषतः ॥ ३ ॥ इति वडवानलरसः ॥ अथ गुल्मकुठारो रसः ॥ नागवङ्गाभ्रकं कान्तं समं ताम्रं समांशकम् । जम्बीरस्वरसैर्घृष्टां वटी गुञ्जाप्रमा-णिका ॥ १ ॥ मधुनार्द्रकनीरेण क्षारयुग्मेन सेविता । अजीर्णमाम्लं गन्धं च हृत्पार्श्वोदरशूलके ॥ नाम्ना गुल्मकुठारोऽयं सर्वगुल्मान्व्यपोहति ॥ २ ॥ अथ

काश्यपात् मदेभसिंहसूतो रसः ॥ रसगन्धवराटताम्रशङ्खं विषवङ्गाभ्रककान्ततीक्ष्णमुण्डम् । अहिहिङ्गुलटङ्कणं समांशं सकलं तत्त्रिगुणं पुराणकिट्टम् ॥ १ ॥ पशुमूत्रविशोधितं सुघृष्टा त्रिफलाभृङ्गरजार्द्रकोत्थनीरैः । सुविशोष्य वरामृताल्विासास्वरसैरष्टगुणैः पुनर्नवोत्थैः ॥२॥ पृथगग्निकृतं घनं विपाच्य गुटिका गुञ्जयुता निजानुपानैः । ज्वरपाण्डुतृषास्रपैत्त्यगुल्मक्षयकासस्वरमग्निसादमूर्च्छाः ॥ ३ ॥ पवनादिषु दुस्तराष्टरोगान् सकलं पित्तहरं मदावृतं च । बहुना किमसौ यथार्थनामा सकलव्याधिहरो मदेभसिंहः ॥ ४ ॥ अथ प्रवालपञ्चामृतरसः ॥ प्रवालमुक्ताफलशङ्खशुक्तिकपर्दिकानां च समांशभागम् । प्रवालमात्रं द्विगुणं प्रयोज्यं सर्वैः समांशं रविदुग्धमेव ॥१॥ एकीकृतं तत्खलु भाण्डमध्ये क्षिप्त्वा मुखे बन्धनमत्र योज्यम् । पुटं विदध्यादतिशीतले च उद्धृत्य तद्भस्म क्षिपेत्करण्डे ॥२॥ नित्यं द्विवारं प्रतिपाकयुक्तं वक्ष्यमाणं हि नरेण सेव्यम् । आनाहगुल्मोदरप्लीहकासश्वासाग्निमान्द्यान् कफमारुतोत्थान् ॥३॥ अजीर्णमुद्गारहृदामयघ्नं ग्रहण्यतीसारविकारनाशनम् ॥४॥ मेहामयं मूत्ररोगं मूत्रकृच्छ्रं तथाश्मरीम् । नाशयेन्नात्र सन्देहः सत्यं गुरुवचो यथा ॥५॥ पथ्याश्रितं भोजनमादरेण समाचरेन्निर्मलचित्तवृत्त्या । प्रवालपञ्चामृतनामधेयो योगोत्तमः सर्वगदापहारी ॥६॥ इति रसाः ॥

## ॥ अथ पथ्यापथ्यम् ॥

संवत्सरसमुत्पन्नाः कलमा रक्तशालयः । खण्डं कुलत्थयूषश्च धन्वमांसरसः सुराः ॥ १ ॥ गवामजायाश्च पयो मृद्वीका च परूषकम् । तक्रमेरण्डतैलं च लशुनं बालमूलकम् ॥२॥ पत्तूरो वास्तुकं शिग्रु मातुलुङ्गं हरीतकी । वातानुलोमनं चैव पथ्यं गुल्मे नृणां भवेत् ॥ ३ ॥ माषादयः शिम्बिधान्ये शूकधान्ये यवादयः । वल्लूरं मूलकं मत्स्यं मधुराणि फलानि च ॥ ४ ॥ अधोवायुशकृन्मूत्रश्रमश्वासाश्रुधारणम् । वमनं जलपानं च गुल्मरोगी परित्यजेत् ॥ ५ ॥ इति पथ्यापथ्यम् ॥ इति गुल्मरोगचिकित्सा ॥

---

## ॥ अथातो हृद्रोगनिदानम् ॥

अत्युष्णगुर्वम्लकषायतिक्तैः श्रमाभिघाताध्यशनप्रसङ्गैः । संचिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः ॥ १ ॥ अथ तस्य संप्राप्तिमाह ॥ दूषयित्वा रसं दोषा विगुणा हृदयं गताः । हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते ॥ १ ॥ अथ वातिकमाह ॥ आयम्यते मारुतजे हृदयं तुद्यते तथा । निर्मथ्यते दीर्यते च स्फोट्यते पाट्यतेऽपि च ॥१॥ अथ पैत्तिकमाह ॥ तृष्णोष्णदाहचोषाः स्युः पैत्तिके हृद्गदे क्लमः । धूमायनं च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥ १ ॥ अथ श्लैष्मिकमाह ॥ गौरवं कफसंस्रावोऽरुचिः स्तम्भोऽग्निमार्दवम् । माधुर्यमपि चास्यस्य बलासो वर्तते हृदि ॥ १ ॥ ॥ अथ त्रिदोषकृमिजयोर्मिलितमेव लक्षणमाह ॥ विद्यात्त्रिदोषमप्येवं सर्वलिङ्गहृदामयम् । त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते ॥१॥ तिलक्षीरगुडादींश्च ग्रन्थिस्तस्योपजायते । मर्मैकदेशे संक्लेदं रसश्चाप्युपगच्छति ॥ २ ॥ तत्क्लेदात्कृमयश्चाथ भवन्त्यु-

पहतात्मनः। तीव्रार्त्तितोदं कृमिजं सदोषत्रयसम्भवम् ॥ ३ ॥ उत्क्लेदः ष्ठीवनं तोदः शूलं हृल्लासकस्तमः। अरुचिः श्यावनेत्रत्वं शोषश्च कृमिजे भवेत् ॥ ४ ॥ क्लोमः सादो भ्रमः शोषो ज्ञेयास्तेषामुपद्रवाः। क्रिमिजे तु कृमीणां ये श्लैष्मिकाणां हि ते मताः ॥ ५ ॥ इति हृद्रोगनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

अथ वातहृद्रोगः ॥ वातोपसृष्टे हृदये वामयेत्स्निग्धमातुरम्। द्विपञ्चमूलीक्वाथेन सस्नेहलवणेन वा ॥ १ ॥ अथ पिप्पल्यादि चूर्णम् ॥ पिप्पल्येला वचा हिङ्गु यवक्षारोऽथ सैन्धवम्। सौवर्चलमथो शुण्ठी दीप्यश्चेति विचूर्णितम् ॥१॥ फलधान्याम्लकौलत्थदधिमद्यवसादिभिः। पाययेच्छुद्धदेहस्य वातहृद्रोगशान्तये ॥२॥ अथ पुष्करमूलाद्यं चूर्णम् ॥ सपुष्कराख्यं फलपूरमूलं महौषधं सव्यभयासुकल्कः। क्षीराम्लसर्पिर्लवणैर्विमिश्रः स्याद्वातहृद्रोगहरो नराणाम् ॥ १ ॥ इति वातहृद्रोगः ॥

## ॥ अथ पित्तहृद्रोगः ॥

अथ श्रीपर्ण्यादियोगः ॥ श्रीपर्णी मधुकं क्षौद्रं सितागुडजलैर्वमेत्। पित्तोपसृष्टे हृदये सिञ्चेत मधुरैः शृतैः ॥१॥ अथ शीतादि ॥ शीताः प्रदेहाः परिषेचनं च तथा विरेको हृदि पित्तदुष्टे। द्राक्षासिताक्षौद्रपरूषकैः स्याच्छुद्धे च पित्तापहमन्नपानम् ॥१॥ अथ द्राक्षादि चूर्णम् ॥ हारहूराहरीतक्योस्तुल्यं शर्करया रजः। पीतं हिमाम्बुना हन्ति पित्तहृद्रोगमञ्जसा ॥१॥ अथार्जुनादिचूर्णम् ॥ अर्जुनस्य त्वचा सिद्धं क्षीरं पित्तहृदार्तिजित्। सितया पञ्चमूल्या वा बलया मधुकेन वा ॥ १ ॥ अथ वृन्दात्कसेरुकादिसर्पिः ॥ कसेरुकाशैवलशृङ्गबेरप्रपौण्डरीकं मधुकं बिसं च। ग्रन्थिश्च सर्पिः पयसा पचेत्तैः क्षौद्रान्वितं पित्तहृदामयघ्नम् ॥ १ ॥ इति पित्तहृद्रोगः ॥

## ॥ अथ कफहृद्रोगः ॥

हृद्रोगे कफजे स्विन्नं सुवान्तं लङ्घितं नरम्। कफघ्नैर्भेषजैर्युञ्ज्याज्ज्ञात्वा दोषबलाबलम् ॥ १ ॥ अथ त्रिवृताद्यौ चूर्णक्वाथौ ॥ त्रिवृत्सटीबलारास्नाशुण्ठीपथ्याः सपौष्कराः। चूर्णिता वा शृता मूत्रे पातव्याः कफहृद्गदे ॥ २ ॥ अथैलादि ॥ सूक्ष्मैला मागधीमूलं पटोलं सर्पिषा सह। नाशयेदाशु हृद्रोगं कफजं सपरिग्रहम् ॥१॥ इति कफहृद्रोगः॥

## ॥ अथ त्रिदोषहृद्रोगः ॥

त्रिदोषजे लङ्घनमादितः स्यादन्नं तु सर्वेषु हितं विधेयम्। चूर्णानि सर्पींषि च वक्ष्यमाणान्यत्र प्रयोज्यानि भिषग्भिराशु ॥ १ ॥ इति त्रिदोषहृद्रोगः ॥

## ॥ अथ कृमिजहृद्रोगः ॥

हृद्रोगे कृमिजे कार्यं लङ्घनं चापतर्पणम्। पश्चात्कृमिहरं कर्म कृमिरोगोक्तमाच-

रेत् ॥ १ ॥ कृमिजे च पिबेन्मूत्रं विडङ्गामयसंयुतम् । हृदि स्थिताः पतन्त्येव ह्यसाध्याः कृमयो नृणाम् ॥ २ ॥ इति कृमिजहृद्रोगः ॥

## ॥ अथ सामान्यहृद्दामयप्रतीकारः ॥

पवनारिजटा द्विपलाष्टगुणे सलिले पचिता यवजेन युतम् । क्वथनं हृदयोद्भवपार्श्वतटीकटिशूलविदारणसिंहनखम् ॥ १ ॥ अथ दशमूलादिकाथः ॥ दशमूलकषायस्तु लवणक्षारसंयुतः । पीतो निहन्ति सहसा हृदामयमसंशयम् ॥ १ ॥ अथ पुष्करादिकाथः ॥ क्वाथः कृतः पुष्करमातुलुङ्गपलाशपूतीकशटीसुराह्वैः । सनागराजाजिवचायवाह्वसक्षार उष्णो लवणश्च पेयः ॥१॥ अथ हिङ्ग्वादिचूर्णम् ॥ हिङ्गुग्रगन्धाबिडविश्वकृष्णाकुष्ठामयाचित्रकयावशूकम् । पिबेत्ससौवर्चलपुष्कराढ्यं यवाम्भसा शूलहृदामयघ्नम् ॥१॥ अथ पुष्कराद्यं चूर्णम् ॥ चूर्णं पुष्करमूलस्य मधुना सह लेहयेत् । हृल्लासश्वासकासघ्नं हृदामयहरं परम् ॥ १ ॥ अथ ककुभाद्यं चूर्णम् ॥ घृतेन दुग्धेन गुडाम्भसा वा पिबेत्सचूर्णं ककुभत्वचोत्थम् । हृद्रोगजीर्णज्वररक्तपित्तं जित्वा भवेयुश्चिरजीविनस्ते ॥ १ ॥ अथैणशृङ्गभस्मयोगः ॥ शरावसम्पुटे दग्ध्वा शृङ्गं हरिणजं पिबेत् । गव्येन सर्पिषा पिष्टं हृच्छूलं नश्यति ध्रुवम् ॥ १ ॥ अथ वृन्दात् कटुकादि ॥ पिष्ट्वा वा कटुका पेया सयष्टीका सुखाम्बुना । जीर्णज्वरं रक्तपित्तं हृद्रोगं च व्यपोहति ॥१॥ अथ घृतानि ॥ अथादौ वल्लभघृतम् ॥ शतार्धमभयानां तु सौवर्चलपलद्वयम् । पचेत्कल्कैर्घृतप्रस्थं दत्वा क्षीरं चतुर्गुणम् ॥ घृतं वल्लभकं नाम्ना श्रेष्ठं हृद्रोगनाशनम् ॥१॥ अथ यष्ट्यादिघृतम् ॥ यष्टीनागबलोदीच्यार्जुनैः सर्पिः सुसाधितम् । हृद्रोगक्षयपित्तास्रश्वासकासज्वरार्तिजित् ॥ १ ॥ इति घृतानि ॥ अथ वृन्दात्पुनर्नवादि तैलम् ॥ पुनर्नवादारुसपञ्चमूलरास्नायवाङ्कोलकपित्थबिल्वम् । पक्त्वा जले तेन पचेच्च तैलमभ्यङ्गपानेऽनिलहृद्रुदघ्नम् ॥ १ ॥ अथ रसाः ॥ तत्रादौ त्रिनेत्रो रसः ॥ रसगन्धाभ्रभस्मानि पार्थवृक्षत्वगम्बुना । एकविंशतिधा घर्मे भावितानि विधानतः ॥१॥ माषमात्रमिदं चूर्णं मधुना सह लेहयेत् । वातजं पित्तजं श्लेष्मसम्भूतं वा त्रिदोषजम् ॥ कृमिजं चापि हृद्रोगं निहन्त्येव न संशयः ॥ २ ॥ अथ हृदयार्णवरसः ॥ सूतार्कगन्धं क्वाथेन वराया मर्दयेद्दिनम् । काकमाच्या वटीं कृत्वा चणमात्रां तु भक्षयेत् ॥ हृदयार्णवनामायं हृद्रोगदलनो रसः ॥ १ ॥ अथ पथ्यापथ्यम् ॥ शालिमुद्गा यवा मांसं जाङ्गलं मरिचान्वितम् । पटोलं कारवेल्लं च पथ्यं प्रोक्तं हृदामये ॥ १ ॥ तैलाम्लतक्रगुर्वन्नकषायश्रममातपम् । रोषं स्त्रीर्नर्म चिन्तां वा भाष्यं हृद्रोगवांस्त्यजेत् ॥ २ ॥ इति हृद्रोगचिकित्सा ॥

## ॥ अथोरोग्रहनिदानम् ॥

अत्यभिष्यन्दिगुर्वन्नशुष्कपूत्यामिषाशनात् । सास्रं मांसं यकृत्प्लीह्नोः सद्यो वृद्धिं यदा गतम् ॥ १ ॥ उरोग्रहं तदा कुक्षौ कुरुतः कफमारुतौ । सस्तम्भं सज्वरं घोरं

१ ( च० ) कटि । २ ( च० ) मर्म ।

रूक्षं स्पर्शासहं गुरुम् ॥ २ ॥ आध्मानं कुक्षिहृत्कण्ठे वातविण्मूत्ररोधताः । तन्द्रारोचकशूलानि तस्य लिङ्गानि निर्दिशेत् ॥ ३ ॥ इत्युरोग्रहनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

अत्राशु स्वेदनं युक्त्या वमनं रक्तमोक्षणम् । तीक्ष्णैर्निरूहणं चैकं क्रमाल्लङ्घनमाचरेत् ॥१॥ पुत्रजीवकशिग्रुत्वक्सूर्यावर्तबलोद्भवाः । रसा एकैकशः कोष्णाद्धिशो वा रामठाश्रिताः ॥ २ ॥ सपञ्चलवणाः पेयास्त्रिवृद्गुडसुकल्किताः । तन्निवृत्तौ यथालाभं मूत्रतैलसुरासवैः ॥ ३ ॥ चव्याम्लवेतसक्षारसरामठसचित्रकान् । पिबेत्तैलारनालाभ्यामुरोग्रहनिवृत्तये ॥ ४ ॥ यो वा नरस्यात्र कृतस्य कर्मणो विधिर्विरुद्धो न भवेन्मनागपि । यथाबलं वीक्ष्य च शुद्धविग्रहं तथाविधं पथ्यमपि प्रयोजयेत् ॥ ५ ॥ इत्युरोग्रहचिकित्सा श्रीहरिश्चन्द्रस्य ॥

## ॥ अथातो मूत्रकृच्छ्रनिदानम् ॥

व्यायामतीक्ष्णौषधरूक्षमद्यप्रसङ्गनृत्यद्रुतपृष्ठयानात् । आनूपमत्स्याध्यशनादजीर्णात्स्युर्मूत्रकृच्छ्राणि नृणामिहाष्टौ ॥ १ ॥ अथ तस्य सम्प्राप्तिमाह ॥ पृथङ्मलाः स्वैः कुपिता निदानैः सर्वेऽथवा कोपमुपेत्य वस्तौ । मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात् ॥ १ ॥ अथ वातजमाह ॥ तीव्रा हि रुग्वङ्क्षणवस्तिमेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात् ॥ १ ॥ अथ पित्तजमाह ॥ पीतं सरक्तं सरुजं सदाहं कृच्छ्रं मुहुर्मूत्रयतीह पित्तात् ॥ १ ॥ अथ श्लैष्मिकमाह ॥ बस्तेः सलिङ्गस्य गुरुत्वशोफौ मूत्रं सपिच्छं कफमूत्रकृच्छ्रे ॥ १ ॥ अथ त्रिदोषजमाह ॥ सर्वाणि रूपाणि च सन्निपाताद्भवन्ति तत्कृच्छ्रतमं हि कृच्छ्रम् ॥ १ ॥ अथ शल्यजमाह ॥ मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च । मूत्रकृच्छ्रं तदाघाताज्जायते भृशवेदनम् ॥ वातकृच्छ्रेण तुल्यानि तस्य लिङ्गानि निर्दिशेत् ॥ १ ॥ अथ पुरीषजमाह ॥ शकृतस्तु प्रतीघाताद्वायुर्विगुणतां गतः । आध्मानं[1] वातशूलं च मूत्रसङ्गं करोति च ॥१॥ अथाश्मरीजमाह ॥ अश्मरीषु तु तत्पूर्वं[2] मूत्रकृच्छ्रमुदाहृतम् ॥ १ ॥ अथ शुक्रजमाह ॥ शुक्रदोषैरुपहते मूत्रमार्गे विधारिते । सशुक्रं मूत्रयेत्कृच्छ्राद्वस्तिमेहनशूलवान् ॥ १ ॥ अथावान्तरभेदमाह ॥ अश्मरी शर्करा चैव तुल्यसंभवलक्षणे । शर्कराया विशेषं तु शृणु कीर्तयतो मम ॥ १ ॥ पच्यमानाश्मरी पित्ताच्छोष्यमाणा च वायुना । विमुक्तकफसंधाना क्षरन्ती शर्करा मता ॥ २ ॥ हृत्पीडा वेपथुः शूलं कुक्षौ वह्निश्च दुर्बलः । तथा भवति मूर्च्छा च मूत्रकृच्छ्रं च दारुणम् ॥ ३ ॥ इति मूत्रकृच्छ्रनिदानम् ॥

## ॥ अथ मूत्रकृच्छ्रचिकित्सा ॥

अथादौ वातमूत्रकृच्छ्रम् ॥ अभ्यञ्जनस्नेहनिरूहवस्तिस्वेदोपनाहोत्तरवस्तिसेकान् । स्थिरादिभिर्वातहरैश्च सिद्धान्दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥ १ ॥ अमृता नागरं धात्री

---

१ ( ख० ग० ) आध्मानात्कुक्षिहृच्छोफ । २ ( च० ) अश्मरीहेतुतत्पूर्वम् ।

वाजिगन्धा त्रिकण्टकम् । निष्काथ्य प्रपिबेत्काथं मूत्रकृच्छ्रे समीरजे ॥ २ ॥ इति वातकृच्छ्रम् ॥

## ॥ अथ पित्तकृच्छ्रम् ॥

सेकावगाहाः शिशिरप्रदेहाः श्रेष्ठो विधिर्बस्तिपयोविरेकाः। द्राक्षाविदारीक्षुरसैर्घृतं च कृच्छ्रेषु पित्तप्रभवेषु कार्याः ॥१ ॥ अथ तृणपञ्चमूलक्काथपयसी ॥ कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम् । पित्तकृच्छ्रहरं पञ्चमूलं वस्तिविशोधनम् ॥ एतत्सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम् ॥ १ ॥ अथ शतावर्यादिक्काथः ॥ शतावरीकाशकुशश्वदंष्ट्राविदारिशालीक्षुकसेरुकाणाम् । क्काथं सुशीतं मधुशर्कराभ्यां युक्तं पिबेत्पैत्तिकमूत्रकृच्छ्रे ॥ १ ॥ अथ हरीतक्यादिक्काथः ॥ हरीतकीगोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानाम्। क्काथं पिबेन्माक्षिकसंप्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे ॥ १ ॥ अथोर्वारुकबीजयोगः ॥ उर्वारुबीजं मधुकं सदार्वि पित्ते पिबेत्तण्डुलधावनेन। दार्वीं तथैवामलकीरसेन समाक्षिकां पित्तकृतेऽथ कृच्छ्रे ॥१॥ अथ वृन्दान्मन्थादियोगः ॥ मन्थं पिबेद्वा ससितं ससर्पिः शृतं पयो वार्धसिताप्रयुक्तम् । धात्रीरसं चेक्षुरसं पिबेद्वा कृच्छ्रे सरक्ते मधुना विमिश्रम् ॥ १ ॥ अथ द्राक्षादि ॥ द्राक्षासितोपलाकल्कं कृच्छ्रघ्नं मस्तुना युतम् । पिबेद्वा कामतः क्षीरमुष्णं गुडसमन्वितम् ॥ १ ॥ अथ वृन्दान्नारिकेलादि ॥ नारिकेलजलं योज्यं गुडधान्यसमन्वितम् । सदाहं मूत्रकृच्छ्रं च रक्तपित्तं निहन्ति च ॥ १ ॥ अन्यच्च ॥ रक्तस्य नारिकेलस्य जलं कतकसंयुतम् । शर्करैलासमायुक्तं मूत्रकृच्छ्रहरं विदुः ॥ १ ॥ अथ शतावर्यादिसर्पिः ॥ शतावरीकाशकुशश्वदंष्ट्राविदारिकेक्ष्वामलककल्कसिद्धम् । सर्पिः पयो वा सितया विमिश्रं कृच्छ्रेषु पित्तप्रभवेषु योज्यम् ॥ १ ॥ इति पित्तकृच्छ्रम् ॥

## ॥ अथ श्लेष्मकृच्छ्रम् ॥

क्षारोष्णतीक्ष्णौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहः । तक्रं च तिक्तौषणसिद्धतैलं बस्तिश्च शस्तः कफमूत्रकृच्छ्रे ॥ १ ॥ अथ मूत्रादियोगः ॥ मूत्रेण सुरया वापि कदलीस्वरसेन वा । कफकृच्छ्रविनाशाय सूक्ष्मां पिष्ट्वा त्रुटिं पिबेत् ॥ १ ॥ अथ तक्रादियोगो वृन्दात् ॥ तक्रेण युक्तं सितवारुणस्य बीजं पिबेत्कृच्छ्रविघातहेतोः। पिबेत्तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥ १ ॥ इति श्लेष्मकृच्छ्रम् ॥

## ॥ अथ त्रिदोषकृच्छ्रम् ॥

सर्वं त्रिदोषप्रभवे तु कृच्छ्रे यथाबलं कर्म समीक्ष्य कार्यम् । तत्राधिके प्राग्वमनं कफे स्यात्पित्ते विरेकः पवने तु वस्तिः ॥ १ ॥ अथ बृहत्यादिक्काथः ॥ बृहतीधावनीपाठायष्टीमधुकलिङ्गकान् । पक्त्वा क्काथं पिबेन्मर्त्यः कृच्छ्रे दोषत्रयोद्भवे ॥१॥ अथ शतावर्यादिक्काथः ॥ शतावर्यास्तु मूलानां निष्क्काथः ससितामधुः । मूत्रदोषं

निहन्त्याशु वातपित्तकफोद्भवम् ॥ १ ॥ अथ गुडदुग्धयोगः ॥ गुडेन मिश्रितं दुग्धं कदुष्णं कामतः पिबेत् । मूत्रकृच्छ्रेषु सर्वेषु शर्करावातरोगनुत् ॥ १ ॥ इति त्रिदोषजमूत्रकृच्छ्रम् ॥

## ॥ अथाभिघातमूत्रकृच्छ्रम् ॥

मूत्रकृच्छ्रेऽभिघातोत्थे वातकृच्छ्रक्रिया हिता। पञ्चवल्कलमृल्लेपः कवोष्णोऽत्र प्रशस्यते ॥ १ ॥ अथ मन्थादियोगः ॥ मन्थं पिबेद्वा ससितं ससर्पिः शृतं पयो वार्धसिताप्रयुक्तम् । धात्रीरसं चेक्षुरसं पिबेद्वाभिघातकृच्छ्रे मधुना विमिश्रम् ॥ १ ॥ इत्यभिघातकृच्छ्रम् ॥

## ॥ अथ शुक्रविबन्धजकृच्छ्रम् ॥

कृच्छ्रे शुक्रविबन्धोत्थे शिलाजतुसमाक्षिकम् । सक्षीरं ससितं सर्पिर्मन्तव्यं प्रपिबेन्नरः ॥ १ ॥ शुक्रदोषविशुद्ध्यर्थं समदां प्रमदां श्रयेत् । तृणपञ्चकमूलेन सिद्धं सर्पिः पिबेदपि ॥ २ ॥ लेहः शुक्रविबन्धोत्थे शिलाजतुसमाक्षिकः । बलाहिङ्गुयुतं क्षीरं सर्पिर्मिश्रं पिबेन्नरः ॥ मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरं परम् ॥ इति वृन्दात् ॥

## ॥ अथ शकृद्विघातजं कृच्छ्रम् ॥

स्वेदचूर्णक्रियाभ्यङ्गबस्तयः स्युः पुरीषजे । कृच्छ्रे तत्र विधिः कार्यः सर्वः शुक्रविबन्धजित् ॥ १ ॥ अथ गोक्षुरादिक्काथः ॥ क्काथो गोक्षुरबीजानां यवक्षारयुतः सदा । मूत्रकृच्छ्रं शकृज्जातं पीतः शीघ्रं निवारयेत् ॥१॥ इति शकृद्विघातजं कृच्छ्रम् ॥

## ॥ अथाश्मरीजं कृच्छ्रम् ॥

अश्मरीजे मूत्रकृच्छ्रे स्वेदाद्या वातजित् क्रिया । पाषाणभेदक्काथस्तु कृच्छ्रमश्मरिजं जयेत् ॥ १ ॥ अथैलादि ॥ एलोपकुल्यामधुकाश्मभेदकौन्तीश्वदंष्ट्रावृषकोरुबूकैः । शृतं पिबेदश्मजतुप्रगाढं सशर्करं साश्मरिमूत्रकृच्छ्रे ॥१॥ इत्यश्मरीजं कृच्छ्रम् ॥

## ॥ अथ सामान्यविधिः ॥

अथ त्रिकण्टकादिक्काथः ॥ गदनिग्रहात् ॥ त्रिकण्टकारग्वधदर्भकाशदुरालभापर्पटभेदपथ्याः । निघ्नन्ति पीता मधुनाश्मरीकां सम्प्राप्तमृत्योरपि मूत्रकृच्छ्रम् ॥ १ ॥ अथ पाषाणभेदादिः ॥ पाषाणभेदस्त्रिवृता च पथ्या दुरालभा पुष्करगोक्षुरं च । पलाशशृङ्गाटककर्कटीजबीजं कषायः सुनिरुद्धमूत्रे ॥ १ ॥ अथ समूलगोक्षुरादिः ॥ समूलगोक्षुरक्काथः सितामाक्षिकसंयुतः । नाशयेन्मूत्रकृच्छ्राणि तथा चोष्णसमीरणम् ॥ १ ॥ अथ यवादिर्वृन्दात् ॥ यवोरुबूकस्तृणपञ्चमूलीपाषाणभेदैः सशतावरीभिः । कृच्छ्रेषु गुल्मेष्वभयाविमिश्रैः कृतः कषायो गुडसम्प्रयुक्तः ॥१॥ अथैलादियोगः ॥ एलाश्मभेदकशिलाजतुपिप्पलीनां चूर्णानि तण्डुलजलैर्लुलितानि पीत्वा । यद्वा गुडेन सहिता-

---

१ ( क० ) सिताप्रयोगः । २ ( च० ) सर्पिर्मथापि । ३ ( क० ग० ) हलः ।

न्यवलेह्य धीमानासन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥ १ ॥ अथ क्षाराणां प्रयोगः ॥ अङ्कोलतिलकाष्ठानां क्षारः क्षौद्रेण संयुतः । दधिवार्यनुपानेन मूत्ररोधं नियच्छति ॥१॥सितातुल्यो यवक्षारः सर्वकृच्छ्रनिवारणः। निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः ॥२॥ यवक्षारसमायुक्तं पिबेत्तक्रं च कामतः । मूत्रकृच्छ्रविनाशाय तथैवाश्मरिनाशनम् ॥३॥ माषमेकं यवक्षारं कूष्माण्डस्वरसं पलम् । शर्कराकर्षसंयुक्तं मूत्रकृच्छ्रनिवारणम् ॥४॥ अथ वृन्दाद्दाडिमादियोगः ॥ दाडिमाम्लयुतां हृद्यां शुण्ठीजीरकसंयुताम् । पीत्वा सुरां सलवणां मूत्रकृच्छ्रात्प्रमुच्यते ॥१॥ अथोर्वारुबीजकल्कं वृन्दात् ॥ उर्वारुबीजकल्कं च श्लक्ष्णं पिष्टाक्षसम्मितम् । धान्याम्ललवणैः पेयं मूत्रकृच्छ्रविनाशनम् ॥१॥ अथ त्रिफलादिकल्कः ॥ त्रिफलायाः सुपिष्टायाः कल्कं कोलसमन्वितम् । वारिणा लवणीकृत्य पिबेन्मूत्ररुजापहम् ॥ १ ॥ अथैलादिः ॥ पिबेन्मद्येन सूक्ष्मैलां धात्रीफलरसेन वा । शितिवारकबीजं वा तक्रे श्लक्ष्णं च चूर्णितम् ॥ १ ॥ ॥ अथ हरिद्रादिः ॥ हरिद्रागुडकर्षैकं चारुनालेन वा पिबेत् । वन्ध्याकर्कोटिकाकन्दं भक्षेत्क्षौद्रसितायुतम् ॥ अश्मरीं हन्ति नो चित्रं रहस्यं हि शिवोदितम् ॥ १ ॥ ॥ अथ योगसारादेलादि । एलागोक्षुरयोश्चूर्णं शिशोर्देयं मधुप्लुतम् । मूत्रकृच्छ्रापहः क्वाथः पेयस्तन्मूलवारिणा । १ ॥ गोक्षूरजस्तथा क्वाथो यवक्षारयुतः शुभः । सर्वकृच्छ्रविनाशाय शिलाजतुयुतोऽथ वा ॥ २ ॥ अथ खर्जूरादिचूर्णम् ॥ खर्जूरामलबीजानि पिप्पली च शिलाजतु । एलामधुकपाषाणं चन्दनोर्वारुबीजकम् ॥ १ ॥ धान्यकं शर्करायुक्तं पातव्यं ज्येष्ठवारिणा । अङ्गदाहं लिङ्गदाहं गुदवङ्क्षणशुक्रजम् ॥ शर्कराश्मरिशूलघ्नं बल्यं वृष्यकरं परम् ॥ २ ॥ अथेक्षुरसादियोगः ॥ भ्रष्टेक्षुस्वरसं ग्राह्यमाखुविड्विहितं पिबेत् । नाशयेन्मूत्रकृच्छ्राणि सद्य एव न संशयः ॥ १ ॥ ॥ अथ कुटजयोगः ॥ पिष्ट्वा गोपयसा श्लक्ष्णं कुटजस्य त्वचं पिबेत् । तेनोपशाम्यते क्षिप्रं मूत्रकृच्छ्रं सुदारुणम् ॥ १ ॥ अथ त्रिकण्टकाद्यं घृतम् ॥ त्रिकण्टकैरण्डकुशाद्यभीरुककारुकेक्षुस्वरसेन सिद्धम् । सर्पिर्गुडार्धांशयुतं प्रपेयं कृच्छ्राश्मरीमूत्रविघातहारि ॥ १ ॥ अथ शतावरीघृतम् । घृतप्रस्थं शतावर्या रसस्यार्धाढकम् । पचेत् । अजाक्षीरेण संयुक्तं चतुष्प्रस्थान्वितेन तु ॥ १ ॥ द्विगोक्षुरामृतानन्ता कासकण्टकिनीरसान् । कुडवार्धं पृथग् दत्वा पिष्टैर्यष्टिकटुत्रयम् ॥२॥ श्वदंष्ट्राफलिनीदुग्धाशिलाजत्वश्मभेदकैः । त्रिसुगन्धान्वितैरर्धपलांशैः सघृतं पुनः ॥३॥ शर्कराद्विपलोपेतं क्षौद्रपादसमन्वितम् । हन्ति कृच्छ्राणि सर्वाणि मूत्रदोषाश्मशर्कराः ॥ सर्वकृच्छ्राणि हन्त्याशु एतच्छतावरीघृतम् ॥ ४ ॥ अथ त्रिकण्टकादिगुग्गुलुः ॥ त्रिकण्टकानां क्वथितेऽष्टनिघ्ने पुरम् पचेत्पाकविधानयुक्त्या । फलत्रिकव्योषपयोधराणां चूर्णं पुरेण प्रमितं प्रदद्यात् ॥ १ ॥ वटी प्रमेहं प्रदरं च मूत्राघातं च कृच्छ्रं च तथाश्मरीं च । शुक्रस्य दोषान् सकलांश्च वातान् निहन्ति मेघानिव वायुवेगः ॥२॥

---

१ ( च० ) कास ।

अथ सेकलेपौ ॥ पिष्ट्वा श्वदंष्ट्राफलमूलिकाविडैरुर्वारुबीजानि सकाञ्जिकानि । आलिप्यमानानि समानि बस्तौ मूत्रस्य निष्यन्दकराणि सद्यः ॥ १ ॥ वस्तावेरण्डतैलेन स्निग्धत्वे किंशुकैस्तरोः । स्विन्नपुष्पैः प्रदं सेकं मूत्रकृच्छ्रोपशान्तये ॥२॥ कोष्णाखुविट्कल्कलेपो वस्तेरुपरि कृच्छ्रिणः । त्रपुसीबीजलेपो वा धारा वा किंशुकाम्भसः ॥३॥ ध्वजच्छिद्रे चेन्दुदानं दानं वा चटकाविशः । मेघनादशिफालेपः स्वेदो वा कर्कटाम्भसा ॥ ४ ॥ पातो वा कोष्णतैलस्य धारा वा कोष्णवारिणः । नवैते पादिका योगा मूत्रकृच्छ्रहरा मताः ॥ ५ ॥ अथ चन्द्रकलारसः संग्रहात् ॥ प्रत्येकं कर्षमात्रं स्यात्सूतं ताम्रं तथाभ्रकम् । द्विगुणं गन्धकं चैव कृत्वा कज्जलिकां शुभाम् ॥ १ ॥ मुस्तादाडिमदूर्वोत्थैः केतकीस्तनजद्रवैः । सहदेव्याः कुमार्याश्च पर्पटस्य च वारिणा ॥ २ ॥ रामशीतलिकातोयैः शतावर्या रसेन च । भावयित्वा प्रयत्नेन दिवसे दिवसे पृथक् ॥ ३ ॥ तिक्तागुडूचिकासत्त्वं पर्पटोशीरमाधवी । श्रीगन्धं सारिवा चैषां समानं सूक्ष्मचूर्णितम् ॥४॥ द्राक्षाफलकषायेण सप्तधा परिभावयेत् । ततः पोताश्रयं कृत्वा वख्यः कार्याश्चणोपमाः ॥ ५ ॥ अयं चन्द्रकलानाम्ना रसेन्द्रः परिकीर्तितः । सेव्यः पित्तगदध्वंसी वातपित्तगदापहः ॥ ६ ॥ अन्तर्बाह्यमहादाहविध्वंसनमहाघनः । ग्रीष्मकाले शरत्काले विशेषेण प्रशस्यते ॥ ७ ॥ कुरुते नाभिमान्द्यं च महतापं ज्वरं हरेत् । भ्रममूर्च्छाहरश्चाशु स्त्रीणां रक्तं महास्रवम् ॥८ ॥ ऊर्ध्वाधो रक्तपित्तं च रक्तवान्तिं विशेषतः । मूत्रकृच्छ्राणि सर्वाणि नाशयेन्नात्र संशयः ॥९॥ इति चन्द्रकलारसः ॥ अथ रसरत्नप्रदीपाल्लघुलोकेश्वरो रसः ॥ रसभस्म च भागैकं चत्वारः शुद्धगन्धकम् । पिष्ट्वा वराटकान्पूर्याद्रसपादं च टङ्कणम् ॥ १ ॥ क्षीरेण पिष्ट्वा रुद्ध्वास्यं भाण्डे रुद्ध्वा पुटे पचेत् । स्वाङ्गशीतं विचूर्ण्याथ लघुलोकेश्वरो रसः ॥ २ ॥ चतुर्गुञ्जो घृतैर्देयो मरीचैकोनविंशतिः । जातीमूलपलं चैकमजाक्षीरेण पाचयेत् ॥ शर्कराभावितं चानु पीतं कृच्छ्रहरं परम् ॥३॥ इति लघुलोकेश्वरः ॥ अथ वैक्रान्तगर्भनामा रसः ॥ सूतं स्वर्णं च वैक्रान्तं मृतं तुल्यं च मर्दयेत् । चाण्डालीराक्षसीद्रावैर्द्वियामान्ते च गोलकम् ॥१॥ शुष्कं रुद्ध्वा पुटे पाच्यं करीषाग्नौ महापुटे । माषैकं मधुना लेह्यं मूत्रकृच्छ्रप्रशान्तये ॥ २ ॥ वैक्रान्तगर्भनामायं सर्वकृच्छ्रामयापहः [?]येत् । अपामार्गस्य मूलं तु तक्रे पिष्ट्वानुपाययेत् ॥ ३ ॥ इति वैक्रान्तगर्भरसः ॥ अथ लोहभस्मयोगः ॥ अयोभस्म श्लक्ष्णपिष्टं मधुना सह योजितम् । मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ॥ १ ॥ अथ रसादियोगः ॥ रसवल्लं यवक्षारं सितातक्रयुतं पिबेत् । मूत्रकृच्छ्राण्यशेषाणि हन्यन्ते पानतो जवात् ॥ १ ॥

## ॥ अथ पथ्यापथ्यम् ॥

पुरातना लोहितशालयश्च धन्वामिषं मुद्गरसः सिता च । तक्रं पयो गोश्च दधि प्रभूतं पुराणकूष्माण्डफलं पटोलम् ॥१॥ उर्वारुखर्जूरकनारिकेलं तण्डूलियं चामलकं च सर्पिः ।

---

१ ( च० ) निर्दोषकराणि । २ ( च० ) किंशुकोद्भवैः । ३ ( च० ) स्वेदसेकम् ।

प्रतीरमीरं हिमवालुका.च मित्रं घृणां स्यात्सति मूत्रकृच्छ्रे ॥ २ ॥ मद्यं श्रमं निधुवनं गजवाजियानं सर्वं विरुद्धमशनं विषमाशनं च । ताम्बूलमत्स्यलवणार्द्रकतैलभृष्टं पिण्याकहिङ्गुतिलसर्षपमूत्रवेगान् ॥ माषान् करीरमतितीक्ष्णविदाहि रूक्षमम्लं प्रमुञ्चतु जनः सति मूत्रकृच्छ्रे ॥ ३ ॥ इति मूत्रकृच्छ्रचिकित्सा ॥

## ॥ अथ मूत्राघातनिदानं व्याख्यास्यामः ॥

जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश । प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः ॥ ॥ १ ॥ अथादौ तेषां मध्ये क्रमेण वातकुण्डलिकामाह ॥ रूक्षाद्वातविघाताद्वा वायुर्वस्तौ सवेदनः । मूत्रमाविश्य चरति विगुणः कुण्डलीकृतः ॥ १ ॥ मूत्रमल्पाल्पमथवा सरुजं संप्रवर्तते । वातकुण्डलिकां तां तु व्याधिं विद्यात्सुदारुणम् ॥ २ ॥ अथाष्ठीलामाह ॥ आध्मापयन्वस्तिगुदं रुद्ध्वा वायुश्चलोन्नताम् । कुर्यात्तीव्रार्तिमष्ठीलां मूत्रमार्गनिरोधिनीम् ॥ १ ॥ अथ वातबस्तिमाह ॥ वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः । निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः ॥ १ ॥ मूत्रसङ्गो भवेत्तेन वस्तिकुक्षिरुजाकरः । वातवस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥ २ ॥ अथ मूत्रातीतमाह ॥ चिरं धारयतो मूत्रं त्वरया न प्रवर्तते । मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥ १ ॥ अथ मूत्रजठरमाह ॥ मूत्रस्य वेगेऽभिहते तदुदावर्तहेतुकः । अपानः कुपितो वायुरुदरं पूरयेद्भृशम् ॥ १ ॥ नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम् । तन्मूत्रजठरं विद्याद् गुदवस्तिनिरोधनम् ॥ २ ॥ अथ मूत्रोत्सङ्गमाह ॥ वस्तौ वाप्यथ वा नाले मणौ वा यस्य देहिनः । मूत्रं प्रवृत्तं सज्जेत सरक्तं वा प्रवाहतः ॥ १ ॥ स्रवेच्छनैः शनैरल्पं सरुजं वाथ नीरुजम् । विगुणानिलजो व्याधिः स मूत्रोत्सङ्गसंज्ञितः ॥ २ ॥ अथ मूत्रक्षयमाह ॥ रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ । मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ १ ॥ अथ मूत्रग्रन्थिमाह ॥ अन्तर्वस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् । अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ॥ १ ॥ तत्रान्तरे । उक्तं वातकफाद्दुष्टं वस्तिद्वारेषु दारुणम् । ग्रन्थिं कुर्यात्स कृच्छ्रेण सृजेन्मूत्रं तदावृतम् ॥ १ ॥ ॥ अथ मूत्रशुक्रमाह ॥ मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् । स्थानाच्च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्तते ॥ भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥ १ ॥ अथोष्णवातमाह ॥ व्यायामाध्मातपैः पित्तं वस्तिं प्राप्यानिलावृतम् । वस्तिं मेढ्रं गुदं चैव प्रदहेत् स्रावयेदधः ॥१॥ मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा । कृच्छ्रात्पुनः पुनर्जन्तोरुष्णवातं वदन्ति तम् ॥ २ ॥ अथ मूत्रसादमाह ॥ पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत् । कृच्छ्रान्मूत्रं तदा रक्तं पीतं श्वेतं घनं सृजेत् ॥ १ ॥ सदाहं रोचनाशङ्खचूर्णवर्णं भवेच्च यत् । शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ॥२॥ अथ विड्विघातमाह ॥ रूक्षदुर्बलयोर्वातादुदावृत्तं शकृद्यदि ।

---

१ (च०) रौक्षाद्वेग । २ (च०) मूत्रविण्मार्गरोधिनीम् ।

मूत्रस्रोतोऽनुपद्येत विड्विसृष्टं तदा नरः । विड्गन्धं मूत्रयेत् कृच्छ्राद्विड्विघातं तमादिशेत् ॥ १ ॥ अथ बस्तिकुण्डलमाह ॥ द्रुताध्वलङ्घनायासैरभिघातात्प्रपीडनात् । स्वस्थानाद्बस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥ १ ॥ शूलस्पन्दमदाहार्तो बिन्दुं बिन्दुं स्रवत्यपि । पीडितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्तिमान् ॥ २ ॥ बस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम् । पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः ॥३॥ तस्मिन्पित्तावृते दाहः शूलं मूत्रविवर्णता । श्लेष्मणा गौरवं शोफः स्निग्धं मूत्रं घनं सितम् ॥ ४ ॥ श्लेष्मरुद्धबिलो बस्तिः पित्तोदीर्णो न सिध्यति । अविभ्रान्तबिलः साध्यो न च यः कुण्डलीकृतः ॥ स्याद्बस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च ॥ ५ ॥ इति मूत्राघातनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

स्नेहस्वेदोपपन्नस्य हितं स्नेहविरेचनम् । दद्यादुत्तरबस्तिं च मूत्राघाते सवेदने ॥ १ ॥ अथ नलादिक्काथः ॥ नलकुशकाशेक्षुशिफाक्वथितं प्रातः सुशीतलं ससितम् । पिबतः प्रयाति नियतं मूत्राघातः सवेदनः पुंसः ॥१॥ अथ गोधावन्यादि ॥ गोधावन्यामूलक्वथितं घृततैलगोरसोन्मिश्रम् । पीतं विरुद्धमचिराद्भिनत्ति मूत्रस्य संघातम् ॥१॥ अथ शार्ङ्गधरात् । वीरन्तरो वृक्षवृन्दावासासहचरद्वयम् । कुशद्वयं नलो गुन्द्रा बकपुष्पोऽग्निमन्थकः ॥ १ ॥ मूर्वा पाषाणभेदश्च स्योनाको गोक्षुरस्तथा । अपामार्गश्च कमलं ब्राह्मी चेति गणो वरः ॥ २ ॥ वीरन्तरादिरित्येष शर्कराश्मरिकृच्छ्रहा । मूत्राघातं वातरोगान्नाशयेदखिलानपि ॥ ३ ॥ पिबेच्छिलाजतु क्वाथे गणे वीरन्तरादिके । रसं दुरालभाया वा कषायं वासकस्य च ॥ ४ ॥ अथ दशमूलादिक्काथः ॥ दशमूलीशृतं पीत्वा सशिलाजतुशर्करम् । वातं कुण्डलिकाष्ठीलावातबस्तौ प्रमुच्यते ॥१॥ अथ गोक्षुरादिक्काथः ॥ पीतो गोकण्टकक्काथः सशिलाजतुकौशिकः । मूत्रकृच्छ्रान्मूत्रशुक्रान्मूत्रोत्सङ्गाद्विमुच्यते ॥ १ ॥ अथ शिलाजतुयोगः ॥ सशर्करं च ससितं लीढं सिद्धं शिलाजतु । निहन्ति मूत्रजठरं मूत्रातीतं च देहिनः ॥ १ ॥ अथ त्रिकण्टकादियोगः ॥ त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वातमये च शूले । गुडप्रगाढं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥ १॥ अथ निदिग्धिकादियोगः ॥ निदिग्धिकायाः स्वरसं पिबेद्वा तक्रसंयुतम् । जले कुङ्कुमकल्कं वा सक्षौद्रमुषितं निशि ॥ १ ॥ शृतशीतं पयो मांसी चन्दनं तण्डुलाम्बुना । पिबेत्सशर्करां श्रेष्ठामुष्णवाते सशोणिते ॥ २ ॥ अथ शतावर्यादियोगः ॥ वरीगोक्षुरभूधात्रीमूलानां स्वरसं पलम् । माषमेकं यवक्षारं सौरं माषद्वयं तथा ॥१॥ द्विगुञ्जं टङ्कणं क्षारं सर्वमेकत्र मेलयेत् । पिबेत्तत्तु विनाशाय मूत्राघाते सुदारुणे ॥ २ ॥ इति सारसंग्रहात् । स्त्रीणामतिप्रसङ्गेन शोणितं यस्य सिच्यते । मैथुनोपरमश्चास्य बृंहणीयो विधिर्मतः ॥ ताम्रचूडवसातैलं हितं चोत्तरबस्तिषु ॥ १ ॥ अथ स्वगुप्ताद्यं चूर्णम् ॥ स्वगुप्ताफ-

---

१ ( च० ) अविभ्रान्तबिलः । २ ( च० ) तृन्मोहः ।

लमृद्वीकाकृष्णेक्षुरसितारजः । समानमर्धभागानि क्षीरक्षौद्रघृतानि च ॥ १ ॥ सर्वं सम्यग्विमर्द्याक्षमात्रां लीढ्वा पयः पिबेत् । हन्ति शुक्रक्षयोत्थांश्च दोषान्वन्ध्यासुतप्रदम् ॥ २ ॥ अथ क्षौद्रार्धभागघृतम् ॥ क्षौद्रार्धभागः कर्तव्यो भागः स्यात्क्षीरसर्पिषोः । शर्करायाश्च चूर्णं च द्राक्षाचूर्णं च तत्समम् ॥ १ ॥ स्वयङ्गुप्ताफलं चैव तथैवेक्षुरकस्य च । पिप्पलीनां तथा चूर्णं समभागं प्रदापयेत् ॥ २ ॥ तदेकस्थं मेलयित्वा खल्वेनोन्मथ्य च क्षणम् । तस्य पाणितलं चूर्णं लिहेत्क्षीरं ततः पिबेत् ॥ ३ ॥ एतत्सर्पिः प्रयुञ्जानः शुद्धदेहो नरः सदा । शुक्रदोषाञ्जयेत्सर्वानेवापि भृशदुर्जयान् ॥ जयेच्छोणितदोषांश्च वन्ध्या स्त्री गर्भमाप्नुयात् ॥४॥ अथ धान्यगोक्षुर्याद्यं घृतम् ॥ धान्यगोक्षुरकक्वाथकल्कसिद्धं घृतं हितम् । मूत्राघातेषु कृच्छ्रेषु शुक्रदोषे च दारुणे ॥१॥ अथ चित्रकाद्यं घृतम् ॥ चित्रकं सारिवा चैव बला काला च सारिवा । द्राक्षाविशाला पिप्पल्यस्तथा च त्रिफला भवेत् ॥ १॥ तथैव मधुकं दद्याद्दद्यादामलकानि च । घृताढकं पचेदेतैः कल्कैरक्षसमन्वितैः ॥२॥ क्षीरद्रोणे जलद्रोणे तत्सिद्धमवतारयेत् । शीतं परिशृतं चैव शर्कराप्रस्थसंयुतम्॥३॥तुगाक्षीर्या च तत्सर्वं मतिमान्परिमिश्रयेत् । ततो मितं पिबेत्काले यथादोषं यथाबलम् ॥४॥ मूत्रग्रन्थिं मूत्रसादमुष्णवातमसृग्दरम् । विड्विघातं निहन्त्येतद्वस्तिकुण्डलिमप्यलम् ॥ ५ ॥ सर्पिरेतत्प्रयुञ्जाना स्त्री गर्भं लभतेऽचिरात् । अस्रदोषे योनिदोषे मूत्रदोषे तथैव च ॥ प्रयोक्तव्यमिदं सर्पिश्चित्रकाद्यं सदा बुधैः ॥ ६ ॥ अथ सदाभद्राद्यं चूर्णम् ॥ सदाभद्राश्मभिन्मूलं शतावर्यांश्च चित्रकम् । रोहिणीकोकिलाक्षौ च क्रौञ्चस्थूलं त्रिकण्टकम् ॥ श्लक्ष्णपिष्टाः सुरापीता मूत्राघातप्रबन्धनाः ॥ १ ॥ अथोशीरादि चूर्णम् ॥ उशीरं वालकं पत्रं कुष्ठं धात्री च मौसली । एला हरेणुकं द्राक्षा कुङ्कुमं नागकेसरम् ॥ १ ॥ पद्मकेसरकन्दं च कर्पूरं चन्दनद्वयम् । व्योषं मधुकलाजाश्च अश्वगन्धा शतावरी ॥ २ ॥ गोक्षुरं कर्कटाख्यं च जातीकङ्कोलचोरकम् । एतानि समभागानि द्विगुणामृतशर्करा ॥ ३ ॥ मत्स्यण्डिकामधुभ्यां च प्रातरेव बुभुक्षितः । क्षयं च रक्तपित्तं च पाददाहमसृग्दरम् ॥४॥ मूत्राघातं मूत्रकृच्छ्रं रक्तस्रावं च नाशयेत् । अशीतिं वातजान् रोगान् विशेषान्मेहनुत्परम् ॥ ५॥ इत्युशीरादि ॥ अश्मरीमूत्रकृच्छ्रेषु भेषजं यत्क्रिया च या । मूत्राघातेषु सर्वेषु कुर्यात्तत्सर्वमादरात् ॥ १ ॥ रसश्चन्द्रकलाख्यश्च कृच्छ्रघ्नो यः पुरेरितः । मूत्राघातेषु सर्वेषु स प्रयोज्यो विजानता ॥ २ ॥

## ॥ अथ पथ्यापथ्यम् ॥

पुरातना लोहितशालयश्च मांसानि धन्वप्रभवाणि मद्यम् । तक्रं पयो दध्यपि माषयूषः पुराणकूष्माण्डफलं पटोलम् ॥ १ ॥ उर्वारुखर्जूरकनारिकेलतालद्रुमाणामपि मस्तकानि । यथामलं सर्वमिदं च मूत्राघातातुराणां हि तमादिशन्ति ॥ २ ॥ विरु-

१ (च०) शुक्रदोषे । २ (च०) कोकिलाख्यौ ।

-न्द्राशनसर्वाणि व्यायामं मार्गशीलनम् । रूक्षं विदाहि विष्टम्भि व्यवायं वेगधारणम्॥ करीरं वमनं चापि मूत्राघाती विवर्जयेत् ॥ ३ ॥ इति मूत्राघातचिकित्सा ॥

## ॥ अथाश्मरीनिदानं व्याख्यास्यामः ॥

वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजापरा । प्रायः श्लेष्माश्रयाः सर्वा ह्यश्मर्यः स्युर्यमोपमाः ॥ १ ॥ अथ तत्सम्प्राप्तिमाह ॥ विशोषयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा । यदा तदाऽश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः ॥ १ ॥ ॥ अथ तस्यामनेकदोषाश्रयत्वमाह ॥ नैकदोषाश्रयाः सर्वास्त्वथासां पूर्वलक्षणम् । वस्त्याध्मानं तथासन्नदेशेषु परितोऽतिरुक् ॥ १ ॥ अथ पूर्वरूपमाह ॥ मूत्रे च बस्तगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ॥१॥ अथ तासां सामान्यलक्षणमाह ॥ सामान्यलिङ्गं रुङ्नाभिसीवनीवस्तिमूर्धसु । विशीर्णधारं मूत्रं स्यात्तया मार्गे निरोधिते ॥ १ ॥ अथ पुनर्लक्षणान्तरमाह ॥ तद्व्यपायात् सुखं मेहेदच्छं गोमेदकोपमम् । तत्संक्षोभात्क्षते सास्रमायासाच्चातिरुग्भवेत् ॥ १ ॥ अथ वातजामाह ॥ तत्र वाताद्भृशं चार्तो दन्तान् खादति वेपते । मृद्नाति मेहनं नाभिं पीडयत्यनिशं क्वणन् ॥ १ ॥ सानिलं मुञ्चति शकृन्मुहुर्मेहति बिन्दुशः । श्यावारुणाश्मरी चास्य स्याच्चिताकण्टकैरिव ॥ २ ॥ अथ पित्तजामाह ॥ पित्तेन दह्यते वस्तिः पच्यमान इवोष्मवान् । भल्लातकास्थिसंस्थाना रक्तपीता तथाश्मरी ॥ १ ॥ अथ श्लेष्मजामाह ॥ वस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः । अश्मरी महती श्लक्ष्णा मधुवर्णाथ वा सिता ॥ १ ॥ ॥ अथ प्रायेण शिशूनां ता भवन्ति ॥ एता भवन्ति बालानां तेषामेव च भूयसा । आश्रयोपचयाल्पत्वाद् ग्रहणाहरणे सुखाः ॥१॥ अथ शुक्राश्मरीमाह ॥ शुक्राश्मरी तु महतां जायते शुक्रधारणात् । स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ॥ शोषयत्युपसङ्गृह्य[1] शुक्रं तच्छुक्रजाश्मरी ॥ १ ॥ अथ तल्लक्षणमाह ॥ वस्तिरुङ् मूत्रकृच्छ्रत्वं मुष्कश्वयथुकारिणी । तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ॥ १ ॥ ॥ अथ शर्करालक्षणमाह ॥ पीडिते त्ववकाशेऽस्मिन्नश्मर्येव च शर्करा । अणुशो वायुना भिन्ना सा तस्मिन्ननुलोमगे ॥ १ ॥ निरेति सह मूत्रेण प्रतिलोमे विबध्यते । मूत्रस्रोतःश्रिता[2] सा तु सक्ता कुर्यादुपद्रवान् ॥ २ ॥ अथ तानेवोपद्रवानाह ॥ दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमथारुचि । पाण्डुत्वमुष्णवातं च तृष्णाहृत्पीडनं वमिः ॥ १ ॥ अथ तस्या असाध्यत्वमाह ॥ प्रशूननाभिवृषणं बद्धमूत्रं रुजावहम् । अश्मरी क्षपयत्याशु सिकता शर्करान्विता ॥ १ ॥ अप्सु स्वच्छास्वपि तथा निषिक्ता सुघटेऽथ वा । कालान्तरेण पङ्कः स्यादश्मरीह भवेत्तथा ॥ २ ॥ इत्यश्मरीनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

आदौ शूलः कुक्षिदेशे कटौ स्यात्पश्चाद्रोधो जायते मूत्रमुष्णम् । एतैर्लिङ्गैरश्मरी-

---

१ ( च० ) संहृत्य । २ ( च० ) प्रवृत्ता ।

रोगचिह्नं ज्ञात्वा कुर्याद्भेपजाद्यैश्चिकित्साम् ॥ १ ॥ अथ वाताश्मरी ॥ वाताश्मरीपूर्वरूपे स्नेहपानं प्रशस्यते ॥ १॥ अथ शुण्ठ्यादिः क्काथः॥ शुण्ठ्यग्निमन्थपाषाणभिच्छिग्रुवरुणक्षुरैः । अभयारग्वधफलैः क्काथं कृत्वा विचक्षणः ॥ १ ॥ रामठक्षारलवणचूर्णं दत्वा पिबेन्नरः । वाताश्मरीं हन्ति कृच्छ्रं मान्द्यमग्नेश्च तद्भुजः ॥ कट्यूरुगुदमेढ्रस्थं वङ्क्षणस्थं च मारुतम् ॥ २ ॥ अथ वरुणक्काथः ॥ वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुरसंयुताम् । क्काथयित्वा शृतं तस्य यवक्षारगुडान्वितम् ॥ पीत्वा वाताश्मरीं हन्ति चिरकालानुबन्धिनीम् ॥ १ ॥ अथ वीरतर्वादिः ॥ वीरतर्वादिकः क्काथः[1] पूर्वोक्तो वातजाश्मरीम् । सद्यो हन्ति यवक्षारगुडयुक्तो न संशयः ॥ १ ॥ क्षारान्यवागूं पेयांश्च कषायाणि पयांसि च । भोजनार्थं प्रयोज्यानि वाताश्मरीजुषां नृणाम् ॥ २ ॥ अथ-पित्ताश्मरी ॥ पीत्वा पाषाणभित्क्काथं सशिलाजतुशर्करम् । पित्ताश्मरीं निहन्त्याशु वृक्षमिन्द्राशनिर्यथा ॥ १ ॥ अथ कफाश्मरी ॥ क्काथो निपीतः सक्षारः शिग्रुत्वग्वरुणत्वचोः । कफजामश्मरीं हन्ति शक्राशनिरिव द्रुमम् ॥ १ ॥ अथ शुक्राश्मरी ॥ शुक्राश्मर्यां सुसामान्यो विधिरश्मरीनाशनः ॥ १ ॥ अथ कूष्माण्डरसः ॥ यवक्षारगुडोन्मिश्रं पिबेत्पुष्पफलोद्भवम् । रसं मूत्रविबन्धघ्नं शुक्राश्मरीविनाशनम् ॥ १ ॥ ॥ अथ शतावर्यादिः ॥ शतावरीमूलरसो गव्येन पयसा समः । पीतो निपातयत्याशु ह्यश्मरीं चिरजामपि ॥ १ ॥ अथ कुटजादियोगः ॥ पिबतः कुटजं दध्ना पथ्यमन्नं च खादतः । निपतत्यचिरादस्य निश्चितं मेढ्रशर्करा ॥ १ ॥ अथ कुटजकल्कः । अपि च कुटजमूलं धेनुदध्यम्बुपिष्टम् । पिचुमितमवलीढं पातयत्यश्मरीकाम् ॥ १ ॥ अथैरण्डादिकल्कः ॥ गन्धर्वहस्तबृहतीव्याघ्रीगोक्षुरकेक्षुरात् । मूलकल्कं पिबेद्दध्ना मधुरेणाश्मभेदनः ॥१॥ अथ पाषाणभेदादिक्काथः ॥ पाषाणभिद्वरुणगोक्षुरकोरुबूकक्षुद्राद्वयक्षुरकमूलकृतः कषायः । दध्ना यतो जयति मूत्रविबन्धशुक्रमुग्राश्मरीमपि च शर्करया समेताम् ॥१॥ अथैलादि ॥ एलोपकुल्यामधुकाश्मभेदकौन्तीश्वदंष्ट्रावृषकोरुबूकैः ॥ शृतं पिबेदश्मजतुप्रगाढं सशर्करे साश्मरिमूत्रकृच्छ्रे ॥१॥ अथ शिग्रुमूलादिः ॥ क्काथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरीपातनः । क्षीरान्नभुग् बर्हिशिखामूलं वा तण्डुलाम्बुना ॥१॥ अथ शिलाजत्वादि ॥ अश्मर्यां चाश्मरीकृच्छ्रे शिलाजतु समाक्षिकम् । यवक्षारं गोक्षुरं च खादेद्वा चाश्मरीहरम् ॥१॥ अथ त्रपुसबीजादि ॥ त्रपुसीबीजं पयसा पीत्वा वा नारिकेरजं कुसुमम् । दृढमूत्रशर्करावान् भवति सुखी कतिपयैर्दिवसैः ॥१॥ अथ राजमार्तण्डाद् गोपालकर्कट्यादि ॥ गोपालकर्कटीमूलं पिष्टं पर्युषिताम्भसा । पीयमानं त्रिरात्रेण पातयत्यश्मरीं हठात् ॥ १ ॥ अथ वृन्दात् ॥ शृङ्गबेरादियोगः ॥ शृङ्गबेरयवक्षारपथ्याकालीयकान्वितम् । आजं दधि भिनत्त्युग्रामश्मरीमाशु पातयेत् ॥१॥ अथार्कपुष्पीकल्कः ॥ गव्येन पिष्टा पयसार्कपुष्पी निपीयमानानुदिनं प्रभाते । विदार्य वीर्येण निजेन तीव्रामप्यश्मरीं या कुरुते सदाहाम् ॥ १ ॥ अथ त्रिकण्टकादिचूर्णम् ॥

---

1 ( च० ) वीरन्तर्वादिः ।

त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम् । अविक्षीरेण सप्ताहं पिबेदश्मरिभेदनम् ॥१॥ अथ हरिद्रादियोगः॥ यः पिबेद्रजनीं सम्यक् सगुडां तुषवारिणा। तस्याशु चिररूढापि यात्यस्तं मेण्हशर्करा ॥ १ ॥ अथ तिलादिक्षारयोगः ॥ तिलापामार्गकदलीपलाशयवसम्भवः । क्षारः पेयोऽविमूत्रेण शर्करास्वश्मरीषु च ॥ १ ॥ अथ तिलक्षारः ॥ क्षारो निपीतस्तिलनालजातः समाक्षिकः क्षीरयुतस्त्रिरात्रम् । हन्त्यश्मरीं सिन्धुविमिश्रितं वा निपीयमानं रुचकं प्रयत्नात् ॥१॥ अथ वरुणादिघृतम् ॥ वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत् । पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत् ॥ १ ॥ वारुणी कदली बिल्वं तृणजं पञ्चमूलकम् । अमृता त्वश्मजं देयं बीजं च त्रपुसस्य च ॥ २ ॥ शतपर्वा तिलक्षारः पलाशक्षार एव च । यूथिकायाश्च मूलानि कार्षिकाणि समावपेत् ॥ ३ ॥ अस्य मात्रां पिबेज्जन्तुर्देशकालाद्यपेक्षया । जीर्णे चानुपिबेत्पूर्वमजीर्णे न तु मस्तुना॥अश्मरीं शर्करां चैव मूत्रकृच्छ्रं च नाशयेत् ॥४॥ इति वरुणघृतम् ॥ अथ पाषाणभेदपाकः ॥ अश्मभेदात्प्रस्थमेकं चूर्णितं वस्त्रगालितम् । गव्ये दुग्धाढके क्षिप्त्वा पाचयेन्मृदुवह्निना ॥ १ ॥ दर्व्या संमर्दयेत्तावद्यावद् घनतरं भवेत्। एला लवङ्गमगधा यष्टी मध्वमृताभया ॥ २ ॥ कौन्ती श्वदंष्ट्रा वृषकं शरपुङ्खा पुनर्नवा । यावशूको निलम्बी च मांसी सप्ताङ्गुलात्पलम् ॥ ३ ॥ वङ्गं लोहं तथाभ्रं च कर्पूरं पर्पटं सटी । पत्रेभकेसरं त्वक्च संशुद्धं च शिलाजतु ॥ ४ ॥ पृथगर्धपलं चूर्णं चूर्णितं सितशर्करा । सार्धप्रस्थमिता ग्राह्या दुग्धे वै लेह्यतां नयेत् ॥ ५ ॥ सर्वं तन्निक्षिपेत्तत्र स्वाङ्गशीतलतां नयेत् । मधुनः प्रस्थकं दद्यात्स्निग्धभाण्डे विनिक्षिपेत् ॥ ६ ॥ कर्षार्धं भक्षयेत्प्रातस्तीक्ष्णं तैलादिकं त्यजेत् । पञ्चाश्मरीभेदनः स्यान्मूत्रकृच्छ्रं सुडं तथा ॥७॥ मूत्राघातान्प्रमेहांश्च नाशयेन्मधुमेहताम् । अधोगं रक्तपित्तं च वस्तिकुक्षिगदं तथा ॥ ८ ॥ तीव्राश्मरीपरीतानां विशेषेण हितं हि तत् । प्रथमात्रिणा विरचितं च्यवनाय निवेदितम् ॥ ९ ॥ अथ रसाः ॥ तत्रादौ पाषाणवज्रकरसः ॥ शुद्धसूतं त्रिधा[1] गन्धं द्रावैः श्वेतपुनर्नवैः । मर्दयित्वा दि[2]नं खल्वे रुद्ध्वा तद्भूधरे पचेत् ॥ १ ॥ पाषाणभेदचूर्णं तु समयुक्तं द्विमाषकम् । भक्षयेदश्मरीं हन्ति रसः पाषाणवज्रकः ॥ २ ॥ गोपालकर्कटीमूलकाथं तदनु पाययेत् ॥ ३ ॥ अथ त्रिविक्रमरसः ॥ ताम्रभस्म त्वजाक्षीरे पाच्यं तुल्ये घृते पचेत् । तत्ताम्रं शुद्धसूतं च गन्धकं च समं समम् ॥ १ ॥ निर्गुण्ड्युत्थद्रवैर्मर्द्यं दिनं तद्गोलमाहरेत् । यामैकं वालुकायन्त्रे पाच्यं योज्यं द्विगुञ्जकम् ॥ २ ॥ बीजपूरस्य मूलं तु सजलं चानुपाययेत् । रसस्त्रिविक्रमो नाम्ना सिकतां चाश्मरीं जयेत् ॥ ३ ॥ अथ पथ्यम् ॥ कुलित्था मुद्गगोधूमा जीर्णशालियवा हिताः । धन्वामिषं तण्डुलीयं जीर्णकूष्माण्डकं फलम् ॥ आर्द्रकं यावशूकश्च पथ्यमश्मरिरोगिणाम् ॥ ॥ १ ॥ इत्यश्मरीचिकित्सा ॥

---

१ ( घ० ङ० च० ) द्विधा । २ ( च० ) समं युक्त्वा ।

## ॥ अथातो मेहनिदानम् ॥

आस्यासुखं स्वप्नसुखं दधीनि ग्राम्योदकानूपरसाः पयांसि। नवान्नपानं गुडवैकृतं च प्रमेहहेतुः कफकृच्च सर्वम् ॥ १ ॥ तन्त्रान्तरे ॥ मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैव च। मूत्रदोषाश्च ये वापि वस्तौ चैव भवन्ति हि ॥ १ ॥ अथ कफपित्तवातमेहानां सामान्यलक्षणमाह ॥ मेदश्च मांसं च शरीरजं च क्लेदं कफो बस्तिगतः प्रदूष्य। करोति मेहान्समुदीर्णमुष्णैस्तान्येव पित्तं परिदूष्य चापि ॥ १ ॥ क्षीणेषु दोषेष्ववकृष्य वस्तौ धातून्प्रमेहान्कुरुतेऽनिलश्च ॥ १ ॥ अथ क्रमेण साध्यासाध्यत्वमाह ॥ साध्याः कफोत्था दश पित्तजाः षड्याप्या न साध्याः पवनाच्चतुष्काः। समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमं ते ॥ १ ॥ तन्त्रान्तरे ॥ ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यताम्। रक्तगुल्मे पुराणत्वं सुखसाध्यत्वहेतवः ॥ १ ॥ तन्त्रान्तरे वातचतुष्टयस्य साध्यत्वमुक्तम् ॥ या वातमेहान्प्रति पूर्वमुक्तान्वातोल्बणानां विहिता क्रिया सा। वायुर्हि मेहेष्वतिकर्षितेषु कुप्यत्यमेहान्प्रति नास्ति चिन्ता ॥ १ ॥ अथ प्रमेहे दूष्यवर्गमाह ॥ कफः सपित्तः पवनश्च दोषो मेदोऽस्रशुक्राम्बुवसालसीकाः। मज्जा रसौजः पिशितं प्रदूष्य प्रमेहिणां विंशतिरेव मेहाः ॥ १ ॥ अथ तन्त्रान्तरे दूष्यसङ्ग्रह उक्तः ॥ वसामांसशरीरस्य क्लेदः शुक्रं च शोणितम्। मेदो मज्जालसीकौजः प्रमेहे दूष्यसङ्ग्रहः ॥ १ ॥ अथ पूर्वरूपमाह ॥ दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः। दाहश्चिक्कणता देहे तृट् स्वाद्वास्यं च जायते ॥ १ ॥ अथ सामान्यलक्षणमाह ॥ सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता ॥ अथ कारणभेदात्कार्यभेदमाह ॥ दोषदूष्यविशेषेऽपि तत्संयोगविशेषतः। मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ॥ सम्यग्भेदं परीक्ष्यादौ क्रिया कार्या भिषग्वरैः ॥ १ ॥ दकमेहस्तथा चेक्षुः सान्द्रमेहः सुराभिधः। पिष्टप्रमेहः शुक्राख्यः सिकता शीतकः शनैः ॥ २ ॥ लालामेहस्तथा क्षारो नीलमेहोऽथकालकः। हारिद्रमेहमाञ्जिष्ठौ रक्तमेहस्तथापरः ॥ ३ ॥ षोडशोऽथ वसामेहो मज्जामेहश्च कीर्तितः। क्षौद्रमेहस्तथा हस्ती मेहानां विंशतिः क्रमात् ॥४॥ उदकमेहादयो दश स्युस्तान्कफजानाह ॥ तत्रोदकमेहमाह ॥ अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम्। मेहत्युदकमेहेन किञ्चिदाविलपिच्छिलम् ॥ १ ॥ अथेक्षुमेहमाह ॥ इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥ १ ॥ अथ सान्द्रमेहमाह ॥ सान्द्रीभवेत्पर्युषितं सान्द्रमेहेन मेहति ॥१॥ अथ सुरामेहमाह ॥ सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ॥ १ ॥ अथ पिष्टमेहमाह ॥ संहृष्टरोमपिष्टेन पिष्टवद्बहुलं सितम् ॥ १ ॥ अथ शुक्रमेहमाह ॥ शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥ १ ॥ अथ सिकतामेहमाह ॥ मूत्राणून्सिकतामेही सिकतारूपिणो मलान् ॥ १ ॥ अथ शीतमेहमाह ॥ शीतमेही सुबहुशो मधुरं बहुशीतलम् ॥ १ ॥ अथ शनैर्मेहमाह ॥ शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति ॥ १ ॥ अथ लालामेहमाह ॥ लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ १ ॥ एवं दश

श्लेष्मजाः ॥ अथ षट् पैत्तिकानाह ॥ तत्र क्षारमेहमाह ॥ गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ॥१॥ अथ नीलकालमेहावाह ॥ नीलमेहेन नीलाभं कालमेही मषीनिभम् ॥ १ ॥ अथ हारिद्रमेहमाह ॥ हारिद्रमेही कटुकं हरिद्रासन्निभं दहत् ॥ १ ॥ अथ माञ्जिष्ठमेहमाह । विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ॥ १ ॥ अथ रक्तमेहमाह ॥ विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ॥ १ ॥ एवं षट् पैत्तिकाः ॥ अथ चतुरो वातजानाह ॥ तत्रादौ वसामेहमाह ॥ वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः ॥ १ ॥ अथ मज्जामेहमाह ॥ मज्जाभं मज्जमिश्रं वा मज्जामेही मुहुर्मुहुः ॥ १ ॥ अथ क्षौद्रमेहमाह ॥ कषायं मधुरं रूक्षं क्षौद्रमेहेन मेहति ॥ १ ॥ अथ हस्तिमेहमाह ॥ हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्जितम् । सलसीकं विबद्धं च हस्तिमेही प्रमेहति ॥ १ ॥ अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः । उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ २ ॥ इदानीं प्रतिदोषोपद्रवानाह । वस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः । दाहस्तृष्णा क्लमो मूर्च्छा विड्भेदः पित्तजन्मनाम् ॥ १ ॥ अथ वातजानाह ॥ वातजानामुदावर्तः कण्ठहृद्ग्रहलोलताः । शूलमुन्निद्रता शोषः कासः श्वासश्च जायते ॥ १ ॥ अथासाध्यतामाह ॥ यथोक्तोपद्रवाविष्टमतिप्रसृतमेव च । पिटिकापीडितं गाढं प्रमेहो हन्ति मानवम् ॥ १ ॥ मूर्च्छाछर्दिज्वरश्वासकासवीसर्पगौरवैः । उपद्रवैरुपेतो यः प्रमेही दुष्प्रतिक्रियः ॥ २ ॥ नराणां दृश्यते मेहस्त्रीणां किं तु न दृश्यते । अन्नपानविशेषेण दोषदूष्यक्रमेण च ॥ ३ । रजः प्रवर्तते यस्मान्मासि मासि विशोधयेत् । सर्वान्धातूंश्च दोषांश्च न प्रमेहन्त्यतः स्त्रियः ॥ ४ ॥ जातः प्रमेही मधुमेहिनो[1] वा साध्यो न रोगः सहबीजदोषात्[2] । ये चापि केचित्कुलजा विकारा भवन्ति तांश्च प्रवदन्त्यसाध्यान् ॥ ५ ॥ मधुमेहिनं प्रदर्शयन्नाह ॥ सर्व एव प्रमेहास्तु कालेनाप्रतिकारिणः । मधुमेहत्वमायान्ति तदासाध्या भवन्ति हि ॥ ६ ॥ अथ तन्त्रान्तरे ॥ गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः । अचिकित्स्या भवन्त्येते बलमांसपरिक्षयात् ॥ १ ॥ अथ धातुक्षयावरणाभ्यां कुपितवातेन मधुसं॰॰माह ॥मधुमेहो मधुसमं जायते स किल द्विधा । क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा ॥ १ ॥ अथावरणमाह ॥ आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन् । क्षीणः क्षणात्क्षणात्पूर्णो भजते कृच्छ्रसाध्यताम् ॥१॥ अथ मधुमेहशब्दप्रवृत्तौ निमित्तमाह ॥ मधुरं यच्च मेहेषु प्रायो मध्विव मेहति । सर्वेऽपि मधुमेहाख्यं माधुर्याच्च तनोरतः ॥२॥ प्रमेहिणो यदा मूत्रमनाविलमपिच्छिलम् । विशदं तिक्तकटुकं तदारोग्यं प्रचक्षते ॥ १ ॥ इति प्रमेहनिदानम् ॥ अथ प्रमेहपिटिकाः ॥ प्रमेहिणां प्रजायन्ते पिटिकाः सर्वसन्धिषु । शराविका कच्छपिकाः जालिनी विनतालजी । मसूरिका सर्षपिका पुत्रिणी च विदारिका ॥ १ ॥ विद्रधिश्चेति पिटिकाः प्रमेहोपेक्षया दश । सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ॥ २ ॥ अथ शराविकामाह ॥ अन्तोन्नता

---

१ ( च० ) मेहिना यो । २ ( च० ) स हि बीजदोषात् ।

च तद्रूपा निम्नमध्या शराविका ॥ १ ॥ अथ सर्षपिकामाह ॥ गौरसर्षपसंस्थाना स-त्प्रमाणा च सर्षपी ॥ १ ॥ अथ कच्छपिकामाह ॥ सदाहा कूर्मसंस्थाना ज्ञेया कच्छ-पिका बुधैः ॥ १ ॥ अथ जालिनीमाह ॥ जालिनी तीव्रदाहा तु मांसजा-लसमावृता । अवगाढरुजोत्क्लेदा पृष्ठे वाप्युदरेऽपि वा ॥ १ ॥ अथ विनतामाह ॥ महती पिटिका नीला सा बुधैर्विनता स्मृता । महत्यल्पचिता ज्ञेया पिटिका सापि पुत्रिणी ॥ १ ॥ अथ मसूरिकामाह ॥ मसूरदलसंस्थाना विज्ञेया तु मसूरिका ॥ १ ॥ अथालजीमाह ॥ रक्तासिता स्फोटवती विज्ञेया त्वलजी बुधैः ॥१॥ अथ विदारीमाह ॥ विदारी कन्दवद्वृत्ता कठिना च विदारिका । १ ॥ अथ विद्रधिकामाह ॥ विद्रधे-र्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा ॥१॥ अथ पिडिकानामारम्भकारणमाह ॥ ये यन्म-या स्मृता मेहास्तेषामेतास्तु तन्मयाः । विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ॥१॥ तावच्चैता न लक्ष्यन्ते यावद्वस्तुपरिग्रहः । गुदे हृदि शिरस्यंसे पृष्ठे मर्मसु चोत्थिताः ॥ सोपद्रवा दुर्बलाग्नेः पिटिकाः परिवर्जयेत् ॥ २ ॥ चरकेण पिडिकानामुपद्रवा उक्ताः॥ तृट्कासमांससंकोचमोहहिक्कामदज्वराः । विसर्पो मर्मसंरोधः पिटिकानामुपद्रवाः ॥ १ ॥ केश्चित्स्त्रीणां प्रमेहो न भवतीत्युक्तं तन्त्रान्तरे । रजःप्रसेकान्नारीणां मासि मासि विशुध्यति । सर्वं शरीरदोषं च न मेहन्ति यतः स्त्रियः ॥१॥ प्रमेहनिवृत्तिलक्षणं सुश्रुतेऽपि पठितम् । प्रमेहिणां यदा मूत्रमनाविलमपिच्छिलम् । विशदं कटुतिक्तं च तदारोग्यं प्रचक्षते ॥ १ ॥ हारिद्रवर्णं रुधिरं च मूत्रं विना प्रमेहस्य तु पूर्वरूपैः । यो मेहयेत्तं न वदेत्प्रमेहं रक्तस्य स हि प्रकोपपित्तस्य ॥ १ ॥ इति प्रमेहनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

दश षट् चापि चत्वारः कफपित्तसमीरजाः । साध्या याप्या असाध्यास्ते प्रमेहाः क्रमशो नृणाम् ॥ १ ॥ अथ कफमेहचिकित्सा ॥ हरीतकीकट्फलमुस्तलोध्राः पा-ठाविडङ्गार्जुनधन्वयासाः । उभे हरिद्रे तगरं विडङ्गं कदम्बशालार्जुनदीप्यकाश्च ॥१॥ दार्वी विडङ्गं खदिरो धवश्च सुराह्वकुष्ठार्जुनचन्दनानि । दार्व्यग्निमन्थौ त्रिफला सपा-पाठा पाठा च मूर्वा च तथाश्वदंष्ट्रा ॥२॥ यवान्युशीराण्यभया गुडूचीजम्बूशिवाचि-त्रकसप्तपर्णाः । पादैः कषायाः कफमेहिनां ते दशोपदिष्टा मधुसंप्रयुक्ताः ॥ ३ ॥ ज-लप्रमेहे सुरसप्रमेहे सान्द्रप्रमेहे च सुराप्रमेहे । पिष्टप्रमेहेऽपि च शुक्रमेहे क्रमादमी स्युः सिकताप्रमेहे ॥ ४ ॥ शीतप्रमेहे च शनैःप्रमेहे लालाप्रमेहेऽपि सुखाय तेषाम् ॥५॥ इति कदम्बात् ॥ अथ सुश्रुतात् ॥ तत्रोदकमेहिनां पारिजातकषायं पाययेत् । इक्षुमेहिनां निम्बकषायम् ॥ सान्द्रमेहिनां सप्तपर्णकषायम् ॥ सुरामेहिनां शल्लकीक-षायम् ॥ पिष्टमेहिनां हरिद्राद्वितीयकषायम् ॥ शुक्रमेहिनां दूर्वाशैवलप्लवका-रञ्जकसेरुककषायं ककुभचन्दनकषायं वा ॥ सिकतामेहिनां निम्बकषायम् ॥ शी-तमेहिनां पाठागोक्षुरकषायम् ॥ शनैर्मेहिनां त्रिफलागुडूचीकषायम् ॥ लालामेहिनां

---

१ (च०) द्वास्तु ।

त्रिफलारग्वधकषायं पाययेत् ॥१॥ इति कफमेहचिकित्सा ॥ अथ पित्तमेहचिकित्सा ॥ उशीरलोधार्जुनचन्दनानामुशीरमुस्तामलकाभयानाम् । पटोलनिम्बामलकामृतानां मुस्ताभयामुष्ककवृक्षकाणाम् ॥ १ ॥ लोधाम्बुकालीयकधातकीनां बिम्बार्जुनानां मिशिसोत्पलानाम् । मञ्जिष्ठहारिद्रकनीलक्षारमुष्णाख्यरक्ते क्रमशः कषायाः ॥२॥ अथ सुश्रुतात् ॥ माञ्जिष्ठमेहिनां मञ्जिष्ठाचन्दनकषायम् पाचयेत् ॥ हारिद्रमेहिनां राजवृक्षकषायम् । नीलमेहिनां सालसादिकषायमश्वत्थकषायं वा ॥ क्षारमेहिनां त्रिफलाकषायम् ॥ कालमेहिनां न्यग्रोधादिकषायम् ॥ शोणितमेहिनां गुडूचितिन्दुकास्थिकाश्मर्यखर्जूरकषायं मधुमिश्रं पाययेत् ॥ इति पित्तमेहचिकित्सा ॥ अथ वातमेहचिकित्सा ॥ अग्निमन्थकषायं तु वसामेहे प्रयोजयेत् । पाठाशिरीषदुःस्पर्शमूर्वाकिंशुकतिन्दुकैः ॥१॥ कपित्थेन भिषक् कुर्यात् क्काथं हस्तिप्रमेहके । पूगारिमेदयोः क्काथः सक्षौद्रः क्षौद्रमेहिनाम् ॥२॥ छिन्ना वह्निकषायेण पाठाकुटजरामठम् । तिक्ताकुष्ठं च संचूर्ण्य सर्पिर्मेहे पिबेन्नरः ॥३॥ अथ सुश्रुतात् ॥ अत ऊर्ध्वमसाध्येष्वपि योगान् यापनार्थं वक्ष्यामः । तद्यथा । वसामेहिनामग्निमन्थकषायं शिंशिपाकषायं वा ॥ सर्पिर्मेहिनां कुष्ठकुटजपाठाहिङ्गुकटुरोहिणीकल्कं गुडूचीचित्रककषायेण पाययेत् ॥ क्षौद्रमेहिनां खदिरकदरक्रमुककषायम् ॥ हस्तिमेहिनां तिन्दुककपित्थशिरीषपलाशपाठामूर्वादुःस्पर्शकषायं मधुमिश्रम् । हस्त्यश्वशूकरखरोष्ट्रास्थिक्षारं चेति ॥ इति वातप्रमेहचिकित्सा ॥

## ॥ अथ द्वन्द्वजप्रमेहचिकित्सा ॥

कम्पिल्लसप्तच्छदशालजानि बिभीतरोहीतककौटजानि । पुष्पाणि दध्नश्च विचूर्णितानि क्षौद्रेण लिह्यात्कफपित्तमेहे ॥ १॥ हरीतकीकट्फलमुस्तलोध्रकुचन्दनोशीरकृतः कषायः । क्षौद्रेण युक्तः कफवातमेहं निहन्ति पीतारजसा च पीतः ॥ २ ॥ विडङ्गरजनीद्वन्द्वखदिरोशीरपूगजः । क्काथः पीतः प्रगे हन्ति मेहं पित्तानिलोद्भवम् ॥ ३ ॥ क्काथः खर्जूरकाश्मर्यतिन्दुकास्थ्यमृताकृतः । सुहिमः पीतमात्रस्तु सक्षौद्रो रक्तमेहहा ॥ ४ ॥

## ॥ अथ सामान्यप्रमेहचिकित्सा ॥

अथ फलत्रिकादिः क्काथः ॥ फलत्रिकं दारुनिशाविशालामुस्तं च निष्काथ्य निशांशकल्कम् । पिबेत्कषायम् मधुसंप्रयुक्तं सर्वप्रमेहेषु चिरोत्थितेषु ॥१॥ अथ विडङ्गादिक्काथः ॥ विडङ्गरजनीयष्टीनागरागोक्षुरैः कृतः । कषायो मधुना हन्ति प्रमेहान् दुस्तरानपि ॥ १ ॥ अथ पलाशपुष्पाणां क्काथः ॥ पलाशतरुपुष्पाणां क्काथः शर्करया युतः । निषेवितः प्रमेहाणि हन्ति नानाविधान्यपि ॥१॥ अथ वृन्दात् त्रिफलादिक्काथः ॥ त्रिफलादारुदार्व्यब्दक्काथः क्षौद्रेण मेहहा । कुटजासनदार्व्यब्दफलत्रयभवोऽथवा ॥१॥ अथ वृन्दाद्गुडूच्यादिः ॥ गुडूच्याः स्वरसः पेयो मधुना सर्वमेहजित् । निशाकल्कयुतो धात्रीरसो

१ (च०) सालादि ।

वा माक्षिकान्वितः ॥ १ ॥ अथ भूधात्र्यादिः ॥ भूधात्री च त्रिगद्याणं मरीचानां च विंशतिः । असाध्यान्साधयेन्मेहान्सप्तरात्रान्न संशयः ॥ १ ॥ अथ कतकबीजयोगः ॥ कर्षप्रमाणं कतकस्य बीजं तक्रेण पिष्ट्वा सह माक्षिकेण । प्रमेहजालं विनिहन्ति सद्यो रामो यथा रावणमाहवे तु ॥ १ ॥ अथाकुल्यादियोगः ॥ आकुलीमुकुलं धात्रीहरिद्रामधुना लिहेत् । विंशतिं च प्रमेहाणां हन्ति सत्यं न संशयः ॥ १ ॥ अथ निशात्रिफलायोगः ॥ द्विनिशात्रिफलायुक्तं रात्रौ पर्युषितं जलम् । प्रभाते मधुना पीतं मेहमूलं निकृन्तति ॥ १ ॥ अथ त्रिफलाकल्कः ॥ सजलं त्रिफलाकल्कमातपे धारयेत्र्यहम् । तद्भाण्डे दोलिकायन्त्रे चणकान् मुष्टिमात्रकान् ॥ १ ॥ अहोरात्रोषितान्खादेद्वर्धमानं दिने दिने । असाध्यं साधयेन्मेहं सिद्धयोग उदाहृतः ॥ २ ॥ अथ सालमुस्तयोगः ॥ सालमुस्तककम्पिल्लकल्कमक्षं समं पिबेत् । धात्रीरसेन सक्षौद्रं सर्वमेहहरं परम् ॥१॥ अथ त्रिफलादिचूर्णम् ॥ मधुना त्रिफलाचूर्णमथ वाश्मजतूद्भवम् । लोहजं वाभयोत्थं वा लिह्यान्मेहनिवृत्तये ॥ १ ॥ अथ न्यग्रोधादिचूर्णम् ॥ न्यग्रोधोदुम्बराश्वत्थस्योनाकारग्वधासनम् । आम्रं कपित्थं जम्बुश्च प्रियालं ककुभं धवम् ॥ १ ॥ मधूकं मधुकं लोध्रं वरुणं पारिभद्रकम् । पटोलं मेषशृङ्गी च दन्ती चित्रकपाटली ॥ २ ॥ करञ्जं त्रिफला शक्रभल्लातकफलानि च । एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ ३ ॥ न्यग्रोधाद्यमिदं चूर्णं मधुना सह लेहयेत् । फलत्रयरसं चानुपिबेन्मूत्रं विशुध्यति ॥४॥ एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च । वेगेन प्रशमं यान्ति पिटिका न च जायते ॥ ५ ॥ अथ कर्कटीबीजादि ॥ कर्कटीबीजसिन्धूत्थत्रिफलासमभागिकम् । पीतमुष्णाम्भसा चूर्णं मूत्ररोधं निवारयेत् ॥ १ ॥ अथ गोक्षुरादिगुटी ॥ त्रिकटुत्रिफलातुल्यं गुग्गुलुं च समांशकम् । गोक्षुरक्वाथसंयुक्तां गुटिकां कारयेद्बुधः ॥ १ ॥ देशकालबलापेक्षी भक्षयेच्चानुलोमिकाम् । न चात्र परिहारोऽस्ति कर्म कुर्याद्यथेप्सितम् ॥ २ ॥ प्रमेहान्वातरोगांश्च वातशोणितमेव च । मूत्रघातं मूत्रदोषं प्रदरं चानु नाशयेत् ॥ ३ ॥ इति गोक्षुरगुग्गुलगुटी ॥ अथ चन्द्रप्रभागुटी योगरत्नावल्याः ॥ वेल्लव्योषफलत्रिकं त्रिलवणं द्विक्षारचव्यानलश्यामापिप्पलीमूलमुस्तकसटीमाक्षीकधातुत्वचः । षड्ग्रन्थामरदारुवारणकणाभूनिम्बदन्तीनिशापत्रैलातिविषापिचुप्रतिमिता लोहस्य कर्षाष्टकम् ॥ १ ॥ त्वक्क्षीरीपलिकापुराद्दशपलान्यष्टौ शिलाजन्मनो मानात्कर्षसमाकृतेति गुटिका संयोज्य सर्वं भिषक् । तत्रैव प्रतिवासरं सह घृतक्षौद्रेण लिह्यादिमां तक्रं मस्तु च गोघृतं मधुरसं पश्चात्पिबेन्मात्रया ॥ २ ॥ अर्शांसि प्रदरं ज्वरं च विषमं नाडीव्रणानश्मरीकृच्छ्रं विद्रधीमग्निमान्द्यमुदरं पाण्ड्वामयं कामलाम् । यक्ष्माणं सभगन्दरं सपिटिकां गुल्मप्रमेहारुचीरेतोदोषमुरःक्षतं कफमरुत्पित्तार्तिमुग्रां जयेत् । ॥ ३ ॥ वृद्धिं सञ्जनयेद्युवानमसमोजस्कं बलं वर्धयेदेतस्यां न निषिद्धमन्नमसकृन्नाध्वागमो मैथुनम् । विख्याता गुटिकेयमश्वितरा चन्द्रप्रभा नामतः सान्द्रानन्दकरी तनोति च रुचिं चन्द्रेण तुल्यां तनौ ॥ ४ ॥ इति चन्द्रप्रभा गुटी ॥

अथ योगरत्नावल्याः पूगपाकः ॥ हेमाम्भोधरचन्दनं त्रिकटुकं धात्री प्रियालाः कंटुर्लज्जालुत्रिसुगन्धजीरकयुगं शृङ्गाटकं वंशजम् । जातीकोशलवङ्गधान्यबहुलाः प्रत्येकमक्षोन्मिताः पूगस्याष्टपलं विचूर्ण्य च पयः प्रस्थत्रये संपचेत् ॥ १ ॥ गोसर्पिः कुडवं सितार्धकतुलाधात्रीवरीद्व्यञ्जली मन्दाग्नौ विपचेद् भिषक् शुभदिने सुस्निग्धभाण्डे क्षिपेत् । तं खादेत्तु यथाग्नि वासरमुखे मेहांश्च जीर्णज्वरं पित्तं साम्लमसृक्स्रुतिं च गुदजान् वक्त्राक्षिनासासु च ॥२॥ मन्दाग्निं च विजित्य पुष्टिमतुलां कुर्याच्च शुक्रप्रदो योगो गर्भकरः परं गदहरः स्त्रीणामसृग्दोषजित् ॥ ३ ॥ अथाश्वगन्धापाकः ॥ पलान्यष्टावश्वगन्धां विपाच्य गोदुग्धे षट् शेरके मन्दवह्नौ । दर्वीलेपो यावदास्ते सुपक्वश्चातुर्जातं क्षिप्य कर्षप्रमाणम् ॥ १॥ जातीजातं केशरं वंशसत्त्वं मोचं मांसीचन्दनं कृष्णसारम् । पत्रीकृष्णापिप्पलीमूलदेवपुष्पं कङ्कोलातिकाक्षोटसारम् ॥ २ ॥ भल्लीबीजं शृङ्गटं गोक्षुराख्यं सिन्दूराभ्रं नागवङ्गं च लोहम् । कर्षार्धार्धं सर्वचूर्णं प्रकल्प्य संशोष्याथो शर्करापक्वपाके ॥ ३ ॥ पक्त्वा शीतं कारयेदश्वगन्धापाकोऽयं वै हन्ति मेहानशेषान् । ज्वरं जीर्णं शोषगुल्मान्विकारान्पैत्तान् वातान् शुक्रवृद्धिं करोति ॥ ४ ॥ पुष्टिं दद्यादग्निसन्दीपनोऽयं कान्तिं कुर्यात्सौमनस्यं नराणाम् ॥ ५ ॥ अथ सालमपाकः ॥ क्षीरे द्रोणयुतं ससालकुडवं मन्दाग्निना पाचितं यावत्पाकमुपाव्रजेत्परहितं प्रस्थं गुडं निक्षिपेत् । चातुर्जातलवङ्गजातिफलकैर्मुस्तातुगाधान्यकैः शुण्ठीमागधिकोषणाश्वमभयालोहैश्च मिश्रीकृतम् ॥ १ ॥ हृद्रोगक्षयशोषमारुतगदान् हिक्कास्वसृक्शोषणे विंशन्मेहशिरोविकारशमनो रोगानशेषाञ्जयेत् ॥ २ ॥ अथ द्राक्षापाकः ॥ द्राक्षा दुग्धसिता पृथक् परिमिता प्रस्थेन संपाचिता युक्त्या वैद्यवरेण चूर्णमधुना देयं पलार्धं पृथक् । चातुर्जातकटुत्रयं मृगमदं लोहाभ्रकं केशरं पत्री जातिफलं मृगाङ्करजतं कुस्तुम्बरी चन्दनम् ॥ १ ॥ सम्यग्जातरसं प्रभातसमये सेव्यं द्विकर्षोन्मितं स्निग्धं शुक्रकरं प्रमेहशमनं पित्तामयध्वंसनम् । मूत्राघातविबन्धकृच्छ्रशमनं रक्तार्तिनेत्रार्तिहृत् पादे पाणितले विदाहशमनं सौख्यप्रदं प्राणिनाम् ॥ २ ॥ इति पाकाः ॥

## ॥ अथासवघृततैलादि ॥

अथ लोध्रासवः ॥ लोध्रं शटीपुष्करमूलमेलां मूर्वाविडङ्गं त्रिफलायवानीम् । चव्यं प्रियङ्गुक्रमुकं विशालां किराततिक्तं कटुरोहिणीं च ॥ १ ॥ भार्गीनतं चित्रकपिप्पलीनां मूलं सकुष्ठातिविषां सपाठाम् । कलिङ्गकाकेसरमिन्द्रसाह्वं नखं सपत्रं मरिचं प्लवं च ॥ २ ॥ द्रोणेऽम्भसः कर्षसमानि पक्त्वा पूते चतुर्भागजलावशेषे । रसेऽर्धभागे मधुनः प्रदाय पक्षं विधेयो घृतभाजनस्थः ॥ ३ ॥ लोध्रासवोऽयं कफपित्तमेहान्क्षिप्रं निहन्याद्द्विपलप्रयोगात् । पाण्ड्वामयार्शांस्यरुचिग्रहण्या दोषं किलासं विविधं च कुष्ठम् ॥४॥ इति लोध्रासवः ॥ अथ सिंहामृतघृतम् ॥ कण्टकार्या गुडूच्याश्च संहरेच्च

---

१ (क०) कुदु—। २ (च०) कक्कोलालिका ।

शतं शतम् । संकुट्योलूखले बिद्वांश्चतुर्द्रोणेऽम्भसः पचेत् ॥ १ ॥ तच्च पादावशेषेण घृतप्रस्थं विपाचयेत् । त्रिकटुत्रिफलारास्नाविडङ्गान्यथ चित्रकम् ॥ २ ॥ काश्मर्याणां च मूलानि पूतिकस्य त्वगस्य च । कुट्टयेदिति सर्वाणि श्लक्ष्णपिष्टानि कारयेत् ॥३॥ अस्य मात्रां पिबेत्प्रातः शालिभिः पयसा हितैः । प्रमेहं मधुमेहं च मूत्रकृच्छ्रं भगन्दरम् ॥ ४ ॥ आलस्यं चान्त्रवृद्धिं च कुष्ठरोगं विशेषतः । क्षयं चापि निहन्त्येतन्नाम सिंहामृतं घृतम् ॥५॥ अथ हरिद्रादितैलम् ॥ निशारसं चतुष्प्रस्थं द्विप्रस्थक्षीरसंयुतम् । कुष्ठाश्वगन्धालशुननिशापिप्पलिकल्कितम् ॥ विपक्वं तिलजप्रस्थं मेहानां विंशतिं जयेत् ॥१॥ इति हरिद्रादितैलम् ॥ अथ लेपनम् ॥ क्षीरमौदुम्बरं यत्नाद् बाकुचीं च प्रयोजयेत् । पिटिकासु समस्तासु लेपनं संप्रशान्तये ।१॥अथ रसयोगगुटिकादि । तत्रादौ हरिशङ्कररसः ॥सूताभ्रमामलजलैः सप्तवारं विभावयेत् । हरिशङ्करसंज्ञः स्याद्रसः सर्वप्रमेहनुत् ॥१॥ अथ मेघनादरसः ॥ सूतं कान्तं गन्धतीक्ष्णं ताप्यं व्योषं फलत्रिकम् । शिलाजतुशिलाङ्कोलबीजं रात्रिकपित्थकम् ॥ १ ॥ त्रिःसप्तकृत्वा भृङ्गाद्भिर्भावयेन्निष्कसंज्ञकः । मधुना मेघनादोऽयं सर्वमेहान्विनाशयेत् ॥ २ ॥ महानिम्बस्य बीजानि पेषयेत्तण्डुलाम्बुना । सघृतान्यचिराद्धन्युः पानान्मेहांश्चिरोत्थितान् ॥३॥ अथ मेहकुञ्जरकेसरी रसः ॥ रसगन्धायसाभ्राणि नागवङ्गौ सुवर्णकम् । वज्रकं मौक्तिकं सर्वमेकीकृत्य विचूर्णयेत् ॥ १ ॥ शतावरीरसेनैव गोलकं शुष्कमातपे । बुद्ध्वा शुष्कं तमुद्धृत्य शरावे सुदृढे क्षिपेत् ॥ २ ॥ सन्धिलेपं मृदा कुर्याद् गर्तायां गोमयाग्निना । पुटेद्यामचतुःसङ्ख्यमुद्धृत्य स्वाङ्गशीतलम् ॥३॥ श्लक्ष्णखल्वे विनिःक्षिप्य गोलं तं मर्दयेद् दृढम् । देवब्राह्मणपूजां च कृत्वा धृत्वाथ कूपिके ॥ ४ ॥ खादेद्वल्लद्वयं प्रातः शीतं चानुपिबेज्जलम् । अष्टादश प्रमेहांश्च जयेन्मासोपयोगतः ॥ ५ ॥ तुष्टिं तेजोबलं वर्णशुक्रवृद्धिं च दारुणम् । अग्नेर्बलं वितनुते मेहकुञ्जरकेसरी ॥ दिव्यं रसायनं श्रेष्ठं नात्र कार्या विचारणा ॥ ६ ॥ अथ मेहान्तको रसः ॥ मृताभ्रकान्तलोहानां नागवङ्गौ विशोधितौ । यथोत्तरं भागवृद्ध्या खल्वमध्ये विनिःक्षिपेत् ॥ १ ॥ तलपोटेन वाराह्या शतावर्या हिमाम्बुना । भावनात्र प्रकर्तव्या यामं यामं पृथक् पृथक् ॥२॥ चणमात्रां वटीं कृत्वा नवनीतेन सेवयेत् । प्रातरुत्थाय विधिना सर्वमेहकुलान्तकः ॥ ३ ॥ शाल्यन्नं सपटोलं च तण्डुलीयकवास्तुकम् । मत्स्याक्षीमुद्गयूषं च अपक्वकदलीफलम् ॥ ४ ॥ अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्राश्मरीप्रणुत् । कामलापाण्डुशोफांश्च अपस्मारक्षतक्षयान् ॥ रक्तकासार्शवनाशे स्यात्पञ्चलोहरसायनम् ॥ ५ ॥ अथ मेहारिरसः ॥ वङ्गभस्ममृतं सूतं तुल्यं क्षौद्रे विमर्दयेत् । द्विगुञ्जो लेहयेन्नित्यं हन्ति मेहांश्चिरन्तनान् ॥ ६ ॥ अथ चन्द्रकलावटी ॥ एला सकर्पूरशिला सधात्री जातीफलं केसरशाल्मली च । सूतेन्द्रवङ्गायसभस्म सर्वमेतत्समानं परिभावयेच्च ॥ १ ॥ गुडूचिकाशाल्मलिकाकषायैर्निष्कार्धमानं मधुना ततश्च । बद्ध्वा

---

१ (ख० ग० घ० ङ० च०) संभुग्योलूखले ।

वटीं चन्द्रकलेतिसञ्ज्ञां सर्वप्रमेहेषु नियोजयेत्ताम् ॥२॥ अथ वङ्गेश्वरः ॥ रसमेकं त्रयो वङ्गं वङ्गसाम्यं तु गन्धकम् । मर्दयेद्दिनमेकं तु कुमार्याः स्वरसे बुधः ॥ १ ॥ संस्थाप्य गोलकं भाण्डे रोधयेत्सुदृढं मुखम् । पाचयेद्वालुकायन्त्रे दिनमेकं दृढाग्निना ॥ २ ॥ स्वाङ्गशीतलमादाय संपूज्य द्विजदेवताः । पिप्पलीमधुना युक्तं सर्वमेहेषु योजयेत् ॥ ३ ॥ क्षीरान्नं योजयेत्पथ्यमम्लं लवणवर्जितम् । रसो वङ्गेश्वरो नाम सर्वमेहनिकृन्तनः ॥ ४ ॥ अथ महावङ्गेश्वरः ॥ वङ्गं कान्तं च गगनं हेमपुष्पं समं समम् । कुमारीरसतो भाव्यं सप्तवारं भिषग्वरैः ॥ १ ॥ एष वङ्गेश्वरो नाम प्रमेहान्विंशतिं जयेत् । मूत्रकृच्छ्रं सोमरोगं पाण्डुरोगं महाश्मरीम् ॥ रसायनमिदं श्रेष्ठं नागार्जुनविनिर्मितम् ॥२॥ इति महावङ्गेश्वरो रसः ॥ अथ वङ्गभस्मप्रयोगगुणाश्च ॥ वङ्गं शिलाजतुयुतं तु मतं प्रमेहे धातुक्षये दुर्बलनष्टशुक्रयोः । अभ्रेण युक्तं तु सुतमदं स्याज्जातीफलार्ककरहाटलवङ्गयुक्तम् ॥ १ ॥ शाल्मलीत्वग्रसोपेतं सक्षौद्ररजनीरजः । वङ्गभस्म हरेन्मेहान्पञ्चानन इव द्विपान् ॥२॥ गुडूचीसारमधुना वङ्गभस्म प्रमेहनुत् । नागभस्म तथैवापि सर्वमेहविनाशनम् ॥ ३ ॥ पयो गवां सखण्डकं त्रिकण्टवङ्गवल्लकं प्रमेहभल्लकं परं बुधा वदन्ति सादरम् ॥४॥ अथ वङ्गगुणाः ॥ तिक्तकं सलवणं च भेदकं पाण्डुजन्तुशमनं सुशीतलम् । मेहदाहशमनं च कान्तिदं वङ्गमाहुरिति मारुतापहम् ॥१॥ अथाभ्रकयोगः ॥ निश्चन्द्रमभ्रकं भस्म सवरारजनीरजः । मधुना लीढमचिरात् प्रमेहान्विनिवर्तयेत् ॥ १ ॥ अथ नागभस्मयोगः ॥ शुद्धस्य च मृतस्याहे रजो वल्लमितं लिहेत् । सुनिशामलकं क्षौद्रं सर्वमेहप्रशान्तये ॥ १ ॥ अथ गन्धकयोगः ॥ गन्धकं गुडसंयुक्तं कर्षं भुक्त्वा पयः पिबेत् । विंशतिस्तेन नश्यन्ति प्रमेहाः पिटिका अपि ॥ १ ॥ अथ शिलाजतुयोगः ॥ शिलाजतु रसं पीत्वा प्रातः क्षीरसितायुतम् । मुच्यते सर्वमेहेभ्यस्त्रिसप्तदिवसैर्नरः ॥१॥ अथ स्वर्णमाक्षिकभस्मयोगः ॥ माक्षिकं मधुना लीढं मेहं हरति सर्वथा । गुडूचीसत्त्वसंयुक्तं पित्तमेहे व्यपोहति ॥ १ ॥ अथ वसन्तकुसुमाकरः ॥ पृथग्द्वौ हाटकं चन्द्रं त्रयो वङ्गाहिकान्तकम् । चत्वारः सूतमभ्रं च प्रवालं मौक्तिकं तथा ॥ १ ॥ भावना गव्यदुग्धेक्षुवासाश्रीद्विजलैर्निशा । मोचकन्दरसैः सप्त क्रमाद्भाव्यं पृथक् पृथक् ॥ २ ॥ शतपत्ररसेनैव मालत्याः कुसुमैस्तथा । पश्चान्मृगमदैर्भाव्यः सुसिद्धो रसराड् भवेत् ॥ ३ ॥ कुसुमाकरविख्यातो वसन्तपदपूर्वकः । वल्लद्वयमितः सेव्यः सिताज्यमधुसंयुतः ॥ ४ ॥ वलीपलितहृन्मेध्यः कामदः सुखदः सदा । मेहघ्नः पुष्टिदः श्रेष्ठः परं वृष्यो रसायनम् ॥ ५ ॥ आयुर्वृद्धिकरं पुंसां प्रजाजननमुत्तमम् । क्षयकासतृषोन्मादश्वासरक्तविषार्तिजित् ॥ ६ ॥ सिताचन्दनसंयुक्तमम्लपित्तादिरोगजित् । शुक्रपाण्ड्वामयाञ्शूलान्मूत्राघाताश्मरीं हरेत् ॥७॥ योगवाहि त्विदं सेव्यं कान्तिश्रीबलवर्धनम् । सुसात्म्यमिष्टभोजी च रमयेत्प्रमदाशतम् ॥८॥ मदनं मदयेन्मदमुज्ज्वलयन् प्रमदानिवहानतिविह्वलयन् । सुरतैः सुखदैर्गतिविंच्यवनैर्भवसारजुषामयमेव

१ ( ख० ग० घ० ङ० ) विच्यवनैः ।

मृद्धत् ॥ ९ ॥ अथ जलजामृतरसः ॥ नवक्षीरं शिला धातुर्वङ्गं कुण्डलिसत्त्वकम् । मेहारिबीजसंयुक्तं विदारीजीवनीरसैः ॥ १ ॥ भावयेत्त्रिवारं तु सितोपलसमन्वितम् । जलजामृतविख्यातो रसोऽयं मेहकृच्छ्रनुत् ॥ २ ॥ प्रमेहपिटिकानां तु प्राक्कार्यं रक्तमोक्षणम् । पाटनं तु विपक्कानां तासां पाने प्रशस्यते ॥ ३ ॥ क्काथो व्रणघ्नोऽत्र वस्तिर्मूत्रैस्तीक्ष्णैर्विरेचनम् । व्रणप्रतिक्रिया सर्वा कार्यात्रापि भिषग्वरैः ॥ ४ ॥

## ॥ अथ पथ्यापथ्यम् ॥

श्यामाककोद्रवोद्दालगोधूमचणकाढकी । शालिमुद्गकुलित्थाश्च मेहिनां देहिनां हिताः ॥१॥ मेदोघ्ना बद्धमूत्राश्च समाः सर्वेषु धातुषु । यवास्तस्मात्प्रशस्यन्ते मेहेषु च विशेषः ॥ २ ॥ तिक्तशाकं पटोलानि जाङ्गलामिषजा रसाः । सैन्धवं मरिचं चैव मेहिनामाहरेद्भिषक् ॥ ३ ॥ सदासनं दिवा निद्रा नवान्नानि दधीनि च । मूत्रवेगं धूमपानं स्वेदं शोणितमोक्षणम् ॥ ४ ॥ सौवीरकं सुरा सूक्तं तैलं क्षारं घृतं गुडम् । आम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ॥ ५ ॥ इति पथ्यापथ्यम् ॥ इति प्रमेहचिकित्सा ॥

## ॥ अथ ग्रन्थान्तरे बहुमूत्रमेहनिदानम् ॥

कार्श्यं स्वेदोऽङ्गगन्धः करपदरसनानेत्रकर्णोपदेहः कासः शैथिल्यमङ्गेऽरुचिरपि पिटिकाः कण्ठताल्वोष्ठशोषः । दाहः शीतप्रियत्वं धवलिमतनुता श्रान्तता पीतमूत्रं मूत्रस्था मक्षिकाद्याश्चिरमपि बहुमूत्राख्यरोगे प्रवृद्धे ॥२॥ अथ वाग्भटः ॥ स्वेदोऽङ्गगन्धः शिथिलत्वमङ्गे शय्यासनस्वप्नसुखाभिलाषः । हृन्नेत्रजिह्वाश्रवणोपदेहो घनाङ्गता केशनखातिवृद्धिः ॥१॥ शीतप्रियत्वं गलतालुशोषो माधुर्यमास्ये करपाददाहः । भविष्यतो मेहगणस्य लिङ्गं मूत्रेऽभिधावन्ति पिपीलिकाश्च ॥ २ ॥ तृष्णाप्रमेहं मधुरं सपिच्छं मधूपमं स्याद्विविधो विकारः । सम्पूरणा वा कफसम्भवा स्यात्क्षीणेषु दोषेष्वनिलात्मको वा ॥ ३ ॥ सम्पूर्णरूपाः कफपित्तमेहाः क्रमेण ये वातकृताश्च मेहाः । साध्या न ते पित्तकृतास्तु याप्याः साध्यस्तु मेहो यदि नातिदुष्टः ॥ ४ ॥

## ॥ अथ तच्चिकित्सा ॥

त्रिफलावेणुपत्राब्दपाठामधुयुतैः कृतः । कुम्भयोनिरिवाम्भोधिं बहुमूत्रं तु शोषयेत् ॥ १ ॥ अथ तालकेश्वररसः ॥ मृतं सूतं मृतं वङ्गं मृतं लोहाभ्रकं समम् । मर्दयेन्मधुना सार्धं रसोऽयं तालकेश्वरः । माषैकं लेहयेत्क्षौद्रैर्बहुमूत्रापनुत्तये ॥ १ ॥ इति तालकेश्वरः ॥ अथानन्दभैरववटी ॥ विषोषणकणाटङ्कहिङ्गुलैः समचूर्णकः । आनन्दभैरवस्यास्य गुञ्जातीसारमेहनुत् ॥ १ ॥ इति बहुमूत्रमेहचिकित्सा ॥

## ॥ अथ मेदोरोगनिदानम् ॥

अव्यायामदिवास्वप्नश्लेष्मलाहारसेवनैः । मधुरोऽन्नरसः प्रायः स्नेहान्मेदो विवर्धते ॥ १ ॥ मेदसा वृतमार्गत्वात्कोष्ठे वायुर्विशेषतः । चरन्संधुक्षयत्यग्निमाहारं शोषयत्यपि

॥ २ ॥ अथ तस्यातिवृद्धिशक्तिमाह ॥ मेदसावृतमार्गत्वात्पुष्णन्त्यन्येन धातवः । मेदस्तु चीयते तस्मादशक्तः सर्वकर्मसु ॥ १ ॥ क्षुद्रश्वासतृषामोहस्वप्नक्रथनसादनैः । युक्तक्षुत्स्वेददौर्गन्ध्यैरल्पप्राणोऽल्पमैथुनः ॥ २ ॥ मेदस्तु सर्वभूतानामुदरेष्वेव तिष्ठति । अत एवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥ ३ ॥ तस्मात्स शीघ्रं जरयत्याहारं काङ्क्षयत्यपि । विकारांश्चाश्नुते घोरान्कांश्चित्कालव्यतिक्रमात् ॥ ४ ॥एतावुपद्रवकरौ विशेषादग्निमारुतौ । एतौ हि दहतः स्थूलं वनं दावानलो यथा ॥ ५ ॥ मेदस्यतीवसंवृद्धे सहसैवानिलादयः । विकारान्दारुणान्कृत्वा नाशयन्त्याशु जीवितम् ॥ ६ ॥ मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः । अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥ ७ ॥ स्थूले स्युर्दुस्तरा रोगा विसर्पाः सभगन्दराः । ज्वरातिसारमेहार्शःश्लीपदापचिकामलाः ॥ ८ ॥ शुष्का स्फिगुदरग्रीवाधमनीजालसन्ततः । त्वगस्थिशोषोऽतिकृशः स्थूलपर्वा नरः स्मृतः ॥ ९ ॥ इति मेदोरोगनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

क्षौद्रेण त्रिफलाक्काथः पीतो मेदोहरः स्मृतः । शीतीभूतं तथोष्णाम्बु मेदोहृत्क्षौद्रसंयुतम् ॥ १ ॥ उष्णं भक्तस्य मण्डं वा पिबेत्कृशतनुर्भवेत् । सचव्यजीरकव्योषहिङ्गुसौवर्चलानलाः ॥ २ ॥ मधुना सक्तवः पीता मेदोघ्ना वह्निदीपनाः । क्षारं वा तालपत्रस्य हिङ्गुयुक्तं पिबेन्नरः ॥ मेदोवृद्धिविनाशाय भक्तमण्डसमन्वितम् ॥ ३ ॥ हरीतकीलोध्रमरिष्टपत्रपूतत्वचो दाडिमवल्कलं च । एषोऽङ्गरागः कथितोऽङ्गनानां जम्ब्वाः कषायश्च नराधिपानाम् ॥४॥ फलत्रिकं त्रिकटुकं सतैललवणान्वितम् । षण्मासादुपयोगेन कफमेदोऽनिलापहम् ॥ ५ ॥ गुडूचीभद्रमुस्तानां प्रयोगस्त्रैफलस्तथा । तक्रारिष्टप्रयोगश्च प्रयोगो माक्षिकस्य च ॥ ६ ॥ अथ त्र्यूषणाद्यं लोहम् । त्र्यूषणं त्रिफला चव्यं चित्रकं बिडमौद्भिदम् । बाकूची सैन्धवं चैव सौवर्चलमयोरजः ॥ ॥ १ ॥ माषमात्रमतश्चूर्णं लिहेदाज्यमधुप्लुतम् । अतिस्थौल्यमिदं चूर्णं निहन्त्यग्निविवर्धनम् ॥ २ ॥ मेदोघ्नं मेहकुष्ठघ्नं श्लेष्मव्याधिनिबर्हणम् । नाहारे नियमश्चात्र विहारे वा विधीयते । त्र्यूषणाद्यमिदं चूर्णं रसायनमनुत्तमम् ॥ ३ ॥ अथ नवकगुग्गुलुः ॥ व्योषाग्निमुस्तात्रिफलाविडङ्गैर्गुग्गुलुः समम् । खादन्सर्वाञ्जयेद् व्याधीन्मेदश्श्लेष्मामवातजान् ॥ १ ॥ अथ लेपोद्वर्तने ॥ हितो मोचरसो युक्तश्चूर्णैरुदधिफेनजैः । प्रलेपेन निहन्त्याशु देहदौर्गन्ध्यमुत्कटम् ॥१॥ वासारसदलालेपाच्छङ्खचूर्णावचूर्णितात् । बिल्वपत्ररसो वापि गात्रदौर्गन्ध्यनाशनः ॥ २ ॥ हरीतकीं तु संपिष्य गात्रमुद्वर्तयेन्नरः । पश्चात्स्नानं प्रकुर्वीत देहस्वेदप्रशान्तये ॥ ३ ॥ चन्द्रांशुशीतलं लोध्रं शिरीषोशीरकेसरैः । उद्वर्तनं भवेद् ग्रीष्मे स्वेदोद्गमनिवारणम् ॥ ४ ॥ बब्बूलस्य दलैः सम्यग् वारिणा परिपेषितैः । गात्रमुद्वर्तयेत्पश्चाद्धरीतक्या सुपिष्टया ॥५॥ भूय उद्वर्तनं कृत्वा पश्चात्स्नानं समाचरेत् । प्रस्वेदान्मुच्यते क्षिप्रं ततस्त्वेवं समाचरेत् ॥ ६ ॥ जम्बूदलार्जुनतरुप्रसवैः सकुष्ठैरुद्वर्तनं प्रकुरुते प्रतिवासरं यः । प्रस्वेदबिन्दुकणिकानि-

करानुषङ्गाद्दुर्गन्धिता वपुषि तस्य पदं न धत्ते ॥ ७ ॥ शिरीषलामज्जकहेमलोध्रै-स्त्वग्दोषसंस्वेदहरः प्रघर्षः । प्रियङ्गुलोध्राभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदिष्टः ॥ ८ ॥ अथ वृन्दात् त्रिफलाद्यं तैलम् ॥ त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः । निम्बारग्वधषड्ग्रन्थासप्तपर्णानिशाद्वयैः ॥ १ ॥ गुडूचीन्द्रयवाकृष्णाकुष्ठसर्षपनागरैः । तैलमेभिः समं पक्वं सुरसादि रसप्लुतम् ॥२॥ पानाभ्यञ्जनगण्डूषनस्यवस्तिषु यो-जितम् । स्थूलतालस्यकण्ड्वादि जयेत्कफकृतान् गदान् ॥ ३ ॥ अथ महासुगन्धितै-लम् ॥ चन्दनं कुङ्कुमोशीरं प्रियङ्गुसटिरोचनम् । तुरुष्कागुरुकस्तूरीकर्पूरौ जातिपत्रिका ॥ ॥ १ ॥ जातीकङ्कोलपूगानां लवङ्गस्य फलानि च । नलिकानलदं कुष्ठं हरेणुतगरं प्लवम् ॥ २ ॥ नखं व्याघ्रनखं स्पृक्का बालो दमनकं तथा । प्रपौण्डरीकं कर्चूरं स-मांशैः शाणमात्रकैः ॥ ३ ॥ महासुगन्ध इत्येतत्तैलप्रस्थेन साधयेत् । प्रस्वेदमलदौर्ग-न्ध्यकण्डूकुष्ठहरं परम् ॥४॥ अनेनाभ्यक्तगात्रस्तु वृद्धः सप्ततिकोऽपि वा । युवा भवति शुक्राढ्यः स्त्रीणामत्यन्तवल्लभः ॥ ५ ॥ सुभगो दर्शनीयश्च गच्छेद्वै प्रमदाशतम् । वन्ध्यापि लभते गर्भं षण्ढोऽपि पुरुषायते ॥ अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ॥ ६ ॥ अथ रसाः ॥ तत्रादौ रसभस्मयोगः ॥ रसभस्म वल्लमात्रं लीढ्वा मधुना पिबेदनु क्षौद्रम् । कोष्णाम्बुना समेतं स्थौल्यं मेदःकृतं जयति ॥ १ ॥ अथ त्रिमू-र्तिरसः ॥ सूतगन्धमयोभस्म समं संमेल्य भावयेत् । निर्गुण्डीपत्रतोयेन मुसलीकन्द-वारिणा ॥ १ ॥ ततः सिद्धममुं माषमात्रं रसमनुत्तमम् । लोध्रक्षौद्रेण चाश्नीयाच्चूर्ण-मेषां पिचून्मितम् ॥ २ ॥ षट्कटु त्रिफला पञ्चलवणा वल्गुजस्य तत् । मेदःशो-थाग्निमान्द्यामवातश्लेष्मगदप्रणुत् ॥ ३ ॥ अथ वडवाग्निरसः ॥ शुद्धसूतं मृतं ताम्रं तालं बोलं समं समम् । अर्कक्षीरैर्दिनं मर्द्यं क्षौद्रे लेह्यं द्विगुञ्जकम् ॥ १ ॥ वडवाग्नि-रसो नाम स्थौल्यं तुन्दं नियच्छति । पलं क्षौद्रं पलं तोयमनुपानं पिबेत्सदा ॥ २ ॥ इति वडवाग्निरसः ॥ अथ पथ्यापथ्यम् ॥ पुराणशालयो मुद्गकुलत्थोद्दालकोद्रवाः । लेखना बस्तयश्चैव सेव्या मेदस्विना सदा ॥ १ ॥ श्रमचिन्ताव्यवायाध्वक्षौद्रजाग-रणप्रियः । हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः ॥ २ ॥ अस्वप्नं च व्यवायं च व्यायामं चिन्तनानि च । स्थौल्यमिच्छन्परित्यक्तुं क्रमेणैनं प्रवर्धयेत् ॥ ३ ॥ इति पथ्यापथ्यम् ॥ इति मेदोरोगचिकित्सा ॥

## ॥ अथोदरनिदानप्रारम्भः ॥

रोगाः सर्वेऽपि मन्दाग्नौ सुतरामुदराणि तु । अजीर्णान्मलिनैश्चान्नैर्जायन्ते मल-सञ्चयात् ॥१॥ तन्त्रान्तरे ॥ अतिसञ्चितदोषाणां पापकर्म च कुर्वताम् । उदराण्युप-जायन्ते मन्दाग्नीनां विशेषतः ॥ १ ॥ अथ तेषां प्राप्तिमाह ॥ रुद्ध्वा स्वेदाम्बुवाही-नि दोषाः स्रोतांसि सञ्चिताः । प्राणाग्न्यपानान्सन्दूष्य जनयन्त्युदरं नृणाम् ॥ १ ॥ सुश्रुते ॥ तत्पूर्वरूपं बलवर्णकाङ्क्षावलीविनाशो जठरेऽपि राज्यः । जीर्णापरिज्ञानवि-दाहवत्यां वस्तौ रुजः पादगतश्च शोफः ॥ २ ॥ अथ सर्वेषां सामान्यलक्षणमाह ॥

आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता । शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः ॥ १ ॥ दाहस्तन्द्रा च सर्वेषु जठरेषु भवन्ति हि । गुर्वशीतं शिराजालैः सदा गुडगुडायते ॥ २ ॥ पृथग् दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः । संभवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ॥ ३ ॥ अथ वातोदरलक्षणमाह ॥ तत्र वातोदरे शोफः पाणिपन्नाभिकुक्षिषु । कुक्षिपार्श्वोदरकटीपृष्ठरुक् पर्वभेदनम् ॥ १ ॥ शुष्ककासोऽङ्गमर्दोऽधो गुरुता मलसंग्रहः । श्यावारुणत्वगादित्वमकस्माद्वृद्धिह्रासवत् ॥ २ ॥ सतोदभेदमुदरं तनुकृष्णशिराततम् । आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ॥ वायुश्चात्र सरुक् शब्दो विचरेत्सर्वतो गतिः ॥ ३ ॥ अथ पैत्तिकमाह ॥ पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता । भ्रमोऽतिसारः पीतत्वं त्वगादावुदरं हरित् ॥ १ ॥ पीतताम्रशिरानद्धं सस्वेदं सोष्म दह्यते । धूमायते मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ २ ॥ अथ श्लैष्मिकमाह ॥ श्लेष्मोदरेऽङ्गसदनं स्वापः श्वयथुगौरवम् ॥ निद्रोत्क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता ॥१॥ उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत् । चिराभिवृद्धिकठिनं शीतस्पर्शं गुरुस्थिरम् ॥ २ ॥ अथ सान्निपातिकमाह ॥ स्त्रियोऽन्नपानं नखरोममूत्रविडार्तवैर्युक्तमसाधुवृत्ताः । यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा ॥ १ ॥ तेनाशु रक्तं कुपिताश्च दोषाः कुर्युः सुघोरं जठरं त्रिदोषम्[1] ॥ २ ॥ तच्छीतवातादपदुर्दिनेषु[2] विशेषतः कुप्यति दह्यते च । स चातुरो मूर्च्छति संप्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च ॥ ३ ॥ दूष्योदरं कीर्तितमेतदेव प्लीहोदरं कीर्तयतो निबोध । विदाह्यभिष्यन्दि रतस्य जन्तोः प्रदुष्टमत्यर्थमसृक्कफश्च ॥ ४ ॥ प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ प्लीहोत्थमेतज्जठरं वदन्ति । तद्वामपार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र ॥ ५ ॥ मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽपि पाण्डुः । सव्यान्यपार्श्वे यकृति प्रदुष्टे ज्ञेयं यकृद्दाल्युदरं तदेव ॥ ६ ॥ प्लीहा निर्वेदनः श्वेतकठिनः स्थूल एव च । महापरिग्रहः शीतश्लेष्मसंभव इष्यते ॥ ७ ॥ सज्वरः सपिपासश्च स्वेदनस्तीव्रवेदनः । पीतगात्रो विशेषेण प्लीहा पैत्तिक उच्यते ॥ ८ ॥ नित्यमानद्धकोष्ठश्च नित्योदावर्तपीडितः । वेदनाभिः परीतश्च प्लीहा वातिक उच्यते ॥ ९ ॥ क्लमोऽतिदाहः संमोहो वैवर्ण्यं गात्रगौरवम् । रक्तोदरम् भ्रमो मूर्च्छा ज्ञेयं रक्तजलक्षणम् ॥ त्रयाणामपि रूपाणि प्लीन्ह्यसाध्ये भवन्ति हि ॥ १० ॥ अथ तत्र दोषसंबन्धमाह ॥ उदावर्तरुजानाहैर्मोहतृड्दहनज्वरैः । गौरवारुचिकाठिन्यैर्विन्द्यात्तत्र मलान्क्रमात् ॥ १ ॥ अथ बद्धगुदमाह ॥ यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा पिहितं यथावत् । सञ्चीयते यस्य मलः सदोषः शनैः शनैः सङ्करवच्च नाड्याम् ॥ १ ॥ निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम् । हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति ॥ २ ॥ एतद्बद्धोदरं तेन स्युर्दाहज्वरतृड्भ्रमाः । कासश्वासोरुसदनं रुग्हृन्ना-

---

१ ( च० ) त्रिलिङ्गम् । २ ( च० ) वाते भृशदुर्दिने वा ।

भिशिरस्सु च ॥ ३ ॥ मलसङ्गोऽरुचिश्छर्दिरुदरं मूढमारुतम् । स्थिरनीलारुणशिरारोमराजिविराजितम् ॥ नाभेरुपरि च प्रायो गोपुच्छाकृति जायते ॥ ४ ॥ ॥ अथ दक्षोदरमाह ॥ शल्यं तथान्नोपहितं यदन्त्रं भुक्तं भिनत्त्यागतमन्यथा वा । तस्मात्स्रुतोऽन्त्रात्सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः ॥१॥ नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यतेऽतीव विदाल्यते च । एतत्परिस्राव्युदरं प्रदिष्टं दकोदरं कीर्तयतो निबोध ॥ २ ॥ अथ दकोदरमाह ॥ यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि ॥ १ ॥ स्नेहोपलिप्तेष्वथ वापि तेषु दकोदरं पूर्ववदभ्युपैति । स्निग्धं महत्तत्परिवृत्तनाभिसमाततं पूर्णमिवाम्बुना च ॥ २ ॥ यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत् ॥ ३ ॥ अथ साध्यासाध्यत्वमाह ॥ जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् । बलिनस्तदजाताम्बु यत्नात्साध्यं नवोत्थितम् ॥ १ ॥ अशोथमरुणाभासं सशब्दं नातिभारिकम् । सदा गुडगुडायुक्तं शिराजालगवाक्षितम् ॥ २ ॥ नाभिं विष्टभ्य वायुस्तु वेगं कृत्वा प्रणश्यति । हृद्वङ्क्षणकटीनाभिगुदं प्रत्येकशूलिनः ॥३॥ कर्कशं सृजते वातं नातिमन्दे च पावके । लोलस्यापि रसे वाल्पे मूत्रेऽल्पे संहते विशि ॥ ४ ॥ अजातोदकमित्येतैर्युक्तं विज्ञाय लक्षणैः । कुक्षेर्वृद्धिश्चातिमात्रं शिरान्तर्धानमेव च । दकपूर्णदृतिक्षोभस्पर्शं जातोदकं भवेत् ॥ ५ ॥ अथ विशेषेण साध्यत्वमाह ॥ पक्षाद्बद्धगुदं तूर्ध्वं सर्वं जातोदकं तथा । प्रायो भवत्यभावाय च्छिद्रान्त्रमुदरं नृणाम् ॥ १ ॥ अथ पुनरप्यसाध्यत्वमाह ॥ शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् । बलशोणितमांसाग्निपरिक्षीणं च वर्जयेत् ॥ १ ॥ पार्श्वभङ्गान्नविद्वेषशोफातीसारपीडितम् । विरक्तं चाप्युदरिणं पूर्यमाणं विवर्जयेत् ॥ २ ॥ इत्युदरनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

अथ तत्राष्टावुदराणि ॥ पृथग् दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥ १ ॥ तत्र । पृथग्दोषैर्वातिपित्तकफैः सन्निपातेनैकम् । प्लीहोदरं बद्धोदरं क्षतोदरं जलोदरमिति संज्ञा भवन्ति । तेष्वसाध्यं बद्धगुदं परिस्रावि च । षडवशिष्टानि कृच्छ्रसाध्यानि । सर्वाण्येव च प्रत्याख्यायोपक्रमेत् । तेष्वाद्यश्चतुर्वर्गो भेषजसाध्यः । उत्तरः शस्त्रसाध्यः । कालप्रकर्षात्सर्वाण्येव शस्त्रसाध्यानि भवन्ति । वर्जयितव्यानि इति सुश्रुतात् ॥ अथ वातोदरचिकित्सामाह ॥ उपक्रमेद्भिषग्दोषबलकालविशेषवित् । स्थिरादिसर्पिषः पानं स्नेहं स्वेदं विरेचनम् ॥ १ ॥ वेष्टनं वाससा ग्लानौ शाल्वेलं चोपनाहनम्[2] । पेया यूषरसान्नं च योज्यं वातोदरे क्रमात् ॥ २ ॥ अथैरण्डतैलादियोगः ॥ एरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तं त्रिफलारजो वा । निहन्ति वातोदरशोथशूलं क्राथः समूत्रो दशमूलजश्च ॥ १ ॥ अथ दशमूलादियोगः ॥ दशमूलकषायेण क्षीरवृत्तिः शिलाजतु ।

---

१ ( च० ) परिवृत्य । २ ( च० ) शाल्वणेनोपनाहनम् ।

सद्यो वातोदरी क्षीरमौष्ट्रमाजं च केवलम् ॥ १ ॥ अथ कुष्ठादिचूर्णम् ॥ कुष्ठं दन्ती यवक्षारं व्योषं त्रिलवणं वचाम् । अजाजीं दीप्यकं हिङ्गु स्वर्जिकां चव्यचित्रके ॥ शुण्ठीं चोष्णाम्भसा पीत्वा वातोदररुजापहाम् ॥१॥ अथ वृन्दात् सामुद्राद्यं चूर्णम् ॥ सामुद्रसौवर्चलसैन्धवानां क्षारो यवानामजमोदभागः । सपिप्पलीचित्रकशृङ्गबेरं हिङ्गुं विडङ्गं च समानि कुर्यात् ॥ १ ॥ एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पूर्वं कवलान्प्रशस्तम् । वातोदरं गुल्ममजीर्णभुक्तं वातप्रकोपं ग्रहणीं च दुष्टाम् ॥ २ ॥ अर्शांसि दुष्टानि च पाण्डुरोगं भगन्दरं चापि निहन्ति सद्यः ॥३॥ अथ दशमूलाद्यं घृतम् ॥ दशमूलीकषायेण रास्नानागरदारुभिः । पुनर्नवाभ्यां च घृतं सिद्धं वातोदरापहम् ॥१॥ इति वातोदरम् ॥ अथ पित्तोदरम् ॥ पित्तोदरे च बलिनं पूर्वमेव विरेचयेत् । पयसा त्रिवृता कल्केनोरुबूकशृतेन वा ॥ १ ॥ सातलात्रायमाणाभ्यां शृतेनारग्वधेन च । घृतं पित्तोदरे पेयं मधुरौषधसाधितम् ॥ २ ॥ स्यात्त्रिवृत्त्रिफलासिद्धं सर्पिष्पानं विशुद्धये । पृश्निपर्णीबलाव्याघ्रीलाक्षानागरसाधितम् ॥ क्षीरं पित्तोदरं हन्ति जठरं कतिभिर्दिनैः ॥ ३ ॥ इति पित्तोदरम् ॥ अथ श्लेष्मोदरम् ॥ श्लेष्मोदरिणं तु पिप्पल्यादिसिद्धेन सर्पिषा स्नेहं पीत्वा स्नुहिक्षीरानुलोम्य त्रिकटुकमूत्रतैलमुस्तादिक्वाथेनास्थापयेदनुवासयवकिट्टसर्षपामलकबीजैश्चोपनाहयेदुदरम् । भोजयेच्चैनं त्रिकटुकप्रगाढेन कुलित्थयूषेण पयसा वा स्वेदयेच्चाभीक्ष्णम् ॥ व्योषयुक्तं कुलित्थाम्बुपयो वा भोजने हितम् । गोमूत्रारिष्टपानैश्च चूर्णायस्कृतिभिस्तथा ॥ सक्षीरतैलपानैश्च शमयेत्तु कफोदरम् ॥ १ ॥ इति श्लेष्मोदरम् ॥ अथ दूष्योदरम् । त्रिलिङ्गमुदरं च ॥ सन्निपातोदरे कार्य एष एव क्रियाविधिः । हरीतक्यभयाकल्कभावितं मूत्रमम्बुना ॥ १ ॥ पीतं सर्वोदरप्लीहमेहार्शःकृमिगुल्मनुत् । सप्तलाशङ्खिनीसिद्धं घृतं चात्रविशोधनम् ॥ २ ॥ दन्तीद्रवन्तीफलजं तैलं दूष्योदरी पिबेत् । नागरत्रिफलाप्रस्थं घृतं तैलं तथाढकम् ॥ २ ॥ मस्तुना साधयित्वा तु पिबेत्सर्वोदरापहम् । कफमारुतसंभूतं गुल्मं चैव प्रशाम्यति ॥ ३ ॥ इति दूष्योदरम् । त्रिलिङ्गमुदरं च ॥ अथ प्लीहोदरयकृदुदरयोश्चिकित्सा ॥ स्नेहस्वेदविकारादिविधेयं प्लीहरोगिणाम् । वामबाहौ च मोक्तव्या कूर्पराभ्यन्तरे शिरा ॥ १ ॥ विध्येत्प्लीहविनाशाय यकृन्नाशाय दक्षिणे । मणिबन्धे समुत्पन्नवाममङ्गुष्ठमीरितम् ॥ दहेच्छिरां शरेणाशु वैद्यः प्लीहप्रशान्तये ॥ २ ॥ अथ शाल्मलीपुष्पक्वाथः ॥ सुस्विन्नं शाल्मलीपुष्पं निशापर्युषितं नरः । राजिकाचूर्णसंयुक्तं दद्यात्प्लीहोपशान्तये ॥ १ ॥ अथ शरपुङ्खामूलकल्कः ॥ शरपुङ्खामूलकल्कः पीतस्तक्रेण नाशयत्यचिरात् । बहुतरकालसमुत्थं प्लीहानं रूढमवगाढम् ॥ १ ॥ अथ लवणादितक्रम् ॥ लवणं रजनी राजी प्रत्येकं पलपञ्चकम् । चूर्णितं निक्षिपेद्भाण्डे शततक्रपलान्विते ॥१॥ त्रिदिनं मुद्रितं रक्षेत्पश्चात्पञ्चपलं तदा । प्लीहानं नाशयेत्पीत्वा त्रिःसप्ताहं न संशयः ॥ २ ॥ अथ शङ्खनाभिचूर्णम् ॥ सुपक्वजम्बीररसेन शङ्खनाभीरजः पीतमवश्यमेव । कर्षप्रमाणं शमयेदवश्यं प्लीहामयं कूर्मसमा-

नमाशु ॥ १ ॥ अथ यवान्यादिचूर्णम् ॥ यवानिकाचित्रकयावशूकषड्ग्रन्थदन्तीमगधोद्भवानाम्। प्लीहानमेतद्धि निहन्ति चूर्णमुष्णाम्बुना मस्तुसुरासवैर्वा ॥ १ ॥ अथ कुष्ठादिचूर्णम् ॥ कुष्ठं वचा शृङ्गबेरं चित्रकं कौटजं फलम्। पाठा चैवाजमोदा च पिप्पल्यः समचूर्णिताः ॥ १ ॥ ततो बिडालपदकं पिबेदुष्णेन वारिणा। प्लीहोदरमुदावर्तं सर्वमेतेन शाम्यति ॥ २ ॥ अथ लघुहिङ्ग्वादिचूर्णम् ॥ हिङ्गुत्रिकटुकं कुष्ठं यवक्षारोऽथ सैन्धवम्। मातुलुङ्गरसेनैव प्लीहशूलहरं परम् ॥ १ ॥ वायुः प्लीहानमुद्धूय कुपितो यस्य तिष्ठति। शूलैः परितुदन्पार्श्वे प्लीहा तस्य प्रवर्धते ॥२॥ अथ सिन्ध्वादिचूर्णम्। सिन्धुमगधाग्निचूर्णं शिग्रुशिफाजाजिकासमं पीतम्। प्रबलमपि योगराजः प्लीहानं नाशयत्याशु ॥ १ ॥ अथ विडङ्गादिचूर्णम् ॥ विडङ्गानि यवानी च चित्रकं चेति तत्समम्। द्विगुणं देवदारुं च नागरं सपुनर्नवम् ॥१॥ त्रिवृद्भागाश्च चत्वारस्तत्सर्वं कल्कपेषितम्। क्षीरेणोष्णेन पातव्यं श्रेष्ठं प्लीहविनाशनम् ॥ २ ॥ अथ चैतानि चूर्णानि गवां मूत्रेण पाययेत्। उदरीभूतमप्येवं प्लीहानं संप्रणाशयेत् ॥ ३ ॥ अथ वज्रक्षारः ॥ सौवर्चलं यवक्षारं सामुद्रं काचसैन्धवम्। टङ्कणं स्वर्जिकाक्षारं तुल्यमेकत्र चूर्णयेत् ॥ १ ॥ अर्कदुग्धैः स्नुहीदुग्धैर्भावयेदातपे त्र्यहम्। ऊर्ध्वाधस्थैः क्रमात्तस्य तत्तुल्यैरर्कपल्लवैः ॥ २ ॥ भाण्डे संस्थाप्य मृल्लिप्ते रुद्ध्वा गजपुटे पचेत्। स्वाङ्गशीतं तु संचूर्ण्य चूर्णमेषां तु मेलयेत् ॥३॥ त्र्यूषणं च विडङ्गं च राजिकां त्रिफलामपि। चव्यं च हिङ्गुसंभृष्टं तक्रेणाद्याद्यथाबलम् ॥ ४ ॥ वज्रक्षाराभिधं चूर्णमुदराणि विनाशयेत्। शोथं गुल्मं तथाष्ठीलां मन्दाग्निमरुचिं तथा ॥ प्लीहानं यकृदाल्याख्यमुदरं च विशेषतः ॥ ५ ॥ अथ वृन्दाच्छुक्तिकाक्षारादियोगः। पातव्यो युक्तितः क्षारः क्षीरेणोदधिशुक्तिजः। पयसा वा प्रयोक्तव्याः पिप्पल्यः प्लीहशान्तये ॥ १ ॥ अथ क्षारादियोगः ॥ क्षारं वा बिडकृष्णाभ्यां पूतीकस्याम्बु निसृतम्। यकृत्प्लीहप्रशान्त्यर्थं पिबेत्प्रातर्यथाबलम् ॥१॥ अथ सौभाञ्जनादियोगः ॥ सौभाञ्जनकनिर्यूहं सैन्धवाग्निकणान्वितम्। पलाशक्षारयुक्तं वा यवक्षारं प्रयोजयेत् ॥१॥ अथ लशुनादियोगः ॥ लशुनं पिप्पलीमूलमभयां चैव भक्षयेत्। पिबेद् गोमूत्रगण्डूषं प्लीहरोगविमुक्तये ॥ १ ॥ अथ रोहीतकादिकल्कम् ॥ रोहीतकाभयाकल्कं भावितं मूत्रमम्बुना। पीतं सर्वोदरप्लीहमेहार्शःकृमिगुल्मनुत् ॥ १ ॥ अथ द्रवन्तीनागवटी ॥ तिलैरण्डद्रवन्तीनां क्षारो भल्लातकं कणा। एषां भागं समं कृत्वा तत्तुल्यं तु गुडं मतम् ॥१॥ खादेदग्निबलं मत्वा पावकस्य विवृद्धये। जयेत्प्लीहानमत्युग्रं यकृद्गुल्मं तथैव च ॥ २॥ अथ शिग्रुक्वाथः ॥ शोफं प्लीहोदरं हन्ति पिप्पलीमरिचान्वितः। आम्लवेतससंयुक्तः शिग्रुक्वाथः ससैन्धवः ॥१॥ अथ क्षारभावितपिप्पली ॥ पलाशक्षारतोयेन पिप्पली परिभाविता। गुल्मप्लीहार्तिशमनी वह्निदीप्तिकरी मता ॥ १ ॥ अथाग्निमुखं लवणम् ॥ चित्रकं त्रिवृता दन्तीत्रिफलारुचकैः समैः। यावन्त्येतानि चूर्णानि तावन्मात्रं तु सैन्धवम् ॥ १ ॥ भावयित्वा स्नुहीक्षीरैः स्नुक्काण्डे प्रक्षिपेत्ततः। मृत्पङ्केनानुलिप्याथ प्रक्षिपेज्जातवेदसि ॥ २ ॥ सुदग्धं च ततो ज्ञात्वा

शनैर्वैद्यः समुद्धरेत् । तक्रेण पीतं तच्चूर्णं यकृत्प्लीहोदरापहम् ॥ एतदग्निमुखं नाम्ना लवणं वह्निवर्धनम् ॥ ३ ॥ अथ चित्रकाद्यं घृतम् ॥ चित्रकस्य तुलाक्काथे घृतप्रस्थं विपाचयेत् । आरनालं तु द्विगुणं दधिमण्डं चतुर्गुणम् ॥ १ ॥ पञ्चकोलकतालीसं क्षारौ च पटुपञ्चकम् । यवान्यौ द्वे च जरणे मरीचं चाक्षसंमितम् ॥ २ ॥ एतैर्युक्त्या घृतं सिद्धं मात्रया च पिबेत्प्रगे । प्लीहशोफोदराशोंघ्नं विशेषादग्निदीपनम् ॥ ३ ॥ अथ महारोहीतकं घृतम् ॥ रोहीतकात्पलशतं संक्षुद्य बदराढकम् । साधयित्वा जलद्रोणे चतुर्भागावशेषिते ॥ १ ॥ घृतप्रस्थं समावाप्य च्छागक्षीरं चतुर्गुणम् । तस्मिन्द्रव्याणि सर्वाणि प्रदद्यात्कर्षिकाणि च ॥ २ ॥ व्योषं फलत्रिकं हिङ्गु यवानीं तुम्बरुं बिडम् । बिडङ्गं चित्रकं चैव हपुषा चविकं वचा ॥ ३ ॥ अजाजीकृष्णलवणं दाडिमं देवदारु च । पुनर्नवा विशाला च यवक्षारं सपौष्करम् ॥ ४ ॥ एतैर्घृतं विपक्कं तु विदध्याद्दृढभाजने । पाययेच्च पलं मात्रां रसयूषपयोऽम्बुभिः ॥ ५ ॥ यकृत्प्लीहोदरं शूलमग्निमान्द्यं च नाशयेत् । कुक्षिशूलं पार्श्वशूलं कटिशूलमरोचकम् ॥ ६ ॥ विबन्धशूलं शमयेत्पाण्डुरोगं सकामलम् । छर्द्यतीसारशमनं तन्द्राज्वरनिवारणम् ॥ महारोहीतकं नाम्ना प्लीहघ्नं तु विशेषतः ॥ ७ ॥ इति महारोहीतकं घृतम् ॥ इति प्लीहचिकित्सा ॥ अथ यकृदुरचिकित्सा ॥ प्लीहोद्दिष्टाः क्रियाः सर्वा यकृतः संप्रकल्पयेत् । कार्यं च दक्षिणे बाहौ तत्र शोणितमोक्षणम् ॥१॥ पिप्पलीकल्कसंयुक्तं घृतं क्षीरं चतुर्गुणम् । पक्त्वा पिबेद्यथावह्नि यकृदाल्युदरापहम् ॥२॥ इति यकृदुरचिकित्सा ॥ अथ बद्धगुदप्रतीकारः ॥ स्विन्ने बद्धोदरे योज्यो बस्तिस्तीक्ष्णैस्तु भेषजैः । सतैललवणैश्चापि निरूहश्चानुवासनम् ॥ १ ॥ उदावर्तहरं सर्वं प्रकर्तव्यं चिकित्सितम् । वर्तयो विविधाश्चात्र पायौ शस्ताः प्रकीर्तिताः ॥ २ ॥ तीक्ष्णैर्विरेचनं चात्र शस्यते तु विशेषतः । वातहन्ता विधिः सर्वो विधातव्यो विजानता ॥ ३ ॥ इति बद्धगुदोदरम् ॥ अथ क्षतोदरमुदकोदरं च ॥ छिद्रान्त्रबद्धसंज्ञेषु जठरेषु प्रयोगवित् । लब्धानुज्ञो भिषक् कुर्यात्पाटनं व्यधनक्रियाम् ॥ १ ॥ तथा जातोदकं सर्वमुदरं व्यधयेद्भिषक् । ज्ञातींश्च सुहृदो दारान्ब्राह्मणान्नृपतिं गुरुम् ॥ २ ॥ अनुज्ञाप्य भिषग्वर्यो विदध्यात्संशयं ध्रुवम् । सुवेष्टितं त्वधो नाभेर्वामतश्चतुरङ्गुलात् ॥ ३ ॥ अङ्गुल्युदरमात्रं तु व्रीहिवक्त्रेण भेदयेत् । नाडीमुभयतोद्वारां संयोज्यापहरेज्जलम् ॥ ४ ॥ न चैकस्मिन्दिने सर्वं दोषं त्वपहरेत्तथा । कासश्वासज्वरतृष्णा गात्रभङ्गश्च वेपथुः ॥ ५ ॥ अतिसारश्च सुतरां पूर्यते जठरे ततः । तृतीयपञ्चमाद्येषु दिवसेष्वल्पशः पुनः ॥ ६ ॥ स्रावयेदुदकं तैललवणाभ्यां दहेद्व्रणम् । बध्नीयाद्विषतो दोषे रक्तं प्राक् प्रतिपूर्य च ॥ ७ ॥ संवेष्टयेद्गाढतरं कौशेयादिकचर्मणा । जलोदरेऽम्बु विस्राव्यं जातं जातं विरेचनैः ॥८॥ विरिक्तजठराध्मानं स्नेहाद्यैर्बस्तिभिर्जयेत् । निशृतां लङ्घितां पेयामस्नेहलवणां पिबेत् ॥ ९ ॥ अतः परं तु षण्मासात्क्षीरवर्ती भवेन्नरः । त्रीन् मासान्पयसा पेयं पिबेत् त्रींश्चापि योजयेत् ॥ १० ॥

सकोरदूषश्यामाकपयसा लवणं लघु । नरः संवत्सरेणैव जयेदाशु जलोदरम् ॥११॥
इति क्षतोदरोदकोदरप्रतीकारः ॥

## ॥ अथ सर्वोदरेषु सामान्यविधिः ॥

उदराणां मलाढ्यत्वाद् बहुशः शोधनं हितम् । क्षीरेणैरण्डजं तैलं पिबेन्मूत्रेण वासकृत् ॥ जोतिष्मत्याः पिबेत्तैलं पयसा वा दिने दिने ॥१॥ इति शोधनं वृन्दात् ॥ मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ॥ १ ॥ अथ देवदार्व्यादिलेपः ॥ देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः । साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं शनैः ॥ १ ॥ ॥ अथ रोहीतकादियोगः ॥ रोहीतकाभयाशुण्ठीः पिबेन्मूत्रेण शक्तितः । सर्वोदरहरं प्लीहमेहार्शःकृमिगुल्मनुत् ॥ १ ॥ अथ विशालादिः ॥ विशालाशङ्खिनीदन्तीत्रिवृत्रिफलकात्रयम् । निशाविडङ्गं कम्पिल्लं मूत्रेणोदरवान् पिबेत् ॥ १ ॥ अथ पय आदि ॥ पयो वा चव्यदन्त्यग्निविडङ्गव्योषकल्कितम् । पेयं वा शृङ्गबेराम्बु कषायो दारुवह्निजः । चव्यविश्वसमुत्थो वा पेयो जठरशान्तये ॥ १ ॥ अथ सुश्रुतात् ॥ हरीतकीसहस्रं वा गोमूत्रेण पयोऽनुपः । सहस्रं पिप्पलीनां वा स्नुक्क्षीरेण सुभावितम् ॥ १ ॥ पिप्पलीवर्धमानं वा क्षीराशी वा शिलाजतु । तद्वद्वा गुग्गुलुं क्षीरं तुल्यार्द्रकरसं तथा । चित्रकामरदारुभ्यां कल्कं क्षीरेण वा पिबेत् ॥ २ ॥ अथ पिप्पलीवर्धमानम् ॥ त्रिभिरथ परिवृद्धं पञ्चभिः सप्तभिर्वा दशभिरथ विवृद्धं पिप्पलीवर्धमानम् । इति पिबति युवा यस्तस्य न श्वासकासज्वरजठरगुदार्शोवातरक्तक्षयाः स्युः ॥ १ ॥ अथ देवद्रुमादि ॥ देवद्रुमं शिग्रुमसूरकं च गोमूत्रपिष्टामथवाश्वगन्धाम् । पीत्वाशु हन्यादुदरं प्रवृद्धं कृमीन्सशोफानुदरं च दूष्यम् ॥ १ ॥ अथ पटोलाद्यं चूर्णम् ॥ पटोलमूलं रजनी विडङ्गं त्रिफलात्वचः । कम्पिल्लकं नीलिनीं च त्रिवृतां चेति चूर्णयेत् ॥ १ ॥ षडाद्यान्कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान् । कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण वा पिबेत् ॥ २ ॥ विरिक्तो मृदु भुञ्जीत भोजनं जाङ्गलै रसैः । मण्डं पेयां च पीत्वा वा सव्योषं षडहं पयः ॥३॥ शृतं पिबेत्ततश्चूर्णं पिबेदेवं पुनः पुनः । हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ॥ कामलां पाण्डुरोगं च श्वयथुं चापकर्षति ॥ ४ ॥ अथ नारायणचूर्णम् ॥ यवानी हपुषा धान्यं त्रिफला सोपकुञ्चिका । कारवी पिप्पलीमूलमजगन्धा शटी वचा ॥ १ ॥ शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रकम् । द्वौ क्षारौ पुष्करं मूलं कुष्ठं लवणपञ्चकम् ॥ २ ॥ विडङ्गं च समांशानि दन्तीभागत्रयं तथा । त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा ॥ ३ ॥ एष नारायणो नाम चूर्णो रोगगणापहः । तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना ॥४॥ आनद्धवाते सुरया वातरोगे प्रसन्नया । दधिमण्डेन विट्सङ्गे दाडिमाम्बुभिरर्शसि ॥ ५ ॥ परिकर्ते च वृक्षाम्लैरुष्णाम्बुभिरजीर्णके । भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे ॥ ६ ॥ हृद्रोगे ग्रहणीरोगे कुष्ठे मन्दानले ज्वरे । दंष्ट्राविषे

---

* अत्र पटोलादेः षड्भागाः कार्षिका अन्येषां कम्पिल्लादीनां द्वित्रिचतुर्गुणा भागा मात्राः ।

मूलविषे गरले कृत्रिमे विषे। यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ ७ ॥ इति नारायणचूर्णम् ॥ अथ क्षारद्वयचूर्णम् ॥ क्षारद्वयानलव्योषनीलीलवणपञ्चकम्। चूर्णितं सर्पिषा पेयं सर्वगुल्मोदरापहम् ॥ १ ॥ अथ वृन्दाच्छुक्तिकाक्षारादियोगः ॥ सामुद्रशुक्तिकाक्षारो यवक्षारः ससैन्धवः। गोदध्ना संप्रयुज्येत सर्वोदरविनाशनः ॥ १ ॥ अथ उष्ट्रीक्षीरपानम् ॥ उष्ट्रीक्षीरं पिबेज्जीर्णे निरन्नो जठरामयी। पक्षं मासमृतुं वापि न च पानीयमाचरेत् ॥१॥ अथ घृतानि॥ तत्रादौ बिन्दुघृतम् ॥ अर्कक्षीरं पले द्वे तु स्नुहीक्षीरं पलानि षट्। पथ्या कम्पिल्लकं श्यामा शम्याकं गिरिकर्णिका॥ १॥ नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकं तथा। एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत्। २॥ अथास्य मलिने कोष्ठे बिन्दुमात्रं प्रदापयेत्। यावदस्य पिबेद् बिन्दुं तावद्वेगान्विरिच्यते॥ ३॥ कुष्ठं गुल्ममुदावर्तं श्वयथुं सभगन्दरम्। शमयत्युदुराण्यष्टौ वृक्षमिन्द्राशनिर्यथा॥ एतद्बिन्दुघृतं नाम येनाभ्यक्तो विरिच्यते॥ ४॥ इति वृन्दाद्बिन्दुघृतम्॥ अथ योगतरङ्गिण्या नाराचघृतम्॥ त्रिफला चित्रको दन्ती बृहती कण्टकारिका। स्नुही चार्कविडङ्गानि घृतस्य कुडवं पचेत्॥ १॥ तस्य मृद्वग्निसिद्धस्य कर्षार्धं पाययेन्नरम्। शोथगुल्मोदरानाहप्लीहोदरजलोदरान्॥ नाशयत्युल्बणानेतान्सर्पिर्नाराचसंज्ञितम्॥ २॥ अथ त्रिवृताद्यं घृतम्॥ पयस्यष्टगुणे सर्पिः प्रस्थं स्नुक्पयसः पलम्। त्रिवृता पलकल्केन सिद्धं जठरगुल्मनुत्॥ १॥ अथ पञ्चमूलाद्यं घृतम्॥ द्वे पञ्चमूल्यौ त्रिवृता निकुम्भः ससप्तलं चित्रकशिग्रुमूलम्। करञ्जबीजं त्रिफलागुडूचीमेरण्डमूलं मदयन्तिका च॥ १॥ पाठां सभार्गीं सुपर्वीं सतिक्तां सरोहिषां वासकुचेलिकां च। पृथक् समाहृत्य पलं जलस्य द्रोणे पचेत्तच्चतुरंशशेषे॥ घृतं विपक्वं सकषाययुक्तं निहन्ति पीतं सकलोदराणि॥ २॥ इति पञ्चमूलाद्यं घृतम्॥ अथ हिङ्ग्वादि घृतम्॥ हिङ्ग्वा रसोनार्द्रकशिग्रुपथ्याषड्ग्रन्थिदन्तीदशमूलतोयैः। द्विक्षारपञ्चोषणकल्कपादैः सिद्धं घृतं तज्जठरे प्रशस्तम्॥ १॥ इति घृतानि॥ अथ तक्रपानम्॥ वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम्। शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत्॥ १॥ यवानीसैन्धवाजाजीव्योषयुक्तं कफोदरी। सन्निपातोदरी तक्रं त्रिकटुक्षारसैन्धवैः॥ २॥ बद्धोदरी तु हपुषादीप्यकाजाजिसैन्धवैः। पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम्॥ त्र्युषणक्षारलवणैर्युक्तं तु सलिलोदरी॥ ३॥ इति तक्रम्॥ अथ शोफोदरचिकित्सा॥ हरीतकीनागरदेवदारुपुनर्नवाछिन्नरुहाकषायः। सगुग्गुलुर्मूत्रयुतश्च पेयः शोफोदराणां प्रवरः प्रयोगः॥ १॥ पुनर्नवानिम्बपटोलशुण्ठीतिक्ताभयादार्व्यमृताकषायः। सर्वाङ्गशोफोदरकासशूलश्वासान्वितं पाण्डुगदं निहन्ति॥ २॥ पुनर्नवादार्व्यभयागुडूचीः पिबेत्समूत्रा महिषाक्षयुक्ताः। त्वग्दोषशोफोदरपाण्डुरोगस्थौल्यप्रसेकोर्ध्वकफामयेषु॥ ३॥ गोमूत्रयुक्तं महिषीपयो वा क्षीरं गवां वा त्रिफलाविमिश्रम्। क्षीरान्नभुक्केवलमेव

गव्यं मूत्रं पिबेद्वा श्वयथूदरेषु ॥ ४ ॥ सप्ताहं माहिषं मूत्रं पयसा चाम्बुवर्जितम् । पिबेदौष्ट्रं पयो मासं श्वयथूदरनाशनम् ॥ ५ ॥ बिल्वाग्निचव्यार्द्रकशृङ्गबेरक्काथेन कल्केन च सिद्धमाज्यम् । सच्छागदुग्धं ग्रहणीगुदोत्थशोफाग्निसादारुचिहृद्वरिष्ठम् ॥ ६ ॥ इति श्वयथूदरचिकित्सा ॥ अथ रसाः ॥ तत्रादौ नाराचो रसः ॥ भृष्टटङ्कणतुल्यं तु मरिचं च रसं समम् । गन्धकं पिप्पलीशुण्ठी द्वौ द्वौ भागौ विचूर्णयेत् ॥ १ ॥ सर्वतुल्यं क्षिपेद्दन्तीबीजं सर्वमकल्मषम् । द्विगुञ्जं रेचनं चैतदुदराणि व्यपोहति ॥ २ ॥ अथेच्छाभेदी रसः ॥ शुण्ठीमरीचसंयुक्ता रसगन्धकटङ्कणाः । जेपालस्त्रिगुणः प्रोक्तः सर्वमेकत्र मर्दितम् ॥ १ ॥ इच्छाभेदी रसो ह्यस्य द्विगुञ्जां ससितां पिबेत् । यावच्च चूलकाः पीतास्तावद्वेगैर्विरिच्यते ॥ तक्रौदनं च दातव्यं पथ्यमत्र विजानता ॥ २ ॥ अथ जलोदरारिः ॥ पिप्पलीमरीचं ताम्रं काञ्चनीचूर्णसंयुतम् । स्नुक्क्षीरैर्दिनं मर्द्यं तुल्यं जेपालबीजकम् ॥ निष्कं भुक्तं विरेकेण सत्यं हन्ति जलोदरम् ॥ १ ॥ अत्र क्रव्यादरसो हितः ॥ अथ पथ्यापथ्यम् ॥ दोषैः कुक्षौ हि संपूर्णे वह्निर्मन्दत्वमृच्छति । तस्माद् भोज्यानि योज्यानि दीपनानि लघूनि च ॥ १ ॥ शालिषष्टिकगोधूमयवनीवारभोजनम् । विरेकास्थापनं श्रेष्ठं सर्वेषु जठरेषु च ॥ २ ॥ इति वृन्दात् ॥ अथ पथ्यापथ्यं संहितायाम् ॥ विरेचनं लङ्घनमब्दसम्भवाः कुलत्थमुद्गारुणशालयो यवाः । मृगा द्विजा जाङ्गलसंज्ञयान्विताः पेयासुरा माक्षिकसीधुसैन्धवाः ॥१॥ तक्रं रसोनोरुबुतैलमार्द्रकं शालिं च शाकं कुलकं कटिल्लकम् । पुनर्नवाशिग्रुफलं हरीतकीताम्बूलमेलायवशूकमायसम् ॥ २ ॥ अजागवोष्ट्रीमहिषीपयो जलं लघूनि तीव्राणि च दीपनान्यपि । यथामलं पथ्यगणोऽयमाश्रितः सदा नृणां स्यादुदरामये सति ॥ ३ ॥ अम्बुपानं दिवास्वापं गुर्वभिष्यन्दि भोजनम् । व्यायामं चाध्वयानं च जठरी परिवर्जयेत् ॥ ४ ॥ इति पथ्यापथ्यम् ॥ इत्युदरचिकित्सा ॥

## ॥ अथातः शोथनिदानं व्याख्यास्यामः ॥

अथ शोथस्य संप्राप्तिपूर्वकं रूपमाह ॥ रक्तपित्तकफान्वायुर्दुष्टो दुष्टान्बहिःशिराः । नीत्वा रुद्धगतिस्तैर्हि कुर्यान्मांसत्वगाश्रयम् ॥ उत्सेधं संहतं शोफं तमाहुर्निचयादतः ॥ १ ॥ अथ संख्यामाह ॥ सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम् । दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ॥ १ ॥ अथ तस्य पूर्वरूपमाह ॥ तत्पूर्वरूपं दवथुः शिरायामोऽङ्गगौरवम् ॥१॥ अथ श्वयथुनिदानम् ॥ शुद्ध्यामयाभक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा । दध्याममृच्छाकविरोधिदुष्टगरोपसृष्टान्ननिषेवणं च ॥ १ ॥ अर्शांस्यचेष्टा न च देहशुद्धिर्मर्माभिघातो विषमा प्रसूतिः । मिथ्योपचारः प्रतिकर्मणां च निजस्य हेतुः श्वयथोः प्रदिष्टः ॥१॥ अथ तस्य सामान्यलक्षणमाह ॥ सगौरवं स्यादनवस्थितत्वं सोत्सेधमूष्माथ शिरातनुत्वम् । सलोमहर्षं च विवर्णता

---

१ (क०) पयसाऽम्बुवर्जितम् ।

च सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥ १ ॥ अथ वातशोथमाह ॥ चलस्तनुत्वक्परुषोऽरुणोऽसितः [1]प्रसुप्तिहर्षार्तियुतोऽनिमित्ततः । प्रशाम्यति प्रोन्नमति प्रपीडितो दिवा बली च श्वयथुः समीरणात् ॥ १ ॥ अथ पैत्तिकमाह ॥ मृदुः सगन्धोऽसितपीतरागवाञ्ज्वरभ्रमस्वेदतृषामदान्वितः । य उष्यते स्पर्शरुगक्षिरागकृत् सपित्तशोफो भृशदाहपाकवान् ॥ १ ॥ अथ कफजमाह ॥ गुरुः स्थिरः पाण्डुररोचकान्वितः प्रसेकनिद्रावमिवह्निमान्द्यकृत् । सकृच्छ्रजन्मप्रशमो निपीडितो न चोन्नमेद्रात्रिबली कफात्मकः ॥१॥ सूयन्ते यस्य गात्राणि स्पन्दन्निव रुजन्निव । पीडितात्युन्नमति च वातशोफं तमादिशेत् ॥२॥ यश्चाप्यरुणवर्णाभः शोफो नक्तं प्रणश्यति । स्नेहोष्णमर्दनाभ्यां च प्रणश्येत्स च वातिकः ॥ ३ ॥ यः पीतः सज्वरार्तिः स्याद्दयते च विदह्यते । स्विद्यते क्लिद्यते गन्धिः सपैत्तः श्वयथुः स्मृतः ॥ ४ ॥ यः पीतमुखवर्णत्वक् पूर्वं मध्यात्प्रसूयते । तनुत्वचातिसारी च स पैत्तः श्वयथुः स्मृतः ॥५॥ अथ द्विदोषजन्यमाह ॥ निदानाकृतिसंसर्गाच्छ्वयथुः स्याद्द्विदोषजः ॥ १ ॥ अथ सन्निपातजमाह ॥ सर्वाकृतिः सन्निपाताच्छोफो व्यामिश्रहेतुजः ॥ १ ॥ अथाभिघातजमाह ॥ अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः । हिमानिलो दध्यनिलैर्भल्लातकपिकच्छुकैः ॥ १ ॥ रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान् । भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ॥ २ ॥ अथ विषजलक्षणमाह ॥ विषजः सविषप्राणिपरिसर्पणमूत्रणात् । दंष्ट्रादन्तनखाघातादविषप्राणिनामपि ॥ १ ॥ विण्मूत्रशुक्रोपहतमलवद्वस्त्रसङ्करात् । विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः ॥२॥ अथ यस्मिन् देशे दोषाः शोथं कुर्वन्ति तमाह ॥ दोषाः श्वयथुमूर्ध्वं हि कुर्वन्त्यामाशयस्थिताः ॥ १ ॥ पक्वाशयस्था मध्ये तु वर्चस्थानगतास्त्वधः । कृत्स्नदेहमनुप्राप्ताः कुर्युः सर्वसरं तथा ॥ २ ॥ यो मध्यदेशे श्वयथुः सकष्टः सर्वगश्च यः । अर्धाङ्गेऽरिष्टभूतस्याद्यश्चोर्ध्वं परिसर्पति ॥ ३ ॥ अथोपद्रवारिष्टस्यासाध्यत्वमाह ॥ श्वासः पिपासा छर्दिश्च दौर्बल्यं ज्वर एव च । तस्य चान्नेऽरुचिर्नास्ति शोथिनं परिवर्जयेत् ॥१॥ ऊर्ध्वगामी नरं पद्भ्यामधोगामी स्त्रियं मुखात् । उभयोर्वस्तिसञ्जातः शोफो हन्ति न संशयः ॥ २ ॥ अथ स्थानभेदेन साध्यत्वमाह ॥ अनन्योपद्रवकृतः शोथः पादसमुद्भवः । पुरुषं हन्ति नारीं तु मुखजो गुह्यजो द्वयम् ॥ १ ॥ अथ साध्यासाध्यलक्षणमाह ॥ श्वासः पिपासा दौर्बल्यं ज्वरच्छर्दिररोचकाः । हिक्कातीसारकासाश्च शोथिनं क्षपयन्ति हि ॥ २ ॥ अथ तन्त्रान्तरे ॥ पादप्रवृत्तः श्वयथुः नृणां यः प्राप्नुयान्मुखम् । वक्त्रादधस्ताद्यो याति बस्तिस्तस्य न सिध्यति ॥ ३ ॥ अथ क्षीरपाणिनाप्युक्तम् ॥ ऊर्ध्वगामी नरः पद्भ्यामधोगामी मुखात् स्त्रियः । उभयोर्वस्तिसंजातः शोथो हन्ति न संशयः ॥४॥ छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरोऽतीसार एव च । सप्तकोऽयं सदौर्बल्यः ज्वरच्छर्दिविरेचकाः ॥ हिक्का श्वासातिसारश्च शोफिनं परिवर्जयेत् ॥ ५ ॥ इति शोथनिदानम् ।

1 (च०) अधोऽङ्गे ।

## ॥ अथ तच्चिकित्सा ॥

निदानदोषार्तुविपर्ययक्रमैरुपाचरेत्तं बलकालदोषवित्। अथामजं लङ्घनपाचनक्रमैर्विशोधनैरुल्बणदोषमादितः ॥ १ ॥ शिरोगतं शीर्षविरेचनैरधो विरेचनैरूर्ध्वमतस्तथोर्ध्वम्। उपाचरेत्स्नेहभवं विरूक्षणैः स्नेहस्तु रूक्षेण विरूक्ष्यते ध्रुवम् ॥ २ ॥ विबद्धविट्कानिलजे निरूहणं घृतं तु पित्तानिलजे सतिक्तकम्। शोथेन मूर्च्छावति दाहकर्षिते विशोधनीयं तु समूत्रमिष्यते ॥ ३ ॥ कफोत्थितं क्षारकटूष्णसंयुतैः समूत्रतक्रैस्तु च युक्तिभिर्हरेत् ॥ ४ ॥ मुखतो जायते शोथः स्त्रीणां पुंसां च पादतः। असाध्यौ द्वावपि प्रोक्तौ तयोः पुण्यान्निवर्तनम् ॥५॥ अथ श्वयथोर्वातादिभेदविशेषचिकित्सा ॥ शोथे वातोत्थिते पूर्वं मासार्धं त्रिवृतं पिबेत ॥ १ ॥ तैलमेरण्डजं वापि मलबन्धेऽपि तन्मतम्। शाल्यन्नं पयसा युक्तं रसैर्वापि प्रयोजयेत् ॥ स्वेदाभ्यङ्गांश्च वातघ्नान्सेकलेपांश्च कल्पितान् ॥२॥ अथ शुण्ठ्यादिक्वाथः ॥ शुण्ठीपुनर्नवैरण्डपञ्चमूलशृतं जलम्। वातिके श्वयथौ पेयं भुक्तपाकेऽपि तन्मतम् ॥ १ ॥ अथ बीजपूरादिलेपः ॥ बीजपूरजटाहिंस्रादेवदारुमहौषधम्। रास्नाग्निमन्थलेपोऽयं वातशोथविनाशनः ॥ १ ॥ इति वातशोथचिकित्सा ॥ अथ पित्तशोथे ॥ क्षीराशिनः पित्तकृतेऽतिशोफे त्रिवृद्गुडूचीत्रिफलाकषायम्। पिबेद् गवां मूत्रविमिश्रितं वा फलत्रिकाचूर्णमथाक्षमात्रम् ॥ १ ॥ अथ पटोलादिक्वाथः ॥ पटोलत्रिफलारिष्टदार्वीक्वाथः सगुग्गुलुः। हन्ति पित्तभवं शोथं तृष्णाज्वरसमन्वितम् ॥१॥ इति पित्तशोथचिकित्सा ॥ अथ कफशोथे पुनर्नवाविश्वत्रिवृद्गुडूचीशम्याकपथ्यासुरदारुकल्कम्। शोफे कफोत्थेऽक्षसमं समूत्रं क्वाथं पिबेद्वाप्यथ चैव तेषाम् ॥ १ ॥ अथ पुनर्नवावलेहः ॥ पुनर्नवामृतादारुदशमूलरसाढके। आर्द्रकस्य रसप्रस्थे गुडस्य च तुलां पचेत् ॥ १ ॥ तत्सिद्धं व्योषपत्रैलात्वक्पत्रैः कार्षिकैः पृथक् ॥ चूर्णीकृतैर्लिहेच्छीते मधुनः कुडवं क्षिपेत् ॥ २ ॥ लेहः पुनर्नवो नाम श्लेष्मशोफनिषूदनः। श्वासकासारुचिहरो बलपुष्ट्यग्निवर्धनः ॥ ३ ॥ अथारग्वधादितैलम् ॥ कफोत्थेऽत्र पिबेत्तैलं सिद्धमारग्वधादिना। मन्देऽग्नौ स्तिमिते कोष्ठे स्रोतोरोधेऽरुचावपि ॥ क्षारमूत्रासवारिष्टचूर्णं तक्रे नियोजयेत् ॥ १ ॥ इति कफशोथचिकित्सा ॥ अथ त्रिदोषजे मिश्रे च ॥ मिश्रे मिश्रक्रमं कुर्यात्सर्वजे सर्वमेव तु ॥ अथ पिप्पल्यादिचूर्णम् ॥ पिप्पल्यजाजी गजपिप्पली च निदिग्धिकानागरचित्रकैश्च। रजन्ययःपिप्पलिमूलपाठामुस्तं च चूर्णं सुखतोयपीतम् ॥ कल्कश्च भूनिम्बमहौषधाभ्यां हन्यात्त्रिदोषं चिरजं च शोफम् ॥ १ ॥ अथार्द्रकरसादियोगः ॥ रसैस्तथैवार्द्रकनागरस्य पेयोऽथ जीर्णे पयसाथ मद्यात्। शिलाह्वयं वा त्रिफलारसेन हन्यात्त्रिदोषं श्वयथुं प्रसह्य ॥ १ ॥ इति त्रिदोषजमिश्रचिकित्सा ॥ अथागन्तुजे विषजे च ॥ शोफे चागन्तुजे कुर्यात्सेकलेपादिशीतलम्। भल्लातकभवे शोफे सतिलाकृष्णमृत्तिका ॥ १ ॥

---

१ (च०) अथो जयेद्।

॥ १ ॥ नवनीततिलालेपादथ दुग्धं तिलान्वितम् । यष्टिदुग्धतिलैर्लेपो नवनीतेन संयुतः ॥ शोफमारुष्करं हन्ति चूर्णं शालदलस्य वा ॥ २ ॥ इत्यागन्तुकविषचिकित्सा ॥

## ॥ अथ सामान्यविधिः ॥

अथ बिल्वपत्रस्वरसः ॥ बिल्वपत्ररसः पीतः शोषणः श्वयथौ रुजि । विड्सङ्गे चैव दुर्नाम्नि विषूच्यां कामलास्वपि ॥ १ ॥ अथ भूनिम्बादिकल्कः ॥ भूनिम्बविश्वकल्कं जग्ध्वा पीतः पुनर्नवाक्वाथः । अपहरति नियतमाशु श्वयथुं सर्वाङ्गजं नृणाम् ॥ २ ॥ अथ क्वाथाः ॥ तत्रादौ पथ्यादिः ॥ पथ्यामृताभार्गिपुनर्नवाग्निदार्वीनिशादारुमहौषधानाम् । क्वाथो निपीतो दरपाणिपादवक्त्राश्रितं हन्त्यचिरेण शोफम् ॥ १ ॥ अथ त्रिफलादिक्वाथः ॥ त्रिफलाक्वाथपानं हि महिषीसर्पिषा सह । हन्ति शोफं प्रमेहं च नाडीव्रणभगन्दरम् ॥ १ ॥ अथ सिंहास्यादिः ॥ सिंहास्यामृतभण्टाकीक्वाथं पीत्वा समाक्षिकम् । कृच्छ्रशोथं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम् ॥१॥ अथ चूर्णानि ॥ तत्रादौ पिप्पल्यादि ॥ कृष्णाग्निविश्वघनजीरककण्टकारीपाठानिशार्करिकणामगधाजटानाम् । चूर्णं कवोष्णसलिलेन विलोड्य पीतं नातः परं श्वयथुरोगहरं नराणाम् ॥ १ ॥ अथ गुडाद्यं चूर्णम् ॥ गुडपिप्पलिशुण्ठीनां चूर्णं श्वयथुनाशनम् । आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम् ॥ १ ॥ अथान्यच्च ॥ गुडात्पलत्रयं ग्राह्यं शृङ्गबेरं पलत्रयम् । शृङ्गबेरसमा कृष्णा लोहकिट्टायसोः पलम् ॥ चूर्णमेतत्समुद्दिष्टं सर्वश्वयथुनाशनम् ॥१॥ अथ पुनर्नवाद्यं चूर्णम् ॥ पुनर्नवा दार्व्यमृतापाठा विश्वश्वदंष्ट्रिका । रजन्यौ द्वे बृहत्यौ च पिप्पल्यग्निश्चत्रकं वृषः ॥ १ ॥ समभागानि संचूर्ण्य गवां मूत्रेण वा पिबेत् । बहुप्रकारं श्वयथुं सर्वगात्रावसारिणम् ॥ हन्ति चाशूदराण्यष्टौ व्रणांश्चैवोद्धतानपि ॥ २ ॥ अथ विडङ्गादि ॥ विडङ्गदन्तीकटुकात्रिवृच्चित्रकदारवः । व्योषः सकृष्णा त्रिफला समा देया ह्ययोरजः ॥ द्विगुणं तत्पिबेच्चूर्णं पयसा शोफशान्तये ॥ १ ॥ अथ गुडार्द्रकादियोगः ॥ गुडार्द्रकं वा गुडनागरं वा गुडाभयां वा गुडपिप्पलीं वा । कर्षाभिवृद्ध्या त्रिफलप्रमाणं खादेन्नरः पथ्यमथापि मासम् ॥१॥ शोफप्रतिश्यायगलास्यरोगान्सश्वासकासारुचिपीनसादीन् । जीर्णज्वरार्शोग्रहणीविकारान् हन्यात्तथान्यानपि वातरोगान् ॥ २ ॥ अथ पुनर्नवादियोगः ॥ पुनर्नवामूलकदेवदारुच्छिन्नोद्भवाचित्रकमूलसिद्धाः । रसा यवागूश्च पयांसि यूषाः शोफे प्रदेया दशमूलगर्भाः ॥१॥ अथ क्षीरम् ॥ क्षीरं शोफहरं दारुवर्षाभूनागरैः शृतम् । पेयं वा चित्रकं व्योषत्रिवृद्दारुप्रसाधितम् ॥१॥ अथार्द्रकरसः ॥ आर्द्रकस्य रसः पीतः पुराणगुडमिश्रितः । अजाक्षीराशिनः शीघ्रं सर्वशोथहरो भवेत् ॥ १ ॥ अथ गोमूत्रमण्डूरम् ॥ गोमूत्रसिद्धमण्डूरं सुरभीरसभावितम् । माणकार्द्रककन्दानां रसेष्वपि च भावयेत् ॥ १ ॥ त्रिफलाकटुचव्यानां चूर्णं पाणितलद्वयम् ॥ क्षिपेत्सु-

सिद्धे पाके तु मधुनश्च पलद्वयम् ॥ निहन्ति सर्वजं शोफं सर्वाङ्गं च विशेषतः* ॥ २ ॥ इति गोमूत्रमण्डूरम् ॥ अथ कंसहरीतकी ॥ द्विपञ्चमूलस्य पचेत्कषाये कंसेऽभयानां च शतं गुडाच्च । लेहे सुसिद्धे च विनीय चूर्णं व्योषत्रिसौगन्ध्यमुपस्थिते च ॥ १ ॥ प्रस्थार्धमात्रं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात् । एकाभयां प्राश्य ततश्च लेहाच्छुक्तिंर्निहन्ति श्वयथुं प्रवृद्धम् ॥ २ ॥ कासज्वरारोचकमेहगुल्मप्लीहत्रिदोषोदरपाण्डुरोगान् । कार्श्यामवातानसृगम्लपित्तवैवर्ण्यमूत्रानिलशुक्रदोषान् ॥ ३ ॥ दशमूलहरीतक्या तुल्या कंसहरीतकी । मानं तेनात्र तत्रस्थं चरके प्राह जेज्जटः ॥ ४ ॥ इति कंसहरीतकी ॥ अथ दशमूलहरीतकी ॥ दशमूलीकषायस्य कंसे पथ्याशतं गुडात् । तुलां पचेद्घने तत्र व्योषक्षारचतुष्पलम् ॥ १ ॥ त्रिजातं तु सुवर्णांशं प्रस्थार्धं मधुना हिमे । दशमूलहरीतक्यः शोफान् घ्नन्ति सुदुस्तरान् ॥ २ ॥ अथ पुनर्नवासवः ॥ पुनर्नवे द्वे तु पले सपाठा दन्ती गुडूची सह चित्रकेण । निदिग्धिका च त्रिफला विपक्वा द्रोणावशेषे सलिले ततस्तम् ॥ १ ॥ पूत्वा रसे द्वे च शतं पुराणं गुडं मधुप्रस्थयुतं सुशीतम् । मासं निदध्याद् घृतभाजनस्थं पले यवानां परतश्च मासम् ॥ २ ॥ चूर्णीकृतैरर्धपलांशकैस्तैर्हैमत्वगेलामरिचाम्बुपत्रैः । गन्धान्वितं क्षौद्रयुतं प्रदिग्धं जीर्णे पिबेद् व्याधिबलं समीक्ष्य ॥ ३ ॥ हृत्पाण्डुरोगश्वयथुं प्रवृद्धं प्लीहभ्रमारोचकमेहगुल्मान् । भगन्दरार्शोजठराणि कासश्वासग्रहण्यामयकुष्ठकण्डूः ॥ ४ ॥ शाखानिलं बद्धपुरीषतां च हिक्कां तु कासं च हलीमकं च । क्षिप्रं जयेद्वर्णबलायुरोजस्तेजोऽन्वितो मांसरसांश्च भुक्त्वा ॥ ५ ॥ इति गदनिग्रहात्पुनर्नवासवः ॥ अथ सर्वशोफे वासासवः ॥ वासकस्य तुले द्वे तु द्विद्रोणेऽपां विपाचयेत् । द्रोणार्धशेषं तं ज्ञात्वा पूते शीते प्रदापयेत् ॥ १ ॥ गुडस्यैकां तुलां तत्र धातक्यास्तु पलाष्टकम् । क्षिपेच्चूर्णीकृते तस्मिंस्त्वगेलापत्रकेसरम् ॥ २ ॥ कङ्कोलव्योषतोयानि पालिकान्युपकल्पयेत् । निदध्याद्घृतभाण्डे तु पक्षादूर्ध्वं ततः पिबेत् वासकासव इत्येष सर्वश्वयथुनाशनः ॥ ३ ॥ इति वासासवः ॥ अथ दार्वादियोगः ॥ पिबेदुष्णाम्बुना दारुपथ्याशुण्ठीपुनर्नवाः । विडङ्गातिविषावासाविश्वदारूषणानि च ॥ वर्षाभूशृङ्गबेराभ्यां कल्कं वा सर्वशोफनुत् ॥ १ ॥ अथ तक्रादियोगः ॥ तक्रं पिबेद्वा गुरुभिन्नवर्चाः सव्योषसौवर्चलमाक्षिकं च । विड्वातसङ्गे पयसा रसैर्वा प्रागुष्णमद्यादुरुबूकतैलम् ॥ १ ॥ अथ पुनर्नवादिघृतम् ॥ पुनर्नवापत्ररसालमूलं संक्षुद्य तोयार्मणशेषसिद्धम् । चतुर्थभागेन घृते विपक्वं प्रस्थं तु तत्कल्कपलाष्टकेन ॥ १ ॥ संसेवितं वातबलासरोगान् सर्वांश्च शोफानतिदुस्तरांश्च । गुल्मोदरप्लीहगुदोद्भवांश्च निहन्ति वह्निं कुरुतेऽपि पुंसाम् ॥ २ ॥ अथ पञ्चमूलाद्यं तैलम् ॥ पञ्चमूलं सलवणं सरलं देवदारु च । हस्तिकर्णीपलाशस्य फलानि निचुलस्य च ॥ १ ॥ पलांशं काकनासा च गुडूचीदे-

---

* अत्र गोमूत्रसिद्धं लोहमलं संचूर्ण्य गोमूत्रवीरादिनातपे परिभाव्य त्रिफलादिचूर्णं द्विगुणमूत्रेण पक्तव्यम् ।

१ ( च० ) मधुनो ।

वपुष्पकम् । अहिंस्रा श्रेयसी हिंस्रा बस्तगन्धा पुनर्नवा ॥ २ ॥ कायस्था च वयस्था च दारुको जटिला जटा । अलम्बुषोरुबूकं च प्रपुन्नाटं सनागरम् ॥ ३ ॥ शिग्रु गोधावनी भार्गी तर्कारी पौष्करी जटा । एतैः सिद्धं यथालाभं तैलमभ्यञ्जनैस्त्रिभिः ॥ निहन्त्युदीर्णं श्वयथुं जन्तोर्वातकफात्मकम् ॥ ४ ॥ अथ शुष्कमूलकाद्यं तैलम् ॥ शुष्कमूलकवर्षाभूदारुरास्नामहौषधैः । पक्वमभ्यञ्जने तैलं समूलं शोफनाशनम् ॥ १ ॥ अथ सेकलेपस्वेदनानि ॥ अथ पुनर्नवादिलेपः ॥ पुनर्नवादारुशुण्ठीसिद्धार्थं शिग्रुमेव च । पिष्ट्वा चैवारनालेन प्रलेपः सर्वशोथजित् ॥ १ ॥ अथ कृष्णादिलेपः ॥ कृष्णा पुराणपिण्याकशिग्रुत्वक् सिकतातसी । प्रलेपो मर्दने युञ्ज्यात्सुखोष्णो मूत्रकल्कितः ॥ १ ॥ अथ दार्वादिः ॥ दारुगुग्गुलुशुण्ठीनां कल्को मूत्रेण शोफजित् । गोमूत्रस्य च योगो वा क्षिप्रं श्वयथुनाशनः ॥ १ ॥ अथार्कादिः ॥ सेकस्तथार्कवर्षाभूनिम्बक्काथेन शोफजित् । गोमूत्रेणापि कुर्वीत सुखोष्णेनावसेचनम् ॥ सौवर्चलसमं घृष्टं सर्षपैश्च प्रलेपनम् ॥ १ ॥ अथ न्यग्रोधादिलेपः ॥ न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । ससर्पिष्कैः प्रलेपः स्याच्छोफनिर्वारणः परः ॥१॥ अथ गोधूमपोलिका ॥ गोधूमकणिकायुक्ता निर्गुण्डीपत्रचूर्णिका । पोलिका तिलतैलेन युक्ता शोथविनाशनी ॥ १ ॥ अथ पुनर्नवादिस्वेदः ॥ पुनर्नवाग्निनिर्गुण्डीपलितैरण्डजैर्दलैः । सहचरैर्जलं तप्तं तत्स्वेदः शोफहा मतः ॥ १ ॥ अथ कुटजादिस्वेदः ॥ कुटजार्कशिरीषाणां विदेलैरण्डनिम्बजैः । पत्रैर्युक्तं जलं तप्तं तत्स्वेदो दुष्टशोफहृत् ॥ १ ॥ अथ बिभीतकादिलेपः ॥ बिभीतकानां पलमध्यलेपः सर्वेषु दाहार्तिहरः प्रशस्तः । यष्ट्याह्वमुस्तैः सकपित्थमूत्रैः सचन्दनैस्तत्पिटिकासु लेपः ॥ १ ॥ इति सेकलेपस्वेदनानि ॥ अथ रसाः ॥ तत्रादौ शोफारिः ॥ हिङ्गुलं जयपालं च मरिचं टङ्कणं कणाम् । संमर्द्य वल्लः सघृतः सर्वशोफहरः परः ॥ १ ॥ अथ श्वयथुघाती रसः ॥ रसगन्धकलोहकणात्रिवृता मरिचामरदारु निशा त्रिफलात् । दलितं मृदु गोसलिलेन पिबेदनुरूपममुं श्वयथूदरहम् ॥ १ ॥ इति श्वयथुघाती रसः ॥ देयो ह्युदयमार्तण्डो त्रैलोक्याडम्बरोऽथ वा । अग्निकुमारको वात्र देयः शोफविनाशनः ॥१॥ इति रसाः ॥ अथ पथ्यापथ्यम् ॥ पुरातनाः शालियवाः कुलत्था मुद्गाश्च गोधापि च शल्लकोऽपि । भुजङ्गभुक्तित्तिरिताम्रचूडलावादयो जाङ्गलविष्किराश्च ॥ १ ॥ कूर्मोऽपि शृङ्गी प्रपुराणसर्पिस्तक्रं सुरा माक्षिकमासवश्च । निष्पावकाटिल्लकरक्तशिग्रुरसोनकर्कोटकबालमूलम् ॥ २ ॥ पुनर्नवं गृञ्जनकं पटोलं वेत्राग्रधात्रीफलमूलकानि । यथामलं पथ्यमिदं प्रयुक्तं शोफामयं सत्वरमुच्छिनत्ति ॥३॥ ग्राम्यानूपं पिशितलवणं शुष्कशाकं नवान्नं गौडं पिष्टं दधि सकृशरं निर्झरं मद्यमम्लम् । धाना वल्लूरमांसं बहुनशनमथवा गुर्वसात्म्यं विदाहि स्वप्नं रात्रौ श्वयथुगदवान् वर्जयेन्मैथुनं च ॥४॥ अथ वृन्दात् पथ्यापथ्यम् ॥ पुराणयवशाल्यन्नं दशमूलोपसाधितम् । आम्लमल्पकटुस्नेहं भोजनं शोफिनां हितम् ॥ १ ॥ पिष्टान्नमुष्णं लवणानि मद्यं मृदं

१ (च०) दारुका । २ (च०) विदुलैरण्ड—। ३ (च०) पत्रैः । ४ (च०) अल्पमल्पं ।

दिवा स्वप्नमजाङ्गलं च। पयो गुडं तैलमथो गुरूणि शोफं जिघांसुः परिवर्जयेत ॥ २ ॥ इति शोफामयचिकित्सा ॥

## ॥ अथ मुष्कान्त्रवृद्धिवर्ध्मरोगनिदानम् ॥

तस्य संप्राप्तिमाह ॥ क्रुद्धोऽनूर्ध्वगतिर्वायुः शोथशूलकरश्चरन्[1]। मुष्कौ वङ्क्षणतः प्राप्य फलकोशाभिवाहिनीः ॥ प्रपीड्य धमनीर्वृद्धिं करोति फलकोशयोः ॥ १ ॥ वृद्धेः संख्यामाह ॥ दोषास्रमेदोमूत्रान्त्रैः सवृद्धिः सप्तधा॰ गदः। मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलः ॥१॥ वातजमाह ॥ वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ॥ १ ॥ पित्तजमाह ॥ पक्वोदुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान् ॥ १ ॥ श्लेष्मजमाह ॥ कफाच्छीतो गुरुः स्निग्धः कण्डूमान्कठिनोऽल्परुक् ॥ १ ॥ रक्तजमाह ॥ कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः ॥१॥ मेदोजमाह ॥ कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ॥ १ ॥ मूत्रजमाह ॥ मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः। अम्भोभिः पूर्णदृतिवत्क्षोभं याति सरुङ् मृदुः ॥ १ ॥ मूत्रकृच्छ्रमधस्तात्स्याच्चालयन् फलकोशयोः ॥ १ ॥ अन्त्रजमाह ॥ वातकोपिभिराहारैः शीततोयावगाहनैः। धारणेरणभाराध्वविषमाङ्गप्रवर्तनैः ॥ १ ॥ क्षोभणैः कुपितोऽन्यैश्च क्षुद्रान्त्रावयवं यदि। पवनो द्विगुणीकृत्य स्वनिवेशादधो नयेत् ॥ कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥ २ ॥ उपेक्ष्यमाणतयाण्डवृद्धिमाह ॥ उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मानरुक्स्तम्भवतीं स कुर्यात्। प्रपीडितोऽन्तः स्वनवान् प्रयाति प्राध्मापयन्नेति पुनश्च मुक्तः ॥ १ ॥ असाध्यमाह ॥ यस्यान्त्रावयवैः श्लेष्मा मुष्कयोर्याति संचयात्। अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः ॥ रूक्षकृष्णारुणसितस्तन्तुजालसमावृतः ॥ १ ॥ इत्यन्त्रवृद्धिनिदानम् ॥ अथ वर्ध्मनिदानम् ॥ अत्यभिष्यन्दिगुर्वन्नसेवनान्निचयं गतः। करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु ॥ ज्वरशूलाङ्गसादाढ्यं तं वर्ध्ममिति निर्दिशेत् ॥ १ ॥ इति वर्ध्मनिदानम्। इति मुष्कान्त्रवृद्धिवर्ध्मनिदानम् ॥

## ॥ अथ तच्चिकित्सामाह ॥

अथ वातवृद्धिचिकित्सा ॥ सक्षीरं वा पिबेत्तैलं मासमेरण्डसंभवम्। गुग्गुलूरुबुतैलं वा गोमूत्रेण पिबेन्नरः ॥ वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम् ॥१॥ अथ पित्तवृद्धिचिकित्सा ॥ चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम्। क्षीरपिष्टैः प्रदेहः स्यात्पित्तवृद्धिरुजापहः ॥ १ ॥ पञ्चवल्कलकल्केन सघृतेन प्रलेपनम्। पानं वापि कषायस्य पित्तवृद्धौ प्रशस्यते ॥ २ ॥ अथ कफवृद्धिचिकित्सा ॥ कफवृद्धौ मूत्रपिष्टैरुष्णवीर्यैः प्रलेपनम्। पातव्यो मूत्रसंयुक्तः कषायः पीतदारुणः ॥ १ ॥ त्रिकटुत्रिफलाक्वाथं सक्षारलवणं पिबेत्। कफवातात्मकोपघ्नं विरेकात्कफवृद्धिजित् ॥ २ ॥ अथ रक्तवृद्धिचिकित्सा ॥ अविदाहि च भेषज्यं कर्तव्यं रक्तपैत्तिके। सर्वं पित्तहरं

[1] (च॰) स वायुः

कार्यं रक्तजे रक्तमोक्षणम् ॥ १ ॥ मुहुर्मुहुर्जलौकाभिः शोणितं रक्तजे हरेत् । शीत-मालेपनं सर्वं पाको रक्ष्यः प्रयत्नतः ॥ २ ॥ त्रिवृतं प्रपिबेत्क्षौद्रशर्करासहितं मुहुः । पित्तग्रन्थिक्रमं कुर्यादामे पक्वे च रक्तजे ॥ ३ ॥ अथ मेदोवृद्धिचिकित्सा ॥ स्विन्नं मेदः समुत्थानं लेपयेत्सुरसादिना । शिरो विरेचयेद् द्रव्यैः सुखोष्णैर्मूत्रसंयुतैः ॥ १ ॥ अथ षड्डूषणगुग्गुलुः ॥ षड्डूषणं क्षौद्रसमं गुग्गुलुं गव्यसर्पिषा । प्रयुक्तं कुट्टय भुञ्जीत यथाग्नि दिवसानने ॥ कटुतिक्तकषायाशी मेदोवृद्धिप्रणाशनम् ॥ १ ॥ इति मेदोवृद्धिः ॥ अथ मूत्रजेऽन्त्रवृद्धौ च ॥ संस्वेद्य मूत्रप्रभवं वस्त्रखण्डेन वेष्टयेत् । सीवन्या पार्श्वतोऽधस्ताविधेद्व्रीहिमुखेन वै ॥१॥ मुष्ककोशमगच्छन्त्यामन्त्रवृद्धौ विचक्षणः । वातवृद्धिक्रमं कुर्याद्दाहस्तत्राग्निना हितः ॥ २ ॥ शङ्खोपरि च कर्णान्ते त्यक्त्वा सेवनिमादरात् । व्यत्यासाद्वा शिरां विधेदन्त्रवृद्धिनिवृत्तये ॥ ३ ॥ तैलमेरण्डजं पीतं बलासिद्धं पयोऽन्वितम् । आध्मानशूलोपचितमन्त्रवृद्धिं जयेन्नरः॥४॥ रास्नायष्टचमृतैरण्डबलागोक्षुरसाधितः । क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुबुतैलेन मिश्रितः ॥ ५ ॥ पिप्पली जीरकं कुष्ठं बदरं शुष्कगोमयम् । काञ्जिकेन प्रलेपोऽयमन्त्रवृद्धिविनाशनः ॥ ६ ॥ देवदारुमिशीवासाटाकलीमूलसैन्धवैः । क्षौद्रयुक्तैश्च तैर्लेपो वृद्धिमन्त्रभवां जयेत् ॥ ७ ॥ अथाण्डवृद्धिचिकित्सा ॥ तैलं नारायणं योज्यं पानाभ्यञ्जनबस्तिषु । गोमूत्रैरण्डतैलाभ्यां रसगन्धककज्जलीम् ॥ १ ॥ पीत्वा निहन्ति सहसा वृद्धिं वृषणसंभवाम् । फलत्रिकोद्भवं क्वाथं गोमूत्रेणैव पाचयेत् ॥ वातश्लेष्मकृतं हन्ति शोथं वृषणसंभवम् ॥ २ ॥ प्लक्षाक्षबीजशुण्ठीनिर्गुण्डीनां मिथः समैश्चूर्णैः । घृतमधुसहिता पिण्डी न क्षमते मुष्कवृद्धिकथाम् ॥ ३ ॥ वचासर्षपकल्केन प्रलेपः शोफनाशनः । दार्वीचूर्णं गवां मूत्रैर्निपीतं मुष्कवृद्धिजित् ॥ आर्द्रकस्य रसः क्षौद्रयुक्तो वृषणवातजित् ॥ ४ ॥ अथ सामान्यविधिः ॥ अथ मांस्यादि घृतम् ॥ मांसी कुष्ठं पत्रकैला रास्ना शृङ्गी च चित्रकम् । कृमिघ्नमश्वगन्धा च शैलेयं कटुरोहिणी ॥ १ ॥ सैन्धवं तगरं चैव कुटजातिविषैः समैः । एतैश्च कार्षिकैः कल्कैर्घृतप्रस्थं विपाचयेत् ॥ २ ॥ वृषमुण्डीतकैरण्डनिम्बपत्रभवं रसम् । कण्टकार्याश्चापि दुग्धं प्रस्थं प्रस्थं विनिक्षिपेत् ॥ ३ ॥ सिद्धमेतद् घृतं पीतमन्त्रवृद्धिं व्यपोहति । वातवृद्धिं पित्तवृद्धिं मेदोवृद्धिमथापि वा । मूत्रवृद्धिं च हन्त्येतत्सर्पिराशु न संशयः ॥ ४ ॥ इति मांस्यादिघृतम् ॥ अथ पुनर्नवादि तैलम् ॥ पुनर्नवामृता दारु सक्षारं लवणत्रयम् । कुष्ठं सटी वचा मुस्तं रास्ना कट्फलपुष्करम् ॥ १ ॥ यवानी हपुषा शिग्रु शताह्वा चाजमोदिका । विडङ्गातिविषायष्टीपञ्चकोलकसंयुतैः ॥ २ ॥ एतैः कल्कः समैरक्षैस्तैलप्रस्थं विपाचयेत् । गोमूत्रं द्विगुणं देयं काञ्जिकं च तथैव च ॥ ३ ॥ पुनर्नवाद्यमेतत्तु बस्तौ पाने तथोत्तमम् । कट्यूरुपृष्ठमेण्ढ्रेषु कुक्षौ च वृषणाश्रितम् ॥ कफवातोद्भवं शूलमन्त्रवृद्धिविनाशनम् ॥ ४ ॥ इत्यन्त्रवृद्धिचिकित्सा ॥ अथ वर्ध्मचिकित्सामाह ॥ मूलं बिल्वकपित्थयोररलुकस्याग्नेर्बृहत्योर्द्वयोः श्यामापूतिकरञ्जशिग्रुकतरोर्विश्वौषधारुष्करम् । कृष्णाग्रन्थिकवेल्लपञ्चलवणं क्षाराजमोदा-

न्वितम् पीतं काञ्जिककोष्णतोयमथितैश्चूर्णीकृतं वर्ध्मजित् ॥ १ ॥ इति बिल्वादिचूर्णम् ॥ भृष्टश्चैरण्डतैलेन कल्कः पथ्यासमुद्भवः। कृष्णासैन्धवसंयुक्तो वर्ध्मरोगहरः परः ॥ १ ॥ श्वदंष्ट्रासिन्धुविश्वाब्ददारुकृमिहराश्मभित्। लोध्रचूर्णं घृतेनाचाद्वातवर्ध्महरं परम् ॥ २ ॥ सैन्धवं मदनं कुष्ठं शताह्वा निचुलं वचा। ह्रीवेरं मधुकं भार्गी देवदारु सनागरम् ॥ ३ ॥ कट्फलं पौष्करं मेदा चविका चित्रकं सटी। विडङ्गातिविषे श्यामा हरेणुर्नीलिनी स्थिरा ॥ ४ ॥ बिल्वाजमोदा रास्ना च दन्ती कृष्णा च तैः समैः। साध्यमेरण्डजं तैलं तैलं वा कफवातनुत् ॥ ५ ॥ वर्ध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान्। आनाहमश्मरीं चैव हन्यात्तदनुवासनात् ॥ ६ ॥ इति सैन्धवाद्यं तैलम् ॥ अजाजीहपुषाकुष्ठं गोमयं बदरान्वितम्। काञ्जिकेन तु संपिष्टं कुर्याद्वर्ध्मप्रलेपनम् ॥ १ ॥ सद्यो मृतस्य काकस्य मलेन परिलेपनम्। वर्ध्मरोगः प्रयात्याशु रविणा तिमिरं यथा ॥ पक्वेऽत्र दारणं कृत्वा प्रकर्तव्या व्रणक्रिया ॥ २ ॥ इति वर्ध्मचिकित्सा ॥ अथ कुरण्डचिकित्सा ॥ यः पित्तदोषेण कुरण्डरोगो भवेच्छिशोर्दक्षिणमुष्कभागे। तस्योर्ध्वभागं श्रवणस्य विध्येद्वामस्य वामप्रभवे परस्य ॥ १ ॥ अथैरण्डतैलादियोगः ॥ एरण्डतैलसंमिश्रं कासीसं सैन्धवं पिबेत्। वस्त्रेण वृषणं बद्धं कुरण्डज्वरनाशनम् ॥ १ ॥ अथेन्द्रवारुण्यादि ॥ इन्द्रवारुणिकामूलं तैलं पुष्करजं तथा। संमर्द्य च सगोदुग्धं पिबेज्जन्तुः कुरण्डजे ॥ १ ॥ अथ सैन्धवादिलेपः ॥ संचूर्णितं सैन्धवमाज्ययुक्तं संमर्द्य तोयस्थितमेव सोष्णम्। मुहुर्मुहुर्यः कुरुते प्रलेपं विलीयते तस्य कुरण्डरोगः ॥ १ ॥ इति सैन्धवादिलेपः ॥ गवां घृतेन संयुक्तं क्षिपेत्सैन्धवचूर्णकम्। पिबेत्सप्तदिनं यावत्तावल्लेपः कुरण्डजे ॥ १ ॥ तण्डुलवारिविमिश्रं घृतपुरसंज्ञं यदुच्यते लोके। तन्मूलपिष्टलेपं कुरण्डगलगण्डयोः कुर्यात् ॥ २ ॥ ईश्वरीमूलमेरण्डमूलं मूषकचर्म च। प्रलेपः स्यात्कुरण्डानां रोगविच्छेदकारकः ॥ ३ ॥ सुपेषितं ब्राह्मणयष्टिकायाः मूलं समं तण्डुलधावनेन। निहन्ति लेपाद् गलगण्डमालां कुरण्डमुख्यानखिलान् विकारान् ॥ ४ ॥ वातारितैलमृदितं सुरवारुणीजं मूलं नरः पिबति यो मसृणं विचूर्ण्य। गव्ये निधाय पयसि त्रिदिनावसाने तस्य प्रणश्यति कुरण्डकृतो विकारः ॥ ५ ॥ गोमूत्रसिद्धां रुबुतैलभृष्टां हरीतकीं सैन्धवचूर्णयुक्ताम्। खादेन्नरः कोष्णजलानुपानान्निहन्ति कुरण्डमतीव वृद्धम् ॥ ६ ॥ शम्बूकोदरनिहितं गव्यं सप्ताहमातपे सर्पिः। स्थितमपहरति कुरण्डं सैन्धवचूर्णान्वितं लेपात् ॥ ७ ॥ इति कुरण्डचिकित्सा ॥ अथ पथ्यापथ्यम् ॥ संशोधनं वस्तिरसृग्विमोक्षः स्वेदः प्रलेपोऽरुणशालयश्च। एरण्डतैलं सुरभीजलं च धन्वामिषं शिग्रुफलं पटोलम् ॥ १ ॥ पुनर्नवागोक्षुरकाग्निमन्थं ताम्बूलपथ्यारसनारसोनम्। वास्त्यकुनाग्रञ्जनकं मधूनि कौम्भं घृतं तप्तजलं च तक्रम् ॥ २ ॥ अर्धेन्दुवद्वङ्क्षणयोश्च दाहो व्यत्यासतो बाहुशिराव्यधश्च। यथामयं शस्त्रविधिश्च वर्गः स्याद्वर्ध्मवृद्ध्यामयिनां सुखाय ॥ ३ ॥ आनूपमांसानि दधीनि माषाः पिष्टानि दुष्टान्नमुपोदिका च। गुरूणि शुक्रोत्थित-

वेगरोधाः स्युर्वर्ध्मवृद्ध्यामयिनाममित्राः ॥ ४ ॥ अथ वृन्दात् । वेगाहार्ति पृष्ठयानं व्यायामं मैथुनं तथा । अत्याशनमथाध्वानमुपवासं परित्यजेत् ॥ १ ॥ इति मुष्कान्त्रवृद्धिवर्ध्मकुरण्डचिकित्सा ॥

---

## ॥ अथ गलगण्डगण्डमालापचीग्रन्थ्यर्बुदनिदानमाह ॥

अथ गलगण्डादिनिदानमाह । निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले । महान्वा यदि वा ह्रस्वो गलगण्डं तमादिशेत् ॥ १ ॥ अथोक्तं भोजेनापि । महान्तं शोथमल्पं वा हनुमन्यागलाश्रयम् । लम्बन्तं मुष्कवद् दृष्ट्वा गलगण्डं विनिर्दिशेत् ॥ १ ॥ अथ तस्य संप्राप्तिमाह ॥ वातः कफश्चापि गले प्रदुष्टो मन्ये तु संश्रित्य तथैव मेदः । कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः ॥ १ ॥ अथ तत्र वातिकमाह ॥ तोदान्वितः कृष्णशिरावनद्धः श्यावारुणो वा पवनात्मकस्तु । पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात्कदाचित् ॥ १ ॥ वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः ॥ १ ॥ अथ श्लैष्मिकमाह ॥ स्थिरः सवर्णो गुरुरुग्रकण्डूः शीतो महांश्चापि कफात्मकस्तु । चिराभिवृद्धिं भजते चिराद्वा प्रपच्यते मन्दरुजः कदाचित् ॥ माधुर्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रलेपः ॥ १ ॥ अथ मेदोजमाह ॥ स्निग्धो गुरुः पाण्डुरनिष्टगन्धो मेदोभवः कण्डुयुतोऽल्परुक्च । प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः ॥ १ ॥ स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेऽनुशब्दं कुरुतेऽतिमात्रम् ॥ अथासाध्यत्वमाह ॥ कृच्छ्राच्छ्वसन्तं मृदुसर्वगात्रं संवत्सरातीतमरोचकार्तम् । क्षीणं च वैद्यो गलगण्डयुक्तं भिन्नस्वरं चापि विवर्जयेद्धि ॥ १ ॥ अथ स्थानतुल्यतया गण्डमालामिहैवाह ॥ कर्कन्धुकोलामलकप्रमाणैः कक्षासमन्यागलवङ्क्षणेषु । मेदःकफाभ्यां चिरमन्दपाकैः स्याद्गण्डमाला बहुभिश्च गण्डैः ॥ १ ॥ यदाह भोजः ॥ वातपित्तकफा वृद्धा मेदश्चापि समन्वितम् । जङ्घयोः कण्डराः प्राप्य मत्स्याण्डसदृशान् बहून् ॥ १ ॥ कुर्वन्ति ग्रन्थींस्तांस्तेभ्यः पुनः प्रकुपितोऽनिलः । तान् दोषानूर्ध्वगो वक्षःकक्षामन्यागलाश्रितः ॥ २ ॥ नानाप्रकारान् कुरुते ग्रन्थीन् सात्वपची इव । अपची कण्ठमन्यासु कक्षावङ्क्षणसन्धिषु ॥ गण्डमालां विजानीयादपचीतुल्यलक्षणाम् ॥ ३ ॥ अथ गण्डमालातुल्यतया अपचीमाह ॥ ते ग्रन्थयः केचिदवाप्तपाकाः स्रवन्ति नश्यन्ति भवन्ति चान्ये । कालानुबन्धं चिरमादधाति सैवापचीति प्रवदन्ति केचित् ॥ १ ॥ तस्याः साध्यासाध्यत्वमाह ॥ साध्याः स्मृताः पीनसपार्श्वशूलकासज्वरच्छर्दियुतास्त्वसाध्याः ॥ १ ॥ अथापचीरूपगुणतया ग्रन्थिकामाह ॥ वातादयो मांसमसृक्प्रदुष्टाः संदूष्य मेदश्च तथा शिराश्च । वृत्तोन्नतं विग्रथितं तु शोथं कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥ १ ॥ अथ वातिकमाह ॥ आयम्यते वृश्चति तुद्यते च प्रत्यस्यते मथ्यति भिद्यते च । कृष्णो मृदुर्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥ १ ॥ अथ पैत्तिकमाह ॥

दन्दह्यते धूप्यति चूष्यते च पापच्यते प्रज्वलतीव चापि । रक्तः स पीतोऽप्यथ वापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम् ॥ १ ॥ अथ श्लैष्मिकमाह ॥ शीतो विवर्णोऽल्परुजोऽतिपाण्डुः पाषाणवत्संहननोपपन्नः । शिराभिवृद्धिश्च कफप्रकोपाद्भिन्नः स्रवेच्छुक्लघनं च पूयम् ॥ १ ॥ अथ मेदोजमाह ॥ शरीरवृद्धिः क्षयवृद्धिहानिःस्निग्धो महान् कण्डुयुतोऽल्परुक् च । मेदःकृतो गच्छति चात्र भिन्ने पिण्याकसर्पिःप्रतिमं च मेदः ॥ १ ॥ उक्तं च भोजेन ॥ मेदो वायुर्यदा मांसे निक्षिपेदथवा त्वचि । तत्र मेदोभवो ग्रन्थिः श्यावो भवति पाण्डुरः ॥ १ ॥ कृशः कृशे महान् स्थूले ग्रन्थिश्छिन्नश्च पीडितः । तिलकल्कनिभः स्रावो घृतवच्चास्य जायते ॥ २ ॥ अथ शिराजग्रन्थेः सम्प्राप्तिमाह ॥ व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुस्तु शिराप्रतानम् । सङ्कुच्य संपीड्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम् ॥ ग्रन्थिः शिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात्सरुजश्चलश्च ॥ १ ॥ अथ तस्यासाध्यत्वमाह ॥ स चारुजश्चाप्यचलो महांश्च मर्मास्थिजश्चापि विवर्जनीयः ॥ १ ॥ उक्तं भोजेन ॥ पञ्चैतानरुजो ग्रन्थीन् मर्मजानबलांस्त्यजेत् । कपोलगलमन्यासु दुश्चिकित्स्याश्च सन्धिषु ॥ १ ॥ अथार्बुदान्याह ॥ तस्य संप्राप्तिमाह ॥ गात्रप्रदेशे क्वचिदेव दोषाः समुत्थिताः मांसमसृक् प्रदूष्य । वृत्तं मृदुं मन्दरुजं महान्तमनल्पमूलं चिरवृद्धिपाकम् ॥ कुर्वन्ति मांसोच्छ्रयमत्यगाधं तदर्बुदं शास्त्रविदो वदन्ति ॥ १ ॥ अथ तस्य संख्यामाह ॥ वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा च । तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति ॥ १ ॥ अथ रक्तार्बुदमाह ॥ दोषाः प्रदुष्टा रुधिरं शिराश्च संकुच्य संपीड्य गतस्त्वपाकम् । सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशु वृद्धिम् ॥ १ ॥ कुर्वन्त्यजस्रं रुधिरप्रवृत्तिमसाध्यमेतद्रुधिरात्मकं तु । रक्तक्षयोपद्रवपीडितत्वात्पाण्डुर्भवेदर्बुदपीडितस्तु ॥ १ ॥ मांसजस्य सम्प्राप्तिमाह ॥ मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं जनयेत्तु शोथम् । अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम् ॥ प्रदुष्टमांसस्य नरस्य गाढमेतद्भवेन्मांसपरायणस्य ॥ १ ॥ अथास्यासाध्यत्वमाह ॥ मांसार्बुदं त्वेतदसाध्यमुक्तम् ॥ अस्य साध्येष्वप्यसाध्यान् प्रकारानाह ॥ साध्येष्वपीमानि विवर्जयेत्तु ॥ संप्रस्रुतं मर्मणि यच्च यातं स्रोतःसु वा यच्च भवेदचाल्यम् ॥ १ ॥ अध्यर्बुदलक्षणमाह ॥ यज्जायतेऽन्यत् खलु पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः । यद्द्वन्द्वजातं युगपत् क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम् ॥ १ ॥ उक्तं भोजेन ॥ अर्बुदे त्वर्बुदं जातं द्वन्द्वजं चानुजं च यत् । यद्विरर्बुदमिति ज्ञेयं तच्चासाध्यं विनिर्दिशेत् ॥१॥ अर्बुदानाम्पाकाभावे हेतुमाह ॥ न पाकमायान्ति कफाधिकत्वान्मेदोबहुत्वाच्च विशेषतस्तु । दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्वार्बुदान्येव निसर्गतस्तु ॥१॥ इति गलगण्डादिनिदानम् ॥

---

१ ( च० ) वृश्च्यते । २ ( च० कण्डूः । ३ ( क० ) प्यबलो । ४ ( च० ) सम्मूर्च्छिताः ( क० ) सन्दूषिताः । ५ ( च० ) स्थिरम् ।

## ॥ अथ गलगण्डचिकित्सा ॥

स्वेदोऽनिलोत्थे गलगण्ड आदौ नाड्यानिलघ्नौषधपत्रपिण्डैः । स्वेदोपनाहौ कफसंभवेऽपि कृत्वा क्रमं श्लेष्महरं विदध्यात् ॥ १ ॥ अथ वातगण्डे ॥ निचुलं शिग्रुमूलानि दशमूलमथापि च । आलेपनं वातगण्डे सुखोष्णं संप्रशस्यते ॥ १ ॥ ॥ अथ कफगण्डे ॥ देवदारु विशालां च कफगण्डे प्रलेपनम्। छर्दनं शीर्षरेकश्च सर्वो रेचनिको हितः ॥ १ ॥ अथ मेदोगण्डे॥ मेदःसमुत्थेऽत्र यथोपदिष्टां विध्येच्छिरां स्निग्धतनोर्नरस्य । श्यामासुधालोहपुरीषदन्तीरसाञ्जनैश्चापि हितः प्रलेपः ॥ १ ॥ ॥ अथ सामान्ययोगः ॥ तण्डुलोदकपिष्टेन मूलेन परिलेपितः । हितः कर्णे पलाशस्य गलगण्डः प्रशाम्यति ॥ १ ॥ जलकुम्भीकजं भस्म पक्त्वा गोमूत्रगालितम्। पिबेत्कोद्रवतक्राशी गलगण्डनिवृत्तये ॥ २ ॥ महिषीमूत्रविमिश्रं लोहमलं संस्थितं घटे मासम् । अन्तर्धूमविदग्धं मधुना गलगण्डनाशनं लीढम् ॥ ३ ॥ सूर्यावर्तरसोनाभ्यां गलगण्डोपनाहनम् । स्फोटास्रावैः शमं याति गलगण्डो न संशयः ॥ ४ ॥ सर्षपाः शिग्रुबीजानि शणबीजातसीयवाः । मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत् ॥ ५ ॥ गण्डानि ग्रन्थयश्चैव गण्डमालास्तथैव च । लेपनात्तेन शाम्यन्ति विलयं यान्ति वाचिरात्॥ ६ ॥ जीर्णकर्कारुकरसो बिडसैन्धवसंयुतः। नस्येन तरुणं हन्ति गलगण्डं न संशयः ॥ ७ ॥ श्वेतापराजितामूलं प्रातः पिष्ट्वा पिबेन्नरः । सर्पिषा नियताहारो गलगण्डप्रशान्तये ॥ ८ ॥ तिक्तालाबुफले पक्के सप्ताहमुषितं जलम् । गलगण्डं निहन्त्याशु पानात्पथ्यानुशीलिनः ॥ ९ ॥ अथामृतादितैलम् ॥ तैलं पिबेच्चामृतवल्लिहिङ्गुनिम्बाभयावृक्षकपिप्पलीभिः । सिद्धं बलाभ्यां च सदेवदारु हिताय नित्यं गलगण्डरोगे ॥ १ ॥ अथ तुम्बीतैलम् ॥ विडङ्गक्षारसिन्धूग्रारास्नाग्निव्योषदारुभिः । कटुतुम्बीफलरसैः कटुतैलं विपाचितम् ॥ चिरोत्थमपि नस्येन गलगण्डं विनाशयेत् ॥१॥ अथ वेधविधिः॥ जिह्वाधः पार्श्वयोर्मूलाच्छिरा द्वादश कीर्तिताः । तासां स्थूले शिरे द्वे च च्छिन्द्यात्ते च शनैः शनैः ॥ १॥ बडिशेनैव संगृह्य कुशपत्रेण बुद्धिमान् । स्रुते रक्ते व्रणे तस्मिन् दद्यात्सगुडमार्द्रकम् ॥ २ ॥ भोजनं चानभिष्यन्दि यूषः कौलत्थ इष्यते । यवमुद्गपटोलादि कटुरूक्षं तु भोजनम् ॥ छर्दिं च रक्तमुक्तिं च गलगण्डे प्रयोजयेत् ॥ ३ ॥ इति गलगण्डचिकित्सा ॥

## ॥ अथ गण्डमालापचीचिकित्सा ॥

ब्रह्मदण्डीयमूलं तु पिष्टं तण्डुलवारिणा । स्फुटितां हन्ति लेपेन गण्डमालां न संशयः ॥१॥ निजद्रवेण संपिष्टं मुण्डीमूलं प्रलेपयेत्। गण्डमाला क्षयं याति तद्द्रवं च पिबेत्पलम् ॥ २ ॥ काञ्चनारत्वचः क्वाथः शुण्ठीचूर्णेन नाशयेत्। गण्डमालां तथा क्वाथः क्षौद्रेण वरुणत्वचः ॥ ३ ॥ जलेन पेषयेत्तुल्यं काञ्चनीचित्रकं विषम् । सप्ताहं लेपयेद्यस्य यदि स्याद्गण्डमालिका ॥ स्फुटन्ती नात्र सन्देहोऽस्फोटे लेपमिमं कुरु ॥ ४ ॥ आरग्वधशिफां पिष्ट्वा सम्यक् तण्डुलवारिणा । तेन नस्यप्रलेपाभ्यां गण्ड-

मालां समुद्धरेत् ॥ ५ ॥ अथ त्रिफलाद्यो गुग्गुलुः ॥ षट्पलं त्रिकटु ज्ञेयं त्रिफला- त्र पलद्वयम् । काञ्चनारत्वचाचूर्णं योजयेद्द्वादशं पलम् ॥ १ ॥ गुग्गुलुः सर्वतुल्यः स्यात्सर्वमेकत्र कुट्टयेत् । क्षौद्रं पलशतं देयं गुटिकां कर्षसंमिताम् ॥ भक्षयेद्गण्डमा- लार्तो गलग्रन्थिं च नाशयेत् ॥ २ ॥ अथ काञ्चनारगुग्गुलुः ॥ पलानां दशकं ग्राह्यं काञ्चनारत्वचो बुधैः । षट्पला त्रिफला ग्राह्या व्योषं ग्राह्यं पलत्रयम् ॥ १ ॥ पलैकं वरुणस्यापि त्वगेलापत्रकं तथा । कर्षकर्षमितं ग्राह्यं सर्वाण्येकत्र चूर्णयेत् ॥ २ ॥ सर्वं चूर्णमिदं यावत्तावन्मात्रस्तु गुग्गुलुः । संमर्द्य गुटिकाः कार्याः शाणमात्रास्ततो बुधः ॥३॥ एकैकां भक्षयेत्प्रातर्बुद्धिमांश्च सदा नरः । गण्डमालां जयेदुग्रामपचीमर्बुदानि च ॥४॥ ग्रन्थीन्नृणां सगुल्मांश्च कुष्ठानि च भगन्दरम् । अनुपाने प्रयोक्तव्यः क्वाथो मुण्डीसमु- द्भवः ॥ क्वाथो वा खदिरस्याथ पथ्याक्वाथोऽथ चाल्पकः ॥५॥ अथाजमोदादितैलम् ॥ अ- जमोदा च सिन्दूरं हरितालं निशाद्वयम् । क्षारद्वयं फेनयुतं सार्धकं सरलोद्भवम् ॥ १ ॥ इन्द्रवारुण्यपामार्गकदलीकन्दकैः समैः । एभिः सार्षपकं तैलमजामूत्राष्टयोजितम् ॥२॥ मृद्वग्नौ पाचयेदेतत्स्नुह्यर्कक्षीरसंयुतम् । अजमोदादिकं तैलं गण्डमालां व्यपोहति ॥ ३ ॥ आमां विदग्ध्वा तु पचेत्पक्वां चैव विशोधयेत् । रोपणं मृदुभावं च तैलेनानेन कारयेत् ॥ ४ ॥ अथ निर्गुण्डीतैलम् ॥ निर्गुण्डीस्वरसेनाथ लाङ्गलीमूलकल्कितम् । तैलं नस्येन हन्त्याशु गण्डमालां सुदुस्तराम् ॥१॥ अथ छुच्छुन्दरीतैलम् ॥ छुच्छु- न्दर्या विपक्वं तु क्षणात्तैलवरं ध्रुवम् । अभ्यङ्गान्नाशयेन्नॄणां गण्डमालां सुदारुणाम् ॥ १ ॥ अथ गुञ्जातैलम् ॥ गुञ्जामूलफलैस्तैलं तोयद्विगुणितं पचेत् । तस्याभ्यङ्गेन शमयेद्गण्डमालां सुदारुणाम् ॥ १ ॥ अथ गन्धकादियोगः ॥ गन्धकं टङ्कणं सिन्धु- काञ्चनीनवसारकम् । सौवर्चलं यवक्षारं काचं रक्तं सुवर्चलम् ॥ १ ॥ सितं रक्तं च पाषाणं मूषकोत्थं नियोजयेत् । जेपालबीजमज्जा च सर्वं जम्बीरपीडितम् ॥ २ ॥ शस्त्रैश्छित्त्वा प्रदातव्यं वेष्टयेदेरण्डपत्रकैः । एवं त्र्यहात्स्फुटन्त्यत्र दध्यन्नं बन्धये- त्ततः ॥ ३ ॥ गण्डमालाग्रन्थ्यपच्यो बहिर्निर्यान्ति नान्यथा । अभिमन्त्र्य सितं सायं रवौ प्रातः समाहरेत् ॥ ४ ॥ पेटारीमूलकं धूपैर्धूपयित्वाथ खण्डयेत् । च- तुर्दशगुणैः सूत्रैर्बद्ध्वा ग्रन्थिं गले स्थितम् ॥ ५ ॥ मन्त्रः ॐ गुडं प्रसाहि तिरि तिरि चित्रपुटक भुगनाङ्कते पापटगालापरदशमूलवासुकालदेपालरेदं गुरुप्रसादात् ॥ ॥ अथ गन्धकादिलेपः ॥ गन्धकं सूतकं तुल्यमर्कक्षीरं ससैन्धवम् । पिष्ट्वा च का- ञ्चनीमूलं लेपोऽयं गण्डमालिके ॥ १ ॥ अथ जेपालपत्रवटी ॥ पिष्ट्वा जेपालप- त्राणि स्वरसेन ततो वटी । छायाशुष्का ततो लेपाद्गण्डमाला विनश्यति ॥ १ ॥ ॥ अथ भल्लातकादिलेपः ॥ भल्लातकासीसहुताशदन्तीमूलं गुडस्नुग्रविदुग्धदिग्धैः । लेपान्निवर्गच्छति गण्डमाला समीरवेगादिव मेघमाला ॥ १ ॥ अथ गण्डमालाक- ण्डनो रसः ॥ कर्षसूतं शुद्धमस्य गन्धकं त्वर्धयुत्तमम् । सार्धकर्षं ताम्रभस्म मृतं कि- ट्टं त्रिकर्षकम् ॥ १ ॥ व्योषं षट्कर्षतुलितमक्षार्धं सैन्धवं सितम् । काञ्चनारत्वच-

१ (ख० ग०) पालदेरम् । (ङ०) पालदेदम् ।

श्चूर्णं पलत्रयमितं क्षिपेत् ॥ २ ॥ पलत्रयं गुग्गुलोश्च शुद्धस्य. समुपाहरेत् । एतच्चुक्त्या तु संमेल्य दृढं सुरभिसर्पिषा ॥ ३ ॥ गण्डमालाकण्डनोऽयं रसो माषत्रयात्मकः । भुक्तो निहन्ति गण्डानि गण्डमालां च दारुणाम् ॥ ४ ॥ इति गण्डमालाचिकित्सा ॥ अथापचीचिकित्सा ॥ अलम्बुषायाः स्वरसः पीतो द्विपलमात्रया । अपचीगण्डमालानां कामलायाश्च नाशनः ॥ १ ॥ नवकार्पासिकामूलं तण्डुलैः सह योजितम् । पक्त्वा च पोलिकां खादेदपचीनाशनाय च ॥ २ ॥ सौभाञ्जनं देवदारु काञ्जिकेन तु पेषितम् । कोष्णं प्रलेपतो हन्यादपचीमतिदुस्तराम् ॥ ३ ॥ सर्षपारिष्टपत्राणि दन्त्या भल्लातकैः सह । छागमूत्रेण संपिष्टमपचीघ्नं विलेपनम् ॥ ४ ॥ अश्वत्थकाष्ठनिचुलं गवां दन्तं च दाहयेत् । वराहमज्जसंयुक्तं भस्म हन्त्यपचीव्रणान् ॥ ५ ॥ मणिबन्धोपरिष्टाद्वा कुर्याद्रक्षात्रयं भिषक् । अङ्गुलान्तरितं सम्यगपचीविनिवृत्तये ॥ ६ ॥ अथ चन्दनादि तैलम् ॥ चन्दनं साभया लाक्षा वचा कटुकरोहिणी । एतत्तैलं शृतं पीतं समूलामपचीं जयेत् ॥ १ ॥ अथ व्योषाद्यं तैलम् ॥ व्योषं विडङ्गं मधुकं सैन्धवं देवदारु च । तैलमेभिः शृतं नस्यात्कृच्छ्रामप्यपचीं जयेत् ॥ १ ॥ इत्यपचीचिकित्सा ॥ इति गण्डमालापचीचिकित्सा ॥

## ॥ अथ ग्रन्थिचिकित्सा ॥

ग्रन्थिष्वामेषु कुर्वीत भिषक् शोथप्रतिक्रियाम् । पक्वानापाट्य संशोध्य रोपयेद्व्रणभेषजैः ॥ १ ॥ हिंस्रा सरोहिण्यमृताथ भार्गी स्योनाकबिल्वागुरुकृष्णगन्धा । गोमूत्रपिष्टाः सह तालपत्र्या ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥ २ ॥ जलायुकाः पित्तकृते हिताः स्युः क्षीरोदकाभ्यां परिषेचनं च । द्राक्षारसेनेक्षुरसेन चापि चूर्णं पिबेद्वापि हरीतकीनाम् ॥ ३ ॥ मधूकजम्ब्वार्जुनवेतसानां त्वग्भिः प्रदेहानवचारयेच्च । हृतेषु दोषेषु यथानुपूर्वं ग्रन्थेर्भिषक् श्लेष्मसमुत्थितेषु ॥ ४ ॥ अमर्मजातं शममप्रयातं तत्पक्वमेवापहरेद्विचार्य । देहस्थिते वाससि सिद्धकर्म सद्यः क्षतोक्तं च विधिं विदध्यात् ॥ ५ ॥ शस्त्रेण चोत्कृत्य सुपक्वमाशु प्रक्षालयेत्पथ्यतमैः कषायैः । संशोधनैस्तं च विशोधयेत्तु क्षारोत्तरैः क्षौद्रघृतप्रगाढैः ॥ ६ ॥ सिञ्चेच्च तैलं त्वपचारणीयं विडङ्गपाठारजनीविपक्वम् । मेदःसमुत्थे तिलकल्कदिग्धैः कृत्वोपरिष्टाद्द्विगुणं पटान्तम् ॥ ७ ॥ हुताशतप्तेन मुहुः प्रमृज्याल्लोहेन धीमान्न च वर्धिताय । प्रलिप्तदर्व्या त्वथ लाक्षया वा प्रतप्तयाश्च्योतनमस्य कार्यम् ॥ ८ ॥ निपात्य वा शस्त्रमपोह्य मेदो दहेत्सुपक्वं त्वथ वा विदार्य । प्रक्षाल्य मूत्रेण तिलैः सुपिष्टैः सुवर्चलाद्यैर्हरितालमिश्रैः ॥ ९ ॥ ससैन्धवैः क्षारघृतप्रगाढैः क्षारोत्तरैरेनमभिप्रशोध्य । तैलं विदध्याद्द्विकरञ्जगुञ्जावंशावलेष्विङ्गुदमूत्रसिद्धम् ॥१०॥ इति राजमार्तण्डात् ॥ विष्णुक्रान्ता च पेटारी काञ्जिकेन सुपेषिता । कालस्फोटं हरेल्लेपाद्दुष्टग्रन्थिषु का कथा ॥ १ ॥

१ ( ख० ग० ङ० ) वंशावलोषि । ( घ० ) वंशावदोषि ।

पुत्रजीवस्य मज्जानं जले पिष्ट्वा प्रलेपयेत् । कालस्फोटं विषस्फोटं सद्यो हन्यात्सवेदनम् ॥ २ ॥ कक्षाग्रन्थिं कर्णग्रन्थिं गलग्रन्थिं च नाशयेत् । राजिकालशुनं पेष्यं लेपो हृद्गलग्रन्थिकाः ॥ गन्धोऽर्कदुग्धतालेन जेपालेन च नाशयेत् ॥ ३ ॥ इति ग्रन्थिचिकित्सा ॥

## ॥ अथार्बुदचिकित्सा ॥

ग्रन्थ्यर्बुदानां न यतो विशेषः प्रदेशहेत्वाकृतिदोषदूष्यैः । ततश्चिकित्सेद् भिषगर्बुदानि विधानविद् ग्रन्थिचिकित्सितेन ॥ १ ॥ वातार्बुदं क्षीरघृताम्लसिद्धैरुष्णैः सतैलैरुपनाहयेत्तु । कुर्यात्तु मुख्यान्युपनाहनानि सिद्धैश्च मांसैरथ वेसवारैः ॥ २ ॥ स्वेदं विदध्यात्कुशलश्च नाड्या शृङ्गेण रक्तं बहुशो हरेच्च । वातघ्ननिर्यूहपयोऽम्लभागैः सिद्धां शताह्वां त्रिवृतां पिबेद्वा ॥ ३ ॥ स्नेहोपनाहा मृदवस्तु पथ्याः पित्तार्बुदे क्काथविरेचनं च । विकृष्य सौदुम्बरशाकगोजीपत्त्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत् ॥ ४ ॥ शुद्धस्य जन्तोः कफजेऽर्बुदे च रक्ते च सिक्ते स्रवतोऽर्बुदं यत् । मेदःकृते मांसकृतेऽपि कार्यं व्रणोदितं सर्वचिकित्सितं च ॥५॥ इति राजमार्तण्डात् ॥ लिप्तं यवक्षारविडङ्गबीजं गन्धोपलैः स्यान्मसृणीकृतैर्यत् । रक्तेन मिश्रैः सरटस्य सद्यस्तदर्बुदं शाम्यति नान्यथैतत् ॥ १ ॥ उपोदकरसाभ्यक्ता तत्पत्रपरिवेष्टिता । प्रणश्यत्यचिरान्नृणां पिटिकार्बुदजातयः ॥ २ ॥ उपोदिका काञ्जिकतक्रपिष्टा तयोपनाहो लवणेन सार्धम् । दृष्टोऽर्बुदानां प्रशमाय कैश्चिद्दिने दिने रात्रिषु मर्मजानाम् ॥ ३ ॥ गन्धशिलाविश्वौषधविडङ्गनागभस्मभिः समैश्चूर्णम् । कृकलासरक्तयुक्तं लेपात्सद्योऽर्बुदध्वंसि ॥ ४ ॥ स्नुहीगण्डीरिकास्वेदो नाशयेदर्बुदानि च । लवणेनाथ वा स्वेदः सीसकेन तथैव च ॥ ५ ॥ हरिद्रालोध्रपत्तङ्गगुडधूमो मनःशिला । मधुप्रगाढो लेपोऽयं मेदोऽर्बुदहरः परः ॥ एतामेव क्रियां कुर्यादशेषां शर्करार्बुदे ॥ ६ ॥ अथ पथ्यापथ्यम् ॥ पुराणघृतपानं च जीर्णलोहितशालयः । यवा मुद्गाः पटोलं च रक्तशिग्रुः कटिल्लकम् ॥ १ ॥ शालिं च शाकं वेत्राग्रं रूक्षाणि च कटूनि च । दीपनानि च सर्वाणि गुग्गुलुश्च शिलाजतु ॥ २ ॥ गलगण्डे गण्डमालापचीग्रन्थ्यर्बुदान्तरे । यथादोषं यथावस्थं पथ्यमेतत्प्रकीर्तितम् ॥ ३ ॥ दुग्धेक्षुविकृतीः सर्वा मांसं चानूपसंभवम् । पिष्टान्नमम्लं मधुरं गुर्वभिष्यन्दकारि च ॥ ४ ॥ गलगण्डं गण्डमालापचीग्रन्थ्यर्बुदामयान् । चिकित्सन्नगदङ्कारो यशोऽर्थी परिवर्जयेत् ॥ ५ ॥ इत्यर्बुदचिकित्सा ॥

---

## ॥ अथ श्लीपदनिदानम् ॥

मेदोमांसाश्रयं शोफं पादयोः श्लीपदं वदेत् । स्वलिङ्गदर्शिभिर्दोषैस्त्रेधा स्याच्च कफोत्तरम् ॥ १ ॥ अथ तस्य संप्राप्तिमाह ॥ यः सज्वरो वङ्क्षणजो भृशार्तिः शोफो

१ ( ख० ग० ) मज्जाया जलम् । ( घ० ङ० ) मज्जाया जले ।

नृणां पादगतः क्रमेण । तच्छ्लीपदं स्यात्करकर्णनेत्रशिश्नोष्ठनासास्वपि केचिदाहुः ॥ १ ॥ अथ वातजमाह ॥ वातजं कृष्णरूक्षं तु स्फुटितं तीव्रवेदनम् । अनिमित्तरुजं तस्य बहुशो ज्वर एव च ॥ १ ॥ अथ पित्तजमाह ॥ पित्तजं पीतसंकाशं दाहज्वरयुतं मृदु ॥१॥ अथ श्लेष्मजमाह ॥ श्लैष्मिकं स्निग्धवर्णं च श्वेतं पाण्डुगुरुस्थिरम् ॥ १ ॥ अथैषामसाध्यत्वमाह ॥ वल्मीकमिव संजातं कण्टकैरिव संचितम् । सर्वात्मकं महत्तच्च वर्जनीयं विशेषतः ॥ १ ॥ अथ श्लीपदे कफस्याव्यभिचारेण प्राधान्यमाह ॥ त्रीण्येतानि विजानीयाच्छ्लीपदानि कफोच्छ्रयात् । गुरुत्वं च महत्त्वं च यस्मान्नास्ति कफाद्विना ॥ १ ॥ अथ श्लीपदसंभवे हेतुनिर्देशमाह ॥ पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः । ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ १ ॥ अथ पुनरसाध्यत्वमाह ॥ यच्छ्लेष्मलाहारविहारजातं पुंसः प्रकृत्या च कफात्मकस्य । सस्रावमत्युन्नतसर्वलिङ्गं सकण्डुरं श्लेष्मयुतं विवर्ज्यम् ॥ १ ॥ इति श्लीपदनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

लङ्घनालेपनस्वेदरेचनै रक्तसेचनैः । प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥ १ ॥ स्नेहस्वेदोपनाहांश्च श्लीपदेऽनिलजे भिषक् । कृत्वा गुल्फोपरि शिरां विधेत्तु चतुरङ्गुले ॥ २ ॥ गुल्फस्याधः शिरां विध्येच्छ्लीपदे पित्तसंभवे । पित्तघ्नीं च क्रियां कुर्यात्पित्तार्बुदविसर्पवत् ॥ ३ ॥ मञ्जिष्ठामधुकं रास्नामहिंस्रां सपुनर्नवाम् । पिष्ट्वारनालैर्लेपोऽयं पित्तश्लीपदशान्तये ॥ शिरासु विदितां विध्येदङ्गुष्ठे श्लेष्मश्लीपदे ॥ ४ ॥ सिद्धार्थसौभाञ्जनदेवदारुविश्वौषधैर्मूत्रयुतैः प्रलेपयेत् । पुनर्नवानागरसर्षपाणां कल्केन वा काञ्जिकमिश्रितेन ॥ ५ ॥ धत्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ॥ ६ ॥ प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् । हितश्च लेपने नित्यं चित्रको देवदारु च ॥७॥ सिद्धार्थशिग्रुकल्को वा सुखोष्णो मूत्रपेषितः । प्रपिबेद्वाभयाकल्कं मूत्रेणान्यतमेन वा ॥ ८ ॥ पिबेदेवं गुडूचीं च नागरं भद्रदारु वा । पिबेत्सर्षपतैलेन श्लीपदानां निवृत्तये ॥ ९ ॥ पूतीकरञ्जच्छदजं रसं वापि यथाबलम् । अनेनैव विधानेन पुत्रजीवकजं रसम् ॥ प्रयुञ्जीत भिषक् प्राज्ञः कालसात्म्यविभागतः ॥१०॥ पलाशमूलस्वरसं पिबेद्वा तैलेन तुल्यं सितसर्षपाणाम् । मूत्रेण पथ्यामरदारुविश्वं सगुग्गुलुं श्लीपदिभिर्निषेव्यम् ॥ ११ ॥ वृद्धदारवचूर्णं वा मूत्रसौवीरकादिभिः । शीलितं श्लीपदं हन्ति कृच्छ्रं संवत्सरोषितम् ॥ १२ ॥ अथ पिप्पल्यादिचूर्णम् ॥ पिप्पलीत्रिफलादार्वीनागरं सपुनर्नवम् । भागैर्द्विपलिकैस्तेषां तत्समं वृद्धदारकम् ॥ १ ॥ काञ्जिकेन तु तच्चूर्णं पिबेत्कर्षप्रमाणतः । जीर्णे वा परिहीनं स्याद्भोजनं सर्वकामिकम् ॥ २ ॥ श्लीपदं वातरोगांश्च प्लीहगुल्ममरोचकम् । अग्निं च कुरुते घोरं भस्मकं च प्रयच्छति ॥ ३ ॥ अथ कृष्णाद्यो मोदकः ॥ कृष्णाचित्रकदन्तीनां कर्षमर्धपलं पलम् । विंशतिश्च हरीतक्यो गुडस्य च पलद्वयम् । मधुना सह संयुक्तं श्लीपदं हन्ति दारुणम् ॥ १ ॥ अथ विडङ्गादितैलम् ॥ विडङ्गसारिवार्केषु नागरे चित्रके तथा । भद्रदार्वेलुका-

ल्येषु सर्वेषु लवणेषु च ॥ तैलं पक्वं पिबेद्वापि श्लीपदानां निवृत्तये ॥ १ ॥ अथ सौरेश्वरघृतम् ॥ सुरसा देवकाष्ठं च त्रिफला त्रिकटुर्गजा । लवणानि च सर्वाणि विडङ्गान्यथ चित्रकम् ॥ १ ॥ चविका पिप्पलीमूलं गुग्गुलं हपुषा वचा । यवाग्रजः सपाठश्च सव्येलं वृद्धदारकः ॥ २ ॥ कल्कैश्च कार्षिकैरेभिर्घृतप्रस्थं विपाचयेत् । दशमूलकषायेण धान्ययूषद्रवेण च ॥ ३ ॥ दधिमण्डसमायुक्तं प्रस्थं प्रस्थं पृथक् पृथक् । पक्वं स्यादुद्धृतं कल्कात्पिबेत्कर्षत्रयं हविः ॥ ४ ॥ श्लीपदं कफवातोत्थं मांसरक्ताश्रितं च यत् । मेदःश्रिताभिघातोत्थं हन्यादेव न संशयः ॥ ५ ॥ अपचीगलगण्डानि अन्त्रवृद्धिं तथार्बुदम् । नाशयेद् ग्रहणीदोषं श्वयथुं गुदजान्यपि ॥ ६ ॥ परमग्निकरं हृद्यं कोष्ठक्रिमिविनाशनम् । घृतं सौरेश्वरं नाम श्लीपदं हन्ति सेवितम् ॥ ७ ॥ जीवकेन घृतं ह्येतद्रोगानीकविनाशनम् । यवान्नं कूर्ममांसं च कटुतैलं च योजयेत् ॥ श्लीपदानां प्रशान्त्यर्थं मांसान्तं दाहमग्निना ॥ ८ ॥ गन्धर्वतैलभृष्टां हरीतकीं गोजलेन यः पिबति । श्लीपदबन्धनमुक्तो भवत्यसौ सप्तरात्रेण ॥ ९ ॥ अथ गुडूच्यादिलेपः ॥ गुडूचीकटुकाशुण्ठीदेवदारुविडङ्गकम् । पिष्ट्वा गोमूत्रसंयुक्तं लेपाच्छ्लीपदनाशनम् ॥१॥ अथ धान्याम्लादि ॥ धान्याम्लं तैलसंयुक्तं कफवातविनाशनम् । दीपनं चामदोषघ्नं मेदःश्लीपदनाशनम् ॥१॥ पिण्डारकतरुसंभवबन्धूकशिफा जयति सर्पिषा पीता । श्लीपदमुग्रं नियतं बद्धा सूत्रेण जङ्घायाम् ॥ २ ॥ संपिष्टमारनालेन रुयिकामूलवल्कलम् । प्रलेपाच्छ्लीपदं हन्ति बद्धमूलमपि दृढम् ॥३॥ यवान्नं कटुतैलं च कूर्ममांसं च योजयेत् । श्लीपदानां प्रशान्त्यर्थं मांसान्ते दाहमग्निना ॥ ४ ॥ पादकण्डूहरं कुर्यान्नवनीतेन माक्षिकम् । पाददाहहरं खादेत्तिलाद्विगुणबाकुचेः । चूर्णं तु मधुसर्पिर्भ्यां कर्षमार्तिप्रशान्तये ॥ ५ ॥ अथ पथ्यापथ्यम् ॥ पुरातनाः षष्टिकशालयश्च यवाः कुलत्थाः लशुनं पटोलम् । वार्ताकसौभाञ्जनकारवेल्लं पुनर्नवामूलमुपोदिका च ॥ १ ॥ एरण्डतैलं सुरभीजलं च कटूनि तिक्तानि च दीपनानि । एतानि पथ्यानि भवन्ति पुंसां रोगे सति श्लीपदनामधेये ॥ २ ॥ पिष्टान्नं दुग्धविकृतिं गुडमानूपमामिषम् । स्वाद्वम्लं पारियात्रं च सिन्धुविन्ध्यनदीजलम् ॥ पिच्छिलं गुर्वभिष्यन्दि श्लीपदी परिवर्जयेत् ॥ ३ ॥ इति श्लीपदरोगचिकित्सा ॥

## ॥ अथ विद्रधिनिदानम् ॥

तस्य संप्राप्तिमाह ॥ त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः । दोषाः शोफं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥१॥ तत्संख्यालक्षणे आह ॥ महामूलं रुजावन्तं वृत्तं वाप्यथ वायतम् । स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः ॥ १ ॥ पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा । षण्णामपि च तेषां तु लक्षणं च प्रचक्षते ॥ २ ॥ अथ वातिकमाह ॥ कृष्णोऽरुणो वा विषमो भृशमत्यर्थवेदनः । चित्रोत्थान[1]प्रपाकश्च विद्रधिर्वातसंभवः ॥१॥ अथ पैत्तिकमाह ॥ पक्वोदुम्बरसंकाशः पीतो वा ज्वरदाहवान् । क्षि-

१ ( उ० ) चिरोत्थानं विपाकश्च ।

घ्रोत्थानप्रपाकश्च विद्रधिः पित्तसंभवः ॥१॥ अथ श्लेष्मजमाह ॥ शरावसदृशः पाण्डुः शीतः स्निग्धोऽल्पवेदनः। चिरोत्थानप्रपाकश्च विद्रधिः कफसंभवः ॥ १ ॥ अथ सांनिपातिकमाह ॥ तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः। नानावर्णरुजास्रावो घाटालो विषमो महान् ॥ विषमं पच्यते चापि विद्रधिः सान्निपातिकः ॥१॥ अथाभिघातसम्प्राप्तिमाह ॥ तैस्तैर्भावैरभिहते क्षते वा पथ्यकारिणः। क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ॥ १ ॥ ज्वरस्तृष्णा च दाहश्च जायन्ते तस्य देहिनः। आगन्तुर्विद्रधिर्ह्येष पित्तविद्रधिलक्षणः ॥१॥ अथ रक्तजमाह ॥ कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरैः ॥ पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥१॥ उक्ता विद्रधयो ह्येते तेष्वसाध्यस्तु सर्वजः ॥ अभ्यन्तरविद्रधिकारणमाह ॥ अभ्यन्तरानतस्तूर्ध्वं विद्रधीन्संप्रचक्षते। गुर्वसात्म्यविरुद्धान्नशुष्कसंसृष्टभोजनात् ॥१॥ अतिव्यवायव्यायामवेगाघातविदाहिभिः। पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम् ॥ वल्मीकवत्समुन्नद्धमन्तः कुर्वन्ति विद्रधिम् ॥२॥ अथ संस्थानमाह ॥ गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा। वृक्कयोः प्लीह्नि यकृति क्लोम्नि वाप्यथवा हृदि ॥ १ ॥ अथैषां लक्षणम् ॥ एवमुक्तानि लिङ्गानि बाह्यविद्रधिलक्षणैः। अधिष्ठानविशेषेण लक्षणानि निबोध मे ॥ १ ॥ गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता। नाभ्यां हिध्मा तु साटोपः कुक्षौ मारुतकोपनम् ॥ २ ॥ कटीपृष्ठग्रहस्तीव्रो वङ्क्षणस्थे तु विद्रधौ। वृक्कयोः पार्श्वसंकोचः प्लीह्नि श्वासनिरोधनम् ॥ ३ ॥ सर्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते। श्वासो यकृति हिक्का च पिपासा क्लोमजेऽधिका ॥४॥ अथ स्रावनिर्गममाह ॥ नाभेरुपरिजाः पक्वा यान्त्यूर्ध्वमितरे त्वधः। अधःस्रुतेषु जीवेत्तु स्रुतेषूर्ध्वं न जीवति ॥ १ ॥ उक्तं हारीतेन। ऊर्ध्वं प्रपन्नेषु सुखं नराणां प्रवर्ततेऽसृक्सहितो हि पूर्वः। अधः प्रपन्नेषु च पायुमार्गाद् द्वाभ्याम् प्रवृत्तिस्त्विह नाभिजे च ॥ १ ॥ अथ स्रावविषयं साध्यासाध्यमाह ॥ हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु बाह्यतः। जीवेत्कदाचित्पुरुषो नेतरेषु कदाचन ॥ १ ॥ अथोक्तं भोजेन ॥ असाध्यो मर्मजो ज्ञेयः पक्वोऽपक्वश्च विद्रधिः। सन्निपातोत्थितोऽप्येवं पक्व एव तु वस्तिजः ॥१॥ त्वग्जो नाभेरधो यश्च साध्यो मर्मसमीपजः। अपक्वश्चैव पक्वश्च साध्यो नोपरि नाभिजः ॥२॥ पुनः साध्यासाध्यत्वमाह ॥ साध्या विद्रधयः पञ्च विवर्ज्यः सान्निपातिकः। आमपक्वविदग्धत्वं तेषां शोथवदादिशेत् ॥ १ ॥ अथ तेषामभ्यन्तरेष्वसाध्यमाह ॥ आध्मानबद्धनिष्यन्दं छर्दिहिक्कातृषान्वितम्। रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम् ॥ १ ॥ आमो वा यदि वा पक्वो महान्वा यदि वेतरः। सर्वो मर्मोत्थितत्वात्तु विद्रधिः कष्ट उच्यते ॥ २ ॥ हृन्नाभिवस्तिजः पक्वो वर्ज्यो यश्च त्रिदोषजः। मुष्टिप्रमाणो गुल्मस्तु विद्रधिस्तु ततः परम् ॥ ३ ॥ गुल्मस्तिष्ठति कोष्ठेषु विद्रधिर्मांसशोणिते। विद्रधिः पच्यते यस्माद् गुल्मश्चात्र न पच्यते ॥४॥ इति विद्रधिनिदानम् ॥ अथ स्तनविद्रधिनिदानम् ॥ पवनेन स्तनशिराः संवृता वाथ योषिताम्। सूतानां गर्भिणीनां च संभवेच्छ्वयथुर्घनः ॥१॥ स्तनः स्त्रियाः सदुग्धो वा बाह्यविद्रधिलक्षणः। नाडीनां सूक्ष्मवक्त्रत्वात्कन्यानां न सजायते ॥ २ ॥ इति स्तनविद्रधिनिदानम् ॥

## ॥ अथातो विद्रधिचिकित्सां व्याख्यास्यामः ॥

रसालफलतुल्यो यः शोफो बाह्योऽथ वान्तरः । पृथग् दाहरुजानाहकारको विद्रधिः स्मृतः ॥ १ ॥ जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ । मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥२॥ अथ वातविद्रधौ ॥ व्याघ्रीमूलककल्कैस्तु वसातैलघृतान्वितैः । सुखोष्णो बहुलो लेपः प्रयोज्यो वातविद्रधौ ॥ १ ॥ स्वेदोपनाहाः कर्तव्याः शिग्रुमूलसमन्विताः । पुनर्नवादारुविश्वदशमूलाभयाम्भसा ॥ गुग्गुल्वेरण्डतैलं वा पिबेन्मारुतविद्रधौ ॥ २ ॥ अथ पित्तविद्रधौ ॥ पैत्तिके सारिवालाजामधुकैः शर्करायुतैः । प्रदिह्यात्क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥ १ ॥ पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम् । पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ॥ २ ॥ अथ श्लेष्मविद्रधौ ॥ त्रिफलाशिग्रुवरुणदशमूलाम्भसा पिबेत् । गुग्गुलं मूत्रसंयुक्तं विद्रधौ कफसंभवे ॥१॥ इष्टकासिकतालोहाखशकृत्तुषपांशुभिः । मूत्रैरुष्णैश्च सततं स्वेदयेच्छ्लेष्मविद्रधौ ॥ २ ॥ अथ रक्तागन्तुजौ ॥ विद्रधौ कुशलः कुर्याद्रक्तागन्तुनिमित्तजे । पित्तविद्रधिवत्कुर्यात् क्रियां निरवशेषितः ॥ १ ॥ अथ सामान्यविधिः ॥ शिग्रुदीप्यवरुणद्वियामिनीकुञ्जराशनकृतः कषायकः । बोलचूर्णसहितोऽन्तरस्थितं विद्रधिं प्रशमयेदसंशयम् ॥ १ ॥ इति सोभाञ्जनादिक्वाथः ॥ अथ वरुणादिक्वाथः ॥ कासीससैन्धवशिलाजतुहिङ्गुचूर्णमिश्रीकृतो वरुणवल्कलजः कषायः । अभ्यन्तरोत्थितमपक्वमतिप्रमाणं नृणामयं जयति विद्रधिमुग्रशोफम् ॥ १ ॥ अथ श्वेतपुनर्नवादिः ॥ श्वेतवर्षाभुवो मूलं मूलं च वरुणस्य च । जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत् ॥१॥ अथ यवादिलेपः ॥ यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् । विलीयते क्षणेनैवमपक्वश्चैव विद्रधिः ॥१॥ अथ दशमूलादिः ॥ दशमूली छिन्नरुहा पथ्या दारुपुनर्नवा । ज्वरविद्रधिशोफेषु शिग्रुविश्वयुतो हितः ॥१॥ अथ वरुणगणादिः ॥ वरुणादिगणक्वाथमपक्वेऽभ्यन्तरोत्थिते । ऊषकादिप्रतीवापं पिबेत् संशमनाय वै ॥१॥ अथ मानकमूलादि ॥ शमयति मानकमूलं क्षौद्रयुतं तण्डुलाम्भसा पीतम् । अन्तर्भूतं विद्रधिमुद्धतमाश्वेव मनुजस्य ॥ १ ॥ अथ हरीतकीचूर्णम् ॥ हरीतकीसैन्धवधातकीनां रजोघृतक्षौद्रयुतं प्रयुक्तम् । निहन्ति लीढं ध्रुवमेव पुंसामन्तर्भवं विद्रधिमुग्ररूपम् ॥ १ ॥ अथ सौभाञ्जनादि ॥ सौभाञ्जनकनिर्यूहो हिङ्गुसैन्धवसंयुतः । अचिराद्विद्रधिं हन्ति प्रातः प्रातर्निषेवितः ॥१॥ शिग्रुमूलं जले धौतं दरपिष्टं प्रलेपयेत् । तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः ॥ २ ॥ अथ त्रिफलागुग्गुलुः ॥ त्रीणि पलानि फलत्रितयस्य द्वे तु पले तुलिते मगधायाः । पञ्च पलानि भवन्ति पुरस्य स्यात्सफलत्रिकगुग्गुलुयोगः ॥ १ ॥ पक्वेषु विद्रधिषु पूयमतिस्रवत्सु नाडीषु च व्रणगदेषु भगन्दरेषु । स्याद् गण्डमालिषु फलत्रिकगुग्गुलुः स्यात्पथ्यं फलत्रिकपुरे घृतभोजनं च ॥२॥ इति त्रिफलागुग्गुलुः ॥ अथ वरणकादिघृतम् ॥ सिद्धं वरणादिगुणेन विधिना तत्कल्कपाचितं सर्पिः । अन्तर्विद्रधिमुग्रं मस्तकशूलं हुताशमान्द्यं च ॥ १ ॥ गुल्मानपि पञ्चविधान्नाशयतीदं

यथाम्बु वायुसत्त्वम् । एतत् प्रातः प्रपिबेद् भोजनसमये निशास्थेऽपि ॥२॥ इति वरणकादिघृतम् ॥ अथ रसगन्धकयोगः ॥ वरुणादिकषायेण रसगन्धककज्जलीम् । भुक्त्वा निहन्ति माषैकां बाह्यमन्तश्च विद्रधिम् ॥ अपक्के त्वेतदुद्दिष्टं पक्के तद्व्रणवत्क्रिया ॥ १ ॥ अथ पथ्यापथ्यम् ॥ आमस्थे रेचनं चैव लेपः स्वेदोऽस्रमोक्षणम् । जीर्णाः श्यामाककलमाः कुलत्था लशुनानि च ॥ १ ॥ रक्तशिग्रुश्च निष्पावः कारवेल्लं पुनर्नवा । श्रीपर्णं चित्रकं क्षौद्रं शोथोक्तानि च सर्वशः ॥ २ ॥ पक्वावस्थे शस्त्रकर्म पुराणा रक्तशाल्यः । घृतं तैलं मुद्गरसो विलेपी धन्वजा रसाः ॥ ३ ॥ शालिशाकं च कदलीपटोलं हिमवालुका । चन्दनं तप्तशीताम्बु सर्वं चापि व्रणोदितम् ॥ ४ ॥ नराणां विद्रधौ व्याधौ यथावस्थं यथाबलम् । पथ्यान्येतानि सर्वाणि निर्दिष्टानि महर्षिभिः ॥ ५ ॥ शोफिनां यान्यपथ्यानि व्रणिनामपि यानि च । क्रमादामे च पक्के च विद्रधौ वर्जयेन्नरः ॥ ६ ॥ इति विद्रधिचिकित्सा ॥

## ॥ अथ व्रणशोथनिदानम् ॥

अथ तस्य प्राग्रूपम् । एकदेशोत्थितः शोफो व्रणानां पूर्वलक्षणम् ॥१॥ अथ तस्य सङ्ख्यामाह ॥ षड्विधः स्यात्पृथक् सर्वशोणितागन्तुभेदतः ॥ १ ॥ अथ तेषां लक्षणमाह ॥ शोफाः षडेते विज्ञेयाः प्रागुक्तैः शोफलक्षणैः । विशेषः कथ्यते चैषां पक्वापक्वविनिश्चये ॥ १ ॥ विषमं पच्यते वातात्पित्तोत्थश्चाचिराच्चिरम् । कफजः पित्तवच्छोफो रक्तागन्तुसमुद्भवः ॥ २ ॥ मन्दोष्मताल्पशोफत्वं काठिन्यं त्वक्सवर्णता । मन्दवेदनता चैव शोफानामामलक्षणम् ॥ ३ ॥ दह्यते दहनेनेव क्षारेणैव विपच्यते । पिपीलिकागणेनेव दश्यते छिद्यते तथा ॥ ४ ॥ भिद्यते चैव शस्त्रेण दण्डेनेव च ताड्यते । पीड्यते पाणिनेवान्तः सूचीभिरिव तुद्यते ॥ ५ ॥ सोषचोषो विवर्णः स्यादङ्गुल्येवावपीड्यते । आसने शयने स्थाने शान्तिं वृश्चिकविद्धवत् ॥ ६ ॥ न गच्छेदाततः शोफो भवेदाध्मातवस्तिवत् । ज्वरस्तृष्णारुचिश्चैव पच्यमानस्य लक्षणम् ॥ ७ ॥ वेदनोपशमः शोफो लोहितोऽल्पो न चोन्नतः । प्रादुर्भावो वलीनां च तोदः कण्डूर्मुहुर्मुहुः ॥ ८ ॥ उपद्रवाणां प्रशमो निम्नता स्फुटनं त्वचाम् । वस्ताविवाम्बुसञ्चारः स्याच्छोफेऽङ्गुलिपीडिते ॥९॥ पूयस्य पीडयत्येकमन्तमन्ते च पीडिते । भक्ताकाङ्क्षा भवेच्चैव शोफानां पक्वलक्षणम् ॥१०॥ नर्तेऽनिलाद्रुङ्न विना च पित्तं पाकः कफं चापि विना न पूयः । तस्माद्धि सर्वे परिपाककाले दोषैस्त्रिभिर्यान्ति गदा विपाकम् ॥ ११ ॥ कालान्तरेणाभ्युदितं तु पित्तं कृत्वा वशे वातकफौ प्रसह्य । पचत्यतः शोणितमेष पाको मतः परेषां विदुषां द्वितीयः ॥ १२ ॥ कफजेषु च शोथेषु गम्भीरं पाकमेत्यसृक् । पक्वलिङ्गं ततः स्पष्टं यतः स्याच्छोथशीतता ॥ त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शं तमश्मवत् ॥ १३ ॥ कक्षं समासाद्य यथैव वह्निर्वातेरितः सन्दहति प्रसह्य । तथैव पूयोऽप्यविनिःसृतो हि मांसं शिरास्नायु च खादतीह ॥ १४ ॥ आमं

---

१ ( च० ) दाहः । २ ( च० ) पचन्ति शोथास्त्रिभिरेव दोषैः ।

विपच्यमानं च सम्यक्पक्वं च यो भिषक् । जानीयात्स भवेद्वैद्यः शेषास्तस्करवृत्तयः ॥ १५ ॥ यच्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते । श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ ॥ १६ ॥ द्विधा व्रणः परिज्ञेयः शारीरागन्तुभेदतः । दोषैराद्यस्ततोऽन्यश्च शस्त्रादिक्षतसंभवः ॥ १७ ॥ अथ वातिकमाह ॥ स्तब्धःकठिनसंस्पर्शो मन्दस्रावो महारुजः । तुद्यते स्फुरति श्यावो व्रणो मारुतसंभवः ॥ १ ॥ अथ पैत्तिकमाह ॥ तृष्णामोहज्वरक्लेददाहदुःस्रावदारणैः । व्रणं पित्तकृतं विद्याद् गन्धैःस्रावैश्च पूतिकैः ॥ १ ॥ अथ कफजमाह ॥ बहुपिच्छो गुरुः स्निग्धः स्तिमितो मन्दवेदनः । पाण्डुवर्णोऽल्पसंक्लेदश्चिरपाकी कफव्रणः ॥ १ ॥ अथ रक्तजमाह ॥ रक्तो रक्तस्रुती रक्ताद्द्वित्रिजः स्यात्तदन्वयः । त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः ॥१॥ धीमतोऽभिनवः काले सुखे साध्यः सुखं व्रणः । गुणैरन्यतमैर्हीनस्ततः कृच्छ्रो व्रणः स्मृतः ॥ २ ॥ सर्वैर्विहीनोऽसाध्यस्तु तथैवोपद्रवान्वितः । पूतिः पूयातिदुष्टासृक् स्राव्युत्सङ्गी चिरं स्थितः ॥ ३ ॥ दुष्टव्रणोऽतिगन्धादिः शुद्धलिङ्गविपर्ययः । जिह्वातलाभः सुश्लक्ष्णः स्निग्धो विगतवेदनः ॥४॥ सुव्यवस्थो निरास्रावः शुद्धो व्रण इति स्मृतः । कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ॥ ५ ॥ स्थिराश्च पिटिकावन्तो रोहतीति तमादिशेत् । रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ॥ ६ ॥ त्वक्सवर्णं समतलं सम्यग् रूढं तमादिशेत् । कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ॥ ७ ॥ व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः । वसां मेदोऽथ मज्जानं मस्तुलुङ्गं च यः स्रवेत् ॥ ८ ॥ आगन्तुजो व्रणः सिध्येन्न सिध्येद्दोषसम्भवः । मद्यागर्वाज्यसुमनःपद्मचन्दनचम्पकैः ॥ ९ ॥ सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः । ये च मर्मसु सम्भूता भवन्त्यत्यर्थवेदनाः ॥ दह्यन्ते चान्तरत्यर्थं बहिःशीताश्च ये व्रणाः ॥ १० ॥* प्राणमांसक्षयश्वासः कासारोचकपीडिताः । प्रवृद्धपूयरुधिरा व्रणा येषां च मर्मसु ॥११॥ क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः । वर्जयेदेव तान्वैद्यः संरक्षन्नात्मनो यशः ॥ १२ ॥ इति व्रणशोथनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

आदौ विम्लापनं कुर्याद् द्वितीयमवसेचनम् । तृतीयमुपनाहं च चतुर्थी पाटनक्रिया ॥ १ ॥ पञ्चमं शोधनं कार्यं षष्ठं रोपणमिष्यते । एते क्रमा व्रणस्योक्ताः सप्तमं वैकृतापहम् ॥ २ ॥ अथ विम्लापनम् ॥ अभ्यज्य स्वेदयित्वा तु वेणुनाड्या शनैः शनैः । विम्लापनार्थं मृद्गीत तलेनाङ्गुष्ठकेन वा ॥ १ ॥ अथावसेचनम् ॥ रक्तावसेचनं कुर्यादादावेव विचक्षणः । शोफे महति संवृद्धे वेदनावति वा व्रणे ॥ १ ॥ यो न याति शमं लेपात् स्वेदसेकापतर्पणैः । सोऽपि नाशं व्रजत्याशु शोथः शोणितमोक्षणात् ॥ २ ॥ एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः । रक्तं हि विक्रियां याति तन्मोक्षे याति वि-

---

* ( क० ) दह्यन्ते बहिरत्यर्थम् भवन्त्यतश्च शीतलाः ।

१ ( च० ) जिह्वातलाभोऽतिमृदुः श्लक्ष्णः स्निग्धोऽल्पवेदनः । ४ मशूल ।

क्रियाम् ॥ २ ॥ अथ लेपः ॥ मातुलुङ्गाग्निमन्थौ च सुरदारु महौषधम् । अहिंस्रा चैव रास्ना च प्रलेपो वातशोथहा ॥१॥ कल्कः काञ्जिकसंपिष्टः स्निग्धः शाखोटकत्वचः । सुपर्ण इव नागानां वातशोथविनाशनः ॥ २ ॥ दूर्वा च नलमूलं च मधुकं चन्दनं तथा । शीतलैश्च गणैः सर्वैः प्रलेपः पित्तशोफजित् ॥ ३ ॥ अजगन्धाश्वगन्धा च काला सरलया सह । कम्पिल्लका च शृङ्गी च प्रलेपः श्लेष्मशोथहा ॥ ४ ॥ कृष्णा पुराणपिण्याकं शिग्रुत्वक् सिकता शिवा । मूत्रपिष्टः सुखोष्णोऽयं प्रलेपः श्लेष्मशोथहा ॥ ५ ॥ न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । चन्दनद्वयमञ्जिष्ठायष्टीसूरणगैरिकैः ॥ ६ ॥ शतधौतघृतोन्मिश्रैर्लेपो रक्तप्रसादनः । दाहपाकरुजास्रावशोफनिर्वापणः परः ॥ ७ ॥ आगन्तुजे रक्तजे च एष लेपोऽतिपूजितः ॥ ८ ॥ कटुतैलान्वितैर्लेपः सर्पनिर्मोकभस्मभिः । चयः शाम्यति गण्डस्य प्रकोपः स्फुटति द्रुतम् ॥ ९ ॥ न रात्रौ लेपनं दद्याद्दत्तं च पतितं तथा । न च पर्युषितं नैव शुष्यमाणं च धारयेत् ॥ १० ॥ शुष्यमाणमुपेक्षेत प्रदेहं पीडनं प्रति । न चापि मुखमालिम्पेत्तेन दोषः प्रसिच्यते ॥ ११ ॥ न प्रशाम्यति यः शोफः प्रलेपादिविधानतः । द्रव्याणि पाचनीयानि दद्यात्तत्रोपनाहने ॥ १२ ॥ अथोपनाहनम् ॥ सतिलाः सातसीबीजा दध्यम्लैः सक्तुपिण्डिकाः । सकिण्वकुष्ठलवणाः शस्ताः स्युरुपनाहने ॥१॥ तैलेन सर्पिषा वापि द्वाभ्यां सक्तुकपिण्डिका । सुखोष्णः शोथपाकार्थमुपनाहः प्रशस्यते ॥ २ ॥ इत्युपनाहनम् ॥ अथ पाटनम् ॥ अन्तःपूयिष्ववक्त्रेषु तथैवोत्सङ्गवत्स्वपि । गतिमत्सु च रोगेषु भेदनं शस्तमुच्यते ॥ १ ॥ बालवृद्धासहक्षीणभीरूणां योषितामपि । मर्मोपरि च जातेषु पक्के शोफे च दारुणे ॥ २ ॥ चिरिबिल्वाग्निको दन्ती चित्रको हयमारकः । कपोतकङ्कगृध्राणां मललेपेन दारणम् ॥३॥ स्वर्जिकायावशूकाद्याः क्षारा लेपेन दारणाः । हेमकान्त्यास्तथा लेपो व्रणे परमदारणः ॥ ४ ॥ शणमूलकशिग्रूणां फलानि तिलसर्षपाः । सक्तवः किण्वमतसीप्रदेहः पाचनः स्मृतः ॥ ५ ॥ दन्तीमूलकचित्रत्वक्स्नुह्यर्कपयसा गुडैः । भल्लातकास्थिकासीससैन्धवैर्दारणः स्मृतः ॥६॥ हस्तिदन्तो जले घृष्टो बिन्दुमात्रः प्रलेपितः । अत्यन्तकठिने चापि शोफे पाचनभेदनः ॥ ७ ॥ यवगोधूमचूर्णं च सक्षारं दारणं पृथक् । हरिद्राभस्मचूर्णाभ्यां प्रलेपो दारणः परः ॥ अजविट्क्षारमृज्जश्च प्रलेपो व्रणदारणः ॥ ८ ॥ इति पाटनम् ॥ ततः प्रक्षालने क्काथः पटोलीनिम्बपत्रजः । अविशुद्धे विशुद्धे तु न्यग्रोधादित्वगुद्भवः ॥ १ ॥ पञ्चमूलीद्वयं वाते न्यग्रोधादिश्च पैत्तिके । आरग्वधादिको योज्यः कफजे सर्वकर्मसु ॥ २ ॥ अथ शोधनरोपणविधिः ॥ तिलसैन्धवयष्ट्याह्वनिम्बपत्रनिशायुतैः । त्रिवृन्मधुयुतैः पिष्टैः प्रलेपो व्रणशोधनः ॥ १ ॥ तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम् । मधुकं निम्बपत्राणि लेपः स्याद्व्रणशोधनः ॥ ॥ २ ॥ निम्बकोलकपत्राणां लेपः स्याद् व्रणशोधनः । निम्बपत्रतिलैः कल्को मधुना व्रणशोधनः ॥ ३ ॥ निम्बपत्रं तिलादन्तीत्रिवृत्सैन्धवमाक्षिकम् । दुष्टव्रणप्रशमनो लेपः शोधनकेसरी ॥ ४ ॥ अभयात्रिवृतादन्तीलाङ्गलीमधुसैन्धवैः । सुपवीपत्रधत्तूर-

कर्ममोटकुठेरिकाः ॥ ५ ॥ पृथगेते प्रलेपेन गम्भीरव्रणशोधनाः । निम्बपत्रमधुभ्यां तु युक्तः संशोधनः स्मृतः ॥ ६ ॥ एकं वा सारिवामूलं सर्वव्रणविशोधनम् । न्यग्रोधोदुम्बराश्वथकदम्बप्लक्षवेतसाः ॥७॥ करवीरार्ककटुकाकषायो रोपणे हितः ॥ ८ ॥ सप्तदलदुग्धकल्कः शमयति दुष्टव्रणं प्रलेपेन । मधुयुक्ता शरपुङ्खा सर्वव्रणरोपणी कथिता ॥ ९ ॥ पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः । धातकीलोध्रचूर्णैर्वा निःसारा* हन्ति ते व्रणाः ॥ १० ॥ निम्बपत्रघृतक्षौद्रं दार्वी मधुकसंयुता । वर्तिस्तिलानां कल्को वा शोधयेद्रोपयेद्व्रणम् ॥ ११ ॥ निम्बशम्याकजात्यर्कसप्तपर्णाश्वमारकाः । क्रमिघ्ना मूत्रसंयुक्ताः सेकलेपनधावनैः ॥ १२ ॥ करञ्जारिष्टनिर्गुण्डीरसो हन्याद् व्रणक्रिमीन् । लशुनेनाथवा दद्याल्लेपनं क्रमिनाशनम् ॥ १३ ॥ निम्बपत्रवचाहिङ्गुसर्पिर्लवणसैन्धवैः । धूपनं क्रमिरक्षोघ्नं व्रणकण्डूरुजापहम् ॥ १४ ॥ ये क्लेदपाकस्रुतिगन्धवन्तो व्रणा महान्तः सरुजाः सशोथाः । प्रयान्ति ते गुग्गुलुमिश्रितेन पीतेन शान्तिं त्रिफलाजलेन ॥ १५ ॥ अथ गुग्गुलुवटकः ॥ त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः । निषेवितो विबन्धघ्नो व्रणशोधनरोपणः ॥ १ ॥ अथ विडङ्गादिगुग्गुलुः ॥ विडङ्गत्रिफलाव्योषचूर्णं गुग्गुलुना समम् । सर्पिषा वटकान् कुर्यात् खादेद्वा हितभोजनः ॥ दुष्टव्रणापचीमेहकुष्ठनाडीविशोधनः ॥ १ ॥ अथामृताद्यो गुग्गुलुः । अमृतापटोलमूलं त्रिकटुत्रिफलाक्रमिघ्नानाम् । कृत्वा समभागचूर्णं तत्तुल्यो गुग्गुलुर्योज्यः ॥ १ ॥ प्रतिवासरमेकैकां गुटिकां खादेत्तथाक्षपरिमाणाम् । जेतुं व्रणवातास्रं गुल्मोदरपाण्डुशोथादीन् ॥ २ ॥ अथ जात्यादिघृतम् ॥ जातीपत्रपटोलनिम्बकटुकादार्वीनिशासारिवामञ्जिष्ठाभयतुत्थसिक्थमधुकैर्नक्ताह्वबीजैः समैः । सर्पिःसिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो गम्भीराः सरुजो व्रणाः सगतिकाः शुध्यन्ति रोहन्ति च ॥ १ ॥ अथ स्वर्जिकाद्यघृतम् ॥ स्वर्जिका च यवक्षारः कम्पिल्लं च हरेणुका । टङ्कणं श्वेतखदिरं तुत्थं चूर्णं च गोघृतैः ॥ १ ॥ सर्वं समांशं संचूर्ण्य मर्दयेत्प्रहरं दृढम् । स्वर्जिकाद्यमिदं सर्पिः सर्वव्रणहरं परम् ॥ रोपणं क्रमिकण्डूघ्नं सवर्णकरणं परम् ॥ २ ॥ अथ मनःशिलादिलेपः ॥ मनःशिला समञ्जिष्ठा सक्षारा रजनीद्वयम् । प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः स्मृतः ॥ १ ॥ अथ पारदादिमलहरः ॥ रसगन्धकयोश्चूर्णं तत्समं मुर्दशङ्खकम् । सर्वतुल्यं तु कम्पिल्लं किञ्चित्तुत्थसमन्वितम् ॥ १ ॥ सर्वं संमेलयेद्दत्वा घृतं सर्वाच्चतुर्गुणम् । पिचुप्लुतं प्रदातव्यं दुष्टव्रणविशोधनम् ॥ २ ॥ नाडीव्रणहरं चैव सर्वव्रणनिषूदनम् । ये व्रणा न प्रशाम्यन्ति भेषजानां शतेन च ॥ अनेन ते प्रशाम्यन्ति सर्पिषा स्वल्पकालतः ॥ ३ ॥ अथ द्वितीयः पारदादिमलहरः ॥ रसगन्धकसिन्दूरतालकम्पिल्लमुर्दकम् । तुत्थं खादिरकं चूर्णं सर्वं घृतचतुर्गुणम् ॥१॥ युक्त्या संमेल्य पिचुना व्रणे देयं विजानता । सर्वव्रणप्रशमनं घृतमे-

---

* सर्वेषु पुस्तकेष्वीदृगेव पाठोऽयं दृश्यते ।

तत्र संशयः ॥ २ ॥ अथायोरजआदिलेपः । अयोरजः सकासीसं त्रिफला कुसुमानि च । प्रलेपः कुरुते दार्व्या सद्य एव नवां त्वचम् ॥ १ ॥ इति व्रणशोथचिकित्सा ॥

## ॥ अथ सद्योव्रणनिदानमाह ॥

नानाधारामुखैः शस्त्रैर्नानास्थाननिपातितैः । भवन्ति नानाकृतयो व्रणास्तांस्तान्निबोध मे ॥ १ ॥ अथ तेषां षड्विधत्वमाह ॥ छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च । घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥ २ ॥ तिर्यक्छिन्नो ऋजुर्वापि व्रणो यस्त्वायतो भवेत् । गात्रस्य पातनं तद्धि च्छिन्नमित्यभिधीयते ॥ ३ ॥ शक्तिकुन्तेषुखड्गाग्रविषाणैराशयो हतः । यत्किञ्चित्प्रस्रवेत्तद्धि भिन्नलक्षणमुच्यते ॥ ४ ॥ स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुन्दुकः फुफ्फुसश्च कोष्ठ इत्यभिधीयते ॥ ५ ॥ तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते । मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति ॥ ६ ॥ मूर्च्छा श्वासस्तृषाध्मानमभक्तच्छन्द एव च । विण्मूत्रवातसङ्गश्च स्वेदस्रावोऽक्षिरक्तता ॥ ७ ॥ लोहगन्धित्वमास्यस्य गात्रे दौर्गन्ध्यमेव च । हृच्छूलं पार्श्वयोश्चापि विशेषं चात्र मे शृणु ॥ ८ ॥ आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि । आध्मानमतिमात्रं च शूलं च भृशदारुणम् ॥ ९ ॥ पक्वाशयगते चापि रुजा गौरवमेव च । अधःकाये विशेषेण शीतता च भवेदिह ॥ १० ॥ सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयं विना । उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत् ॥ ११ ॥ नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितम् । विषमं व्रणमङ्गे यत् तत्क्षतं तु विनिर्दिशेत् ॥ १२ ॥ प्रहारपीडनाभ्यां तु यदङ्गं पृथुतां गतम् । सास्थि तत्पिच्चितं विद्यान् मज्जरक्तपरिप्लुतम् ॥ १३ ॥ घर्षणादभिघाताद्वा यदङ्गं विगतत्वचम् । ऊषास्रावान्वितं तच्च घृष्टमित्यभिधीयते ॥ १४ ॥ श्यावं सशोफं पिटिकान्वितं च मुहुर्मुहुः शोणितवाहिनं च । मृदूद्वृत्तं बुद्बुदतुल्यमांसं व्रणं सशल्यं सरुजं वदन्ति ॥१५॥ त्वचोऽतीत्य शिरादीनि भित्त्वा च परिहृत्य वा । कोष्ठे प्रतिष्ठितं शल्यं कुर्यादुक्तानुपद्रवान् ॥ १६ ॥ तत्रान्तर्लोहितं पाण्डुशीतपादकराननम् । शीतोच्छ्वासं रक्तनेत्रमानद्धं परिवर्जयेत् ॥ १७ ॥ भ्रमः प्रलापः पतनं प्रमोहो विचेष्टनं ग्लानिरथोष्णता च । स्रस्ताङ्गता मूर्च्छनमूर्ध्ववातस्तीव्रा रुजो वातकृताश्च तास्ताः ॥ १८ ॥ मांसोदकाभं रुधिरं च गच्छेत्सर्वेन्द्रियार्थोपरमस्तथैव । दशार्धसंख्येष्वपि हि[१] क्षतेषु सामान्यतो मर्मसु लिङ्गमुक्तम् ॥ १९ ॥ सुरेन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवेत्तत्क्षतजश्च वायुः । करोति रोगान्विविधान्यथोक्तान् शिरासु विद्धास्वथ वा क्षतासु ॥ २० ॥ कौब्जं शरीरावयवावसादः क्रियास्वशक्तिस्तुमुला रुजश्च । चिराद् व्रणो रोहति यस्य चापि तं स्नायुविद्धं पुरुषं व्यवस्येत् ॥ २१ ॥ शोफाभिवृद्धिस्तुमुला रुजश्च बलक्षयः पर्वसु[२] भेदशोफौ । क्षतेषु सन्धिष्वचलाचलेषु स्यात्सर्वकर्मोपरमश्च लिङ्गम् ॥२२॥ घोरा रुजो यस्य निशादिनेषु सर्वा-

---

१ ( च० ) विक्षतेषु । २ ( च० ) सर्वत एव शोथः

स्ववस्थासु न चैति . शान्तिम् । भिषग्विपश्चिद्विदितार्थसूत्रस्तमस्थिविद्धं मनुजं व्यवस्येत् ॥ २३ ॥ यथास्वमेतानि विभावयेच्च लिङ्गानि मर्मस्वभिताडितेषु । पाण्डुर्विवर्णश्च सुखं न वेत्ति यो मांसमर्मण्यभिताडितश्च ॥ २४ ॥ मर्माश्रितं व्रणं प्राप्य वायुर्यः सर्वदेहगः । वेगैरायामयेद्देहं व्रणायामं तु तं त्यजेत् ॥ २५ ॥ विसर्पः पक्षघातश्च शिरास्तम्भोऽपतानकः । मोहोन्मादव्रणरुजो ज्वरतृष्णाहनुग्रहाः ॥२६॥ कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः । षोडशोपद्रवाः प्रोक्ता व्रणिनां व्रणचिन्तकैः ॥ २७ ॥ इति सद्योव्रणनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

बुद्ध्वागन्तुव्रणं वैद्यो घृतक्षौद्रसमन्विताम् । शीतां क्रियां चरेदाशु रक्तपित्तोष्मनाशिनीम् ॥ १ ॥ क्रुद्धे सद्योव्रणे युञ्ज्यादूर्ध्वं वाधश्च शोधनम् । लङ्घनं च बलं ज्ञात्वा भोजनं चास्रमोक्षणम् ॥ २ ॥ घृष्टे विदलिते चैव सुतरामिष्यते विधिः । तयोरल्पं स्रवत्यस्रं पाकस्तेनाशु जायते ॥ ३ ॥ छिन्ने भिन्ने तथा विद्धे क्षते चासृगतिस्रवेत् । रक्तक्षयात्तत्र रुजः करोति पवनो भृशम् ॥ ४ ॥ स्नेहपानपरीषेकलेपस्वेदोपनाहनम् । कुर्वीत स्नेहवस्तिं च मारुतघ्नौषधैः शृतैः ॥ ५ ॥ उक्तं च ग्रन्थान्तरे ॥ छिन्ने भिन्ने तथा विद्धे क्षते सद्यो भिषग्वरः । पट्टसूत्रेण संस्वेदं व्रणं व्रणविशारदः ॥ १ ॥ मुहुर्मुहुर्यथा दुःखं न प्राप्नोति व्रणी नरः । अथवा दीप्यलवणपोटल्या स्वेदयेन्मुहुः ॥ २ ॥ सन्तप्तया तप्तलोहपात्रसंयोगतः क्रमात् । दुष्टं रक्तं स्थितं चापि शृङ्ग्यलाब्वादिभिर्हरेत् ॥ ३ ॥ सद्यःक्षतव्रणं वैद्यः सशूलं परिषेचयेत् । यष्टीमधुकमिश्रेण नातिशीतेन सर्पिषा ॥ ४ ॥ कषायमधुराः शीताः क्रियाः सर्वास्तु योजयेत् । सद्योव्रणानां सप्ताहात्पश्चात्पूर्वोक्तमाचरेत् ॥ ५ ॥ चिकित्सितं तु तत्सर्वं सामान्यव्रणनाशनम् । आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ॥ पक्वाशयस्थे देयं च विरेचनमसंशयम् ॥ ६ ॥ अथ वंशत्वगादिक्वाथः ॥ क्वाथो वंशत्वगेरण्डश्वदंष्ट्राश्मभिदा कृतः । हिङ्गुसैन्धवसंयुक्तः कोष्ठस्थं स्रावयेदसृक् ॥ १ ॥ अथ यवादिः ॥ यवकोलकुलत्थानां निःस्नेहेन रसेन च । भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ॥ १ ॥ अथ गौराद्यं घृतम् ॥ गौराहरिद्रामञ्जिष्ठामांसीमधुकमेव च । प्रपौण्डरीकं ह्रीबेरं नतं मुस्तं च चन्दनम् ॥ १ ॥ जातीनिम्बपटोलं च करञ्जं कटुरोहिणी । मधूच्छिष्टं मधूकं च महामेदा तथैव च ॥ २ ॥ पञ्चवल्कलतोयेन घृतप्रस्थं विपाचयेत् । एतद् गौरादिकं सर्पिः सर्वव्रणविशोधनम् ॥३॥ आगन्तुकाश्च सहजाः सुचिरोत्थाश्च ये व्रणाः । नाडीव्रणश्च विषमो नश्यत्येव न संशयः ॥४॥ अथ तिक्तादिघृतम् ॥ तिक्तासिक्थनिशायष्टीनक्ताह्वफलपल्लवैः । पटोलमालतीनिम्बपत्रैर्व्रण्यं शृतं घृतम् ॥१॥ अथ जात्यादितैलम् ॥ जातीनिम्बपटोलानां नक्तमालस्य पल्लवाः । सिक्थकं मधुकं कुष्ठं द्वे निशे कटुरोहिणी ॥ १ ॥ मञ्जिष्ठापद्मकं लोध्रमभयानीलमुत्प-

१ ( च० ) कुर्वीत ।

लम्। तुत्थकं सारिवाबीजं नक्तमालस्य च क्षिपेत् ॥ २ ॥ एतानि समभागानि पिष्ट्वा तैलं विपाचयेत्। विषव्रणसमुत्पत्तौ स्फोटेषु च सकच्छुषु ॥ ३ ॥ कण्डूविसर्परोगेषु कीटदष्टेषु सर्वथा। सद्यःशस्त्रप्रहारेषु दग्धविद्धक्षतेषु च ॥४॥ नखदन्तक्षते देहे दुष्टमांसावघर्षणे। भक्षणार्थमिदं तैलं हितं शोधनरोपणम् ॥५॥ अथ विपरीतमल्लतैलम्। चक्रदत्तात्॥ सिन्दूरकुष्ठविषहिङ्गुरसोनचित्रबाणाङ्घ्रिलाङ्गलिककल्कविपक्वतैलम्। मासादमन्त्रयुतहुक्कृदतुत्थफेनः छिन्नव्रणप्रशमने विपरीतमल्लः ॥१॥ खड्गाभिघातगुरुगण्डमहोपदंशनाडीव्रणव्रणविचर्चिककुष्ठपामाः। एतान्निहन्ति विपरीतकमल्लनाम तैलं यथेष्टशयनाशनभोजनस्य ॥ २॥ अथ दूर्वादितैलम्॥ दूर्वास्वरससंसिद्धं तैलं कम्पिल्लकेन वा। दार्वित्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥ १ ॥ अथ सप्तविंशतिको गुग्गुलुः ॥ त्रिकटुत्रिफलामुस्ताविडङ्गामृतचित्रकम्। पटोलं पिप्पलीमूलं हपुषा सुरदारु च ॥ १ ॥ तुम्बरुः पुष्करं चव्यं विशाला रजनीद्वयम्। बिडं सौवर्चलं क्षारं सैन्धवं गजपिप्पली ॥ २ ॥ यावन्त्येतानि सर्वाणि तावद्द्विगुणगुग्गुलुः। कोलप्रमाणां वटिकां भक्षयेन्मधुना सह ॥ ३ ॥ कासं श्वासं तथा शोफमर्शांसि च भगन्दरम्। हृच्छूलं पार्श्वशूलं च कुक्षिवस्तिगुदे रुजम् ॥ ४ ॥ अश्मरीं मूत्रकृच्छ्रं च अन्त्रवृद्धिं तथा कृमीन्। चिरज्वरोपसृष्टानां क्षतोपहतचेतसाम् ॥ ५ ॥ आनाहं च तथोन्मादं कुष्ठान्यष्टोदराणि च। नाडीदुष्टव्रणान्सर्वान्प्रमेहान् श्लीपदं तथा ॥ ६ ॥ सप्तविंशतिको नाम गुग्गुलुः प्रथितो महान्। धन्वंतरिकृतो ह्येष सर्वरोगनिषूदनः ॥ ७ ॥ इति सप्तविंशतिको गुग्गुलुः ॥ व्रणे श्वयथुरायासात्स च रागश्च जागरात्। तौ च रुक् च दिवा स्वापात्ते च मृत्युश्च मैथुनात् ॥१॥ अम्लं दधि च शाकं च मांसमानूपवारिजम्। क्षीरं गुरूणि चान्नानि व्रणी च परिवर्जयेत् ॥२॥ इति सद्योव्रणचिकित्सा ॥

## ॥ अथाग्निदग्धव्रणनिदानमाह ॥

तत्र स्निग्धं रूक्षं वाश्रित्य द्रव्यमग्निर्दहति। अग्निसन्तप्तो हि स्नेहं सूक्ष्ममार्गानुसारित्वात् त्वगादीननुप्रविश्याशु दहति तस्मात्स्नेहदग्धेऽधिका रुजो भवन्ति। तत्र प्लुष्टं दुर्दग्धं सम्यग्दग्धमतिदग्धमिति चतुर्विधं भवत्यग्निदग्धम्। तत्र विवर्णमात्रं प्लुष्यते तत्प्लुष्टं यत्रोत्तिष्ठन्ति स्फोटास्तीव्रदाहवेदनाश्चिराच्चोपशाम्यन्ति तद्दुर्दग्धम्। सम्यग्दग्धमवगाढं तालफलवर्णं सुस्थितं पूर्वलक्षणयुक्तं च। अतिदग्धं तु त्वग्मांसावलम्बनगात्रविश्लेषणं शिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रवेदनाज्वरदाहपिपासामूर्च्छाश्वासोपद्रवा भवन्ति। इति प्लुष्टादिभेदेनाग्निदग्धश्चतुर्विधो व्रणो भवति ॥ इत्यग्निदग्धनिदानम्। चन्द्रसेनात् ॥

## ॥ अथ तच्चिकित्सा ॥

प्लुष्टस्याग्निप्रतपनं कार्यमुष्णं तथौषधम्। शीतामुष्णां च दुर्दग्धे क्रियां कुर्यात्त-

१ (च०) मण्डनयुतश्च सतुत्थफेनः। २ (च०) स्वापात्ताश्च। ३ (च०) वाश्रित्य। ४ (च०) यत्रातिष्ठन्ति।

तः पुनः ॥ १ ॥ घृतालेपनसेकास्तु शीतान्येवास्य कारयेत् । अतिदग्धे विशीर्णानि मांसान्युद्धृत्य शीतलाम् ॥ २ ॥ क्रियां कुर्याच्चूर्णकाले शालितण्डुलकण्डनैः । तिन्दुक्यास्त्वक्कषायैर्वा घृतमिश्रैः प्रलेपयेत् ॥ ३ ॥ सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः । सामृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक् ॥४॥ अथ पथ्यादिलेपः ॥ पथ्याकर्दमजीरकमधुसिक्थकसर्जमिश्रितं लेपात् । गव्यं घृतमपहरति च, पावकजनितं व्रणं सद्यः ॥१॥ अन्तर्धूमकुठेरको दहनजं लेपान्निहन्ति व्रणम् अश्वत्थस्य विशुष्कवल्कलभवं चूर्णं तथा गुण्ठनात् । अभ्यङ्गाद्विनिहन्ति तैलमखिलं गण्डूपदैः साधितं पिष्ट्वा शाल्मलितूलकैर्जलगतां लेपात्तथा वालुकाम् ॥ २॥ दग्धयवभस्मचूर्णं तिलतैलाक्तं प्रलेपनादचिरात् । हरति शिखिदाहदग्धं भूयोऽभ्यङ्गाद् व्रणं चाशु ॥३॥ अथ मधूच्छिष्टाद्यं तैलम् ॥ मधूच्छिष्टं समधुकं लोध्रं सर्जरसं तथा । मूर्वाचन्दनमञ्जिष्ठाः पिष्ट्वा सर्पिर्विपाचयेत् ॥ सर्वेषामपि दग्धानां व्रणरोपणमुत्तमम् ॥ १ ॥ अथ पटोलीतैलम् ॥ सिद्धं कषायकल्काभ्यां पटोल्याः कटुतैलकम् । दग्धव्रणरुजास्रावदाहविस्फोटनाशनम् ॥ १ ॥ अथ चन्दनाद्यं यमकम् ॥ चन्दनं वटशृङ्गाश्च मञ्जिष्ठा मधुकं तथा । प्रपौण्डरीकं दूर्वा च पतङ्गं धातकी तथा ॥ १ ॥ एतैस्तैलं विपक्तव्यं गोक्षीरेण समायुतम् । अग्निदग्धव्रणे श्रेष्ठं तत्क्षणाद्रोपणं परम् ॥ २ ॥ अथ लाङ्गलीघृतम् ॥ उभे हरिद्रे मञ्जिष्ठा मधुकं लोध्रकट्फलम् । कम्पिल्लकमुभे मेदे लाङ्गलीमूलमेव च ॥ १ ॥ पिप्पली त्रिफला चैव निम्बपत्रं च कार्षिकम् । कपिलाया घृतं प्रस्थं पचेत्तद्द्विगुणं पयः ॥ २ ॥ पलद्वयं च सिक्थस्य सिद्धे पूते च दापयेत् । लाङ्गलीकं घृतं नाम व्रणानां रोपणं परम् ॥ ३ ॥ अग्निदग्धे विसर्पे च कीटलूताव्रणेषु च । चिरोत्थेषु च दुष्टेषु नाडीमर्माश्रितेषु च ॥ ४ ॥ अग्निदग्धव्रणे देयं धातकीचूर्णमुत्तमम् । अतसीतैलसंमिश्रं वह्निदग्धव्रणापहम् ॥ ५ ॥ अन्तर्धूमविदग्धं त्रिफलाचूर्णं विमिश्रितं तैलैः । क्षौमैः शीघ्रं शमयत्यग्निव्रणमाशु लेपेन ॥ ६ ॥ पित्तविद्रधिवीसर्पशमनं लेपनादिकम् । अग्निदग्धव्रणे सम्यक् प्रयुञ्जीत विचक्षणः ॥ ७ ॥ सुधा पुरातनी दध्नो वारिणा परिपेषिता । लेपनं तैलदग्धस्य विस्फोटव्याधिनाशनम् ॥ ८ ॥ अक्षिस्थेषु च कर्तव्यमिदमाश्च्योतनं हितम् । शेलुत्वक्त्रिफलादार्वीक्काथो रोचनया युतः[1] ॥ स्नुह्यर्कक्षीरसिक्तेऽक्षिणि गव्यं सर्पिर्निषेचयेत् ॥ ९ ॥ इति दग्धव्रणचिकित्सा ॥

## ॥ अथ भग्नव्रणनिदानमाह ॥

भग्नं समासाद्द्विविधं हुताश काण्डे च सन्धौ च हि तत्र सन्धौ । उत्पिष्टविश्लिष्टविवर्तितं च तिर्यक्प्रतिक्षिप्तमधश्च षोढा ॥ प्रसारणाकुञ्चनवर्तनोग्ररुक्स्पर्शविद्वेषणमेतदुक्तम् ॥ १ ॥ सामान्यतः सन्धिगतस्य लिङ्गमुत्पिष्टसन्धेः श्वयथुः समन्तात् । विशेषतो रात्रिभवा रुजश्च विश्लिष्टजे तौ च रुजा च नित्यम् ॥ २ ॥ विवर्तिते पार्श्वरुजश्च तीव्रास्तिर्यग्गते तीव्ररुजो भवन्ति । क्षिप्तेऽतिशूलं विषमं च सक्थ्नोः क्षिप्ते त्व-

१ ( च० ) सिद्धम् ।

धोरुग्विघटश्च सन्धेः ॥३॥ काण्डे त्वधः कर्कटकाश्च कर्णविचूर्णितं पिच्चितमस्थिछल्लि-तं च । काण्डेषु भग्नं ह्यतिपातितं च मज्जागतं च स्फुटितं च वक्रम् ॥ ४ ॥ छिन्नं द्विधा द्वादशधा च काण्डे स्रस्ताङ्गता शोथरुजातिवृद्धिः । संपीड्यमाने भवतीह शब्दः स्पर्शासहस्यन्दनतोदशूलः ॥ ५ ॥ सर्वास्ववस्थासु न शर्मलाभो भग्नस्य काण्डे खलु चिह्नमेतत् । भग्नं तु काण्डे बहुधा प्रयाति समासतो नामभिरेव तुल्यम् ॥ ६ ॥ अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च । उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ॥ ७ ॥ भिन्नं कपालं कट्यां तु सन्धिमुक्तं तथा च्युतम् । जघनं प्रतिपिष्टं तु वर्जयेच्च विचक्षणः ॥ ८ ॥ असंश्लिष्टं कपालं च ललाटे चूर्णितं च यत् । भग्नं स्तनान्तरे शङ्खे पृष्ठे मूर्ध्नि च वर्जयेत् ॥ ९ ॥ सम्यक् संहितमप्यस्थि दुर्निक्षेपनिबन्धनात् । संक्षोभाद्वापि यद् गच्छेद्विक्रियां तच्च वर्जयेत् ॥ १० ॥ तरुणास्थीनि नाम्यन्ते भिद्यन्ते नलकानि तु । कपालानि विभिद्यन्ते स्फुटन्ति रुचकानि च ॥११॥ इति भग्नव्रणनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

भग्नान्युपचरेद्धीमान्सेकलेपनबन्धनैः । शीतलैरेव विविधैः प्रयोगैश्च समीरितैः ॥१॥ तत्रातिशिथिले बन्धे सन्धिस्थैर्यं न जायते । गाढेनापि त्वगादीनां शोफो रुक्पाक एव च ॥ २ ॥ तस्मात्साधारणं बन्धं भग्ने शंसन्ति तद्विदः । आदौ भग्नं विदित्वा तु सेचयेच्छीतलाम्बुना ॥ ३ ॥ पङ्केनालेपनं कुर्याद्बन्धनं च कुशान्वितम् । अवनामितमुन्नाम्येदुन्नतं चावपीडयेत् ॥ ४ ॥ क्षिप्तं द्विधापि च स्थाने संस्थाप्य विधिमाचरेत् । आलेपनार्थं मञ्जिष्ठामधुकं चाम्लपेषितम् ॥ ५ ॥ शतधौतघृतोन्मिश्रं शालिपिष्टं च लेपनम् । न्यग्रोधादिकषायं तु शीतलं परिषेचने ॥ ६ ॥ पञ्चमूलीविपक्वं तु क्षीरं दद्यात्सवेदने । मूलं शृगालच्छिन्नायाः पीत्वा मांसरसेन तु ॥ ७ ॥ चूर्णीकृत्य तु सप्ताहादस्थिभङ्गमपोहति । आभाचूर्णं मधुयुतमस्थिभङ्गे त्र्यहं पिबेत् ॥ ८ ॥ पीत्वा चास्थि भवेत्सम्यग् वज्रसारनिभं दृढम् । गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ॥ ९ ॥ शीतलं लाक्षया युक्तं प्रातर्भग्ने पिबेन्नरः । सघृतं चास्थिसन्धानं लाक्षागोधूममर्जुनम् ॥ १० ॥ सन्धिमुक्तेऽस्थिभग्ने च पिबेत्क्षीरेण मानवः । रसोनमधुलाक्षाज्यसिताकल्कं सुमिश्रितम् ॥ छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥ ११ ॥ अथ लाक्षागुग्गुलुः ॥ लाक्षास्थिसंहृत्ककुभाश्वगन्धाश्चूर्णीकृता नागबलाः पुरश्च । सम्भग्नमुक्तास्थिरुजं निहन्यादङ्गानि कुर्यात्कुलिशोपमानि ॥ १ ॥ सव्रणस्य तु भग्नस्य व्रणः सर्पिर्मधूत्तरैः । प्रतिसार्यः कषायैस्तु शेषं भग्नवदाचरेत् ॥ वातव्याधिविनिर्दिष्टं स्नेहं तत्रापि योजयेत् ॥ २ ॥ अथ वह्निजभस्मादि ॥ वह्निजं भस्म मधुना पातव्यं हितभोजिना । सन्धिभङ्गेऽस्थिभङ्गे च विशेषेण प्रशस्यते ॥ १ ॥ ॥ अथाभाद्यो गुग्गुलुः ॥ आभाफलत्रिकव्योषैः सर्वैरेतैः समांशकैः । तुल्यं गुग्गु-

---

१ ( च० ) पिच्छित ।

लुना योज्यं भग्नसन्धिप्रसाधकम् ॥ १ ॥ अथ गोधूमप्रयोगः ॥ ईषद्विदग्धगोधूमचूर्णं पीतं समाक्षिकम् । कटिसन्धिषु भग्नेषु भुग्नेष्वस्थिषु पूजितम् ॥ १ ॥ अविदाहिभिरन्नैश्च पिष्टकैः समुपाचरेत् । मांसं मांसरसं क्षीरं सर्पिर्यूषं च मुद्गजम् ॥२॥ बृंहणं चान्नपानं च सन्धिभग्नाय दापयेत् । लवणं कटुकं क्षारं साम्लं मैथुनमातपम् ॥ ३ ॥ व्यायामं च न सेवेत भग्नो रूक्षान्नमेव च । बालानां तरुणानां च भग्नान्याशु भवन्ति वै ॥ समीचीनानि वृद्धानां भग्नानां न विशेषतः ॥ ४ ॥ इति भग्ननिदानचिकित्सा ॥

## ॥ अथ नाडीव्रणनिदानम् ॥

यः शोफमाममतिपक्कमुपेक्षतेऽज्ञो यो वा व्रणं प्रचुरपूयमसाधुवृत्तः । अभ्यन्तरं प्रविशति प्रविदार्य तस्य स्थानानि पूर्वविहितानि ततः सपूयः ॥ १ ॥ तस्यातिमात्रगमनाद् गतिरिष्यते तु नाडीव यद्वहति तेन मता तु नाडी ॥२॥ अथ सङ्ख्यामाह ॥ दोषैस्त्रिभिर्भवति सा पृथगेकशश्च संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या । तत्रानिलात् परुषसूक्ष्ममुखी सशूला फेनानुविद्धमधिकं स्रवति क्षपासु ॥ १ ॥ अथ वातिकमाह ॥ पित्तात्तु तृड्ज्वरकरी भ्रमदाहयुक्ता पित्तं स्रवत्यधिकमुष्णमहःसु चापि ॥ १ ॥ अथ श्लेष्मजामाह ॥ ज्ञेया कफाद् बहुघनार्जुनपिच्छिलास्रा स्तब्धा सकण्डुररुजा रजनी प्रवृद्धा ॥ १ ॥ अथ त्रिदोषजामाह ॥ दोषद्वयाभिहितलक्षणदर्शनेन तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥ १ ॥ दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा यस्यां भवन्त्यभिहितानि च लक्षणानि । तामादिशेत्पवनपित्तकफप्रकोपाद्घोरां गतिं त्वसुहरामिव कालरात्रिम् ॥ २ ॥ अथ शल्यनिमित्तजामाह ॥ नष्टं कथंचिदनुमार्गमुदीरितेषु स्थानेषु शल्यमचिरेण गतिं करोति । सा फेनिलं मथितमुष्णमसृग्विमिश्रं स्रावं करोति सहसा सरुजा च नित्यम् ॥१॥ नाडी त्रिदोषप्रभवा न सिध्येच्छेषाश्चतस्रः खलु यत्नसाध्याः ॥ २ ॥ इति नाडीव्रणनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

नाडीनां गतिमन्वीक्ष्य शस्त्रेणोत्पाट्य कर्मवित् । सर्वं व्रणक्रमं कुर्याच्छोधनारोपणादिकम् ॥१॥ कृशदुर्बलभीरूणां नाडी मर्माश्रिता तु या । क्षारसूत्रेण संछिद्यान्न शस्त्रेण कदाचन ॥२ ॥ नाडीं वातकृतां साधु पाटितां लेपयेद् भिषक् । प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥ ३ ॥ पैत्तिकीं तिलमञ्जिष्ठानागदन्तीनिशाह्वयैः । श्लैष्मिकीं तिलयष्ट्याह्वनिकुम्भारिष्टसैन्धवैः ॥ ४ ॥ शल्यजां तिलमञ्जिष्ठामध्वाज्यैर्लेपयेन्मुहुः । आरग्वधनिशाकोलचूर्णाज्यक्षौद्रसंयुता ॥ सूत्रवर्तिर्व्रणे योज्या शोधनी गतिनाशिनी ॥ ५ ॥ जात्यर्कशम्पाककरञ्जदन्तीसिन्धूत्थसौवर्चलयावशूकैः । वर्तिः कृता हन्त्यचिरेण नाडीस्नुक्क्षीरपिष्टा सह सैन्धवेन ॥६॥ समूलपत्रां निर्गुण्डीं पीडयित्वा रसं हरेत् । तेन सिद्धं समं तैलं नाडीदुष्टव्रणापहम् ॥ ७ ॥ गुग्गुलुस्त्रिफलाव्योषैः समांशैश्चाज्ययोजितैः । नाडीं दुष्टव्रणं चापि जयेदपि भगन्दरम् ॥ ८ ॥

इति नाडीव्रणचिकित्सा ॥ अथ सर्वव्रणरोगाणां पथ्यापथ्यम् ॥ यवषष्टिक-गोधूमपुराणाः सितशालयः। मसूरतुवरीमुद्गयूषश्च मधुशर्करा ॥ १ ॥ विलेपी लाजमण्डश्च जाङ्गला मृगपक्षिणः। घृतं तैलं पटोलं च वेत्राग्रं बालमूलकम् ॥ २ ॥ वार्ताकं कारवेल्लं च कर्कोटं तण्डुलीयकम्। एतत्पथ्यं नरैः सेव्यं यथावस्थं यथामलम् ॥ व्रणशोथे व्रणे सद्योव्रणे नाडीव्रणेऽपि च ॥ ३ ॥ रूक्षाम्लशीतं लवणं व्यवायमायासमुच्चैःपरिभाषणं च। प्रियासमालोकनमह्नि निद्रां प्रजागरं चङ्क्रमणं नितान्तम् ॥ ४ ॥ शोकं विरुद्धाशनमम्बुपानं ताम्बूलशाकानि च पत्रवन्ति। अजाङ्गलं मांसमसात्म्यमन्नं विवर्जयेत्सन्ततमप्रमत्तः ॥ ५ ॥ इति सर्वव्रणचिकित्सा ॥

---

## ॥ अथ भगन्दरनिदानम् ॥

गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिटिकार्तिकृत्। भिन्नो भगन्दरो ज्ञेयः स च पञ्चविधो मतः ॥ १ ॥ अथ सङ्ख्यामाह ॥ वातपित्तकफैस्त्रेधा चतुर्थः सन्निपाततः। उन्मार्गगः पञ्चमः स्यादेवं पञ्चविधो मतः ॥१॥ अथ तस्य पूर्वरूपमाह ॥ कटीकपालनिस्तोददाहकण्डूरुजादयः। भवन्ति पूर्वरूपाणि भविष्यति भगन्दरे ॥ १ ॥ अथ वातिकमाह ॥ कषायरूक्षैरतिकोपितोऽनिलस्त्वपानदेशे पिटिकां करोति। उपेक्षणात्पाकमुपैति दारुणं रुजा च भिन्नारुणफेनवाहिनी ॥ १ ॥ तत्रागमो मूत्रपुरीषरेतसां व्रणैरनेकैः शतपोनकं वदेत् ॥ १ ॥ अथ पित्तजमाह ॥ प्रकोपणैः पित्तमतिप्रकोपितं करोति रक्तां पिटिकां गुदार्तिदाम्। तदाशु पाकाहिमपूयवाहिनीं भगन्दरं तूष्ट्रशिरोधरं वदेत् ॥१॥ अथ श्लेष्मजमाह ॥ कण्डूयनो घनस्रावी कठिनो मन्दवेदनः। श्वेतावभासः कफजः परिस्रावी भगन्दरः ॥ १ ॥ अथ सन्निपातजमाह ॥ बहुवर्णरुजाः स्रावाः पिटिका गोस्तनोपमाः। शम्बूकावर्त्तवन्नाडी शम्बूकावर्तको मतः ॥ १ ॥ अथोन्मार्गगमाह ॥ क्षताद् गतिः पायुगता विवर्धते ह्युपेक्षणात्सा क्रिमिभिर्विदीर्यते। प्रकुर्वते मार्गमनेकधा मुखैर्व्रणैस्तदुन्मार्गि भगन्दरं वदेत् ॥ १ ॥ अथासाध्यलक्षणमाह ॥ घोराः साधयितुं दुःखाः सर्व एव भगन्दराः। तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्च विशेषतः ॥ १ ॥ वातमूत्रपुरीषाणि क्रमयः शुक्रमेव च। भगन्दरात् स्रवन्तस्तु नाशयन्ति तमातुरम् ॥ २ ॥ इति भगन्दरनिदानम् ॥

## ॥ अथ भगन्दरचिकित्सा ॥

गुदपिटिकायामादौ कुर्याद्रक्तावसेचनं मतिमान्। जलसदनाभिरशेषं सपाकं न प्रयाति यथा ॥ १ ॥ अपानमार्गपिटिकां दहेत्स्वर्णशलाकया। अग्निप्रतप्तया पश्चात्कुर्यादग्निव्रणक्रियाम् ॥ २ ॥ पिटिकानामपक्वानामपतर्पणपूर्वकम्। कर्म कुर्याद्विरेकान्ते भिन्नानां वक्ष्यते क्रिया ॥ ३ ॥ एतासां पाटनक्षारवह्निदाहादिकं क्रमम्। विधाय व्रणवत्कार्यं यथादोषं यथाक्रमम् ॥ ४ ॥ अथ वटपत्रादिलेपः ॥ वटपत्रेष्टिकाशुण्ठीगुडूचीसपुनर्नवाः। सुपिष्टाः पिटिका वक्के ले-

पः शस्तो भगन्दरे ॥ १ ॥ खदिरत्रिफलाकाथो महिषीघृतसंयुतः । विडङ्गचूर्णयुक्तश्च भगन्दरविनाशनः ॥ २ ॥ त्रिफलारससंयुक्तं बिडालास्थिप्रलेपनम् । भगन्दरं निहन्त्याशु दुष्टव्रणहरं परम् ॥ ३ ॥ शुनोऽस्थिभूलता तक्रैः पेषिता खररक्तयुक् । लेपो भगन्दरं हन्यान्नेरास्यां तैलमेव च ॥ ४ ॥ कुष्ठं त्रिवृत्तिलादन्तीमागधीसैन्धवं मधु । रजनीत्रिफलातुत्थैर्हितं स्याद्व्रणरोपणम् ॥ ५ ॥ तिलत्रिवृन्नागदन्तीमञ्जिष्ठाद्यैः ससैन्धवैः । सक्षौद्रैश्च प्रलेपोऽयं भगन्दरकुलान्तकृत् ॥ ६ ॥ रसाञ्जनं हरिद्रे द्वे मञ्जिष्ठानिम्बपल्लवाः । त्रिवृत्तेजोवतीदन्तीकल्को नाडीव्रणापहः ॥७॥ तिलाभयालोध्रमरिष्टपत्रं निशावचाकुष्ठमगारधूमः । भगन्दरे नाड्युपदंशयोश्च दुष्टव्रणे शोधनरोपणोऽयम् ॥ ८ ॥ अथ नवकार्षिको गुग्गुलुः ॥ त्रिफलापुरकृष्णानां त्रिपञ्चैककर्षयोजिता गुटिका । कुष्ठभगन्दरनाडीदुष्टव्रणशोधनी कथिता ॥ १ ॥ अथ जम्बूकप्रकारः ॥ जम्बूकस्यामिषं भुक्त्वा प्रकारैर्व्यञ्जनादिभिः । अजीर्णवर्जी मांसेन मुच्यते तु भगन्दरात् ॥ १ ॥ अथ सप्तविंशतिगुग्गुलुः ॥ त्रिकटुत्रिफलामुस्तं विडङ्गामृतचित्रकम् । चव्यैले पिप्पलीमूलं हपुषामुरदारु च ॥ १ ॥ तुम्बरुं पुष्करं चव्यं विशालारजनीद्वयम् । बिडं सौवर्चलं क्षारं सैन्धवं गजपिप्पली ॥ २ ॥ यावन्त्येतानि द्रव्याणि तावद्द्विगुणगुग्गुलुः । कोलप्रमाणगुटिकां भक्षयेन्मधुना सह ॥ ३ ॥ कासं श्वासं तथा शोफमर्शांसि च भगन्दरम् । हृच्छूलं पार्श्वशूलं च कुक्षिवस्तिगुदे रुजम् ॥ ४ ॥ अश्मरीं मूत्रकृच्छ्रं च अन्त्रवृद्धिं तथा कृमीन् । चिरज्वरोपसृष्टानां क्षयोपहतचेतसाम् ॥ ५ ॥ आनाहं च तथोन्मादं सकुष्ठान्युदराणि च । नाडीदुष्टव्रणान्सर्वान् प्रमेहं श्लीपदं तथा । सप्तविंशतिको ह्येष सर्वरोगनिषूदनः ॥ ६ ॥ अथ करवीराद्यं तैलम् ॥ करवीरनिशादन्तीलाङ्गलीलवणाग्निभिः । मातुलुङ्गार्कपयसा पचेत्तैलं भगन्दरे ॥ १ ॥ अथ विष्यन्दनं तैलम् ॥ चित्रकार्कौ त्रिवृत्पाठे मलपूहयमारकौ । सुधां वचां लाङ्गलिकां हरितालं सुवर्चिकाम् ॥ १ ॥ ज्योतिष्मतीं च संहृत्य तैलं धीरो विपाचयेत् । एतद्विष्यन्दनं नाम तैलं दद्याद्भगन्दरे ॥ शोधनं रोपणं चैव सवर्णकरणं तथा ॥ १ ॥ अथ निशादितैलम् ॥ निशार्कक्षीरसैन्धवाग्निपुरलाङ्गलिवत्सकैः । सिद्धमभ्यञ्जने तैलं भगन्दरविनाशनम् ॥ १ ॥ अथ पथ्यापथ्यम् ॥ आमे संशोधनं लेपो लङ्घनं रक्तमोक्षणम् । पक्वे पुनः शस्त्रविधिस्तथा क्षाराग्निकर्म च ॥ १ ॥ सर्वत्र शालयो मुद्गा विलेपी जाङ्गलो रसः । पटोलं शिग्रुवेत्राग्रं धत्तूरो बालमूलकम् ॥ २ ॥ तिलसर्षपयोस्तैलं तिक्तवर्गो घृतं मधु । एतत्पथ्यं नरैः सेव्यं यथादोषं भगन्दरे ॥ ३ ॥ व्यायामं मैथुनं युद्धं पृष्ठयानं गुरूणि च । संवत्सरं परिहरेद् यावद् दृढव्रणो नरः ॥४॥ इति भगन्दरचिकित्सा ॥

## ॥ अथोपदंशनिदानम् ॥

अथ तस्य हेतुमाह ॥ हस्ताभिघातान्नखदन्तघातादधावनाद्दत्यतिसेवनाद्वा । यो-

१ ( च० ) सुराख्या ।

निप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधापचारैः ॥१॥ अथ वातजमाह ॥ सतोदभेदस्फुरणैः सकृष्णैः स्फोटैर्व्यवस्येत्पवनोपदंशम् ॥ १ ॥ अथ पित्तजकफजे आह ॥ पीतैर्बहुक्लेदयुतैः सदाहैः पित्तेन रक्तैः पिशितावभासैः[1] । सकण्डुरैः शोफयुतैर्महद्भिः शुक्लैर्व्रणैः स्रावयुतैः कफेन ॥ १ ॥ अथ सन्निपातजमाह ॥ नानाविधस्रावरुजोपपन्नमसाध्यमाहुस्त्रिमलोपदंशम् ॥ १ ॥ अथासाध्यत्वमाह ॥ विशीर्णमांसं कृमिभिः प्रजग्धं मुष्कावशेषं परिवर्जयेच्च । संजातमात्रे न करोति मूढः क्रियां नरो यो विषये प्रसक्तः ॥ कालेन शोफक्रिमिदाहपाकैः प्रशीर्णशिश्नो म्रियते स तेन ॥ १ ॥ अथैकस्थानत्वेनात्र लिङ्गार्शमाह ॥ अङ्कुरैरिव सञ्जातैरुपर्युपरि संस्थितैः । क्रमेण जायते वर्तिस्ताम्रचूडशिखोपमा ॥१ ॥ कोशस्याभ्यन्तरे सन्धौ पर्वसन्धिगतापि वा । सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोपजा ॥ २ ॥ लिङ्गवर्तिरिति ख्याता लिङ्गार्श इति चापरे । मेण्ढ्रसन्धौ व्रणाः केचित् केचित्सर्वाश्रयास्तथा ॥ ३ ॥ कुलत्थाकृतयः केचित् केचित्पद्मदलोपमाः । रुजानाहार्तिर्बहुलास्तृष्णाक्लेदसमन्विताः । स्त्रीणां पुंसां च जायन्ते उपदंशाश्च दारुणाः ॥ ४ ॥ इत्युपदंशनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

स्निग्धस्विन्नस्य तेष्वादौ ध्वजमध्ये शिराव्यधः । जलौकापातनं वा स्यादूर्ध्वाधः शोधनं तथा ॥ १ ॥ सद्योऽपहृतदोषस्य रुक्शोफावुपशाम्यतः । पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरश्च सः ॥ २ ॥ अथ क्वाथः ॥ पटोलनिम्बत्रिफलाकिरातैः क्वाथं पिबेद्वा खदिरासनाभ्याम् । सगुग्गुलुं वा त्रिफलायुतं वा सर्वोपदंशापहरः प्रयोगः ॥ १॥ गैरिकाञ्जनमञ्जिष्ठामधुकोशीरपद्मकैः । सचन्दनोत्पलैः स्निग्धैः पेयः पित्तोपदंशहा ॥ २ ॥ अथ लेपाः ॥ सपौण्डरीकैर्मधुकरास्नाकुष्ठपुनर्नवैः । सरलागुरुभद्राख्यैर्लेपो वातोपदंशहा ॥ १ ॥ बब्बूलदलचूर्णेन दाडिमत्वग्रजोऽथ वा । गुण्ठनं लिङ्गदेशस्य लेपः पूगफलेन वा ॥ २ ॥ वटप्ररोहार्जुनजम्बुपथ्या लोध्रं हरिद्रासहितः प्रलेपः । सर्वोपदंशेष्ववरोहणार्थं चूर्णं च तज्जं विमलाञ्जनेन ॥ ३ ॥ दहेत्कटाहे त्रिफलां तां मर्षीं मधुसंयुताम् । कृत्वोपदंशलेपोऽयं सद्यो रोपयति व्रणम् ॥ ४ ॥ त्वचो दारुहरिद्रायाः शङ्खनाभीरसाञ्जनम् । लाक्षागोमयनिर्यासतैलं क्षौद्रं घृतं पयः ॥ ५ ॥ एभिः सुपिष्टैर्द्रव्यांशैरुपदंशं प्रलेपयेत् । व्रणाश्च तेन शाम्यन्ति श्वयथुर्दाह एव च ॥ ६ ॥ नीलोत्पलानि कुमुदं पद्मसौगन्धिकानि च । उपदंशेषु चूर्णानि प्रदेहोऽयं प्रशस्यते ॥ ७ ॥ रसाञ्जनं शिरीषेण पथ्यया च समन्वितम् । सक्षौद्रं लेपनं योज्यं सद्यो रोपयति व्रणम् ॥ ८ ॥ गोपीचन्दनतुत्थे च समभागेन मर्दयेत् । कज्जली जलसंयुक्ता व्रणानां लेपने हिता ॥ ९॥ मोचापूगविभूतिं च कोलत्वक्शङ्ख-

---

१ स्फोटैः सकृष्णैः रुधिरं स्रवन्तं रक्तात्मकम् पित्तसमानलिङ्गम् । २ ( च० ) संघातै— । ३ ( च० ) सर्वसन्धि । ४ ( ग० च० ) शोथाःस्युस्तृष्णादाहसमन्विताः ।

जीरकम् । पिष्ट्वोपदंशे लेपोऽयं पयसा पानमेव च ॥ नाशयेदुष्णतां तूर्णं शुष्कान्कुर्याद् व्रणानपि ॥१०॥ अथ पारदादिलेपः ॥ पारदं गन्धकं तालं दरदं च मनःशिलाम् । पृथक्कर्षं द्विकर्षं च मुद्दारं सकृजीरकम् ॥ १ ॥ विधाय कज्जलीं श्लक्ष्णां मर्दयेत्सुरसारसैः । छायाशुष्कां ततः कृत्वा पुनरुन्मत्तजद्रवैः ॥ २ ॥ विमर्द्याथ वटी कार्या उपदंशे प्रयोजयेत् । गोघृतेन प्रलेपोऽयं व्रणानां रोपणे हितः ॥ ३ ॥ इति लेपाः ॥ अथ स्वरसाः ॥ आम्रत्वचं विनिष्पीड्य निगृह्य स्वरसं पलम् । चतुष्पलं त्वजाक्षीरं संयुक्तं प्रपिबेत्प्रगे ॥ १ ॥ एवं मुनिदिनं कुर्यादुपदंशे व्रणे हितम् । अजाक्षीरं तथाजीर्णगोधूमं पथ्यमाचरेत् ॥ २ ॥ जातीप्रवालस्वरसं पलार्धं धेनोर्घृतं तत्समंरालकिञ्चित् । पिबेत्प्रगे पञ्चविधोपदंशे क्षाराह्यते गोधुमसर्पि पथ्यम् ॥३॥ इति स्वरसाः ॥ अथ प्रक्षालनम् ॥ निम्बार्जुनाश्वत्थकदम्बशालजम्बूवटोदुम्बरवैतसाद्भिः । प्रक्षालनाल्लेपघृतानि कुर्याच्चूर्णं च पित्तास्रभवोपदंशे ॥ १ ॥ त्रिफलायाः कषायेण भृङ्गराजरसेन वा । व्रणप्रक्षालनं कुर्यादुपदंशप्रशान्तये ॥ २ ॥ अश्वत्थोदुम्बरप्लक्षवटवेतसजः शृतः । व्रणशोथोपदंशानां नाशनः क्षालनात्स्मृतः ॥ ३ ॥ जयाजात्यश्वमारार्कशम्याकानां दलैः पृथक् । कृतं प्रक्षालने क्वाथं मेढ्रपाके प्रयोजयेत् ॥ ४ ॥ अथोपदंशलिङ्गलेपः ॥ रसकर्पूरगद्याणं मर्दयेत्खदिराम्बुना । प्रक्षालयेद्वारिणा च शुष्के लेपस्तु वारिणा ॥ १ ॥ लिङ्गलेपो व्रणं हन्ति त्रिदिनान्नात्र संशयः ॥ १ ॥ अथ व्रणोपदंशे पूगादिलेपः ॥ पूगं सुदग्धमेकं तु रसगन्धकहिङ्गुलम् । खदिरं तुत्थकं चैव मर्दयेन्निम्बुनीरकैः ॥ १ ॥ समभागानि सर्वाणि गुटिकां कारयेद्बुधः । उपदंशे घृतैर्लेपस्त्रिदिनाद्व्रणरोपणः ॥ २ ॥ अथोपदंशस्फोटेऽवलेपः ॥ जातीफलविडङ्गानि रसकं देवपुष्पकम् । समभागानि सर्वाणि नवनीतेन मर्दयेत् ॥ स्फोटानामुपदंशानां व्रणशोधनरोपणः ॥३॥ अथ घृतानि ॥ भूनिम्बनिम्बत्रिफलापटोलकरञ्जजातीखदिरासनानाम् । सतोयकल्कैर्घृतमाशु पक्वं सर्वोपदंशापहरं प्रदिष्टम् ॥१॥ करञ्जनिम्बार्जुनशालजम्बूवटादिभिः कल्ककषायसिद्धम् । सर्पिर्निहन्यादुपदंशदोषं सदाहपाकं स्रुतिरागयुक्तम् ॥२॥ अथागारधूमादितैलम् ॥ अगारधूमो रजनी सुराकिण्वं च तैस्त्रिभिः । भागोत्तरैः पचेत्तैलं कण्डूशोथरुजापहम् ॥ शोधनं रोपणं चैव सवर्णकरणं तथा ॥ १ ॥ अथ चोपचिन्याश्चूर्णम् ॥ कुडवं चोपचिन्याश्च शर्करायाः पलं तथा । पिप्पली पिप्पलीमूलं मरिचं देवपुष्पकम् ॥ १ ॥ आकल्लं क्षुरकं शुण्ठी जन्तुघ्नं च वराङ्गकम् । पृथक्कोलमितं ग्राह्यमेतच्चूर्णीकृतं शुभम् ॥ २ ॥ सर्वमेकत्र संयोज्य कर्षार्धं प्रातवासरम् । भक्षयेन्मधुसर्पिर्भ्यां युक्तं पथ्यं समाचरेत् ॥ ३ ॥ शाल्योदनं तथा सूपं तुवरीणां घृतं मधु । गोधूमं सैन्धवं शिग्रुं बिम्बी कोशातकीफलम् ॥ ४ ॥ आर्द्रकं जलमन्दोष्णं हितमत्र प्रकीर्तितम् । पञ्चोपदंशरोगाणां प्रमेहाणां तथैव च ॥ व्रणानां वातरोगाणां कुष्ठानां च विनाशनम् ॥ ५ ॥

---

१ ( च० ) सर्जरसेन युक्तम् । २ ( च० ) घृतैश्च कल्कै— । ३ क्षुरकम् ।

इति चोपचिन्याश्चूर्णम् ॥ अथ चोपचिनीपाकः ॥ चोपचिन्युद्भवं चूर्णं पलद्वादशमेव च । पिप्पली पिप्पलीमूलं मरिचं नागरं त्वचम् ॥१ ॥ आकल्लकं लवङ्गं च प्रत्येकं कर्षसंमितम् । शर्करासमचूर्णं च पाचयेत्सर्वमेकतः ॥ २ ॥ मोदकं कारयेत्तत्तु कर्षं कर्षं प्रमाणतः । सायं प्रातर्निषेव्यस्तु पथ्यं पूर्वोक्तचूर्णवत् ॥ ३ ॥ उपदंशे व्रणे कुष्ठे वातरोगे भगन्दरे । धातुक्षयकृते कासे प्रतिश्याये च यक्ष्मणि ॥ सर्वान् रोगान्निहन्त्याशु ततः पुष्टिकरो भवेत् ॥ ४ ॥ इति चोपचिनीपाकः ॥ अथ बालहरीतकीयोगः ॥ बालपथ्यापलैकं च तुत्थं शाणमितं तथा । निम्बुद्रवेण संमर्द्य दृढं सप्त दिनानि वै ॥ १ ॥ गुटिकां चणकमायां छायाशुष्कां तु कारयेत् । शीतोदकानुपानेन नित्यमेकां प्रदापयेत् ॥ २ ॥ घस्राणामेकविंशत्या मुच्यते तूपदंशतः । शालिगोधूममुद्गाश्च गोसर्पिः पथ्यमीरितम् ॥ ३ ॥ अथ रसगन्धककज्जली ॥ कर्षमात्रो रसं शुद्धो द्विकर्षो गन्धकस्तथा । विधिवत्कज्जलीं कृत्वा तां च गोघृतसंयुताम् ॥ १ ॥ माषमात्रां प्रतिदिनं दद्यादेवं त्रिसप्तकम् । गोधूमान्नं घृतं पथ्यं कारयेल्लवणं विना ॥ उपदंशापहः श्रेष्ठो योगोऽयं मुनिभिः स्मृतः ॥ २ ॥ अथ महाक्षारगुटी ॥ महाक्षारमाकल्लकं खादिरं च क्रमाद्वर्धितं वारिणा पिष्टमेतत् । निषेवेत माषप्रमाणं घृतेन महारोगनिघ्नं व्रणेषु व्रणघ्नम् ॥ १ ॥ गोधूमं गोघृतं पथ्यं मन्दं लवणमाचरेत् । द्विवारं ग्राहयेन्नित्यमुपदंशनिवृत्तये ॥ २ ॥ अथ सर्वोपदंशे रसघृतमुच्यते ॥ शुद्धं रसं पिचुमितं द्विर्बलिं प्रमर्द्य सर्वद्विभागनवनीतमपि प्रमर्द्य । वस्त्रे प्रलिप्य पिचुमन्दविपर्णशाखां संवेष्टयेन्नतमुखीं परिदीप्यवर्तिम् ॥ १ ॥ तस्या घृतं स्रवति काचमये च पात्रे धृत्वाहिवल्लिदलसाकमिदं प्रदेयम् । सर्वोपदंशकरिकेसरिणं व्रणघ्नं पट्वादिकं रसघृते च विवर्जनीयम् ॥ २ ॥ अथ पथ्यापथ्यम् ॥ दिवा निद्रां मूत्रवेगं गुर्वन्नं मैथुनं गुडम् । आयासमम्लं तक्रं च वर्जयेदुपदंशवान् ॥ १ ॥ द्विपलं चिक्कणं पूगं द्विकर्षं सिन्धुसस्यकम् । कर्कोरुत्वक्कर्षमिवा भृष्टमेतत्त्रिकं भवेत् ॥ २ ॥ जम्भोदरगतं तुत्थं पुटपाकविधानतः । पक्कं चणकमानं तु सर्वमेतत्सुखल्वके ॥ ३ ॥ जम्बीरसलिलैर्मर्द्यं गाढं सिद्धं दिनत्रयात् । उपदंशं चन्द्रकं च व्रणं पूतिप्रमेहकम् ॥ ४ ॥ पृदाकुवीरुच्छदनलिप्तं प्सातं निवारयेत् । शर्करासहितं पथ्यं गोधूमान्नं घृतप्लुतम् ॥ ५ ॥ पलमात्रे कटुतैले द्व्यक्षं सिक्थं च कर्षमेव पृथक् । कम्पिल्लकं विरोजा सिन्दूरः सोरकं चैव ॥ ६ ॥ मुर्दाडकं च सर्वं पित्तलपात्रे विपाचितं शिखिना । मन्दं पचेत् प्रमथ्य स्वपाणिनोद्वृत्य तत्सिद्धम् ॥ ७ ॥ सितवस्त्रे संलिप्य व्रणोपरिस्थापयेत्सम्यक् । क्षतभूदेशं सर्वं सशूकदोषं फिरङ्गजं हन्यात् ॥ ८ ॥ शस्त्रकृतं नखजातं दन्तजमाशुव्रणं शिखिजम् । दृष्ट्वा प्रत्ययमेतत्प्रकाशितं बालबोधाय ॥ ९ ॥ इत्युपदंशरोगचिकित्सा ॥

---

## ॥ अथ शूकदोषनिदानम् ॥

अथ तस्य सम्प्राप्तिमाह ॥ अक्रमाच्छेफसो वृद्धिं योऽभिवाञ्छति मूढधीः ॥१॥ तस्य सङ्ख्यामाह ॥ व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः॥१॥अथ सर्षपिकामाह॥ गौरसर्षपसंस्थाना शूकदुर्भुग्नहेतुका। पिटिका श्लेष्मवाताभ्यां ज्ञेया सर्षपिका तु सा ॥ १ ॥ अथाष्ठीलिकामाह ॥ कठिनो विषमैर्भुग्नैर्वायुनाष्ठीलिका भवेत् ॥ १ ॥ अथ ग्रन्थिकमाह॥ शूकैर्यत्पूरीतं शश्वद्ग्रथितं नाम तत्कफात्॥१॥अथ कुम्भिकामाह॥ कुम्भिका रक्तपित्तोत्था जाम्बवास्थिनिभा शुभा ॥ १ ॥ अथालजीमाह ॥ तुल्यजां त्वलजीं विद्याद्यथोक्तां च विचक्षणैः॥१॥अथ मृदितमाह ॥ मृदितं पीडितं यत्तु संरब्धं वातकोपतः ॥१॥ अथ सम्मूढपीडिकामाह ॥ पाणिभ्यां भृशसंरूढे सम्मूढपिडिका भवेत् ॥ १ ॥ अथावमन्थमाह ॥ दीर्घा बह्व्यश्च पिटिका दीर्यन्ते मध्यतस्तु याः। सोऽवमन्थः कफासृग्भ्यां वेदना रोमहर्षकृत् ॥ १ ॥ अथ पुष्करिकामाह ॥ पिटिकाभिश्चिता या तु पित्तशोणितसम्भवा।पद्मकर्णिकसंस्थाना ज्ञेया पुष्करिका च सा ॥ १ ॥ अथ स्पर्शहानिकमाह ॥ स्पर्शहानिं तु जनयेच्छोणितं शूकदूषितम्। वातपित्तकृतो ज्ञेयस्त्वपाको ज्वरदाहकृत् ॥ १ ॥ अथोत्तमामाह ॥ मुद्गमाषोपमा रक्ता रक्तपित्तोद्भवा च सा। व्याधिरेषोत्तमा नाम शूकाजीर्णनिमित्तजः ॥ १ ॥ अथ शतपोनकमाह ॥ छिद्रैरणुमुखैर्लिङ्गं चितं यस्य समन्ततः। वातशोणितजो व्याधिः स ज्ञेयः शतपोनकः ॥१॥ अथ त्वक्पाकमाह ॥ वातपित्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहकृत् ॥ १ ॥ अथ शोणितार्बुदमाह ॥ कृष्णैः स्फोटैः सरक्ताभिः पिटिकाभिर्निपीडितम्। यस्य वास्तुरुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम् ॥ १ ॥ अथ मांसार्बुदमाह ॥ मांसदोषेण जानीयादर्बुदं मांससंभवम् ॥ १ ॥ अथ मांसपाकमाह ॥ शीर्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः। विद्यात्तं मांसपाकं तु सर्वदोषकृतं भिषक् ॥ १ ॥ अथ विद्रधिमाह ॥ विद्रधिं सन्निपातेन यथोक्तमभिनिर्दिशेत् ॥ १ ॥ अथ तिलकालकानाह ॥ कृष्णानि चित्राण्यथवा शूकानि सविषाणि तु। पातितानि पचन्त्याशु मेण्ढ्रं निरवशेषतः॥ १ ॥ कालानि भूत्वा मांसानि शीर्यन्ते यस्य देहिनः। सन्निपातसमुत्थांश्च तान्विद्यात्तिलकालकान् ॥ २ ॥ अथ शूकदोषेऽसाध्यत्वमाह ॥ तत्र मांसार्बुदं यत्तु मांसपाकश्च यः स्मृतः। विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः ॥ १ ॥ इति शूकदोषनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

हितं च सार्पिषः पानं पथ्यं चापि विरेचनम्। हितः शोणितमोक्षश्च शूकरोगेषु देहिनाम् ॥ १ ॥ उल्लिख्य सार्षपीं तालपत्रेणाथ प्रलेपयेत्। त्रिकटुत्रिफलालोध्रैर्गोमूत्रपरिपेषितैः ॥ २ ॥ क्रियेयमवमन्थेऽपि रक्तं शोध्यं तथोभयोः। अष्ठीलायां हृते रक्ते श्लेष्मग्रन्थिक्रियां चरेत् ॥ ३ ॥ कुम्भिकायां हरेद्रक्तं पक्वायां शोधिते व्रणे।

---

१ अकस्मा—। २ (क०) कठिनैर्वै—। ३ (मुद्रितपुस्तकस्थपाठः)। अनुमुखैः।

तिन्दुकत्रिफलालोध्रैर्लेपस्तैलं च रोपणम् ॥ ४ ॥ अलज्यां हृतरक्तायां पूर्व एव क्रियाक्रमः । स्वेदयेद् ग्रथितं पश्चान्नाडीस्वेदेन बुद्धिमान् ॥ ५ ॥ सुखोष्णैरुपनाहैश्च व्रणोक्तैरुपनाहयेत् । उत्तमाख्यां तु पिटिकां संस्वेद्य बडिशोद्धृताम् ॥ ६ ॥ कल्कचूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत् । क्रमः पित्तविसर्पोक्तः पुष्करीमूढयोर्हितः ॥७॥ त्वक्पाके स्पर्शहानौ च सेचयेन्मृदितं पुनः । बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥ ८ ॥ रसक्रिया विधातव्या लिखिते शतपोनके । पृथक्पर्ण्यादिभिः सिद्धं तैलं देयमनन्तरम् ॥ ९ ॥ रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्बुदे । मांसार्बुदे प्रकुर्वीत क्रियां सद्योव्रणोदिताम् ॥ १० ॥ त्रिफलागुग्गुलुं चापि विशेषेणाव*चारयेत् । मांसपाके वटाद्यस्य गणस्य विधिवत्कृतैः ॥ ११ ॥ कषायचूर्णकल्कैश्च सेकोद्धूलनलेपनम् । विद्रधौ विधिवत्कार्यं रक्तविद्रधिभेषजम् ॥ १२ ॥ वरुणादिकषायस्य पानप्रक्षालने हिते । तिलकालं समुल्लिख्य क्षुरेण लघुपाणिना ॥ १३ ॥ भिषजात्र कर्तव्यः सद्योव्रणविधिर्मतः । मांसार्बुदं मांसपाकं विद्रधिं तिलकालकम् ॥ प्रत्याख्याय प्रकुर्वीत भिषक् तेषां प्रतिक्रियाम् ॥ १४ ॥ इति शूकदोषचिकित्सा ॥

---

## ॥ अथ कुष्ठनिदानम् ॥

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च । भजतामागतांश्छर्दिवेगांश्चान्यान्प्रतिघ्नताम् ॥ १ ॥ व्यायाममग्निसन्तापमतिभुक्त्वा निषेविणाम् । शीतोष्णलङ्घनाहारान् क्रमं त्यक्त्वा निषेविणाम् ॥ २ ॥ घर्मश्रमभयार्तानां द्रुतं शीताम्बुसेविनाम् । अजीर्णाध्यशिनां चैव पञ्चकर्मापचारिणाम् ॥ ३ ॥ नवान्नदधिमत्स्याम्ललवणातिनिषेविणाम् । माषमूलकपिष्टान्नतिलक्षारगुडाशिनाम् ॥ ४ ॥ व्यवायं चाप्यजीर्णेऽन्ने निद्रां च भजतां दिवा । विप्रान्गुरून्धर्षयतां पापं वा कर्म कुर्वताम् ॥ ५ ॥ पाप्मभिः कर्मभिः सद्यः प्राक्तनैश्चेरिता मलाः । वातादयस्त्रयो दोषास्त्वग्रक्तं मांसमम्बु च ॥६॥ दूषयन्ति सकुष्ठानां सप्तको द्रव्यसङ्ग्रहः । त्वचः कुर्वन्ति वैवर्ण्यं दुष्टाः कुष्ठमुशन्ति तत् ॥ ७ ॥ अतः कुष्ठानि जायन्ते सप्त चैकादशैव तु । कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः ॥ ८ ॥ सर्वेष्वपि त्रिदोषत्वं व्यपदेशोऽधिकत्वतः । अतिश्लक्ष्णः खरस्पर्शः स्वेदास्वेदौ विवर्णता ॥ ९ ॥ दाहः कण्डूस्त्वचि स्वापस्तोदः कोष्ठोन्नतिः श्रमः । व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ॥ १० ॥ रूढानामतिरूक्षत्वं निमित्तेऽल्पेऽपि कोपनम् । रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ॥ ११ ॥ तत्र कपालकुष्ठमाह ॥ कृष्णारुणं कपालाभं यद्रूक्षं परुषं तनु । कापालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम् ॥ १ ॥ अथोदुम्बरमाह ॥ रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम् । उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत् ॥ १ ॥ अथ मण्डलकुष्ठमाह ॥ श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् । कृच्छ्रमन्योन्यसंयुक्तं कुष्ठं

---

* दद्यादित्यर्थः ।

मण्डलमुच्यते ॥ १ ॥ अथर्ष्यजिह्वमाह ॥ कर्कशं रक्तपर्यन्तमतः श्यावं सवेदनम्। यदृष्यजिह्वासंस्थानमृष्यजिह्वं तदुच्यते ॥ १ ॥ अथ पुण्डरीकमाह ॥ सुश्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम्। रक्तान्तर्दाहकण्ड्वाढ्यं चितं पद्ममिवांशुभिः ॥ सोत्सेधं च सरागं च पुण्डरीकं प्रचक्षते ॥ १ ॥ अथ सिध्मकुष्ठमाह ॥ सितं ताम्रं तनु च यद्रजो घृष्टं विमुञ्चति । प्रायश्चोरसि तत्सिध्ममलाबुकुसुमोपमम् ॥ १ ॥ अथ काकणन्तिकमाह ॥ पूर्वं रक्तं च कृष्णं च काकणन्तिफलोपमम् । सदाहमस्पर्शसहं सपाकं तीव्रवेदनम् ॥ १ ॥ यत्काकणन्तिकावर्णं सपाकं तीव्रवेदनम् । त्रिदोषलिङ्गं तत्कुष्ठं काकणं नैव सिध्यति ॥२॥ इति सप्त महाकुष्ठानि ॥ अथैकादश क्षुद्रकुष्ठानि ॥ तत्र चर्मकुष्ठमाह ॥ अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम्। तदेककुष्ठं चर्माख्यं बहुलं हस्तिचर्मवत् ॥ १ ॥ अथ किटिभमाह ॥ श्यावं किणखरस्पर्शं परुषं किटिभं मतम् ॥ १ ॥ अथ वैपादिकमाह ॥ वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम् ॥ १ ॥ अथालसकमाह ॥ कण्डूमद्भिः सरागैश्च गण्डैरलसकं वदेत् ॥[१]॥ अथ कण्डुमण्डलमाह ॥ सकण्डुरागपिटिकं दद्रुमण्डलमुद्गतम् ॥१॥ अथ चर्मदलमाह ॥ रक्तं सशूलं कण्डूमत् सस्फोटं दलयत्यपि। तच्चर्मदलमाख्यातमस्पर्शसहमुच्यते ॥१॥ अथ पामामाह ॥ सूक्ष्मा बह्व्यः पीटिकाः स्राववत्यः पामेत्युक्ताः कण्डुमत्यः सदाहाः। सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेया पाण्योः कच्छुरुग्रा स्फिजोश्च ॥ १ ॥ अथ विस्फोटमाह ॥ स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ॥ १ ॥ अथ रकसमाह ॥ कण्डूचिता या पिटिका शरीरे संस्राव्यमाना रकसोच्यते च ॥ १ ॥ अथ शतारुमाह ॥ रक्तं श्यावं सदाहार्ति शतारुःस्याद्बहुव्रणम् ॥ १ ॥ विचर्चिकामाह ॥ सकण्डुः पिटिका श्यावा बहुस्रावा विचर्चिका । पाण्डुरं श्वित्रमित्युक्तं सस्रावं कण्डुसंयुतम् ॥ अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥१॥ कुष्ठानां दोषत्रयस्य नियतलिङ्गमाह ॥ खरं श्यावारुणं रूक्षं वातकुष्ठं सवेदनम् । पित्तात्प्रकुपितं दाहरागस्रावान्वितं मतम् ॥ १ ॥ कफात्क्लेदि घनं स्निग्धं सकण्डूशैत्यगौरवम्। द्विलिङ्गं द्वन्द्वजं कुष्ठं त्रिलिङ्गं सान्निपातिकम् ॥ स्पर्शहानिः सस्वेदत्वमीषत्कण्डूश्च जायते ॥ २ ॥ इदानीमुत्तरोत्तरं सप्तधातुगतकुष्ठलक्षणं क्रमेणोच्यते ॥ तत्रादौ रसगतमाह ॥ त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यं च जायते । त्वक्स्वापो. रोमहर्षश्च स्वेदस्यापि प्रवर्तनम् ॥ १ ॥ रक्तगतमाह ॥ कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते ॥ १ ॥ मांसगतमाह ॥ बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिटिकोद्गमः। तोदः स्फोटः स्थिरत्वं च कुष्ठे मांससमाश्रिते ॥१॥ मेदोगतमाह ॥ दौर्गन्ध्यं गात्रदोषश्च पूयोत्थक्रमयस्तथा। गात्राणां भेदनं चापि कुष्ठे मेदस्समाश्रिते ॥ १ ॥ कौण्यं गतिक्षयोऽङ्गानां संभेदः क्षतसर्पणम्। मेदःस्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥२॥ अस्थिमज्जाद्व्यगतमाह ॥ नासाभङ्गोऽक्षिरागश्च क्षतेषु क्रिमिसंभवः। स्वरोपघातश्च भवेदस्थिमज्जासमाश्रिते ॥ १ ॥ शुक्रगतमाह ॥ दम्पत्योः कुष्ठबाहुल्याद्दुष्टशोणितशुक्रयोः। यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ॥ १ ॥ इति

१ (च०) अन्तः।

सप्तधातुगतानि कुष्ठानि ॥ अथ साध्यमाह ॥ साध्यं त्वग्रक्तमांसस्थं वातश्लेष्माधिकं च यत् ॥ १ ॥ अथ कृच्छ्रम् ॥ मेदोगं द्वन्द्वजं याप्यम् ॥ असाध्यम् ॥ वर्ज्यं मज्जास्थिसंश्रितम् ॥१॥ पुनरसाध्यलक्षणम् ॥ कृमिकृद्दाहमन्दाग्निसंयुक्तं यत्त्रिदोषजम् । प्रभिन्नं प्रस्रुताङ्गं च रक्तनेत्रं हतस्वरम् ॥ १ ॥ पञ्चकर्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम् ॥ कुष्ठेषु चिकित्सार्थं दोषप्राधान्यमाह ॥ वातेन कुष्ठं कापालं पित्तादौदुम्बरं कफात् । मण्डलाख्यं विचर्ची च ऋष्याख्यं वातपित्तजम् ॥ १ ॥ चर्माख्यकुष्ठं किटिभं सिध्मालसविपादिकाः वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी ॥ २ ॥ पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा । सर्वैः स्यात्काकणं पूर्वं त्रिकं दद्रुः सकाकणः ॥२॥ पुण्डरीकमृष्यजिह्वे महाकुष्ठानि सप्त तु ॥ अथ श्वित्रमाह ॥ कुष्ठैकसंभवं श्वित्रं किलासं दारुणं च यत् । निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ॥१॥ वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् । सदाहं लोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥ २ ॥ सकण्डुरं क्रमाद्रक्तमांसमेदस्सु चादिशेत् । वर्णेनैवेदमुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥ ३ ॥ अथ तस्य साध्यासाध्यत्वमाह ॥ अशुक्ललोमाबहुलमसंसृष्टमथो नवम् । अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥ १ ॥ गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् । वर्जनीयं विशेषेण किलासं सिद्धिमिच्छता ॥२॥ स्पर्शैकाहारशय्यादिसेवनात्प्रायशो गदाः । सर्वे सञ्चारिणो नेत्रत्वग्विकारा विशेषतः ॥ ३ ॥ कुष्ठादिसंसर्गजान् रोगानाह ॥ प्रसंगाद्गात्रसंस्पर्शान्निःश्वासात्सहभोजनात् । सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् ॥ १ ॥ कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च । औपसर्गिकरोगाश्च संक्रामन्ति नरान्तरम् ॥ २ ॥ मरणं यदि कुष्ठेन पुनर्जातस्य तद्भवेत् । नातो निन्द्यतरो रोगो यथा कुष्ठं प्रकीर्तितम् ॥ ३ ॥ इति कुष्ठनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु । पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं विहितम् ॥ १ ॥ प्रभूतं वा जलौकाभिः शृङ्गालाबुशिराव्यधैः । स्निग्धस्य मोक्षयेद्रक्तं दुष्टं कुष्ठे पुनः पुनः ॥ २ ॥ स्रुते रक्ते हृते दोषे स्नेहैः संशमितेऽनिले । रसायनानि प्राशाश्च प्रशस्ताः कुष्ठिनां मताः ॥ ३ ॥ अथ वमनम् ॥ यववासापटोलानां निम्बस्य फलिनीत्वचः । कषायो मधुना पीतो वान्तिकृन्मदनान्वितः ॥ १ ॥ इति वमने पञ्चकषायः ॥ अथ विरेचनम् ॥ विरेचनं प्रयोक्तव्यं त्रिवृद्दतीफलत्रिकैः । षष्ठे मासे शिरामोक्षं प्रतिमासं विरेचनम् ॥ प्रतिपक्षं च वमनं कुष्ठे लेपं त्र्यहाच्चरेत् ॥१ ॥ अथ लेपः ॥ पथ्याकरञ्जसिद्धार्थनिशावल्गुजसैन्धवैः । विडङ्गसहितैः पिष्टैर्लेपमात्रेण कुष्ठजित् ॥ १ ॥ एलाकुष्ठविडङ्गानि शताह्वा चित्रकम्बला । दन्ती रसाञ्जनं चेति लेपः कुष्ठविनाशनः ॥ २ ॥ मनःशिलाले मरिचानि तैलमार्कं पयः कुष्ठहरः प्रदेहः । करञ्जबीजैडगजं सकुष्ठं गोमूत्रपिष्टश्च परः प्रदेहः ॥ ३ ॥ बलिवेल्लाग्निभल्ला-

---

१ ( च० ) चर्मैक—। २ ( च० ) चारणम् । ३ ( मु० पु० पाठः । ) वर्णेनैवेदमुभयम् ।

तदन्तीशम्याकनिम्बकैः । काञ्जिकैः पेषितैर्लेपः श्वेतकुष्ठविनाशकृत् ॥ ४ ॥ श्वेतकरवीरमूलं कुटजकरञ्जत्वचो दार्व्याः । सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥५॥ शैलेयकम्पिल्लकयष्टिसाह्वसौराष्ट्रिका सर्जरसोपलेनि । शिला च चूर्णो नवनीतयुक्तः कुष्ठे स्रवत्यभ्यधिकः प्रदिष्टः ॥ ६ ॥ रसगन्धकयोः पिष्टं कटुतैलेन भृङ्गजैः । द्रवैः संमर्द्य तल्लेपात्सर्वकुष्ठं विनश्यति ॥ ७ ॥ अथ क्वाथाः ॥ गुडूचीत्रिफलादार्वीक्वाथ उष्णैश्च वारिभिः । त्वग्दोषव्रणशोफघ्नः पीतो मासं सगुग्गुलुः ॥१॥ खदिरत्रिफलानिम्बपटोलामृतवासकैः । अष्टकोऽयं जयेत्कुष्ठकण्डूविस्फोटकानपि ॥२॥ अथ महाकषायः ॥ शुण्ठीनिम्बकिराततिक्तककणापाठाहरिद्राद्वयं त्रायन्तीत्रिफलामृताब्जकटुकावासावचाबाकुची । मञ्जिष्ठातिविषादुरालभमहानिम्बाग्निमद्ग्रन्थिकाव्याधिघ्नागजचिर्भिटासकुटजा भार्गी समुस्ता यवा । १ ॥ मूर्वा चैव पटोलपत्रसहिता रक्तं तथा चन्दनं श्यामा पर्पटसारिवा कृमिहरा गायत्रिकासंयुता । गोमूत्रेण महाकषायमरुणोद्भूतं पिबेद्यः पुमांस्तस्याष्टादश यान्ति नाशमचिरात्कुष्ठानि दुष्टान्यपि ॥ २ ॥ अथ नवककषायः ॥ त्रिफला निम्बपटोलं मञ्जिष्ठा रोहिणी वचा रजनी । एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम् ॥१॥ इति क्वाथाः ॥ अथ खदिरोदकम् ॥ प्रलेपोद्वर्तनस्नानपानभोजनकर्मसु । शीलितं खादिरं वारि सर्वत्वग्दोषनाशनम् ॥१॥ दह्यमानाच्युतः कुम्भे समूलखदिराद्रसः । साज्यधात्रीरसः क्षौद्रो हन्यात्कुष्ठं रसायनम् ॥ २ ॥ अथ निम्बादिकल्कः ॥ निम्बपत्रशतं पिष्ट्वा निम्बामलकमेव च । विडङ्गबाकुचीकल्कं पिबेदाकुष्ठनाशनम् ॥१॥ अथ चूर्णानि ॥ तत्रादौ पञ्चनिम्बचूर्णम् ॥ पिचुमन्दफलं पुष्पं त्वक्पत्रं मूलमेव च ॥ पञ्चैतानि च सूक्ष्माणि समचूर्णानि कारयेत् ॥१॥ अष्टभागावशेषेण खदिरासनवारिणा । भावयित्वा तु संयोज्य द्रव्याण्येतानि दापयेत् ॥२॥ चित्रकोऽथ विडङ्गानि व्याधिघातकशर्कराः । भल्लातकहरीतक्यौ शुण्ठ्यामलकगोक्षुराः ॥ ३॥ चक्रमर्दकबाकुचीपिप्पलीमरिचं निशा । लोहचूर्णसमायुक्तं समभागं प्रमाणतः ॥ ४ ॥ भावयेद्भृङ्गराजेन पुनः शुष्काणि कारयेत् । निम्बार्धचूर्णमेतेषामेकीकृत्य निधापयेत् ॥५॥ बिडालपदमात्रं तु सर्पिषा पयसापि वा । प्रातः प्रातर्निषेवेत खदिरासनवारिणा ॥६॥ परिहारो न चात्रास्ति पञ्चनिम्बेऽवतिष्ठति । मासमात्रप्रयोगेण कुष्ठं हन्ति रसायनम् ॥ ७ ॥ त्वग्दोषनीलिकाव्यङ्गं तथैव तिलकालकान् । अष्टादशविधं कुष्ठं सप्त चैव महाक्षयान् । सर्वव्याधिविनिर्मुक्तो जीवेद्वर्षशतं सुखी ॥ ८ ॥ अथोद्धूलने सर्षपादिचूर्णम् ॥ सर्षपकरञ्जरजनीदारुनिशादारुमञ्जिष्ठाः । त्रिफलाशटीपटीरश्वेतामूर्वाप्रियङ्गुकाः ॥ १ ॥ त्रिकटुश्चापि त्रिगन्धकेसरलाक्षाश्चैषां कृतं रजः श्लक्ष्णम् । उद्धूलनेन रक्तजपित्तजवातोत्थितं वापि ॥ निस्तोदभेदपिटिकं कुष्ठं स्फुटनं विनाशयति ॥ २ ॥ अथ विडङ्गादिचूर्णम् ॥ विडङ्गत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम् । हन्ति कुष्ठं कृमीन्मेहान्नाडीदुष्टभगन्दरान् ॥१॥ इति चूर्णानि ॥ अथ गुटि-

---

१ (च०)—रसोत्पलानि । २ (च०) घृतः ।

काः॥ तत्रादौ सर्वाङ्गसुन्दरी गुटिका॥ भल्लातकसहस्रैकं त्रिफलावारिणि क्षिपेत्। द्रोणमात्रे पचेत्तावद्यावत्पादावशेषितम्॥१॥ शर्कराया दश पलान्येकं बाकुचिकापलम्, तथैवात्रैव देयानि पलानि दश गुग्गुलोः ॥२॥ खदिरारिष्टमञ्जिष्ठाबीजकं चेन्द्रवारुणी। चित्रकं द्वे हरिद्रे च देवदारु हरीतकी ॥३॥ भार्गी वचेति सर्वेषां प्रत्येकं च पलार्धकम्। प्रक्षिप्य गुटिका कार्या नाम्ना सर्वाङ्गसुंदरी ॥ ४ ॥ प्रत्यहं भक्षयेत्कुष्ठी त्वेतां बदरमात्रया। सर्वाण्येवोग्रकुष्ठानि शीघ्रमेव व्यपोहति ॥ ५ ॥ अथ त्रिफलागुटिका ॥ त्रिफलारुष्करलोहैः सावल्गुजभृङ्गलाङ्गलीव्योषैः। सगुडैर्वाराहकन्दैः पलिकैरेकत्र संमिश्रैः ॥१॥ गुटिकां प्रकल्प्य खादेदेकैकामक्षसंमितां प्रातः। कुष्ठं दद्रुकिलासं जित्वा वर्षेण सर्वथा पलितम् ॥ जीवति वर्षशतं वै दीप्तहुताशो युवेव सोत्साहः ॥२॥ अथैकविंशतिको गुग्गुलः॥ चित्रकत्रिफलाव्योषमजाजीकारवीवचाः। सैन्धवातिविषा कुष्ठं चव्यैलायावशूकजम् ॥ १ ॥ विडङ्गान्यजमोदा च मुस्तान्यमरदारु च। यावन्त्येतानि सर्वाणि तावन्मात्रस्तु गुग्गुलुः ॥ २ ॥ संकुट्य सर्पिषा सार्धं गुटिकां कारयेद्भिषक्। प्रातर्भोजनकाले वा भक्षयेत्तु यथाबलम् ॥ ३ ॥ हन्त्यष्टादश कुष्ठानि कृमिदुष्टव्रणानपि। ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान् ॥४॥ गृध्रसीमथ भग्नं च गुल्मं चापि नियच्छति। व्याधीन्कोष्ठगतांश्चान्याञ्जयेद्विष्णुरिवासुरान् ॥ ५ ॥ अथ त्रिफलामोदकः ॥ त्रैफलस्य तु चूर्णस्य पलानि दश पञ्च च। सप्त चैव विडङ्गानां लोहचूर्णं पलद्वयम् ॥१॥ शतं भल्लातकानां च पलानि दश बाकुची। शिलाजतु पलार्धं तु द्वे पले गुग्गुलोस्तथा ॥२॥ पलं पुष्करमूलस्य पलार्धं त्रिवृतस्य च। सचित्रकं समरिचं पिप्पलीविश्वभेषजम् ॥ ३ ॥ त्वक्पत्रं कुङ्कुमं मुस्ता कार्षिकानुपकल्पयेत्। यावन्त्येतानि चूर्णानि तावत्खण्डं प्रदापयेत् ॥ ४ ॥ पलिकान् मोदकान्कृत्वा प्रातरुत्थाय नित्यशः। एकैकं भक्षयेत्प्राज्ञो यथेष्टं चात्र भोजनम् ॥ ५ ॥ कुष्ठान्यष्टादशापीह प्लीहगुल्मभगन्दरान्। अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ॥ ६ ॥ विंशतिं श्लैष्मिकांश्चापि संसृष्टान्सान्निपातिकान्। शालक्यगतरोगांश्च शिरोऽक्षिभ्रूगतांस्तथा ॥ ७ ॥ कण्ठतालुगतांश्चापि जिह्वायामुपजिह्वकम्। ऊर्ध्वजत्रुगते रोगे भुक्तस्योपरि दापयेत् ॥ ८ ॥ शारीरे दापयेत्पूर्वमौदरे मध्यभोजने। निर्दिष्टरोगाञ्शमयेत् क्रियमाणं रसायनम् ॥ ९ ॥ अथावलेहाः ॥ तत्रादौ भल्लातकावलेहः ॥ निम्बगोपारुणाकट्वीत्रायन्तीत्रिफलाघनम् । पर्पटीवल्गुजानन्तावचाखदिरचन्दनम् ॥ १ ॥ पाठा शुण्ठी शटी भार्गी वासा भूनिम्बवत्सकम्। श्यामेन्द्रवारुणीमूर्वाविडङ्गातिविषानलम् ॥ २ ॥ हस्तिकर्णामृन्ताब्दार्ह्वं पटोलं रजनीद्वयम्। कृष्णारग्वधसप्ताह्वशिरिषं चोचटाफलम् ॥ ३ ॥ मञ्जिष्ठालाङ्गली रास्ना नक्तमालः पुनर्नवा। दन्ती बीजकसारश्च भृङ्गराजकुरण्टकम् ॥ ४ ॥ एतान् द्विपलिकान्भागाञ्जलद्रोणे विपाचयेत्। अष्टभागावशिष्टं च कषायमवतारयेत् ॥ ५ ॥ भल्लातकसहस्राणि क्षिपे-

१ (क० ग०) व्देका।

च्छित्वार्मणेऽम्भसि। चतुर्भागावशिष्टं तु कषायमवतारयेत् ॥६॥ तौ कषायौ समादाय वस्त्रपूतौ तु कारयेत्। एकीकृत्य कषायौ तौ पुनरग्नावधिश्रयेत् ॥७॥ गुडस्यैकतुलां दत्वा लेहवत्साधयेद्भिषक्। भल्लातकसहस्रस्य तत्र बीजानि दापयेत् ॥८॥ त्रिकटु त्रिफला मुस्तं विडङ्गं चित्रकं तथा। चन्दनं सैन्धवं कुष्ठं दीप्यकं च पलं पलम् ॥९॥ चातुर्जातं च सञ्चूर्ण्य घृतभाण्डे निधापयेत्। सौगन्धिकस्य दातव्यं चूर्णं पलचतुष्टयम् ॥१०॥ महाभल्लातको ह्येष महादेवेन निर्मितः। प्राणिनां तु हितार्थाय नाशयेच्छीघ्रमेव च ॥११॥ श्वित्रमौदुम्बरं दद्रुमृष्यजिह्वं सकालकम्[1]। पुण्डरीकं च चर्माख्यं विस्फोटं रक्तमण्डलम् ॥१२॥ कृच्छ्रं कापालिकं कुष्ठं पामां चापि विपादिकाम्। वातरक्तमुदावर्तं पाण्डुरोगं वमीन्क्रमीन् ॥१३॥ अर्शांसि षट्प्रकाराणि श्वासं कासं भगन्दरम्। अनुपानेन दातव्यं छिन्नातोयेन तं भिषक् ॥१४॥ भोजनेन सदा योज्यमुष्णं चाम्लं विशेषतः। अन्यान्यपि च कुष्ठानि नाशयेन्नात्र संशयः॥१५॥इति महाभल्लातकावलेहः॥अथ शशाङ्कलेखादिलेहः॥शशाङ्कलेखा सविडङ्गसारा सपिप्पलीका सहुताशमूला। सायोमला सामलकासतैला सर्वाणि कुष्ठानि निहन्ति लीढा ॥१॥ अथ धात्र्यवलेहः ॥ धात्र्यक्षपथ्यासविडङ्गवह्निभल्लातकावल्गुजलोहभृङ्गाः। भागाभिवृद्धैस्तिलतैलमिश्रैः[2] सर्वाणि कुष्ठानि निहन्ति लेहः ॥१॥ अथ घृतानि ॥ तत्रादौ तिक्तषट्पलं घृतम् ॥ निम्बं पटोलदार्व्यौ दुरालभां तिक्तरोहिणीं त्रिफलाम्। कुर्यादर्धपलांशान्पर्पटकं त्रायमाणां च ॥१॥ सलिलाढकसिद्धानां रसेऽष्टभागस्थिते पूते। चन्दनकिराततिक्तकमागधिका त्रायमाणं च ॥२॥ मुस्तं वत्सकबीजं कल्कीकृत्यार्धकार्षिकान् भागान्। नवसर्पिषश्च षट्पलमेतत्सिद्धं घृतं पेयम् ॥३॥ कुष्ठज्वरगुल्मार्शोग्रहणीपाण्ड्वामयान्हन्ति। पामाविसर्पपिटिकाकण्डूगण्डव्रणान्सिद्धम् ॥४॥ अथ पञ्चतिक्तकं घृतम् ॥ निम्बं पटोलं व्याघ्रीं च गुडूचीं वासकं तथा। कुर्याद्दशपलान्भागानेकैकस्य सुकुट्टितान् ॥१॥ जलद्रोणे विपक्तव्यं यावत्पादावशेषितम्। घृतप्रस्थं पचेत्तेन त्रिफलागर्भसंयुतम् ॥२॥ पञ्चतिक्तमिति ख्यातं सर्पिः कुष्ठविनाशनम्। अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ॥३॥ विंशतिं श्लैष्मिकांश्चैव पानादेवापकर्षति। दुष्टव्रणक्रमीनर्शःपञ्चकासांश्च नाशयेत् ॥४॥ अथ महातिक्तकं घृतम् ॥ सप्तच्छदं प्रतिविषां शम्याकं तिक्तरोहिणीं पाठाम्। मुस्तामुशीरं त्रिफलां पटोलं पिचुमन्दपर्पटकम् ॥१॥ धन्वयवासकचन्दनमुपकुल्यापद्मकरजन्यौ च। षड्ग्रन्थां सविशालां शतावर्यां सारिवे चोभे ॥२॥ वत्सकबीजं वासां मूर्वाममृतां किराततिक्तं च। कल्कान्कुर्यान्मतिमान् यष्ट्याह्वं त्रायमाणं च ॥३॥ कल्कस्य चतुर्थभागो जलमष्टगुणं रसोऽमृतफलानाम्। द्विगुणो घृतात्प्रदेयस्तत्सर्पिः प्राशयेत्सिद्धम् ॥४॥ कुष्ठानि रक्तपित्तं प्रबलान्यर्शांसि रक्तवाहीनि। वीसर्पमम्लपित्तं वातासृक् पाण्डुरोगं च ॥५॥ विस्फोटकान्स-

---

१ (च०) सकाकणम्। २ (च० छ०) तिल—।

पामानुन्मादं कामलां ज्वरं कण्डुम् । हृद्रोगगुल्मपिटिकां भगन्दरं गण्डमालां च ॥६॥
हन्यादेतत्सद्यः पीतं काले यथाबलं सर्पिः । योगशतैरप्यजितान्महाविकारान्महा-
तिक्तम् ॥ ७ ॥ अथ महाखदिरघृतम् ॥ खदिरस्य तुलाः पञ्च शिंशपासनयोस्तुले ।
तुलार्धं सर्व एवैते करञ्जारिष्टवेतसाः ॥ १ ॥ पर्पटः कुटजश्चैव वृषः कृमिहरस्तथा ।
हरिद्रे कृतमालश्च गुडूची त्रिफला त्रिवृत् ॥ २ ॥ सप्तपर्णश्च संक्षुण्णो दशद्रोणे तु
वारिणि । अष्टभागावशेषं तु कषायमवतारयेत् ॥३॥ धात्रीरसं च तुल्यांशं सर्पिषश्चाढकं
पचेत् । महातिक्तककल्कैस्तु यथोक्तैः पलसंमितैः ॥ ४ ॥ निहन्ति सर्वकुष्ठानि पाना-
भ्यञ्जनिषेवणात् । महाखदिरमित्येतत्परं कुष्ठविकारनुत् ॥ ५ ॥ अथ तैलानि ॥
अथ चित्रकादितैलम् ॥ शुभ्रस्य करवीरस्य रसो वेल्लं च चित्रकम् । त्रिभिश्च
पाचितं तैलमभ्यङ्गात् कुष्ठजातिनुत् ॥ १ ॥ अथ वज्रतैलम् ॥ सप्तपर्णकरञ्जार्कमा-
लतीकरवीरजाः । मूलं स्नुहीशिरीषाभ्यां चित्रकास्फोटयोरपि ॥ १ ॥ करञ्जबीजं
त्रिफलां त्रिकटुं रजनीद्वयम् । सिद्धार्थकं विडङ्गं च प्रपुन्नाटं च संहरेत् ॥२॥ मूत्रपि-
ष्टैः पचेत्तैलमेभिः कुष्ठविनाशनम् । अभ्यङ्गाद्वज्रकं नाम नाडीदुष्टव्रणापहम् ॥ ३ ॥
अथ मञ्जिष्ठाद्यं तैलम् ॥ मञ्जिष्ठारुग्निशाचक्रमर्दारग्वधपल्लवैः ॥ तृणकस्वरसे सि-
द्धं तैलं कुष्ठहरं परम् ॥१॥ इति तैलानि ॥ अथासवाः ॥ तत्रादौ खादिरासवः ॥ खा-
दिरस्य तुलार्धं तु तत्तुल्यं देवदार्वपि । वराया विंशतिर्द्रोण्याः पलानां पञ्चविंशतिः
॥ १ ॥ बाकुच्या द्वादश पलान्यष्टद्रोणेऽम्भसः पचेत् । द्रोणशेषे कषाये तु पूतशेषे
विनिक्षिपेत् ॥ २ ॥ धातक्या विंशतिपलं माक्षिकस्य शतद्वयम् । शर्करायास्तुलामे-
कां चूर्णानीमानि दापयेत् ॥३॥ कक्कोलकं लवङ्गं च एलाजातीफलत्वचम् । केशरं मरि-
चं पत्रं पलिकान्युपकल्पयेत् ॥ ४ ॥ पिप्पलीनां तु कुडवं स्थापयेद् घृतभाजने ।
मासादूर्ध्वं पिबेन्मात्रामनपेक्ष्य बलाबलम् ॥ ५ ॥ सर्वकुष्ठहरो ह्येष पाण्डुहृद्रोगकासनु-
त् । कृमिग्रन्थ्यर्बुदग्रन्थिगुल्मप्लीहोदरान्तकृत् । एष वै खदिरारिष्टः कृष्णात्रेयेण पूजि-
तः ॥ ६ ॥ अथ कनकारिष्टः ॥ खदिरकषायं द्रोणं सर्पिःकुम्भे निधापयेन्मध्ये । पलि-
कामात्रान् क्षेप्यान् कृत्वा तु तानेव सूक्ष्मचूर्णं तु ॥१॥ त्रिफला त्रिकटुकरजनी कनक-
त्वग् बाकुची गुडूची च । सविडङ्गमत्र मधुपलशतद्वयं प्रक्षिपेत्सर्वम् ॥ २॥ धातक्याश्च
पलान्यष्टौ क्वाथेऽस्मिन्प्रदेयानि । प्रातः प्रातस्तु पिबेन्नाशयति चिरोत्थितं कुष्ठम् ॥३॥
मासेन सर्वरोगान्विनिहन्ति च सर्वशोफमेहांश्च । निर्जितकासश्वासो गुदकीलभगन्द-
रैर्विमुक्तः । कनकारिष्टं प्रपिबन्भवति पुमान्कनककान्तिश्च ॥४॥इत्यासवाः॥ अथ दद्रुचि-
कित्सा ॥कासमर्दकमूलानि सौवीरेण तु पेषयेत् । दद्रुकिटिभकुष्ठानि जयेदेतत्प्रलेपनात्
॥१॥ बिजानि वा मूलकसर्षपाणां लाक्षारजन्यौ प्रपुनाटबीजम् । श्रीवेष्टकं व्योषविडङ्गकु-
ष्ठं पिष्ट्वा च मूत्रेण विलेपनं स्यात् ॥ दद्रूणि सिध्मं किटिभानि पामां कपालकुष्ठं
विषमं च हन्युः ॥ २॥ आरग्वधस्य पत्राणि आरनालेन पेषयेत् ॥ दद्रुकिटिभकु-
ष्ठानि हन्ति सिध्ममसंशयः ॥ ३ ॥ प्रपुंनाटस्य बीजानि धात्री सर्जरसः स्नुही । सौ-
वीरपिष्टं दद्रूणामेतदुद्वर्तनं परम् ॥ ४ ॥ दूर्वाभयासैन्धवचक्रमर्दकुठेरिकाकाञ्जिकतक्र-

पिष्टाः । त्रिभिः प्रलेपैरपि बद्धमूलं द्दढं च कण्डूं च विनाशयन्ति ॥ ५ ॥ विडङ्गै-
डगजाकुष्ठनिशासिन्धूत्थसर्षपैः । धान्याम्लपिष्टैर्लेपोऽयं दद्रुकुष्ठनिषूदनः ॥ ६ ॥
अथ लघुमरिचाद्यं तैलम् ॥ मरिचालशिलाब्दार्कपयोऽश्वारिजटात्रिवृत् । शकृद्र-
सविशालारुग्निशायुद्दारुचन्दनैः ॥ १ ॥ कटुतैलं पचेत्प्रस्थं द्व्यक्षे विषपलान्विते ।
सगोमूत्रं तदभ्यङ्गाद् दद्रुश्वित्रविनाशकृत् ॥ २ ॥ अथ दरदादिलेपः ॥ दरदगन्धक-
पारदपिप्पलीविषविडङ्गनिशाग्निमरीचकम् । अभयशुण्ठिघनाब्धिकबाकुचीकटुनृपद्रुम-
मेडगजान्वितम् ॥१॥ सममिदं खलु निम्बरसैर्युतं हरति दद्रुजकण्डुविसर्पकान् । ह-
रति लूतभगन्दरमण्डलं तनुविलिप्तमहो क्षणतो नृणाम् ॥२॥ इति दरदादिलेपः ॥ इति
दद्रुचिकित्सा ॥ अथ चर्माख्यचिकित्सा ॥ सूतगन्धकयोः पिष्ट्वा कज्जलिकां विधाय च ।
मृक्षणेन विमर्द्याथ करित्वग्लेपने हितम् ॥१॥ कबाबगौरीगदतुत्थजीरवल्लीभवं कर्षमिदं
पृथक् च । शिलाबलीतौ[1] रविकर्षसङ्ख्यौ सार्धो विभागः किल पारदस्य ॥ २ ॥ कर्षैश्च
विंशत्प्रमितैर्घृतस्य सर्वं विमर्द्य किल ताम्रपात्रे । ततोऽङ्गलेपात् त्रिदिनं च तीव्रां हरेच्च
रोगी गजकर्णपामाम्[2] ॥ ३॥ गुञ्जाचित्रकशङ्खभस्मरजनीदूर्वाभयालाङ्गलीस्नुक्सिन्धू-
त्थकुमारिकाजलधरार्कक्षीरधूमेशजैः । वल्गूएडगजाविडङ्गमरिचक्षौद्रैश्च खारीयुतैः
कार्यं वै गजचर्म दद्रु[3]रकसाकण्डुघ्नमुद्वर्तनम् ॥ ४ ॥ आरग्वधदलैः पिष्टैर्लेपः का-
ञ्जिकयुक् कृतः । करित्वगूदद्रुकुष्ठानि हन्ति पामां विचर्चिकाम् ॥ ५ ॥ इति चर्मा-
ख्यचिकित्सा॥अथ किटिभचिकित्सा॥चक्राङ्कबीजं त्वक्क्षीरभावितं मूत्रसंयुतम् । रवि-
वेतसकन्दं च लेपनं किटिभापहम् ॥१॥ पिप्पलीपूतिकायस्या[4]कुष्ठगोपित्तचित्रकैः । लेपं
सम्यक् प्रशंसन्ति किटिभघ्नं चिकित्सकाः ॥ २ ॥ गोमूत्रवारिसम्पिष्टैः शिलाकासी-
सतुत्थकैः । लेपः किटिभवीसर्पकुष्ठनाशाय पूजितः ॥३॥ अथ सिध्मचिकित्सा ॥ धात्री-
फलं सर्जरसो यावशूकस्त्विदं त्रयम् । सौवीरपेषितं सर्वं सिध्मशूलविदारणम् ॥ १ ॥ शि-
खरीरसेन सुपिष्टं मूलकबीजं प्रलेपतः सिध्मम् । क्षारेण कदल्या वा रजनीमिश्रेण नाशयति
॥ २ ॥ कुष्ठं मूलकबीजं प्रियङ्गवः सर्षपा दुरालम्भा । एतत्केसरपिष्टं निहन्ति चिरकालजं
सिध्मम् ॥३॥ गन्धपाषाणमिश्रेण यवक्षारेण लेपितम् । सिध्मं नाशमुपैत्याशु कटुतैलयु-
तेन च ॥ ४ ॥ कासमर्दकबीजानि मूलकानां तथैव च । गन्धपाषाणमिश्राणि सि-
ध्मानां परमौषधम् ॥५॥ बीजं मूलकजं निम्बपत्राणि सितसर्षपान् । गृहधूमं च सं-
पिष्य जलेनाङ्गं प्रलेपयेत् ॥ ६॥ उद्वर्त्य नवनीतेन क्षालयेदुष्णवारिणा । त्र्यहादने-
न सिध्मानि शाम्यन्त्याशु शरीरिणाम् ॥७॥ लाक्षा श्रीवेष्टकं कुष्ठं हरिद्रा गौरसर्षपाः ।
व्योषं मूलकबीजानि प्रपुन्नाटफलानि च ॥ ८ ॥ एतान्यत्र प्रतिष्ठानि कुष्ठेषूद्वर्तनं पर-
म् । सिध्मानां किटिभानां च दद्रूणां च विशेषतः ॥ ९ ॥ कार्पासिकापत्रविमि-
श्रकाकजङ्घाकृतो मूलकबीजयुक्तः । तक्रेण लेपः क्षितिपुत्रवारे सिध्मानि सद्यो
नयति प्रणाशम् ॥ १० ॥ गोमुत्रेणाथ तक्रेण जीर्णसौवीरकेण वा । पिष्टमूलकबीजानां

---

१ ( घ० ङ० ) शिलाबलातौ ( च० ) शिलाबलीतौवपि । २ ( च० ) वारियुतैः । ३ ( घ० च० ) दद्रुक । ४ ( च० ) पूतिकायस्य ।

लेपनात्सिध्मनाशनम् ॥ ११ ॥ इति सिध्मचिकित्सा ॥ अथ विपादिकाचिकित्सा ॥
धत्तूरबीजकल्केन माणकक्षारवारिणा। कटुतैलं विपक्कं तु द्रुतं हन्याद्विपादिकाम् ॥
मुण्डीरसेन संसिद्धं घृतं हन्ति विपादिकाम् ॥ १ ॥ इति विपादिकाचिकित्सा ॥ अथ
क्रमेण पामाकण्डूकच्छूविसर्पणविस्फोटचर्मदलविचर्चिकाचिकित्सां व्याख्यास्यामः ॥
सिन्दूरजीरद्वयरात्रियुग्ममनःशिलावल्लिजगन्धकानाम्। रसान्वितानां घृतयोजितानां
पामा व्रजेद्दूरतरं त्रिलेपात् ॥ १ ॥ सैन्धवं चक्रमर्दं च सर्षपं पिप्पलीं तथा। सेचयेदा-
रनालेन पामाकण्डुविनाशनम् ॥२॥ अथ जीरकतैलम् ॥ जीरकस्य पलं पिष्ट्वा सिन्दूरा-
र्धपलं तथा। कटुतैलं पचेदाभ्यां सद्यः पामाहरं परम् ॥ वृद्धवैद्योपदेशेन पाच्यं तैलं पला-
ष्टकम् ॥ १ ॥ अथ बृहत् सिन्दूराद्यं तैलम् ॥ सिन्दूरं चन्दनं मांसीविडङ्गं रजनीद्वयम्। प्रियङ्गु-
पद्मकं कुष्ठं मञ्जिष्ठा खदिरं वचा ॥ १ ॥ जात्यर्कत्रिवृता निम्बकरञ्जं विषमेव च। कृष्णा
चित्रकलोध्रं च प्रपुन्नाटं च संहरेत् ॥२॥ श्लक्ष्णं पिष्टानि सर्वाणि योजयेत्तैलमात्रया।
अभ्यङ्गेन प्रयोज्यं तद्व्रणकृत्कुष्ठनाशनम् ॥३॥ पामां विचर्चिकां कच्छुं विसर्पं विषमेव च।
रक्तपित्तोत्थितान्हन्ति रोगानेवंविधान् बहून् ॥ सिन्दूराद्यमिदं तैलमश्विभ्यां निर्मि-
तं पुरा ॥ ४ ॥ अथ बृहन्मरीचाद्यं तैलम् ॥ मरिचं त्रिवृता दन्ती क्षीरमार्कं शकृद्रसः।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥ १ ॥ विशाला करवीरं च हरितालं मनःशिला।
चित्रको लाङ्गली चव्यं विडङ्गं चक्रमर्दकम् ॥२॥ शिरीषकुटजौ निम्बः सप्तपर्णोऽमृता-
स्नुही। शम्पाको नक्तमालोऽब्दः खदिरः पिप्पली वचा ॥३॥ जोतिष्मती च पलिका वि-
षस्य द्विपलं भवेत्। आढकं कटुतैलस्य गोमूत्रं च चतुर्गुणम् ॥४॥ मृत्पात्रे लोहपात्रे वा
शनैर्मृद्वग्निना पचेत्। पक्त्वा तैलं वरं ह्येतन्म्रक्षयेत्कोटिकाव्रणान् ॥ ५ ॥ पामाविच-
र्चिकाकण्डुदद्रुविस्फोटकानि च। वलयः पलितं छाया नीला व्यङ्गं तथैव च ॥ अभ्य-
ङ्गेन प्रणश्यन्ति सौकुमार्यं च जायते ॥ ६ ॥ अथ माहेश्वरघृतम् ॥ कृत्वा कज्जलिकां
रवौ कुनटिका द्वे जीरके द्वे निशे गोदन्तोषणनाग एडगजिका वा कुञ्चि-
का सर्पिषा। लोहे लोहविमर्दितं दृढतरं माहेश्वराख्यं घृतं कण्डूकुष्ठविचर्चिका-
दिशमनं पामाहरं लेपनात् ॥ १ ॥ मांसी चन्दनशम्याककरञ्जारिष्टसर्षपम्।
यष्टीकुटजदार्वीभिर्हन्ति कण्डूमयं गणः* ॥२॥ अवल्गुजं कासमर्दं चक्रमर्दं निशायुतम्।
मणिमन्थेन तुल्यांशं मस्तुकाञ्जिकपेषितम् ॥ कण्डुं कच्छुं जयत्युग्रां सिद्ध एष
प्रयोगराट् ॥ ३ ॥ कोमलसिंहास्यदलं सनिशं सुरभिजलसंपिष्टम्। दिवसत्रयेण
नियतं शमयति कच्छूं विलेपनतः ॥ ४ ॥ हरिद्राकल्कसंयुक्तं गोमूत्रस्य पलद्वयम्।
पिबेन्नरः कामचारी कच्छुपामाविनाशनम् ॥ ५ ॥ गन्धपाषाणचूर्णं तु कटुतैलेन
योजितम्। लेपनादथ पानाद्वा कच्छूपामाविनाशनम् ॥ ६ ॥ अथ सिन्दूराद्यं
तैलम् ॥ सिन्दूरगुग्गुलरसांञ्जनसिक्थतुत्थैः कल्कीकृतैः कटुकतैलमिदं सुपक्वम्। कच्छूं

---

* अत्र नयनसुख-ग्रन्थात् जीरादियोगः जीरा मीरा मनशिल पारा तुल्य सुगन्धक सिन्दुर तीक्षा सम-जीवकर घीवसमाना तिखे ( तिले ) पारा खजीर जाणा।

१ ( ख० ग० घ० ङ० ) कोश्विका—( च० ) कोठक—।

स्रवत्पिटिकिकामथ वापि शुष्कामभ्यञ्जनेन सकृदुद्धरति प्रसह्य ॥१॥ अथार्कतैलम् । अर्कपत्ररसे पक्कं रजनीकल्कसंयुतम् । कटुतैलं हरेत्तूर्णं पामाकच्छूविचर्चिकाः ॥ १ ॥ राजिकागुडयुक्तेन सैन्धवेन प्रलेपितम् । विजलं चर्मणा बद्धं नाशं चर्मदलं व्रजेत् ॥ २ ॥ अथ रसाः ॥ तत्रादौ विजयेश्वरो रसः ॥ शुद्धतालं मृतं सूतं तुल्यं ताभ्यां चतुर्गुणम् । भर्जित्वा विजया योज्या सर्वतुल्यं गुडं क्षिपेत् ॥१॥ श्वेतकुष्ठहरं निष्कं रसोऽयं विजयेश्वरः । दार्वीखदिरनिम्बानां क्वाथं तदनु पाययेत् ॥ २॥ इत्यष्टादशकुष्ठचि० अथ श्वित्राण्याह ॥ श्वित्रिणो हृतदोषस्य हृतरक्तस्य वा सकृत् । खदिराम्बुयवान्नानां तृप्तस्य मलपूरसः ॥ सगुडः शस्यते पाने यवागूमण्डभोजिनः ॥१॥ खदिरामलककषायं बाकुचिबीजान्वितम्पिबेन्नित्यम् । शङ्खेन्दुकुन्दधवलं श्वित्रं हन्तीह तच्चित्रम् ॥२॥ शिलापामार्गभसितलेपाच्छ्वित्रं विनाशयेत् । किं पुनर्यदि युज्येत धनञ्जयजटात्वचा ॥ ३ ॥ त्रिफलानीलिनीपत्रं लोहचूर्णं रसाञ्जनम् । श्वेतगुञ्जादन्तिदन्तभस्मतुत्थं च मार्कवम् ॥ ४॥ मेषीदुग्धेन सम्पिष्य स्थापयेल्लोहभाजने । दिनमेकं ततो लिम्पेन्मुहुः श्वित्रेष्वनुक्रमात् ॥ श्वित्राण्यनेन लेपेन निजवर्णं त्यजन्ति वै ॥५॥ सायोरजः कृष्णतिलाञ्जनानि सावल्गुजान्यामलकानि जग्ध्वा । पिष्टानि भृङ्गस्य सकृद्रसेन हन्यात्किलासं परिघृष्टलेपात् ॥ ६॥ अथ विषतैलम् ॥ नक्तमालो हरिद्रे द्वे अर्कं तगरमेव च । करवीरवचाकुष्ठमास्फोतारक्तचन्दनम् ॥ १ ॥ मालती सप्तपर्णं च मञ्जिष्ठा सिन्धुवारिका । एषामर्धपलान्भागान् विषस्य द्विपलं भवेत् ॥ २ ॥ चतुर्गुणे गवां मूत्रे तैलप्रस्थं विपाचयेत् । श्वित्रविस्फोटकिटिभकीटलूताविचर्चिकाः ॥३॥ कण्डूकच्छुविकारश्च ये व्रणाविषदूषिताः । विषतैलमिदं नामसर्वव्रणविशोधनम् ॥४॥ अथ ज्योतिष्मतीतैलम् ॥ मयूरकक्षारजले सप्तकृत्वः परिश्रुतम् । सिद्धं ज्योतिष्मतीतैलमभ्यङ्गाच्छ्वित्रनाशनम् ॥१॥ अथ शशिलेखावटी ॥ शुद्धसूतं समं गन्धं तुल्यं च मृतताम्रकम् । मार्दितं बाकुचीक्वाथैर्दिनैकं वटकीकृतम् ॥१॥ निष्कमात्रां सदा खादेच्छ्वित्रघ्नीं शशिलेखिकाम् । बाकुचीतैलकर्षैकं सक्षौद्रमनुपाययेत् ॥२॥ अथ पथ्यापथ्यम् । अन्नपानं हितं कुष्ठे न त्वम्ललवणोषणम् । दधिदुग्धगुडांश्चापि तिलमाषांस्त्यजेन्नरः ॥ १ ॥ इति कुष्ठश्वित्राणि इति चिकित्सा ॥

## ॥ अथ शीतपित्तोदर्दकोठनिदानम् ॥

आदौ तस्य दोषत्रयजन्यत्वमाह ॥ शीतमारुतसंस्पर्शात्प्रदुष्टौ कफमारुतौ । पित्तेन सह संभूय बहिरन्तर्विसर्पतः ॥१॥ अथ तस्य पूर्वरूपमाह ॥ पिपासारुचिहृल्लासदाहसादाङ्गगौरवम् । रक्तलोचनता तेषां पूर्वरूपमिति स्मृतम् ॥ १ ॥ अनयोर्भेदमाह ॥ वरटीदंष्ट्रसंस्थानः शोफः संजायते बहिः । सकण्डूतोदबहुलच्छर्दिज्वरविदाहवान् ॥ १ ॥ उदर्दमिति तं विद्याच्छितपित्तमथापरे । वाताधिकं शीतपित्तमुदर्दस्तु कफाधिकः ॥२॥ अथोदर्दस्य धर्मान्तरमाह ॥ सोत्सङ्गैश्च सरागैश्च कण्डूमद्भिश्च मण्डलैः । शैशिरः कफजो व्याधिरुदर्दः परिकीर्तितः ॥१॥ अथ[1] त्वग्दोषसामान्यादत्रैव कोठः प्रोच्यते ॥

1 ( च० ) मासात् ।

असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः । आरनालैश्च शुक्तैश्च आसुरीलवणेन च ॥ १॥ वर्षाकाले प्रकुप्येत्स तथा दुष्टैश्च कारणैः । मण्डलानि सकण्डूनि रागवन्ति बहूनि च ॥ २ ॥ उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयते ॥ ३ ॥ इति शीतपित्तोदर्दकोठनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

अभ्यङ्गः कटुतैलेन स्वेदश्चोष्णेन वारिणा । तथाशु वमनं कार्यं पटोलारिष्टवासकैः ॥ १ ॥ त्रिफलापुरकृष्णाभिर्विरेकश्च प्रशस्यते । सर्पिः पीत्वा महातिक्तं कार्यं शोणितमोक्षणम् ॥ २ ॥ सक्षारसिन्धुतैलैश्च गात्राभ्यङ्गं प्रकल्पयेत् । गम्भारिकाफलं पक्वं शुष्कमुत्स्वेदितं पुनः ॥ ३ ॥ क्षीरेण शीतपित्तघ्नं खादितं पथ्यसेविना । यष्टी मधूकपुष्पं च सरास्नं चन्दनद्वयम् ॥ ४ ॥ निर्गुण्डी सकणा क्वाथं शीतपित्तहरं पिबेत् । अमृतारजनीनिम्बधनायासैः पृथक् शृतम् ॥ ५ ॥ प्राणिनां प्राणदं चैतच्छीतपित्ते समाचरेत् । सगुडं दीप्यकं यस्तु खादेत्पथ्यान्नभुङ्नरः[1] ॥ ६ ॥ तस्य नश्यति सप्ताहादुदर्दः सर्वदेहजः । यवानीं पाययेद्वापि सव्योषां क्षीरसंयुताम् ॥७ ॥ पिप्पलीवर्धमानं वा लशुनं वा प्रयोजयेत् । अग्निमन्थभवं मूलं पिष्टं पीतं च सर्पिषा ॥ शीतपित्तोदर्दकोठान्सप्ताहादेव नाशयेत् ॥ ८ ॥ निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राण्यथ वा प्रयुञ्ज्यात् । विस्फोटकोठक्षतशीतपित्तं कण्डूस्रपित्तं सकलं निहन्यात्॥९॥ कुष्ठं हरिद्रे सुरसं पटोलं निम्बाश्वगन्धे सुरदारु शिग्रुः । ससर्षपं तुम्बरुधान्यकं त्वक्काण्डांवचूर्णानि समानि कुर्यात् ॥१०॥ तैस्तक्रपिष्टैः प्रथमं शरीरं तैलाक्तमुद्वर्तयितुं यतेत । तथा सकण्डू पिटिका सकोठा कुष्ठानि शोफश्च शमं व्रजन्ति ॥११॥ ससैन्धवेन कुष्ठेन सर्पिषा लेपमाचरेत् । सुरसास्वरसैर्वाथ लेपयेत्परमौषधम् ॥ १२ ॥ सिद्धार्थरजनीकुष्ठप्रपुन्नाटतिलैः सह । कटुतैलेन संमिश्रमेतदुद्वर्तनं हितम् ॥ १३ ॥ शीतपित्त उदर्दे च तथा कोठाभिधे गदे । कृमिदद्रुहरः कार्यः शीतपित्तेऽखिलः क्रमः ॥ १४॥ स्निग्धस्विन्नस्य संशुद्धिमादौ कोष्ठे समाचरेत् । ततः कुष्ठहरः सर्वो विधेयो विधिरादरात् ॥ १५ ॥ अथ पथ्यापथ्यम् ॥ शालिमुद्गकुलत्थांश्च कारवेल्लमुपोदिकाम् । वेत्राग्रं तप्तनीरं च पित्तश्लेष्महराणि च ॥ १ ॥ शीतपित्तोदर्दकोठरोगिणां पथ्यमीरितम् । स्नानमातपमम्लं च गुर्वन्नं च विवर्जयेत् ॥ २ ॥ इति शीतपित्तचिकित्सा ॥

## ॥ अथाम्लपित्तनिदानम् ॥

अथ तस्य सम्प्राप्तिमाह ॥ विरुद्धदुष्टाम्लविदाहिपित्तप्रकोपिपानान्नभुजो विदग्धम् । पित्तं स्वहेतूपचितं पुरा यत्तदम्लपित्तं प्रवदन्ति सन्तः ॥१॥ अथ तस्य लिङ्गमाह ॥ अविपाकक्लमोत्क्लेशतिक्ताम्लोद्गारगौरवैः । हृत्कण्ठदाहारुचिभिश्चाम्लपित्तं वदेद्भिषक् ॥ १ ॥ अथ तस्य कदाचिदधोगतिमाह ॥ तृड्दाहमूर्च्छाभ्रममोहकारी प्रयात्यधो वा

---

[1] ( च० ) कण्डुप्रचु—

विविधप्रकारम्। हृल्लासकोठानलसादहर्षस्वेदाङ्गपीतत्वकरं कदाचित् ॥ १ ॥ अथ विशेषेणोर्ध्वगतिमाह ॥ वातं हरित्पीतकनीलकृष्णमारक्तरक्ताभमतीव चाम्लम्। मांसोदकाभं त्वतिपिच्छिलाभं श्लेष्मानुयातं विविधं रसेन ॥ १ ॥ अथ भुक्तेऽभुक्तेऽवस्थामाह ॥ भुक्ते विदग्धेऽप्यथ वाप्यभुक्ते करोति तिक्ताम्लवमिं कदाचित्। उद्गारमेवंविधमेव कण्ठे हृत्कुक्षिदाहं शिरसो रुजं वा ॥ १ ॥ अथ कफपित्तवत्सामान्यमाह ॥ करचरणदाहमौष्ण्यं महतीमरुचिं ज्वरं च कफपित्तम्। जनयति कण्डूमण्डलपिटिका चित्तगात्ररोगचयम् ॥ १ ॥ रोगोऽयमम्लपित्ताख्यो यत्नात्संसाध्यते नवः। चिरोत्थितो भवेद्याप्यः कष्टसाध्यः स कस्यचित् ॥ २ ॥ अथ तस्मिन्ननिलकफसंसर्गमाह ॥ सानिलं सानिलकफं सकफं तच्च लक्षयेत्। दोषलिङ्गेन मतिमान् भिषङ्मोहकरं हि यत् ॥१ ॥ कम्पप्रलापमूर्च्छाचिमिचिमिगात्रावसादशूलानि। तमसो दर्शनविभ्रमप्रमोहहर्षणान्यनिलात् ॥ २ ॥ अथ तत्रानिलगतमाह ॥ कफनिष्ठीवनगौरवजडतारुचिशीतसादवमिलेपाः। दहनबलसादकण्डूनिद्राचिह्नं कफानुगते ॥ १ ॥ अथ वातश्लेष्मानुगतमाह ॥ उभयमिदमेव चिह्नं मारुतकफसंभवे भवत्यम्ले। कट्वम्ललवणरसासेवितकोपं भजत्येव ॥ तिक्ताम्लकटुकोद्गारवमिहृत्कण्ठदाहकृत् ॥ १ ॥ अथासाध्यमाह ॥ भ्रमो मूर्च्छारुचिच्छर्दिरालस्यं च शिरोरुजा प्रसेको मुखमाधुर्यं श्लेष्मपित्तस्य लक्षणम् ॥ १ ॥ इत्यम्लपित्तस्य निदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

अम्लपित्ते तु वमनं पटोलारिष्टवारिणा। कारयेन्मदनक्षौद्रसिन्धुयुक्तं ततो भिषक् ॥ विरेचनं त्रिवृच्चूर्णं मधुना त्रिफलाद्रवैः ॥ १ ॥ कृतवमनविरेकस्यापि दोषोपशान्तिर्भवति न यदि कार्यो रक्तमोक्षश्च युक्त्या। कृतशिशिरविलेपरयाम्लपित्तप्रभक्ष्यौदनसमुदिततृप्तेर्वातरक्षा च कार्या ॥ २ ॥ अथ लक्ष्मणोत्सवात् ॥ ज्वलन्तमिव चात्मानं मन्यते योऽम्लपित्तवान्। तस्य संशोधनं पूर्वं कार्यं पश्चाच्च भेषजम् ॥ १ ॥ पूर्वं तु वमनं कार्यं पश्चान्मृदु विरेचनम्। कृतवान्तिविरेकस्य सुस्निग्धस्यानुवासनम् ॥ २ ॥ आस्थापनं चिरोत्थेऽस्मिन् देयं दोषाद्यपेक्षया। दोषसंसर्गजे कार्यमौषधाहारकल्पनम् ॥ ३ ॥ ऊर्ध्वदेहस्थितं वान्त्याप्यधस्थं रेचनैर्हरेत्। पाचनं तिक्तबहुलं पथ्यं च परिकल्पयेत् ॥ ४ ॥ विकारान्यवगोधूमकृतांस्तीक्ष्णविवर्जितान्। भक्षयेल्लाजसक्तूंश्च सिताक्षौद्रयुतान् पिबेत् ॥ ५ ॥ अथ वृन्दात् ॥ अम्लपित्ते प्रयोक्तव्यः कफपित्तहरो विधिः। गुडकूष्माण्डकं चैव तथा खण्डामलक्यपि ॥ १ ॥ गुडक्षीरकणासिद्धं सर्पिरत्र प्रयोजयेत्। सवाते सविबन्धेऽस्मिन्हिता कंसहरीतकी ॥२॥ ॥ अथ क्वाथाः ॥ यवकृष्णापटोलानां क्वाथं क्षौद्रयुतं पिबेत्। नाशयेदम्लपित्तं च ह्यरुचिं च वमिं तथा॥१॥ निस्तुषयवंवृषधात्रीक्वाथं त्रिसुगन्धि मधुयुतं पीत्वा। अपहरति चाम्लपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ २ ॥ गुडूचीचित्रकारिष्टपटोलैः क-

१ ( च० ) कर्ण—२ ( च० ) पिच्छिलाच्छम्।

थितम्पिबेत्। क्षौद्रयुक्तं निहन्त्येतच्छर्दिं पित्ताम्लसम्भवाम् ॥ ३ ॥ भूनिम्बनिम्बत्रिफलापटोलवासामृतापर्पटमार्कवाणाम्। क्वाथो हरेत्क्षौद्रयुतोऽम्लपित्तं चित्तं यथा वारवधूकटाक्षः ॥ ४ ॥ पटोलत्रिफलानिम्बक्वाथं क्षौद्रयुतं पिबेत्। अम्लपित्तज्वरं छर्दिदाहशूलकफान्वितम् ॥ ५ ॥ कण्टकार्यमृतावासाकषायं मधुसंयुतम्। अम्लपित्तं जयेत्पीत्वा श्वासं कासं वमिं ज्वरम् ॥ ६ ॥ चित्रकैरण्डमूलानि यवाश्च सयवासकाः। जलेन क्वथितं पीतं कोष्ठदाहाम्लपित्तजित् ॥ ७ ॥ अथैलादिचूर्णम् ॥ एलातुगाचोचशिवाभयानां सग्रन्थिपाटीरदलाह्लकानाम्। चूर्णं सितातुल्यमपाकरोति प्रौढाम्लपित्तं दिवसास्यभुक्तम् ॥ १ ॥ अथ त्रिकटुकाद्यं चूर्णं लेहश्च ॥ त्रिकटुकसकण्टकारीपर्पटवारिकुटजबीजानाम्। सौराष्ट्रिकापटोलीत्रायन्तीदारुमूर्वाणाम् ॥ १ ॥ तिक्तामृणालमलयजकलिङ्गकैलाकिराततिक्तानाम्। सवचातिविषाकेसरदीप्यकमधुशिग्रुबीजानाम् ॥ २ ॥ चूर्णं पटघृष्टमिदं पीतं शिशिरेण वारिणा प्रातः। क्षौद्रेण चाथ लीढं प्रायेणाधोगतं हन्ति ॥ अतिविषममम्लपित्तं पथ्यभुजो वासरैः कैश्चित् ॥ ३ ॥ ॥ अथ द्राक्षादिगुटिका ॥ द्राक्षापथ्ये समे कृत्वा तयोस्तुल्यां सितां क्षिपेत्। सङ्कुस्याक्षद्वयमितां तत्पिण्डीं कारयेद्भिषक् ॥ १ ॥ तां खादेदम्लपित्तार्तो हृत्कण्ठदहनापहम्। तृण्मूर्च्छाभ्रममन्दाग्निनाशिनीमामवातहाम् ॥ २ ॥ अथाभयाद्यवलेहः ॥ अभयां पिप्पली द्राक्षा सिता धन्वयवासकम्। मधुना कण्ठहृद्दाहमूर्च्छाश्लेष्माम्लपित्तनुत् ॥ १ ॥ अथ खण्डपिप्पल्यवलेहः ॥ योगरत्नावल्याः ॥ पिप्पल्याः कुडवं चूर्णं घृतस्य कुडवद्वयम् पलषोडशकं खण्डाच्छतावर्याः पलाष्टकम् ॥ १ ॥ शिवायाः स्वरसस्यापि पलषोडशकं मतम्। क्षीरप्रस्थद्वये साध्ये लेहीभूतेऽत्र निक्षिपेत् ॥ २ ॥ त्रिजातकाभयाजाजीधान्यमुस्तशिवातुगाः। एतेषां कार्षिकं चूर्णं कर्षार्धं कृष्णजीरकम् ॥ ३ ॥ नागरं नागकं जातीफलं समरिचं हिमम्। दत्वा पलत्रयं क्षौद्रं स्निग्धभाण्डे विनिक्षिपेत् ॥ ४ ॥ प्रातर्यथाबलं लिह्यादम्लपित्तप्रशान्तये। हृल्लासारोचकच्छर्दिपिपासादाहनाशनम् ॥ शूलहृद्रोगशमनं हृद्यं चेदं रसायनम् ॥ ५ ॥ अथ नारिकेलखण्डपाकः ॥ योगरत्नावल्याः ॥ कुडवमितमिह स्यान्नारिकेलं सुपिष्टं पलपरिमितसर्पिष्पाचितं तुल्यखण्डम्। निजपयसि तदेतत्प्रस्थमात्रे विपक्वं गुडवदथ सुशीते शाणमात्रं क्षिपेच्च ॥ १ ॥ धान्याकपिप्पलिपयोदतुगाद्विजीरैः साकं त्रिजातमिभकेसरवह्निचूर्ण्य। हन्त्यम्लपित्तमरुचिं क्षयमस्रपित्तं शूलं वमिं सकलपौरुषकारि पुंसाम् ॥ २ ॥ अथ गुडाद्यो मोदकः ॥ गुडपिप्पलिपथ्याभिस्तुल्याभिर्मोदकः कृतः। पित्तश्लेष्महरः प्रोक्तो मन्दाग्नित्वं च नाशयेत् ॥ १ ॥ अथ खण्डकूष्माण्डः ॥ कूष्माण्डस्य रसो ग्राह्यः पलानां शतमात्रकः। रसतुल्यं गवां क्षीरं धात्रीचूर्णं पलाष्टकम् ॥ १ ॥ लघ्वग्निना पचेत्तावद्यावद्भवति पिण्डितम्। धात्रीतुल्या सिता योज्या पलार्धं लेहयेदनु ॥ खण्डकूष्माण्डकं ख्यातमम्लपित्तं नियच्छति ॥ २ ॥ अथ मधुपिप्पल्यादियोगः ॥ पिप्पली मधुसंयुक्ता अ-

---

१ (च०) कण्टारिका। २ (च०) त्वगुग्रन्थि।

म्लपित्तविनाशिनी । जम्बीरस्वरसः पीतः सायं हन्त्यम्लपित्तकम् ॥ १ ॥ अथ पिप्पलीघृतम् ॥ पिप्पलीक्काथकल्केन घृतं सिद्धं मधुप्लुतम् । पिबेत्प्रातः समुत्थाय अम्लपित्तनिवृत्तये ॥ १ ॥ अथ द्राक्षादिघृतम् ॥ द्राक्षाभयाशक्रपटोलपत्रैः सोशीरधात्रीयवचन्दनैश्च । त्रायन्तिकापद्मकिरातधान्यैः कल्कैः पचेत्सर्पिरुपेतमेभिः ॥ १ ॥ भुञ्जीत मात्रां सह भोजनेन सर्वं तु पाने ह्यमृतोपमं च ॥ २ ॥ अथ शतावरीघृतम् ॥ शतावरीमूलकल्के घृतं प्रस्थं पयःसमम् । पचेन्मृद्वग्निना सम्यक् क्षीरं दत्वा चतुर्गुणम् ॥ १ ॥ नाशयेदम्लपित्तं च वातपित्तोद्भवान् गदान् । रक्तपित्तं तृषां मूर्च्छां श्वासं संतापमेव च ॥२॥ अथ नारायणघृतम् ॥ जले दशगुणे क्काथ्यं पिप्पलीनां पलाष्टकम् । पादशेषं हरेत्क्काथं क्काथतुल्यं घृतं क्षिपेत् ॥ १ ॥ अम्लपित्तहरं श्रेष्ठं घृतं नारायणं महत् । गुडक्षीरकणासिद्धं सर्पिश्चात्रापि योजयेत् ॥ २ ॥ अथ रसा आरभ्यन्ते ॥ तत्रादौ लीलाविलासो रसः ॥ शुद्धसूतं समं गन्धं मृतताम्राभ्ररोचनम् । तुल्यांशं मर्दयेद्यामं रुद्ध्वा लघुपुटे पचेत् ॥१॥ अक्षधात्री हरीतक्यः क्रमवृद्ध्या विपाचयेत् । जलेनाष्टगुणेनैव ग्राह्यमष्टावशेषकम् ॥ २ ॥ अनेन भावयेत्पूर्वं पक्कसूतं पुनः पुनः । पञ्चविंशतिवारं च तावता भृङ्गजद्रवैः ॥ ३ ॥ शुष्कं तच्चूर्णितं खादेत्पञ्चगुञ्जमधुप्लुतम् । रसो लीलाविलासोऽयमम्लपित्तं नियच्छति ॥ ४ ॥ इति लीलाविलासो रसो वृन्दात् ॥ अथ रसामृतम् ॥ त्रिकटु त्रिफला मुस्ता विडङ्गश्चित्रकं तथा । एषां सञ्चूर्णितानां तु प्रत्येकं तु पलं भवेत् ॥ १ ॥ कर्षद्वयं गन्धकस्य तदर्धं पारदस्य च । बिडालपदमात्रं तु लिह्यात्तन्मधुसर्पिषा ॥ २ ॥ शीतोदकं चानुपिबेत्क्रमाद् गव्यं पयस्तथा । अम्लपित्तमग्निमान्द्यं परिणामरुजं तथा । कामलां पाण्डुरोगं च हन्यादेतद्रसामृतम् ॥ ३ ॥ इति रसामृतम् ॥ अथ सूतशेखररसः ॥ सारसङ्ग्रहात् ॥ शुद्धं सूतं मृतं स्वर्णं टङ्कणं वत्सनागकम् । व्योषमुन्मत्तबीजं च गन्धकं ताम्रभस्मकम् ॥ १ ॥ चातुर्जातं शङ्खभस्म बिल्वमज्जा कचोरकम् । सर्वं समं क्षिपेत्खल्वे मर्द्यं भृङ्गरसैर्दिनम् ॥२॥ गुञ्जामात्रां वटीं कृत्वा द्विगुञ्जे मधुसर्पिषी । भक्षयेदम्लपित्तघ्नो वान्तिशूलामयापहः ॥ ३ ॥ पञ्च गुल्मान्पञ्च कासान् ग्रहण्यामयनाशनः । त्रिदोषोत्थातिसारघ्नः श्वासमन्दाग्निनाशनः ॥ ४ ॥ उग्रहिक्कामुदावर्तं देहयाप्यगदापहः । मण्डलान्नात्र सन्देहः सर्वरोगहरः परः ॥ राजयक्ष्महरः साक्षाद्रसोऽयं सूतशेखरः ॥ ५ ॥ इति सूतशेखरो रसः ॥ अथ पथ्यापथ्यम् ॥ यवगोधूममुद्गाश्च पुराणा रक्तशालयः । जलानि तप्तशीतानि शर्करा मधु सक्तवः ॥ १ ॥ कर्कोटकं कारवेल्लं रम्भापुष्पं च वास्तुकम् । वेत्राग्रं वृद्धकूष्माण्डं पटोलं दाडिमं तथा ॥ २ ॥ पानान्नानि समस्तानि कफपित्तहराणि च । अम्लपित्तामये नित्यं सेवितव्यानि मानवैः ॥ ३ ॥ वमिवेगं तिलान्माषान्कुलत्थांस्तिलभक्षणम् । अविदुग्धं च धान्याम्लं लवणाम्लकटूनि च ॥ गुर्वन्नं दधि मद्यं च वर्जयेदम्लपित्तवान् ॥ ४ ॥ इत्यम्लपित्तचिकित्सा ॥

## ॥ अथ विसर्पनिदानमाह ॥

अथ तस्य सम्प्राप्तिमाह ॥ लवणाम्लकटूष्णादिसंसेवादोषकोपतः। विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात् ॥ १ ॥ अथ तस्य सङ्ख्यामाह ॥ वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः। चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः ॥ १ ॥ आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः। यस्तु कर्दमको घोरः स पित्तकफसम्भवः ॥ २ ॥ रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः। विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः ॥ ३ ॥ अथ तत्र वातिकमाह ॥ तत्र वातात्परीसर्पो वातज्वरसमव्यथः। शोफस्फुरणनिस्तोदभेदायामार्तिहर्षवान् ॥ १ ॥ अथ पैत्तिकमाह ॥ पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ॥१॥ अथ कफजमाह ॥ कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ॥ १ ॥ अथ सान्निपातिकमाह ॥ सन्निपातसमुत्थश्च सर्वलिङ्गसमन्वितः ॥१॥ स चान्तर्बहिर्भेदाद्विसर्पः पठितो द्विधा। अथ तमाह ॥ मर्मोपतापान्मोहाच्च हृदयानां च घट्टनात् ॥१॥ तृष्णातियोगाद्वेगानां विषमाच्च प्रवर्तनात्। विद्याद्विसर्पमन्तर्जमाशु चाग्निबलक्षयात्। अतो विसर्पणाद् बाह्यमन्यं विद्यात्सुलक्षणैः ॥ २ ॥ अथ द्वन्द्वजमाह ॥ वातपित्ताज्ज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः। अस्थिभेदाग्निसदनतमकारोचकैर्युतः ॥ १ ॥ करोति सर्वमङ्गं च दीप्ताङ्गारावकीर्णवत्। यं यं देशं विसर्पश्च विसर्पति भवेत्स सः ॥ २ ॥ शीताङ्गारासितो नीलो रक्तो वाशु च चीयते। अग्निदग्ध इव स्फोटैः शीघ्रं गत्वा द्रुतं स च ॥ ३ ॥ मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः। व्यथेताङ्गं हरेत्संज्ञां निद्रां श्वासं समीरयेत्। ॥ ४ ॥ हिध्मां चे सर्वतोऽवस्थामीदृशीं लभते नरः। क्वचिच्छ्रमारतिग्रस्तो भूमिशय्यासनादिषु ॥ ५ ॥ चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम्। दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥६॥ अथ कफमारुतजग्रन्थिविसर्पमाह ॥ कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम्। रक्तं वा वृद्धरक्तस्य त्वक्शिरास्नायुमांसगम् ॥ १ ॥ दूषयित्वा च दीर्घानुवृत्तस्थूलखरात्मनाम्। ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम् ॥ २ ॥ श्वासकासास्यवैरस्यशोषहिध्मावमिभ्रमैः। मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युताम् ॥ इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः ॥ ३ ॥ अथ कफपित्तात्मककर्दमविसर्पमाह ॥ कफपित्ताज्ज्वरः स्तम्भो निद्रा तन्द्रा शिरोरुजा। अङ्गावसादविक्षेपप्रलापारोचकभ्रमाः ॥ १ ॥ मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम्। आमोपवेशनं लेपः स्रोतसां च विसर्पति ॥ २ ॥ प्रायेणामाशयं गृह्णन्नेकदेशं न चातिरुक्। पिटकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः ॥३॥ स्निग्धोऽसितो मेचकाभो मलिनः शोथवान् गुरुः। गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते ॥४॥ पङ्कवच्छीर्णमांसश्च स्फुटस्नायुशिरागणः। शवगन्धिः स वीसर्पः कर्दमाख्यमुशन्ति तम् ॥ अग्निकर्दमको घोरः स पित्तकफसंभवः ॥५॥ क्षतजमाह ॥ बाह्यहेतोः क्षतात्क्रुद्धः सरक्तं पि-

---

१ (मु० पु० पाठाविमौ) भेदायासा—। २ हिक्कां च स गतोऽवस्थाम्।

त्समीरयेत् । विसर्पं मारुतः कुर्यात्कुलत्थसदृशैश्चितम् ॥ स्फोटैः शोथज्वररुजादाहाढ्यं श्यावलोहितम्*॥१॥अथ विसर्पोपद्रवानाह ॥ ज्वरातिसारवमथुत्वङ्मांसदरणक्लमाः। अरोचका विपाकौ च विसर्पाणामुपद्रवाः ॥१॥ अथ साध्यमाह ॥ सिध्यन्ति वातकफपित्तकृता विसर्पाः ॥ १ ॥ अथासाध्यमाह ॥ सर्वात्मकः क्षतकृतश्च न सिद्धिमेति । पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः ॥ कृच्छ्राश्च मर्मसु भवन्ति हि. सर्व एव ॥ १ ॥ इति विसर्पनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

पूर्वमेव विसर्पेषु कुर्याल्लङ्घनरूक्षणे। विरेकवमनालेपसेचनासृग्विमोक्षणैः ॥ उपाचरेद्यथादोषं विसर्पानविदाहिभिः ॥ १ ॥ अथ विरेचनम् ॥ त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह । प्रयोक्तव्यं विरेकार्थं विसर्पज्वरशान्तये ॥ त्रिवृद्धरीतकीभिर्वा विसर्पे शोधनं हितम् ॥१ ॥ अथ वमनम् ॥ पटोलपिचुमन्दाभ्यां पिप्पल्या मदनेन वा। विसर्पे वमनं शस्तं तथा चेन्द्रयवैः सह ॥ १ ॥ श्लैष्मिकेऽत्र वमिः कार्या पूर्वं रेचनकं ततः। मदनं मधुकं निम्बवत्सकस्य फलानि च ॥ एतैर्वमिर्विधातव्या विसर्पे कफसंभवे ॥ २ ॥ अथ लेपाः ॥ रास्ना नीलोत्पलं दारु चन्दनं मधुकं बला । पिष्ट्वाज्यक्षीरवांल्लेपो वातवीसर्पनाशनः ॥१॥ प्रपौण्डरीकमञ्जिष्ठापद्मकोशीरचन्दनैः। सयष्टीन्दीवरोपेतैः क्षीरपिष्टैः प्रलेपनम्॥२॥ कसेरुशृङ्गाटकपद्मगुञ्जाः सशैवलाः सोत्पलकर्दमाश्च। वस्त्रान्तराः पित्तकृते विसर्पे लेपा विधेयाः सघृताः सुशीताः ॥३॥ गायत्रीसप्तपर्णाब्दवासारग्वधदारुभिः। कुटन्नटैर्भवेल्लेपो विसर्पे श्लेष्मसम्भवे ॥ ४ ॥ त्रिफलापद्मकोशीरसमङ्गाकरवीरकम्। नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥५॥ सर्पिषा शतधौतेन कृतो लेपो मुहुर्मुहुः। निहन्ति सर्ववीसर्पं सर्पं पतगराडिव॥६॥अथ दशाङ्गलेपः ॥ शिरीषयष्टीनतचन्दनैलामांसीहरिद्राद्वयकुष्ठवालैः। लेपो दशाङ्गः सघृतः प्रयोज्यो विसर्पकुष्ठव्रणशोथहारी ॥१॥ अथ मांस्यादिलेपः॥ मांसी सर्जरसो लोध्रं मधुकं सहरेणुकम्। मूर्वा नीलोत्पलं पद्मं शिरीषकुसुमानि च ॥ एतैः प्रदेहः कथितो वह्निवीसर्पनाशनः ॥१ ॥ शतधौतघृतविमिश्रः कल्कस्त्वक्पञ्चकस्य लेपेन।बहुदाहकमुच्चैरग्निविसर्पं विनाशयति॥२॥ न्यग्रोध ादो गुञ्जा च कदलीगर्भ एव च। एतैर्ग्रन्थिविसर्पघ्नो लेपो धौताज्यसंयुतः॥३॥ शतधौतघृतोन्मिश्रः शिरीषत्वग्रजः कृतः। लेपः शमयति क्षिप्रं विसर्पं कर्दमाभिधम्॥४॥ इति लेपाः॥ अथ क्वाथाः॥ कनीयः पञ्चमूलस्य यववल्कलकस्य वा। कषायः पित्तवीसर्पे पाने सेकेऽपि शस्यते॥१॥ अथ पटोलादिः॥ कुलकवृषकिराताारिष्टतिक्ताक्षपथ्यामलकमलयजानां कौशिकाढ्यः कषायः। सकलगदसमुत्थं हन्ति वीसर्पमुग्रं ज्वरवमिविषदाहभ्रान्तितृष्णारुजाभिः ॥ १ ॥ अथ गुडूच्यादिः ॥ अमृतवृषपटोलं निम्बकल्कैरुपेतं त्रिफलखदिरसारं व्याधिघातं च तुल्यम्। कथितमिदमशेषं गुग्गुलोः पादयुक्तं हरति

---

* अयं च पित्तजे विसर्पेऽन्तर्भावनीयस्तेन न संख्याधिक्यम् ।

१ ( मु० पु० पा० ) वरैः पैत्ते ।

विषविसर्पान् कुष्ठसंघातमाशु ॥१॥ वृन्दात् ॥ अथ भूनिम्बाद्यः ॥ भूनिम्बवासा कटुका पटोलं फलत्रिकं चन्दननिम्बसिद्धः। विसर्पदाहज्वरशोफकण्डूविस्फोटतृष्णावमिनुत्कषायः ॥१॥ अथ दुरालभादिः ॥ दुरालभा पर्पटकं गुडूची विश्वभेषजम्। निशापर्युषितं दद्यात्तृष्णावीसर्पशान्तये ॥१॥ अथ द्वितीयः पटोलादिर्वृन्दात् ॥ पटोलं पिचुमन्दं च दार्वीं कटुकरोहिणीं। यष्ट्याह्वं त्रायमाणां च दद्याद्वीसर्पशान्तये ॥१॥ अथ मुस्तादिः ॥ मुस्तारिष्टपटोलानां क्वाथः सर्वविसर्पनुत्। धात्रीपटोलमुद्गानामथवा घृतसंयुतः ॥ १ ॥ इति क्वाथाः ॥ अथ घृतानि ॥ तत्रादौ गौराद्यं सर्पिः ॥ द्वे हरिद्रे स्थिरा मूर्वा सारिवा चन्दनद्वयम्। मधुकं मधुपर्णी च पद्मकं पद्मकेसरम् ॥ १ ॥ उशीरमुत्पलं मेदा त्रिफला पञ्चवल्कलम्। कल्कैरक्षसमैरेभिर्घृतप्रस्थं विपाचयेत् ॥२॥ विषवीसर्पविस्फोटकीटलूताव्रणापहम्। गौराद्यमिति विख्यातं सर्पिः श्लेष्ममरुत्प्रणुत् ॥ ३ ॥ अथ वृषादिसर्पिः ॥ वृषखदिरपटोलपत्रनिम्बैः सममृतामलकीकषायकल्कैः। घृतमभिनवमेतदाशु पक्वं जयति सदास्रविसर्पकुष्ठगुल्मान् ॥ १ ॥ अथ दूर्वादिसर्पिः ॥ दूर्वावटोदुम्बरजम्बुसालसप्तच्छदाश्वत्थकषायकल्कैः। सिद्धं विसर्पज्वरदाहपाकविस्फोटशोफान्विनिहन्ति सर्पिः ॥ १ ॥ इति घृतानि ॥ अथ करञ्जादितैलम् ॥ करञ्जसप्तच्छदलाङ्गलीकास्नुत्यर्कदुग्धानलभृङ्गराजैः। तैलं निशामूत्रविषैर्विपक्वं विसर्पविस्फोटविचर्चिकाघ्नम् ॥ १ ॥ अथ मञ्जिष्ठाभया ॥ मञ्जिष्ठा कुटजो मुस्ता गुडूची रजनीद्वयम्। कण्टकारी वचा शुण्ठी कुष्ठारिष्टपटोलकम् ॥ १ ॥ नागी[1] विडङ्गका माची मोरटा पुंखदारुकम्। कलिङ्गभृङ्गत्रायन्तीपाठा काश्मीरिका बलिः ॥ २ ॥ गायत्री त्रिफला तिक्ता सारिवा नक्तमालकः। वासोशीरमहावृक्षसोमराजीप्रियङ्गुकाः ॥ ३ ॥ चन्दनं पर्पटानन्ताविशालात्रिवृता जलम्। कटुत्रिकं खुरासानं पलमेकं पृथक् पृथक् ॥ ४ ॥ द्वाविंशतिपलां पथ्यां जलद्रोणे विपाचयेत्। अष्टावशेषः कर्तव्यः क्वाथः सद्भिषजा ततः ॥५॥ वस्त्रपूता शिवा कार्या तीक्ष्णलोहेन वेधयेत्। मधुमध्ये विनिक्षिप्य दिनत्रिःसप्तसंख्यया ॥ ६ ॥ विनष्टं मधु संत्यज्य मधु श्रेष्ठं पुनः क्षिपेत्। ततः सुस्वादसंपन्नां प्रभाते भक्षयेच्छिवाम् ॥ ७ ॥ विसर्पान्नाशयेत्सर्वान्कुष्ठान्यष्टादशापि च। क्षुद्रं पामां च कण्डूं च दद्रुविस्फोटविद्रधीन् ॥ अन्यांस्त्वग्दोषजान् रोगांस्तथा रक्तसमुद्भवान् ॥८॥ इति मञ्जिष्ठाभया ॥ त्रिदोषघ्नीं क्रियां कुर्याद्विसर्पे द्वन्द्वसंभवे। रसायनानि कुष्ठेषु सर्पींषि क्वाथनानि च। चूर्णादीन्यपि सर्वाणि विसर्पेष्वपि तान्यलम् ॥ १ ॥ अथ पथ्यापथ्यम् ॥ विरेको वमनं लेपो लङ्घनं रक्तमोक्षणम्। पुराणयवगोधूमकङ्गुषष्टिकशालयः ॥ मुद्गा मसूराश्चणकास्तुवर्यो जाङ्गलो रसः ॥ १ ॥ नवनीतं घृतं द्राक्षा दाडिमं कारवेल्लकम्। वेत्राग्रं कुलकं धात्री खदिरो नागकेसरम् ॥ २ ॥ द्राक्षा शिरीषकर्पूरं चन्दनं तिललेपनम्। यथादोषं पथ्यमिदं सेवितव्यं विसर्पिभिः ॥३॥ व्यायाममह्नि शयनं सुरतं प्रवातं क्रोधं शुचं वमनवेगविधारणं च। गुर्वन्नपानमखिलं

---

१ (च०) नाग—। २ (च०) वृद्धदारम्।

*लशुनं कुलित्थान्माषांस्तिलान्सफलमांसमजाङ्गलं च ॥ स्वेदं विदाहिलवणाम्लकटूनि मद्यमर्कप्रभामपि विसर्पगदी त्यजेच्च ॥ ४ ॥ इति पथ्यापथ्यम् ॥ इति विसर्परोगचिकित्सा ॥*

---

## ॥ अथ विस्फोटनिदानमाह ॥

कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्षारैरजीर्णाध्यशनातपैश्च । तथर्तुदोषेण विपर्ययैश्च कुप्यन्ति दोषाः पवनादयस्तु ॥१॥ त्वचमाश्रित्य ते रक्तमांसास्थीनि प्रदूष्य च । घोरान्कुर्वन्ति विस्फोटान्सर्वाञ्ज्वरपुरःसरान् ॥२॥ अथ तेषां रूपमाह ॥ अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्तजाः । क्वचित्सर्वत्र वा देहे विस्फोटा इति संस्मृताः ॥ १ ॥ ॥ अथ वातिकमाह ॥ शिरोरुक्शूलभूयिष्ठज्वरतृट्पर्वभेदनम् । सकृष्णवर्णता चेति वातविस्फोटलक्षणम् ॥ १ ॥ अथ पैत्तिकमाह ॥ ज्वरदाहरुजास्रावपाकतृष्णाभिरन्वितम् । पीतलोहितवर्णं च पित्तविस्फोटलक्षणम् ॥१॥ अथ श्लैष्मिकमाह ॥ छर्द्यरोचकजाड्यानि कण्डूकाठिन्यपाण्डुताः । अवेदनश्चिरात्पाकी स विस्फोटः कफात्मकः ॥ १ ॥ अथ कफपैत्तिकमाह ॥ कण्डूर्दाहो ज्वरश्छर्दिरेतैस्तु कफपैत्तिकः ॥ १ ॥ ॥ अथ वातपित्तमाह ॥ वातपित्तकृतो यस्तु कुरुते तीव्रवेदनाम् ॥ १ ॥ अथ कफवातिकमाह ॥ कण्डूस्तैमित्यगुरुभिर्जानीयात्कफवातिकम् ॥१॥ अथ त्रिदोषजमाह ॥ मध्ये निम्नोन्नतोऽन्ते च कठिनोऽल्पप्रपाकतः । दाहरागतृषामोहच्छर्दिमूर्च्छारुजो ज्वरः ॥ प्रलापो वेपथुस्तन्द्रा सोऽसाध्यस्तु त्रिदोषजः ॥१॥ अथ रक्तजमाह ॥ रक्तारक्तसमुत्थाना गुञ्जाविद्रुमसंनिभाः । वेदितव्यास्तु रक्तेन पैत्तिकेन च हेतुना ॥१॥ न ते सिद्धिं समायान्ति सिद्धैर्योगवरैरपि । एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः ॥ सर्वरूपान्वितो घोरस्त्वसाध्यो भूर्युपद्रवः ॥२॥ हिक्का श्वासोऽरुचिस्तृष्णा चाङ्गमर्दो हृदि व्यथा । विसर्पज्वरहृल्लासविस्फोटानामुपद्रवाः ॥ ३ ॥ इति विस्फोटनिदानम् ॥

## ॥ अथ तच्चिकित्सा ॥

तत्रादौ लङ्घनं कार्यं वमनं पथ्यभोजनम् । यथादोषं बलं वीक्ष्य प्रोक्तं युक्तं च रेचनम् ॥ १ ॥ अथ क्वाथाः ॥ तत्रादौ द्विपञ्चमूलादिः । द्विपञ्चमूलीं रास्नां च दार्व्युशीरं दुरालभाम् । सामृतं धान्यकं मुस्तां क्वाथयित्वा शृतं पिबेत् ॥ विस्फोटं वातसम्भूतं निहन्त्येतन्न संशयः ॥ १ ॥ अथ द्राक्षादिः ॥ द्राक्षाकाश्मर्यखर्जूरपटोलारिष्टवासकैः । कटुकालाजदुःस्पर्शैः[1] क्वाथः शर्करया युतः[2] ॥ विस्फोटं पित्तजं हन्ति सोपद्रवमसंशयम् ॥ १ ॥ अथ भूनिम्बादिः ॥ भूनिम्बनिम्बवासाश्च त्रिफलेन्द्रयवासकाः । पिचुमन्दः पटोली च क्वाथमेषां सशर्करम् ॥ पीत्वा विमुच्यते नूनं कफविस्फोटकाज्वरः ॥ १ ॥ अथ द्वादशाङ्गः ॥ [3]किराततिक्तकारिष्टयष्ट्याह्वाम्बुदपर्पटैः । पटोलवासकोशीरत्रिफलाकौटजैः शृतम् ॥ १ ॥ द्वादशाङ्गं नरः पीत्वा विस्फोटेभ्यो विमु-

---

१ ( मु० पु० पा० ) प्रपाकवान् । २ ( च० ) लाजाकटुक— । ३ ( क० ) बिम्ब— ।

च्यते । द्वन्द्वजेभ्यस्त्रिदोषोत्थाद्रक्तजाच्च हिताशनः ॥ २ ॥ अथामृतादिक्काथः ॥ अमृतविषपटोलं मुस्तकं सप्तपर्णं खदिरमसितवेत्रं निम्बपत्रं हरिद्रे । शृतमिति स विसर्पान्कुष्ठविस्फोटकण्डूरपनयति मसूरीं शीतपित्तज्वरं च ॥ १ ॥ अथ पटोलादिर्वृन्दात्॥ पटोलामृतभूनिम्बवासारिष्टकपर्पटैः । खदिराब्दयुतैः क्काथो विस्फोटज्वरशान्तये ॥१॥ अथ निम्बादिः ॥ निम्बत्वक् खादिरः सारो गुडूचीशुक्रजोऽथवा । क्काथो माक्षिकसंयुक्तो विस्फोटादिज्वरापहः ॥१॥ अथ भूनिम्बादिश्चिकित्सासारात् ॥ भूनिम्बवासा कटुकापटोलं फलत्रिकं चन्दननिम्बसिद्धः । विसर्पदाहज्वरशोफकण्डूविस्फोटतृष्णावमिनुत्कषायः ॥ १ ॥ इति क्काथाः ॥ अथ पद्मकं घृतम् ॥ पद्मकं मधुकं लोध्रं नागपुष्पस्य केशरम् । हरिद्रे द्वे विडङ्गानि सूक्ष्मैला तगरं तथा ॥ १ ॥ कुष्ठं लाक्षापत्रकं च सिक्थकं तुत्थमेव च । तोयेनालोड्य तत्सर्वं घृतप्रस्थं विपाचयेत् ॥ २ ॥ यांश्च रोगान्निहन्याद्धि तान्निबोध महामुने । सर्पकीटाखुदष्टेषु नाडीदुष्टविसर्पिषु ॥ ३ ॥ विविधेऽपि च विस्फोटे लूतामूत्रक्षतेषु च। नाडीषु गण्डमालासु प्रभिन्नासु विशेषतः॥ आस्तीकविहितं धन्यं पद्मकं तु महद् घृतम् ॥ ४ ॥ अथ पञ्चतिक्तं घृतम् ॥ पटोलसप्तच्छदनिम्बवासाफलत्रिकच्छिन्नरुहाविपक्वम् । तत्पञ्चतिक्तं घृतमाशु हन्यात्त्रिदोषविस्फोटविसर्पकण्डूः ॥१॥ अथ चन्दनादिलेपः ॥ चन्दनं नागपुष्पं च तण्डुलीयकवारिणा । शिरीषवल्कलं जाती लेपः स्याद्दाहनाशनः ॥ १ ॥ अथ पथ्यापथ्यम् ॥ क्षुधिते लङ्घिते वान्ते जीर्णशालियवादिभिः । मुद्गाढकीमसूराणां रसैर्वा विश्वसंयुतैः ॥ १ ॥ सुनिषण्णकवेत्राग्रं तण्डुलीयकटिल्लकैः । कुलकाभीरुकैरेभिः सपर्पटकतीनसैः ॥ २ ॥ टङ्कारवेल्लैः कुसुमैर्निम्बपल्लवबिल्वजैः । तिक्तयूपसमायुक्तैर्भोजनं संप्रयोजयेत् ॥ ३ ॥ तिलान्माषान् कुलित्थांश्च लवणाम्लकटूनि च । विदाहिरूक्षमुष्णं च विस्फोटी परिवर्जयेत् ॥ ४ ॥ इति विस्फोटचिकित्सा ॥

---

## ॥ अथ स्नायुकनिदानम् ॥

पूर्वरूपमाह ॥ शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत् । भिनत्ति तं क्षते तत्र सोष्मा स्नायुं विशोष्य च ॥ १ ॥ कुर्यात्तन्तुनिभं जीवं वृत्तं श्वेतद्युतिं बहिः । शनैः शनैः क्षताद्याति च्छेदात्कोपमुपैति सः ॥ २ ॥ तत्पातच्छोफशान्तिः स्यात्पुनः स्थानान्तरे भवेत् । स स्नायुकेति विख्यातः क्रियोक्ता तु विसर्पवत् ॥ ३ ॥ बाह्वोर्यदि प्रमादेन जङ्घयोस्त्रुट्यति कचित् । संकोचं खञ्जतां चैव छिन्नतन्तुः करोत्यसौ ॥ ४ ॥ वातेन श्यावरूक्षः सरुगथ दहनान्नीलपीतः सदाहोऽथ श्वेतः श्लेष्मणा स्यात्पृथुगरिमयुतोऽथ द्विदोषो द्विलिङ्गी । रक्तेनारक्तकान्तिः समधिकदहनोऽथाखिलैः सर्वलिङ्गो रोगोऽसावष्टधेत्थं मुनिभिरभिहितः स्नायुकस्तन्तुकीटः ॥ ५ ॥ इति स्नायुकनिदानम् ॥

---

१ ( च० ) तत्क्षते । २ ( ख० ) मांसम् ।

## ॥ अथ तच्चिकित्सा ॥

स्नेहस्वेदप्रलेपादि कर्म कुर्याद्यथामलम् । अहिंस्रामूलगोमूत्रकल्काल्लेपस्तु वातजे ॥ १ ॥ पञ्चवल्कलकल्केन हितो लेपोऽत्र पित्तजे । श्लेष्मजे स्नायुके लेपः प्रशस्तः काञ्चनारजः ॥ २ ॥ तद्द्वाभ्यां द्वन्द्वजे लेपः सर्वैस्तैः सर्वजे हितः । रक्तजे स्नायुके लेपो वटप्लक्षत्वचो हितः । विसर्पोक्ताः क्रियाः सर्वाः स्नायुके तु हिता मताः ॥ ३ ॥ इति सारसंग्रहात् ॥ अथ बब्बूलबीजादिलेपः ॥ बब्बूलबीजं गोमूत्रपिष्टं हन्ति प्रलेपनात् । स्नायुकानि समस्तानि सशोथानि सरुञ्जि च ॥१॥ अथ शिग्रुमूलादिलेपः ॥ शिग्रुमूलदलैः पिष्टैः काञ्जिकेन ससैन्धवैः । लेपः स्नायुकरोगाणां शमनः परमः स्मृतः ॥ १ ॥ सुधया सह लोणारं जलेनालोड्य लेपयेत् । अनेन तु प्रयोगेण त्रिदिनादेव नश्यति ॥ २ ॥ पातालगरुडीमूलं पिबेत्स्नायुकनाशनम् । तिलपिण्याकलेपो वा ह्यारनालेन पेषितः ॥३॥ तक्रेण वाथ तैलेन ह्यश्वगन्धां प्रलेपयेत् । श्वेतविष्णुक्रान्तया वा शिग्रुमूलेन वा पुनः ॥ ४ ॥ पुंमूत्रैः काञ्चनीं पिष्ट्वा लेपः स्नायुकजिद्भवेत् । वार्ताकमूलं पुंमूत्रैः पत्रैर्वाश्वत्थजैश्च वा । सुतप्तैर्बन्धयेच्छीघ्रं शमयेत्स्नायुकं गदम् ॥ ५ ॥ इति सुश्रुतात् ॥ अथ रामठादियोगः ॥ रामठं टङ्कणं क्षारं प्रत्येकं शाणसंमितम् । चूर्णयित्वा सप्तदिनं खादेत् संध्याद्वये नरः । अनेन योगराजेन स्नायुको नश्यति ध्रुवम् ॥ १ ॥ अथातिविषाद्यं चूर्णम् ॥ अतिविषमुस्तकभार्गीविश्वौषधपिप्पलीबिभीतानाम् । चूर्णं तन्तुक्रिमिघ्नं पुंसामुष्णेन वारिणा पीतम् ॥१॥ अथ कुष्ठादिकल्कः ॥ कुष्ठरामठशुण्ठीभिः कल्कं शिग्रुसमन्वितम् । पानलेपनयोगेन तन्तुकीटविनाशनम् ॥१॥ गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम् । पीत्वा स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ॥ २ ॥ मूलं सुषव्या हिमवारिपिष्टं पानाद्दिनान्ते[1] तु गदं प्रचण्डम् । शान्तिं नयेत्सव्रणमाशु पुंसां गन्धर्वगन्धश्च घृतेन पीतः ॥३॥ पारावतपुरीषस्य मधुना कल्कितस्य च । गिलिता गुटिका हन्ति स्नायुकामयमुद्धतम् ॥ ४ ॥ निम्बशम्याकजात्यर्कसप्तपर्णाश्वमारकाः । क्रिमिघ्ना मूत्रसंयुक्ताः सेकलेपनधावनैः ॥ ५ ॥ वृन्ताकं भर्जितं भाण्डे कृत्वा दध्ना सहोपरि बन्धयेत्स्नायुको बहिः पतति । एवं सप्तदिनं कार्यम् । शणबीजचूर्णं भागमेकं गोधूमपिष्टं भागमेकं द्वयमेकीकृत्य घृतेन पक्त्वा गुडेन भक्षयेत् । एवं त्रिदिनं कार्यं स्नायुको नश्यति ॥ इति स्नायुकचिकित्सा ॥

---

## ॥ अथ मसूरिकानिदानमाह ॥

तत्रादौ तत्संप्राप्तिमाह ॥ कट्वम्ललवणक्षारविरुद्धाध्यशनाशनैः । दुष्टनिष्पावशाकाद्यैः प्रदुष्टैः पवनोदकैः ॥ १ ॥ क्रूद्धग्रहेक्षणाद्वापि देहे दोषाः समुद्धताः । जनयन्ति शरीरेऽस्मिन्दुष्टरक्तेन संगताः ॥ मसूराकृतिसंस्थानाः पिटिकाः स्युर्मसूरिकाः ॥२॥ अथ तासां पूर्वरूपमाह ॥ तासां पूर्वं ज्वरः कण्डूर्गात्रभङ्गोऽरुचिर्भ्रमः । त्वचि शो-

---

१ ( च० ) पानादिना ।

थः सर्ववर्ण्यो नेत्ररोगस्तथैव च ॥१॥ अथ वातजामाह ॥ स्फोटाः कृष्णारुणा रूक्षास्तीव्रवेदनयान्विताः । कठिनाश्चिरपाकाश्च भवन्त्यनिलसंभवाः ॥ १ ॥ अथ पित्तजामाह॥ संध्यस्थिपर्वणां भेदः कासकम्पारतिभ्रमाः । शोथस्ताल्वोष्ठजिह्वानां तृष्णा चारुचिसंयुताः ॥ १ ॥ रक्ताः पीताः सिताः स्फोटाः सदाहास्तीव्रवेदनाः । मृदवोऽचिरपाकाश्च पित्तकोपसमुद्भवाः ॥ २ ॥ विड्भेदश्चाङ्गमर्दश्च दाहस्तृष्णारुचिस्तथा । मुखपाकोऽक्षिपाकश्च ज्वरस्तीव्रः सुदारुणः । रक्तजायां भवन्त्येते विकाराः पित्तलक्षणाः ॥ ३ ॥ कफप्रसेकः स्तैमित्यं शिरोरुग्गात्रगौरवम् । हृल्लासश्चारुचिर्निद्रा तन्द्रालस्यसमन्विता ॥ ४ ॥ अथ कफजामाह ॥ श्वेताः स्निग्धा भृशं स्थूलाः कण्डूरा मन्दवेदनाः । मसूरिकाः कफोत्थाश्च चिरपाकाः प्रकीर्तिताः ॥१॥ अथ सन्निपातजामाह॥ नीलाश्चिपिटविस्तीर्णा मध्ये निम्ना महारुजाः । प्रभूताश्चिरपाकाश्च पूतिस्रावास्त्रिदोषजाः ॥ १ ॥ कण्ठे रोधोऽरुचिस्तन्द्राप्रलापारुचिसंयुताः । दुश्चिकित्स्याः समुद्दिष्टाः पिटिकाश्चर्मसंज्ञिताः ॥२॥ रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः । कासारोचकसंयुक्ता रोमान्त्या ज्वरपूर्विकाः ॥ ३ ॥ अथ सप्तधातुगताः ॥ तत्र रसजाः ॥ तोयबुद्बुदसंकाशास्त्वग्गतास्तु मसूरिकाः । स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च ॥ १ ॥ अथ रक्तजामाह ॥ रक्तस्था लोहिताकाराः शीघ्रपाकास्तनुत्वचः । साध्या नात्यर्थदुष्टाश्च भिन्ना रक्तं स्रवन्ति च ॥ १ ॥ अथ मांसस्था*माह ॥ मांसस्थाः कठिनाः स्निग्धाश्चिरपाका घनत्वचः । गात्रशूलारतिकण्डूतृष्णाज्वरसमन्विताः ॥१॥ मेदोगतामाह ॥ मेदोजा मण्डलाकारा मृदवः किञ्चिदुन्नताः । घोरज्वरपरीताश्च स्थूलाः स्निग्धाः सवेदनाः ॥ संमोहारतिसन्तापाः कश्चिदाभ्यो विनिस्तरेत् ॥ १ ॥ अस्थिमज्जागतामाह ॥ क्षुद्रा गात्रसमा रूक्षाश्चिपिटाः किञ्चिदुन्नताः । मज्जोत्था भृशसंमोहवेदनारतिसंयुताः ॥१॥ छिन्दन्ति मर्मधामानि प्राणानाशु हरन्ति च । भ्रमरेणेव विद्धानि कुर्वन्त्यस्थीनि सर्वशः ॥ २॥ अथ शुक्रगतामाह । पक्वाभ्यः पिटिकाः स्निग्धाः श्लक्ष्णाश्चात्यर्थवेदनाः । स्तैमित्यारतिसंमोहदाहोन्मादसमन्विताः ॥ १ ॥ शुक्रजायां मसूर्यां तु लक्षणानि भवन्ति हि । निर्दिष्टं केवलं चिह्नं दृश्यते न तु जीवितम् ॥ २ ॥ इति सप्तधातुगताः ॥ दोषमिश्राश्च सप्तैता द्रष्टव्या दोषलक्षणैः । त्वग्गता रक्तजाश्चैव पित्तजाः श्लेष्मजास्तथा ॥ १ ॥ श्लेष्मपित्तकृताश्चैव सुखसाध्या मसूरिकाः । एता विनापि क्रियया प्रशाम्यन्ति शरीरिणाम् ॥ २ ॥ वातजा वातपित्तोत्थाः श्लेष्मवातकृताश्च याः । कृच्छ्रसाध्या मतास्तस्माद्यत्नादेता उपाचरेत् ॥३॥ अतोऽन्यास्तु विनिर्दिष्टा यास्तु सम्यक् क्रियां विना । न सिध्यन्ति यतस्तस्मात्तास्तु यत्नादुपाचरेत् ॥ ४ ॥ असाध्याः सन्निपातोत्थास्तासां वक्ष्यामि लक्षणम् । प्रवालसदृशाः काश्चित्काश्चिज्जम्बूफलोपमाः ॥५॥ लोहजालनिभाः काश्चिदतसीफलसंनिभाः । आसां बहुविधा वर्णा जायन्ते दोषभेदतः ॥ ६ ॥ कासो हिक्का प्रमेहाश्च ज्वरस्तीव्रः सुदारुणः । प्रलापश्चारतिर्मूर्च्छा तृष्णा दाहोऽति-

* इयं कृच्छ्रसाध्या ।

१ (च०) तनुत्वचः ।

घूर्णता ॥ ७ ॥ मुखेन प्रस्रवेद्रक्तं तथा घ्राणेन चक्षुषा । कण्ठे घुर्घुरकं कृत्वा श्वसित्यत्यर्थदारुणम् ॥ ८ ॥ मसूरिकाभिभूतस्य यस्यैतानि भिषग्वरः । लक्षणानीह दृश्यन्ते न दद्यात्तत्र भेषजम् ॥ ९ ॥ मसूरिकाभिभूतो यो भृशं घ्राणेन निश्वसेत् । स भृशं त्यजति प्राणांस्तृष्णार्तो वायुदूषितः ॥ १० ॥ मसूरिकान्ते शोथः स्यात्कूर्परे मणिबन्धके । तथांसे फलके वापि दुश्चिकित्स्यः सुदारुणः ॥ ११ ॥ इति मसूरिकानिदानम् ॥

## ॥ अथ मसूरिकाचिकित्सामाह ॥

मसूरिकायां कुष्ठोक्ता लेपनादिक्रिया हिता । पित्तश्लेष्मविसर्पोक्ता क्रिया चात्र प्रशस्यते ॥ १ ॥ सर्वासां वमनं पूर्वं पटोलारिष्टवासकैः । कषायश्च वचावत्सयष्ट्याह्वफलकल्कितैः ॥ २ ॥ सक्षौद्रं पाययेद् ब्राह्मीरसं वा हिलमोचकम् । वान्तस्य रेचनं देयं शमनं त्वबले नरे ॥ उभाभ्यां हृतदोषस्य विशुष्यन्ति मसूरिकाः ॥ ३ ॥ अथ वेणुत्वगादिधूपः ॥ वेणुत्वक्सुरसालाक्षाकार्पासास्थिमसूरिकाः । यवपिष्टं विषं सर्पिर्वचा ब्राह्मी सुवर्चला ॥ १ ॥ धूपनार्थे यथालाभं धूपमेनं प्रयोजयेत् । आदावयं प्रयोक्तव्यो नश्यन्त्यस्मान्मसूरिकाः ॥ न गृह्णन्ति विषं केचिद्यथालाभं श्रुतेरिह ॥ २ ॥ अथ श्वेतचन्दनादिः ॥ श्वेतचन्दनकल्काढ्यं हिलमोचाभवं द्रवम् । पिबेन्मसूरिकारम्भे नैम्बं वा केवलं रसम् ॥ १ ॥ गुडूची मधुकं द्राक्षा मोरटं दाडिमैः सह । पाककाले प्रदातव्यं भेषजं गुडसंयुतम् ॥ तेन कुप्यति नो वायुः पाकं यान्ति मसूरिकाः ॥ २ ॥ अथ बृहत्पटोलादिक्काथः ॥ पटोलं सारिवा मुस्तं पाठा कटुकरोहिणी । खदिरः पिचुमन्दश्च बला धात्री विकङ्कतः ॥ एषां कषायपानं तु हन्ति वातमसूरिकाम् ॥ १ ॥ अथ दशमूलादिः ॥ द्वे पञ्चमूल्यौ रास्ना च धात्र्युशीरं दुरालभा । सामृतं धान्यकं मुस्तं जयेद्वातमसूरिकाम् ॥ १ ॥ अथ न्यग्रोधादिलेपः ॥ न्यग्रोधप्लक्षमञ्जिष्ठाशिरीषोदुम्बरत्वचाम् । ससर्पिष्कं मसूर्यां तु वातजायां प्रलेपनम् ॥ १ ॥ शोधनं पित्तजायां न कार्यं वैद्येन जानता । तत्रादौ तर्पणं कार्यं लाजाचूर्णैः सशर्करैः ॥ २ ॥ आदावेव मसूर्यां तु पित्तजायां प्रयोजयेत् । निम्बादिक्कथितं तेन प्रशाम्यति मसूरिका ॥ ३ ॥ तद्यथा ॥ निम्बः पर्पटकं पाठा पटोलं चन्दनद्वयम् । वासा दुरालभा धात्री सेव्यं कटुकरोहिणी ॥ ४ ॥ एतेषां क्कथितं शीतं सितया मधुरीकृतम् । मसूरिकां पित्तकृतां हन्ति रक्तोत्तरामपि ॥ ५ ॥ अथ द्राक्षादिः ॥ द्राक्षाकाश्मर्यखर्जूरपटोलारिष्टवासकैः । लाजामलकदुस्पर्शैः क्कथितं शर्करान्वितम् ॥ मसूरिकां पित्तकृतां रक्तजां च विनाशयेत् ॥ १ ॥ अथ पञ्चमूलादिक्काथः ॥ बृहतः पञ्चमूलस्य वृषपत्रयुतस्य च । कषायः शमयेत्पीतः कफोत्थां तु मसूरिकाम् ॥ १ ॥ वृषपत्ररसं दद्यात् पानार्थं मधुसंयुतम् । कफजायां मसूर्यां तु कठिनायां विशेषतः ॥ २ ॥ खदिरारिष्टपत्रैश्च शिरीषोदुम्बरत्वचाम् । कुर्याल्लेपं कफोत्थायां मसूर्यां भिषगुत्तमः ॥ ३ ॥ अथ दुरालभादिः ॥ दुरालभा पर्पटकं पटोलं कटुरोहिणी । पिबेन्मसूर्यामेतेषां क्काथं पित्तकफात्मनि ॥ १ ॥ अथ गुडूच्यादिः ॥ गुडूचीपर्प-

टानन्ताकटुकाक्कथितं पिबेत् । वातपित्तमसूर्यां तु घोरोपद्रवभाजि च ॥ १ ॥ अथ नागरादिः ॥ नागरमुस्तागुडूचीधान्यकभार्गीवृषैः कृतः क्काथः । वातश्लेष्ममसूरीं दूरीकुरुतेऽनुपानतः सत्यम् ॥ १ ॥ अथ निम्बादिक्काथः ॥ निम्बः पर्पटकं पाठा पटोलं कटुरोहिणी । वासा दुरालभा धात्री ससेव्यं चन्दनद्वयम् ॥ १ ॥ एष निम्बादिकः क्काथः पीतः शर्करयान्वितः । मसूरीं सर्वजां हन्ति ज्वरवीसर्पसंयुताम् ॥ २ ॥ ॥ अथ काञ्चनादिक्काथः ॥ काञ्चनारत्वचाक्काथस्ताप्यचूर्णावचूर्णितः । निर्गत्यान्तः प्रविष्टां तु मसूरीं बाह्यतो नयेत् ॥ १ ॥ अथ पटोलादिः ॥ पटोलकुण्डलीमुस्तावृषधन्वयवासकैः । भूनिम्बनिम्बकटुकापर्पटैश्च शृतं जलम् ॥ १ ॥ मसूरीं शमयेदामां पक्कां चैव विशोधयेत् । नातः परतरं किंचिच्छीतलाज्वरशान्तये ॥ २ ॥ दाहे ज्वरे विसर्पे च व्रणे पित्ताधिकेऽपि च। मसूर्यो रक्तजा नाशं यान्ति शोणितमोक्षणैः ॥ ३ ॥ धात्रीफलं समधुकं क्कथितं मधुसंयुतम् । मुखे कण्ठे व्रणे जाते गण्डूषार्थं प्रशस्यते ॥४॥ अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना । मधुकं त्रिफला मूर्वा दार्वीत्वङ्नीलमुत्पलम् ॥५॥ उशीरलोध्रमञ्जिष्ठामलेपाश्चोतने हिताः । नश्यन्त्यनेन दृग्जाता मसूर्यो न भवन्ति च ॥ ६ ॥ अथाञ्जनम् ॥ शम्बूकमांसस्वरसेन नेत्रे समञ्जयेत्तेन मसूरिकाभ्यः । न जायते तत्र भयं भवन्ति नैताः प्रजातास्तु शमं प्रयान्ति ॥ १ ॥ इत्यञ्जनम् ॥ प्रलेपं चक्षुषोर्दद्याद् बहुवारस्य वल्कलैः । पञ्चवल्कलचूर्णेन क्लेदिनीमवधूलयेत् ॥१॥ भस्मना केचिदिच्छन्ति केचिद्रोमयरेणुना । निम्बातिमुक्तिका स्फोता बिम्बी वेतसवल्कलम् ॥२॥ शृतशीतं प्रयोक्तव्यं मसूरीव्रणधावने । शालहिङ्गुरसोनैश्च धूपयेत्ता मसूरिकाः । कृमयो न पतन्त्यत्र जाताः शाम्यन्ति ते लघु ॥३॥ अथ मसूरिकाभेदस्य शीतलाया अधिकारः । तत्र शीतलाया रूपमाह ॥ भावप्रकाशात् । देव्या शीतलया क्रान्ता मसूर्येव हि शीतला । ज्वर एव यथा भूताधिष्ठितो विषमज्वरः ॥१॥ सा च सप्तविधा ख्याता तासां भेदान्प्रचक्ष्महे । ज्वरपूर्वा बृहत्स्फोटैः शीतला बृहती भवेत् ॥२॥ सप्ताहान्निःसरत्येषा सप्ताहात् पूर्णतां व्रजेत् । ततस्तृतीये सप्ताहे शुष्यति स्खलति त्वचम् ॥३॥ तासां मध्ये यदा काश्चित्पाकं गत्वा स्रवन्ति च । तत्रावधूलनं कुर्याद्वनगोमयभस्मना ॥ ४ ॥ निम्बसत्पत्रशाखाभिर्मक्षिकामपसारयेत् । जलं च शीतलं दद्याज्ज्वरेऽपि न तु तत्पिबेत् ॥५॥ स्वापयेत्तं स्थले पूते रम्ये रहसि शीतले । नाशुचिः संस्पृशेत्तं तु न च तस्यान्तिकं व्रजेत् ॥ ६ ॥ बहवो भिषजो नात्र भेषजं योजयन्ति हि । केचित्प्रयोजयन्त्येव मतं तेषामथो ब्रुवे ॥ ७ ॥ ये शीतलेन सलिलेन विशिष्य सम्यक् चिञ्चोत्थबीजसहितां रजनीं पिबन्ति । तेषां भवन्ति न कदाचिदपीह देहे पीडाकरो जगति शीतलिकाविकारः ॥८॥ मोचारसेन सहितं सितचन्दनं ये वासारसेन मधुकं मधुकेन वाथ । आदौ पिबन्ति सुमनास्वरसेन मिश्रं ते नाप्नुवन्ति भुवि शीतलिकाविकारम् ॥ ९ ॥ शीतलासु क्रिया कार्या शीतला रक्षया सह ।

---

१ ( च० ) तप्तकम् ।

बध्नीयान्निम्बपत्राणि, परितो भवनान्तरे ॥ १० ॥ कदाचिदपि नो कार्यमुच्छिं-ष्टस्य प्रवेशनम् । स्फोटेष्वधिकदाहेषु रक्षा रेणूत्करो हितः ॥ ११ ॥ तेन ते शोषमायान्ति प्रकोपं न भजन्ति च । चन्दनं वासको मुस्तं गुडूची द्राक्षया सह ॥ एषां शीतकषायस्तु* शीतलाज्वरनाशनः ॥ १२ ॥ जपहोमोपहारैश्च दानस्व-स्त्ययनार्चनैः । विप्रगोशम्भुगौरीणां पूजनैस्तां शमं नयेत् ॥१३॥ स्तोत्रं च शीतलादेव्याः पठेच्छीतलिनोऽन्तिके । ब्राह्मणः श्रद्धया युक्तस्तेन शाम्यन्ति शीतलाः ॥ १४ ॥ अथ शीतलाया भेदानाह ॥ कफमारुतसंभूतः कोद्रवो नामतो गदः । अपाकः कोद्रवाकारः सूचीनिस्तोदकारकः ॥ १ ॥ जलशूक इवाङ्गेषु विध्यतीव विशेषतः । सप्ताहाद्द्वादशाहाद्वा शान्तिं याति विनौषधैः ॥२॥ यदि वा भेषजं दद्यादेदि-राष्टकनिर्मितम् । कषायं हि तदा दद्यात्कोद्रवस्य प्रशान्तये ॥ ३ ॥ खदिरत्रिफला-निम्बपटोलामृतवासकः । अष्टकोऽयं जयेत्कुष्ठकण्डूविस्फोटकानि च ॥ ४ ॥ विस-र्पपामाकिटिभं शीतपित्तमसूरिके । काश्चिद्विनापि यत्नेन सुखं सिध्यन्ति शी-तलाः ॥५॥ दुष्टाः कष्टतराः काश्चित् काश्चित्सिध्यन्ति वा नवा । काश्चिन्नैव तु सिध्यन्ति यत्नतोऽपि चिकित्सिताः ॥६॥ अथ पथ्यापथ्यम् ॥ जीर्णाः षष्टिकशालयोऽपि चणका मुद्गा मसूरा यवाः सर्वेऽपि प्रतुदाः कपोतचटकापृष्टचाह्वदात्यूहकाः । कर्कोटं कदलं च शिग्रु कुलकं द्राक्षाफलं दाडिमं मेध्यं बृंहणमन्नपानमखिलं कोलानि मांसो रसः ॥१॥ अक्ष्णोः सेकविधौ गवेधुमधुकोद्भूतं सुशीतोदकं शम्बूकोदरकोशनीरमपि वा कर्पूरचूर्णानि वा । पक्वो मुद्गरसोऽपि जाङ्गलरसः शालिं च शाकं घृतं धूपो गोम-यभस्मगुण्ठनमथो शेषा व्रणोक्तक्रियाः ॥२॥ इत्थं सर्वदशा विभागविहितं पथ्यं यथादो-षतः संयुक्तं मुदमातनोति नितरां नृणां मसूरीगदे ॥३॥ वातं स्वेदं श्रमं तैलं गुर्वन्नं [illegible]मातपम् । कट्वम्लं वेगरोधं च मसूरिगदवांस्त्यजेत् ॥४॥ इति मसूरिकाचिकित्सा॥

## ॥ अथ क्षुद्ररोगनिदानमाह ॥

ते समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति ॥ तद्यथा ॥ अथाजगल्लिका ॥ स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा । कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥१॥ अथ यवप्रख्यमाह ॥ यवाकारा तु कठिना ग्रथिता मांससंश्रिता । पिटिका श्लेष्मवा-ताभ्यां यवप्रख्येति सोच्यते ॥ १ ॥ अथान्वालजीमाह । घनामवक्त्रां पिटिकामुन्नतां परिमण्डलाम् । अन्वालजीमल्पपूयां तां विद्यात्कफवातजाम् ॥ १ ॥ अथ विवृत्तामा-ह ॥ विवृत्तास्यां महादाहां पक्वोदुम्बरसंनिभाम् । विवृत्तामिति तां विद्यात् पित्तोत्थां परिमण्डलाम् ॥ १ ॥ अथ कच्छपिकामाह ॥ ग्रथिताः पञ्च वा षड् वा दारुणाः कच्छपोन्नताः । कफानिलाभ्यां संभूता ज्ञेयाः कच्छपिका बुधैः ॥ १ ॥ अथ वल्मीक-माह ॥ ग्रीवांसकक्षाकरपाददेशे संधौ गले वा त्रिभिरेव दोषैः । ग्रन्थिः सवल्मीक-

---

* शीतकषायो हिमः ।

१ ( च० ) मस्तृत्वस्य । २ ( च० ) खदिरा—

वदक्रियाणां जातः क्रमेणैव गतः स वृद्धिम् ॥१॥ मुखैरनेकैः स्रुतितोदवद्भिर्विसर्पवत्
सर्पति चोन्नताग्रैः । वल्मीकमाहुर्भिषजो विकारं निष्प्रत्यनीकं चिरजं विशेषात् ॥२॥
॥ अथेन्द्रवृद्धामाह ॥ पद्मकर्णिकवन्मध्ये पिटिकां पिटिकाचिताम् । इन्द्रवृद्धां
तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥ १ ॥ अथ गर्दभिकामाह ॥ मण्डलं वृत्तमुत्सन्नं
सरक्तं पिटिकाचितम् । रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम् ॥ १ ॥ अथ
पाषाणगर्दभमाह ॥ वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसंधिजः । स्थिरो मन्दरुजः स्निग्धः
ज्ञेयः पाषाणगर्दभः ॥ १ ॥ अथ पनसिकालक्षणमाह ॥ कर्णस्याभ्यन्तरे जातां पिटि-
कामुग्रवेदनाम् । स्थिरां पनसिकां तां तु विद्यादन्तःप्रपाकिनीम् ॥ १ ॥ अथ जालग-
र्दभमाह ॥ विसर्पवत्सर्पति यः शोफस्तनुरपाकवान् । दाहज्वरकरः पित्तात्स ज्ञेयो जा-
लगर्दभः ॥ १ ॥ अथेरिवेल्लिकालक्षणमाह ॥ पिटिकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्व-
राम् । सर्वात्मिकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम् ॥ १ ॥ अथ कक्षागन्ध-
नयोर्लक्षणमाह ॥ बाहुकक्षांसपार्श्वेषु कृष्णस्फोटां सवेदनाम् । पित्तप्रकोपसंभूतां
कक्षामिति विनिर्दिशेत् ॥ १ ॥ एकामेतादृशीं दृष्ट्वा पिटिकां स्फोटसंनिभाम् । त्व-
ग्गतां पित्तकोपेन गन्धनां तां प्रचक्षते ॥ २ ॥ अथाग्निरोहिणीलक्षणमाह ॥
कक्षाभागेषु ये स्फोटाः जायन्ते मांसदारणाः । अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः
॥१॥ सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् । तामग्निरोहिणीं विद्यादसाध्यां सन्नि-
पातजाम् ॥२॥ अथ चिप्यलक्षणमाह ॥ नखमांसमधिष्ठाय वातः पित्तं च वेदनाम् । क-
रोति दाहपाकौ च तं व्याधिं चिप्यमादिशेत् ॥ १ ॥ अथ कुनखस्य लक्षणमाह ॥
अभिघातात्प्रदुष्टो यो नखो रूक्षासितः खरः । भवेत्तं कुनखं विद्यात्कुलीरमिति सं-
ज्ञितम् ॥ १ ॥ अथानुशयीलक्षणमाह ॥ गम्भीरामल्पसंरम्भां सुवर्णामुपरि[illegible]ताम् ।
पादस्यानुशयीं तां तु विद्यादन्तःप्रपाकिनीम् ॥ १ ॥ अथ विदारिकालक्षण[illegible] ॥
विदारी कन्दवद्वृत्ता कक्षावङ्क्षणसन्धिषु । विदारिका भवेद्रक्ता सर्वजा सर्वलक्षणा
॥१॥ अथ शर्करार्बुदस्य लक्षणमाह ॥ प्राप्य मांसशिरास्नायु मेदः श्लेष्मा तथानिलः ।
ग्रन्थिं कुर्वन्नसौ भिन्नो मधुसर्पिर्वसानिभम् ॥ १ ॥ स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतो-
ऽनिलः । मांसं विशोष्य ग्रथितां शर्करां जनयेत्ततः ॥ २ ॥ दुर्गन्धि क्लिन्नमत्यर्थं ना-
नावर्णं ततः शिराः । स्रवन्ति सहसा रक्तं तं विद्याच्छर्करार्बुदम् ॥ ३ ॥ अथ पाद-
दार्या लक्षणमाह ॥ परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः । पादयोः कुरुते दारीं स-
रुजां तलसंश्रिताम् ॥ १ ॥ अथ कदरस्य लक्षणमाह ॥ शर्करोन्मथिते पादे
क्षते वा कण्टकादिभिः । ग्रन्थिः कोलवदुत्सन्नो जायते कदरं तु तत् ॥ १ ॥ अथाल-
सस्य लक्षणमाह ॥ क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ । दुष्टकर्दमसंस्पर्शा-
दलसं तं विभावयेत् ॥ १ ॥ अथेन्द्रलुप्तस्य लक्षणम् ॥ रोमकूपानुगं पित्तं वातेन सह
मूर्च्छितम् । प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥ १ ॥ रुणद्धि रोमकूपां-
स्तु ततोऽन्येषामसंभवः । तदिन्द्रलुप्तं खालित्यं रुजेति च विभाव्यते ॥ २ ॥ अथ

१ ( मु० पु० पा० ) रुद्येति ।

दारुणकस्य लक्षणमाह ॥ दारुणा कण्डुरा रूक्षा केशभूमिः प्रपद्यते । कफमारुतकोपेन विद्याद्दारुणकं तु तत् ॥ १ ॥ अथारुंषिकालक्षणमाह ॥ अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्धनि । कफासृक्कृमिकोपेन तानि विद्यादरुंषिकाम् ॥ १ ॥ अथ पलितस्य निदानसंप्राप्तिपूर्वकं लक्षणमाह ॥ क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः । पित्तं च केशान् पचति पलितं तेन जायते ॥ १ ॥ वातिकं विषमं रूक्षं पीतं पित्तात्मकं कफात् । सर्वरूपान्वितं विद्यात्सन्निपातसमुत्थितम् ॥ २ ॥ अथ यौवनपिटिकालक्षणमाह ॥ शाल्मलीकण्टकप्रख्याः कफमारुतरक्तजाः । जायन्ते पिटिका यूनां विज्ञेया मुखदूषिकाः ॥ १ ॥ अथ पद्मिनीकण्टकमाह ॥ कण्टकैराचितं वृत्तं कण्डूमत्पाण्डुमण्डलम् । पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥१॥ अथ जतुमणिमाह ॥ सममुत्सन्नमरुजं मण्डलं कफरक्तजम् । सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिस्तु सः ॥१॥ अथास्य त्रिदोषजत्वं चरकेणोक्तं तद्यथा ॥ कृष्णः स्निग्धो जतुमणिर्ज्ञेयो वातोत्तरैस्त्रिभिः । अरुजं त्वपरे रक्तं लक्ष्मेत्याहुर्भिषग्वराः ॥२॥ अथ माषमाह ॥ अवेदनं स्थिरं चैव यस्मिन् गात्रे प्रदृश्यते । माषवत्कृष्णमुत्सन्नमनिलान्माषमादिशेत् ॥ १ ॥ तथा च भोजः ॥ वातेरिते त्वचि यदा दूष्येते कफमेदसी । श्लक्ष्णं मृदुसवर्णं च कुर्यात्तं माषकं वदेत् ॥ १ ॥ अथ तिलकालकमाह ॥ कृष्णानि तिलमात्राणि नीरुजानि समानि च । वातपित्तकफोद्रेकात्तान्विद्यात्तिलकालकान् ॥ १ ॥ अथ न्यच्छमाह ॥ महद्वा यदि वा चाल्पं श्यावं वा यदि वा सितम् । नीरुजं मण्डलं गात्रे न्यच्छमित्यभिधीयते ॥ अथ मुखव्यङ्गस्य लक्षणमाह । क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः । मुखमागत्य सहसा मण्डलं विसृजत्यतः ॥ १ ॥ नीरुजं तनुकं श्यावं मुखव्यङ्गं तमादिशेत् ॥ १ ॥ अथ नीलिकामाह ॥ कृष्णमेवंगुणं गात्रे मुखे वा नीलिकां विदुः ॥१॥ अथ परिवर्तिकालक्षणमाह ॥ मर्दनात्पीडनाद्वापि तथैवाप्यभिघाततः । मेण्ढ्रचर्म यदा वायुर्भजते सर्वतश्चरन् ॥१॥ तदा वातोपसृष्टत्वाच्चर्म तत्परिवर्तते । सवेदनं सदाहं च पाकं च व्रजति क्वचित् ॥२॥ मणेरधस्तात्कोशस्तु ग्रन्थिरूपेण लम्बते । सरुजां वातसंभूतां विद्यात्तां परिवर्तिकाम् ॥ सकण्डूः कठिना चापि सैव श्लेष्मसमुत्थिता ॥ ३ ॥ अथावपाटिकालक्षणमाह ॥ अल्पीयःखां यदा हर्षाद्बलाद्गच्छेत् स्त्रियं नरः । हस्ताभिघातादपि वा चर्मण्युद्वर्तिते बलात् ॥१॥ मर्दनात्पीडनाद्वापि शुक्रवेगविघाततः । यैत्रावपाट्यते चर्म तां विद्यादवपाटिकाम् ॥ २॥ अथ निरुद्धप्रकाशस्य लक्षणमाह ॥ वातोपसृष्टे मेण्ढ्रे वै चर्म संश्रयते मणिम् । मणिश्चर्मावनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥ १ ॥ निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम् । मूत्रं प्रवर्तते जन्तोर्मणिर्विव्रियते न च ॥ २ ॥ निरुद्धप्रकशं विद्यात्सरुजं वातसंभवम् ॥१॥ अथ सन्निरुद्धगुदस्य लक्षणमाह ॥ वेगसंधारणाद्वायुर्विहितो गुदसंस्थितः । निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोति च ॥ १ ॥ मार्गस्य सौक्ष्म्या-

---

१ ( च० ) पित्तात्सितम् । २ ( च० ) न्नं मलिनं मसकं दिशेत् । ३ ( च० ) यस्या— । ४ ( मु० पु० पा० ) सवेदनम् । ५ ( च० ) र्विहतो ।

त्कृच्छ्रेण पुरीषं तस्य गच्छति। सन्निरुद्धगुदव्याधिमेवं विद्यात्सुदुस्तरम् ॥ २ ॥ अथाहिपूतनस्य लक्षणमाह ॥ शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत्। स्विन्ने वा स्नाप्यमानेऽस्य कण्डू रक्तकफोद्भवा ॥ १ ॥ कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते। एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम् ॥ २ ॥ अथ वृषणकच्छुलक्षणमाह ॥ स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः। यदा प्रक्लिद्यते स्वेदात् कण्डूं जनयते तदा ॥ १ ॥ कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते। प्राहुर्वृषणकच्छुं तां श्लेष्मरक्तप्रकोपजाम् ॥ २ ॥ अथ गुदभ्रंशस्य लक्षणमाह ॥ प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः। रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत् ॥१॥ अथ सूकरदंष्ट्रस्य लक्षणमाह ॥ सदाहो रक्तपर्यन्तस्त्वक्पाकी तीव्रवेदनः। कण्डूमाञ्ज्वरकारी च स स्यात्सूकरदंष्ट्रकः ॥ १ ॥ इति क्षुद्ररोगनिदानम् ॥

## ॥ अथातः क्षुद्ररोगचिकित्सा ॥

अथाजगल्लिकाचि० ॥ तत्राजगल्लिकामामां जलौकाभिरुपाचरेत्। शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चालेपयेन्मुहुः ॥ १ ॥ कठिनां क्षारयोगैश्च द्रावयेदजगल्लिकाम्। श्यामालाङ्गलिकामूर्वाकल्कैरपि विलेपयेत् ॥ पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥ २ ॥ ॥ अथ यवप्रख्यान्वालजीचिकित्सा ॥ अन्वालजीं यवप्रख्यां पूर्वं स्वेदैरुपाचरेत्। मनःशिलादेवदारुकुष्ठकल्कैः प्रलेपयेत् ॥ १ ॥ पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत् अथ विवृतेन्द्रवृद्धागर्दभिकाजालगर्दभानां चिकित्सा। विवृतामिन्द्रवृद्धां च गर्दभीं जालगर्दभम्। पैत्तिकस्य विसर्पस्य क्रियया साधयेद्भिषक् ॥१॥ पाके तु रोपयेदाज्यैः पक्वैर्मधुरभेषजैः। नीलपटोलमूलाभ्यां साज्याभ्यां लेपनं हितम् ॥ जालगर्दभरूपं तु सद्यो हन्ति सवेदनम् ॥ २ ॥ अथ कच्छपिकाचिकित्सा ॥ कच्छपीं स्वेदयेत्पूर्वं तत एभिः प्रलेपयेत्। कल्कीकृतैर्निशाकुष्ठशिलातालकदारुभिः ॥ तां पक्वां साधयेच्छीघ्रं भिषग् व्रणचिकित्सया ॥ १ ॥ अथ वल्मीकचिकित्सा ॥ शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत्। विधानेनार्बुदोक्तेन शोधयित्वा च रोपयेत् ॥१॥ वल्मीकं तु भवेद्यस्य नातिवृद्धममर्मणि। तत्र संशोधनं कृत्वा शोणितं मोक्षयेद्भिषक् ॥२॥ कुलत्थकानां मूलैश्च गुडूच्या लवणेन च। आरग्वधस्य मूलैश्च दन्तिमूलैस्तथैव च ॥ ३ ॥ श्यामामूलैः सपललैः सक्तुमिश्रैः प्रलेपयेत्। सुस्निग्धैश्च सुखोष्णैश्च भिषक् तमुपनाहयेत् ॥ ४ ॥ अथमनःशिलादितैलम् ॥ मनःशिलालभल्लातसूक्ष्मैलागुरुचन्दनैः। जातीपल्लवकल्कैश्च निम्बतैलं विपाचयेत् ॥ १ ॥ वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुव्रणम्। पाणिपादोपरिष्टात्तच्छिद्रैर्बहुभिरावृतम् ॥ वल्मीकं यत्सशोफं स्याद्वर्ज्यं तद्धि विजानता ॥ २ ॥ अथ पाषाणगर्दभचिकित्सा ॥ सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत्। कफमारुतशोथघ्नो लेपः पाषाणगर्दभे ॥ १ ॥ अथ पनसिकाचिकित्सामाह ॥ भिषक् पनसिकां पूर्वं स्वेदनैरपतर्पणैः। जयेद्विदारिवल्लेपैः शिग्रुदेवद्रुमो-

---

१ (घ०) प्रलेपयेत्। २ (घ०) रोगं।

द्भवैः ॥ १ ॥ अथेरिवेल्लिकाचिकित्सा ॥ पैत्तिकस्य विसर्पस्य या चिकित्सा प्रकीर्तिता। तथैव भिषगेतां च चिकित्सेदिरिवेल्लिकाम् ॥१॥ अथ कक्षागन्धनयोश्चिकित्सा ॥ कक्षां च गन्धनां तां च चिकित्सेत चिकित्सकः। पैत्तिकस्य विसर्पस्य क्रियया पूर्वमुक्तया ॥ १ ॥ अथाग्निरोहिणीचिकित्सा ॥ पित्तवीसर्पविधिना साधयेदग्निरोहिणीम्। रोहिण्यां लङ्घनं कुर्याद् रक्तमोक्षणरूक्षणम् ॥ १ ॥ शरीरस्य च संशुद्धिं तां तु वृद्धां परित्यजेत् ॥२॥ अथचिप्यकुनखयोश्चिकित्सा ॥ चिप्यं रुधिरमोक्षेण शोधनेनाप्युपाचरेत्। गतोष्माणमथैनं तु सेचयेदुष्णवारिणा ॥ १ ॥ शस्त्रेणापि यथायोग्यमुच्छिद्य स्रावयेत्ततः। व्रणोक्तेन विधानेन रोपयेत्तु विचक्षणः ॥ २ ॥ स्वरसेन हरिद्रायाः पात्रे कृत्वायसेऽभयाम्। घृष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्यं पुनः पुनः ॥ ३ ॥ काश्मर्याः सप्तभिः पत्रैः कोमलैः परिवेष्टितः। अङ्गुलीवेष्टकः पुंसां ध्रुवमाशु प्रशाम्यति॥४॥ श्लेष्मविद्रधिकल्पेन कुनखं समुपाचरेत्। नखकोटिप्रविष्टेन टङ्कणेन न शाम्यति ॥ कुनखश्चेत्तदा शैलः सलिले प्लवतेऽपि च ॥५॥ दाडिमकुसुमयवासैरभया सुश्लक्ष्णचूर्णिता लेपात्। नखकोटिपूतिभावं शमयति शूलं च तत्क्षणादेव॥६॥ अथानुशयीचिकित्सा हरेदनुशयीं वैद्यः क्रियया श्लेष्मविद्रधेः ॥१॥ अथ विदारिकाचिकित्सा॥ विदारिकायां प्रथमं जलौकायोजनं हितम्। पाटनं च विपक्कायां ततो व्रणविधिः स्मृतः ॥ जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः ॥ १ ॥ वृन्दात् ॥ अथ शर्करार्बुदस्य चि० ॥ मेदोऽर्बुदविधानेन साधयेच्छर्करार्बुदम् ॥ १ ॥ अथ पाददार्याश्चि०॥ पाददार्यां शिरां प्राज्ञो मोक्षयेत्तलशोधिनीम्। स्नेहस्वेदोपपन्नौ तु पादौ वा लेपयेन्मुहुः ॥ १ ॥ मधूच्छिष्टवसामज्जाघृतैः क्षारविमिश्रितैः। सर्जोत्थसिन्धूद्भवयोश्चूर्णं मधुघृतप्लुतम् ॥ निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जने ॥ २ ॥ मधुसिक्थकसैन्धवघृतगुडमहिषाख्यशालनिर्यासैः। गैरिकसहितैर्लेपः पादस्फुटनापहः सिद्धः ॥ ३ ॥ उपोदिकासर्षपनिम्बमोचकर्कारुकैर्वारुकभस्मतोयैः। तैलं विपक्कं लवणेन युक्तं तत्पाददारीं विनिहन्ति लेपात् ॥ ४ ॥ इत्युपोदकाद्यं तैलम्। मदनं च तथा सिक्थं सामुद्रलवणं तथा। महिषीनवनीतेन सन्ततं लेपनं हितम् ॥१॥ सप्ताहात्स्फुटितौ पादौ जायेते कमलोपमौ। सैन्धवं चन्दनं रालं मधु सर्पिः पुरो गुडः॥ गैरिका स्फुटितौ पादौ लिप्तौ स्तः पङ्कजोपमौ ॥ २ ॥ मदनसैन्धवगुग्गुलुगैरिकाज्यमधुवालकपङ्कविलेपनात्। स्फुटितमप्यखिलं चरणद्वयं विकचतामरसप्रतिमं भवेत् ॥ ३ ॥ अथ कदरस्य चिकित्सा। दहेत्कदरमुद्धृत्य तैलेन दहनेन वा॥१॥ अथालसस्य चिकित्सा॥ पादौ सिक्त्वारनालेन लेपनं त्वलसे हितम्। पटोलकुनटीनिम्बरोचनामरिचैस्तिलैः॥१॥ क्षुद्रास्वरससिद्धेन कटुतैलेन लेपयेत्। ततः कासीसकुनटीतिलचूर्णैर्विचूर्णयेत्॥ २॥ करञ्जबीजरजनीकासीसं पद्मकं मधु। रोचना हरितालं च लेपोऽयमलसे हितः ॥३॥ अथेन्द्रलुप्तस्य चिकित्सा ॥ इन्द्रलुप्तापहो लेपो मधुना बृहतीरसः। गुञ्जामूलं फलं वापि भल्लातकरसोऽपि वा॥ १ ॥ लेपः सवनीतो वा श्वेताश्वखुरजा मषी। हस्तिद-

१ (मु० पु० पा०) पक्वा तज्जलकल्केन। २ महिषाक्ष। ३ (च०) रालगुडाङ्कुरे—।

न्तमर्षीं कृत्वा छागदुग्धं रसाञ्जनम् ॥ रोमाण्येतेन जायन्ते लेपात्पाणितलेष्वपि ॥ २॥ तिक्तपटोलीपत्रस्वरसैर्घृष्टा शमं याति । चिरकालजापि निरुजा नियतं दिवसत्रयेणैव ॥२॥ गोक्षुरस्तिलपुष्पाणि तुल्ये च मधुसर्पिषी । शिरः प्रलेपितं तेन केशैः समुपचीयते ॥३॥ जातीकरञ्जवरुणकरवीराग्निपाचितम् । तैलमभ्यञ्जनाद्धन्यादिन्द्रलुप्तं न संशयः । ।४॥ स्नुहीपयः पयोऽर्कस्य मार्कवो लाङ्गली विषम् । अजामूत्रं सगोमूत्रं रक्तिका सेन्द्रवारुणी ।।५॥ सिद्धार्थकस्तीक्ष्णगन्धा सम्यगेभिर्विपाचितम् । तैलं भवति नियमात्खालित्यव्याधिनाशनम् ॥६॥ इति स्नुहीदुग्धादितैलम् ॥ अथ दारुणस्य चिकित्सा ॥ कार्यो दारुणके मूर्ध्नि प्रलेपो मधुसंयुतः । प्रियालबीजमधुककुष्ठमाषैः ससैन्धवैः ॥१॥ काञ्जिकैस्तु त्रिसप्ताहं लेपो दारुणकापहः । आम्रबीजस्य चूर्णं तु शिवाचूर्णं समं द्वयम् ॥ दुग्धपिष्टप्रलेपोऽयं दारुणं हन्ति दारुणम् ॥ २ ॥ अथ भृङ्गराजतैलम् ॥ भृङ्गराजरसेनैव लोहकिट्टं फलत्रिकम् । सारिवां च पचेत्कल्कैस्तैलं दारुणनाशनम् ॥ अकालपलितं कण्डूमिन्द्रलुप्तं च नाशयेत् ॥ १ ॥ अथ गुञ्जातैलम् ॥ गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन च । कण्डूदारुणहृत्कुष्ठकपालव्याधिनाशनम् ॥ १ ॥ दुग्धेन खाखसं बीजं प्रलेपाद्दारुणं हरेत् । कण्टकारीफलरसैस्तुल्यं तैलं विपाचयेत् ॥ जपापुष्पद्रवैर्वाथ तल्लेपो दारुणप्रणुत् ॥ २ ॥ अथारुंषिकायाश्चिकित्सा ॥ नीलोत्पलस्य किञ्जल्को धात्रीफलसमन्वितः । यष्टीमधुकयुक्तश्च लेपाद्धन्यादरुंषिकाम् ॥ १ ॥ अथ त्रिफलाद्यं तैलम् ॥ त्रिफलाया रजो यष्टी मार्कवोत्पलसारिवा । सैन्धवं पक्वमेतैस्तु तैलं हन्यादरुंषिकाम् ॥ १ ॥ अरुंषिकायां रुधिरेऽवसिक्ते शिराव्यधेनाथ जलौकया वा । निम्बाम्बुसिक्ते शिरसि प्रलेपो देयश्च वर्चोरससैन्धवाभ्याम् ॥ २॥ पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य च । मूत्रपिष्टः प्रलेपोऽयं शीघ्रं हन्यादरुंषिकाम् ॥३॥ ॥ अथ हरिद्राद्यं तैलम् ॥ हरिद्राद्वयभूनिम्बत्रिफलारिष्टचन्दनैः । एतत्तैलमरुंषीणां सिद्धमभ्यञ्जने हितम् ॥ १ ॥ खादिरारिष्टजम्बूनां त्वग्भिर्वा मूत्रसंयुतैः । कुटजत्वक् सैन्धवं वा लेपाद्धन्यादरुंपिकाम् ॥२॥ अथ पलितस्य चिकित्सा ॥ अयोरजो भृङ्गराजत्रिफला कृष्णमृत्तिका । स्थितमिक्षुरसे मासं लेपनात्पलितं जयेत् ॥ १ ॥ धात्रीफलद्वयं पथ्ये द्वे तथैकं बिभीतकम् । पञ्चाम्रमज्जो लोहस्य कर्षैकं च प्रदीयते ॥ २ ॥ पिष्ट्वा लोहमये भाण्डे स्थापयेदुषितं निशि । लेपोऽयं हन्ति न चिरादकालपलितं महत् ॥ ३ ॥ निम्बस्य तैलं प्रकृतिस्थमेव नस्यं विधेयं विधिना यथावत् । मासेन गोक्षीरभुजो नरस्य चिरात् प्रभूतं पलितं निहन्ति ॥४॥ काश्मर्यं मूलमादौ सहचरकुसुमं केतकस्यापि मूलं लौहं चूर्णं सभृङ्गं त्रिफलजलयुतं तैलमेभिः पचेयुः । कृत्वा लोहस्य भाण्डे क्षितितलनिहितं स्थापयेन्मासमेकं केशाः काशप्रकाशा अपि मधुपनिभा अस्य योगाद्भवन्ति ॥५ ॥ त्रिफला नीलिकापत्रं भृङ्गराजो ह्ययोरजः । अविमूत्रेण संपिष्टं लेपात्कृष्णीकरं परम् ॥ ६ ॥ अथ यौवनपिटिकान्यच्छमुखव्यङ्गनीलिकाचिकित्सामाह ॥ युवानपिटिकान्यच्छनीलिकाव्यङ्गकेराः । शिरावेधैः प्रलेपैश्च

१ ( ख० ) गोक्षीरम् । २ ( ख० ) जया —

जयेदभ्यञ्जनैस्तथा ॥ १ ॥ जातीफलं चन्दनं च मरिचैः सह पेषितम् । मुखलेपेन हन्त्याशु पिटिकां यौवनोद्भवाम् ॥ २ ॥ लोध्रधान्यवचालेपस्तारुण्यपिटिकापहः । तद्वद् गोरोचनायुक्तं मरिचं मुखलेपनात् ॥३॥ सिद्धार्थकवचालोध्रसैन्धवैश्च प्रलेपनम् । गव्येन चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ॥ ४ ॥ कण्टकैः शाल्मलीयैश्च क्षीरपिष्टैः प्रलेपयेत् । मुखे तस्यापि पिटिकाः संक्षयं यान्त्यसंशयम् ॥५ ॥ त्रिभुवनविजयापत्रं मूलं स्थविरस्य शिंशपा चैभिः । उद्वर्तनं विरचितं न्यच्छव्यङ्गापहं सिद्धम् ॥ ॥ ६ ॥ वटाङ्कुरा मसूराश्च प्रलेपाद्व्यङ्गनाशनाः । व्यङ्गे मञ्जिष्ठया लेपः प्रशस्तो मधुयुक्तया ॥ ७ ॥ व्यङ्गेषु चार्जुनत्वक् च मञ्जिष्ठावृषमाक्षिकैः । लेपः सनवनीतो वा श्वेताश्वखुरजा मषी ॥ ८ ॥ व्यङ्गानां लेपनं शस्तं शशस्य रुधिरेण वा ॥ वरुणस्य कषायेण मुखं प्रक्षाल्य लेपयेत् ॥ ९ ॥ वटस्य पाण्डुपत्राणि मालती रक्तचन्दनम् ॥ कुष्ठं कालीयकं लोध्रमेभिर्लेपं प्रयोजयेत् ॥१०॥ युवानपिटिकानां तु व्यङ्गानां च विनाशनम् । मातुलिङ्गजटासर्पिः शिलागोशकृतो रसः ॥११॥ मुखकान्तिकरो लेपः पिटिकाव्यङ्गकालजित् । जातीफलस्य लेपस्तु हरेद्व्यङ्गं च नीलिकाम् ॥१२॥ अर्कक्षीरहरिद्राभ्यां मर्दयित्वा प्रलेपयेत् । मुखकार्ष्ण्यं शमं याति चिरकालोद्भवं ध्रुवम् ॥१३ ॥ मसूरैः क्षीरसंपिष्टैर्लिप्तमास्यं घृतान्वितैः । सप्तरात्राद्भवेत्सत्यं पुण्डरीकदलोपमम् ॥१४॥

॥ अथ कुङ्कुमाद्यं तैलम् ॥ कुङ्कुमं चन्दनं लोध्रं पतङ्गं रक्तचन्दनम् । कालीयकमुशीरं च मञ्जिष्ठा मधुयष्टिका ॥ १ ॥ पत्रकं पद्मकं पद्मं कुष्ठं गोरोचनं निशा । लाक्षा दारुहरिद्रा च गैरिकं नागकेशरम् ॥ २ ॥ पालाशकुसुमं चापि प्रियङ्गुश्च वटाङ्कुराः । मालती च मधूच्छिष्टं सर्षपाः सुरभिर्वचा ॥ ३ ॥ चतुर्गुणपयःपिष्टैरेतैरक्षमितैः पृथक् । पचेन्मन्दाग्निना वैद्यस्तैलं प्रस्थद्वयोन्मितम् ॥ ४ ॥ वदनाभ्यञ्जनादेतद् व्यङ्गं नीलिकया सह । तिलकं माषकं न्यच्छं नाशयेन्मुखदूषिकाम् ॥ ५ ॥ पद्मिनीकण्टकं वापि हरेज्जतुमणिं तथा । विदध्याद्वदनं पूर्णचन्द्रमण्डलसुन्दरम् ॥ ६ ॥ इति कुङ्कुमाद्यं तैलं भावप्रकाशात् ॥ अथ मञ्जिष्ठाद्यं तैलम् ॥ योगतरङ्गिण्याः । मञ्जिष्ठं मधुकं लाक्षा मातुलिङ्गं सयष्टिकम् । कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं तथा ॥ १ ॥ आजं पयस्तु द्विगुणं शनैर्मृद्वग्निना पचेत् । नीलिकापिटिकाव्यङ्गानभ्यङ्गादेव नाशयेत् ॥ ॥ २ ॥ मुखं प्रसादोपचितं वलीपलितवर्जितम् । सप्तरात्रप्रयोगेण भवेत्कनकसंनिभम् ॥ ३ ॥ अथ पद्मिनीकण्टकचिकित्सा ॥ पद्मिनीकण्टके रोगे छर्दयेन्निम्बवारिणा । तेनैव सिद्धं सक्षौद्रं सर्पिः पातुं प्रदापयेत् ॥ १ ॥ निम्बारग्वधकल्कैर्वा मुहुरुद्वर्तनं हितम् । चतुर्गुणेन निम्बोत्थपत्रक्वाथेन गोघृतम् ॥ २ ॥ पचेत्ततस्तु निम्बस्य कृतमालस्य पत्रजैः । कल्कैर्भूयः पचेत्सिद्धं तत्पिबेत् पलसंमितम् ॥ पद्मिनीकण्टकाद्रोगान्मुक्तो भवति नान्यथा ॥ ३ ॥ इति निम्बादिघृतम् ॥ अथ तिलकालकमाषजतुमणीनां चिकित्सा ॥ चर्मकीलं जतुमणिं माषकांस्तिलकालकान् । उत्कृत्य शस्त्रेण दहेत्क्षाराग्निभ्यामशेषतः ॥ १ ॥ अथ परिवर्तिकाचिकित्सामाह ॥ स्वेदोपनाहौ परिवर्ति-

कार्यां कृत्वा समभ्यज्य घृतेन पश्चात् । प्रवेशयेच्चर्म शनैः प्रविष्टे माषैः सुपिष्टैरुपनाहयेत्तम् ॥ १ ॥ इति वृन्दात् ॥ अथ भावप्रकाशात् ॥ परिवर्तिं घृताभ्यक्तां सुस्विन्नामुपनाहयेत् । त्रिरात्रं पञ्चरात्रं वा वातघ्नैः शाल्वणादिभिः ॥१॥ ततोऽभ्यज्य शनैश्चर्म वेशयेत्पीडयेन्मणिम् । प्रविष्टे चर्मणि मणौ स्वेदयेदुपनाहयेत् । दद्याद्वातहरान्बस्तीन् स्निग्धान्यन्नानि भोजयेत् ॥ २ ॥ अथावपाटिकाचिकित्सा ॥ स्नेहस्वेदैरिमां वैद्यश्चिकित्सेदवपाटिकाम् ॥१॥ अथ निरुद्धप्रकाशस्य चिकित्सा । निरुद्धप्रकशे नाडीं लौहीमुभयतोमुखीम् । दारवीं वा जतुकृतां घृताक्तां संप्रवेशयेत् ॥ १ ॥ परिषिञ्चेद्वसां मज्जां शिशुमारवराहयोः । चुक्रतैलं तथा योज्यं वातघ्नद्रव्यसंयुतम् ॥ २ ॥ त्र्यहात्स्थूलतरां सम्यङ् नाडीं गर्भे प्रवेशयेत् । स्रोतो विवर्धयेदेवं स्निग्धमन्नं च भोजयेत् ॥ भित्त्वा वा सीवनीं मुक्त्वा सद्यः क्षतवदाचरेत् ॥३॥ अथ सन्निरुद्धगुदस्य चिकित्सा ॥ सन्निरुद्धगुदे तैलैः सेको वातहरैर्हितः । तथा निरुद्धप्रकशक्रिया वा कथिता हिता ॥१॥ अथाहिपूतनचिकित्सा ॥ तत्र संशोधनैः पूर्वं धात्रीस्तन्यं विशोधयेत् । त्रिफलाखदिरक्काथैर्व्रणानां क्षालनं हितम् ॥ १ ॥ शङ्खसौवीरयष्ट्याह्वैर्लेपः कार्योऽहिपूतने । पटोलपत्रत्रिफलारसाञ्जनविपाचितम् ॥ पीतं घृतं नाशयति कृच्छ्रमप्यहिपूतनम् ॥२॥ अथ वृषण कच्छुचिकित्सा ॥ सर्जाम्बुकुष्ठसैन्धवसितसिद्धार्थैः प्रकल्पितो योगः । उद्वर्तनेन नियतं शमयति वृषणकण्डूतिम् ॥१॥ भिषग् वृषणकच्छुं तु चिकित्सेत्पामरोगवत् । अहिपूतननिर्दिष्टक्रिययापि च तां हरेत् ॥ २ ॥ कासीसरोचनातुत्थहरितालरसाञ्जनैः । आम्लपिष्टैः प्रलेपोऽयं मुष्ककण्ड्वहिपूतने ॥ ३ ॥ अथ गुदभ्रंशे ॥ गुदभ्रंशे गुदं स्विन्नं स्नेहेनाक्तं प्रवेशयेत् । प्रविष्टं रोधयेच्चला- द्र्व्यसच्छिद्रचर्मणा ॥ १ ॥ पद्मिन्याः कोमलं पत्रं यः खादेच्छर्करान्वितम् । एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ॥ १ ॥ मूषिकानां वसाभिर्वा गुदं भ्रंशे प्रलेपयेत् । स्विन्नमूषकमांसेन अथवा स्वेदयेद्गुदम् ॥ २ ॥ चाङ्गेरीकोलदध्याम्लनागरक्षारसंयुतम् । घृतमुत्कथितं पेयं गुदभ्रंशरुजापहम् ॥ ३ ॥ वृक्षाम्लनलचाङ्गेरीबिल्वपाठायवाग्रजम् । तक्रेण शीलयेत्पायुभ्रंशार्तो नलदीपनम् ॥४॥ अथ मूषकतैलम् ॥ मूषकान्दशमूलानि गृह्णीयादुभयं समम् । तयोः क्वाथेन कल्केन पचेत्तैलं यथोदितम् ॥ १ ॥ अभ्यङ्गात्तस्य तैलस्य गुदभ्रंशो विनश्यति । विनश्यति तथा तेन गुदशूलभगन्दराः ॥ २ ॥ गुडं च गव्यपयसा भक्षयेदविशङ्कितः । दुष्प्रवेशो गुदभ्रंशो विशत्याशु न संशयः ॥ रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ३ ॥ अथ शूकरदंष्ट्रस्य चिकित्सा ॥ भृङ्गराजकमूलस्य रजन्या सहितस्य च । चूर्णं तु सहसा लेपाद्वराहद्विजनाशनम् ॥ १ ॥ राजीवमूलकल्कः पीतो गव्येन सर्पिषा प्रातः । शमयति शूकरदंष्ट्रं दंष्ट्रोद्भूतं ज्वरं घोरम् ॥२॥ रजनी मार्कवं मूलं पिष्टं शीतेन वारिणा । तल्लेपाद्धन्ति वीसर्पं वाराहदशनाद्भयम् ॥३॥ इति शूकरदंष्ट्रस्य चिकित्सा ॥ अथ पथ्यापथ्यम् ॥ क्षुद्ररोगेषु सर्वेषु नानारोगानुकारिषु । दोषान् द्व्यानवस्थां च निरीक्ष्य

१ ( च० ) गुत्तया । २ ( क० ग० ) गुदं—वेशये—।

मतिमान्भिषक् ॥ १ ॥ तस्य तस्य च रोगस्य पथ्यापथ्यानि सर्वशः । यथादोषं यथादूष्यं यथावस्थं प्रकल्पयेत् ॥ २ ॥ इति क्षुद्ररोगचिकित्सा ॥

## ॥ अथ मुखरोगाणां निदानान्याह ॥

तत्र मुखस्य स्वरूपमाह । ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च । गलो गलादि सकलं सप्ताङ्गं मुखमुच्यते ॥१॥ आनूपपिशितक्षीरदधिमाषादिसेवनात् । मुखमध्ये गदान्कुर्युः क्रुद्धा दोषाः कफोत्तराः ॥ १ ॥ अथ मुखरोगाणां संख्यामाह । स्युरष्टावोष्ठयोर्दन्तमूलेषु दश षट् तथा । दन्तेष्वष्टौ च जिह्वायां पञ्च स्युर्नव तालुनि ॥ १ ॥ कण्ठे त्वष्टादश प्रोक्तास्त्रयः सर्वसराः स्मृताः । एवं मुखामयाः सर्वे सप्तषष्टिर्मता बुधैः ॥ २ ॥ तत्रौष्ठरोगास्तेषां निदानपूर्विकां सङ्ख्यां चाह । पृथग् दोषैः समस्तैश्च रक्तजो मांसजस्तथा । मेदोजश्चाभिघातोत्थ एवमष्टौष्ठजा गदाः ॥ १ ॥ अथ तत्र वातिकस्य लक्षणमाह ॥ कर्कशौ परुषौ स्तब्धौ कृष्णौ तीव्ररुजान्वितौ । दाल्येते परिपाट्येते ह्योष्ठौ मारुतकोपतः ॥ १ ॥ अथ पैत्तिकमाह ॥ चीयेते पिटिकाभिस्तु सरुजाभिः समन्ततः । सदाहपाकपिटिकौ पीताभासौ च पित्ततः ॥ १ ॥ अथ श्लैष्मिकमाह ॥ सवर्णाभिस्तु चीयेते पिटिकाभिरवेदनौ । कण्डूमन्तौ कफाच्छ्वेतौ शीतलौ पिच्छिलौ गुरू ॥१॥ अथ सान्निपातिकमाह॥ सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च । सन्निपातेन विज्ञेयावनेकपिटिकाचितौ ॥ १ ॥ अथ रक्तजमाह ॥ खर्जूरफलवर्णाभिः पिटिकाभिर्निपीडितौ । रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ १ ॥ अथ मांसजमाह ॥ मांसदुष्टौ गुरुस्थूलौ मांसपिण्डवदुद्गतौ । जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात् ॥१॥ अथ मेदोजमाह ॥ सर्पिर्मण्डप्रतीकाशौ मेदसा कण्डुरौ मृदू । स्वच्छं स्फटिकसंकाशमास्रावं स्रवतो भृशम् ॥ १ ॥ अथाभिघातजमाह ॥ क्षतजाभौ विदीर्येते पीड्येते चाभिघाततः । मथितौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ ॥ १ ॥ उक्तं भोजे ॥ क्षतावभिहतौ चापि रक्तावोष्ठौ सवेदनौ । भवतः सपरिस्रावौ रक्तपित्तप्रदूषितौ ॥ २ ॥ इत्योष्ठरोगनिदानम् ॥ अथ दन्तवेष्टरोगाः ॥ तत्र दन्तवेष्टरोगाणां नामानि संख्यां चाह । शीतादो गदितः पूर्वं दन्तपुप्पुटकस्ततः । दन्तवेष्टः सौषिरश्च महासौषिर एव च ॥१॥ ततः परिदरः प्रोक्तस्ततस्तूपकुशः स्मृतः। वैदर्भश्च ततः प्रोक्तः खलिवर्धन एव च ॥२॥ अधिमांसकनामा च दन्तनाड्यश्च पञ्च च ।दन्तविद्रधिरप्यत्र दन्तवेष्टेषु षोडश ॥३॥ तत्र शीतादस्य लक्षणमाह ॥ शोणितं दन्तवेष्टेभ्यो यत्राकस्मात्प्रवर्तते । दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥१॥ दन्तमांसानि शीर्यन्ते पचन्ति च परस्परम् । शीतादो नाम स व्याधिः कफशोणितसंभवः ॥ २ ॥ अथ दन्तपुप्पुटकमाह ॥ दन्तयोस्त्रिषु वा यत्र श्वयथुर्जायते महान् । दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ॥ १ ॥ अथ दन्तवेष्टमाह ॥ स्रवन्ति पूयं रुधिरं चला दन्ता भवन्ति च । दन्तवेष्टः स विज्ञेयो दुष्टशोणितसंभवः ॥ १ ॥ अथ सौषिरमाह ॥ श्वयथुर्दन्तमूलेषु रुजावान्कफवातजः । लाला-

स्रावी सकण्डूश्च स ज्ञेयः सौषिरो गदः ॥ १ ॥ अथ महासौषिरमाह ॥ दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्यते । यस्मिन्स सर्वजो व्याधिर्महासौषिरसंज्ञकः ॥ १ ॥ सप्तरात्रान्मारकश्चायं यत आह भोजः ॥ सदाहो दन्तमूलेषु शोथः पित्तकफानिलात् । महासौषिर इत्येष सप्तरात्रान्निहन्त्यसून् ॥ १ ॥ अथ परिदरमाह ॥ दन्तमांसानि शीर्यन्ते यस्मिन्स्रवति चाप्यसृक् । पित्तासृक्कफजो व्याधि र्ज्ञेयः परिदरो हि सः ॥ १ ॥ अथोपकुशमाह ॥ वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च । अत्यर्दिताः प्रस्रवन्ति शोणितं मन्दवेदनम् ॥ १ ॥ आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते । यस्मिन्नुपकुशः स स्यात्पित्तरक्तसमुद्भवः ॥ २ ॥ अथ वैदर्भमाह ॥ घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् । चलन्ति च रदा यस्मिन्स वैदर्भोऽभिघातजः ॥ १ ॥ अथ खलिवर्धनमाह ॥ मारुतेनाधिको दन्तो जायते तीव्रवेदनः । खलिवर्धनसंज्ञोऽसौ सञ्जाते रुक् प्रशाम्यति ॥ १ ॥ अथाधिमांसकमाह ॥ हानव्ये पश्चिमे दन्ते महान् शोथो महारुजः । लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥ १ ॥ अथ पञ्चदन्तनाडीराह ॥ दन्तमूलगतां नाड्यः पञ्च ज्ञेया यथेरिताः ॥ १ ॥ अथ दन्तविद्रधिमाह ॥ दन्तमांसमलैः सास्रैर्बाह्यतः श्वयथुर्महान् । सदाहरुक् स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ॥ १ ॥ इति दन्तवेष्टरोगाः ॥ अथ दन्तरोगाः ॥ तत्र दन्तरोगाणां नामानि संख्यां चाह ॥ दालनः कथितः पूर्वं कृमिदन्तक एव च । प्रोक्तो भञ्जनको दन्तहर्षो वै दन्तशर्करा ॥ १ ॥ कपालिकात्र कथिता श्यावदन्तक एव च । करालसंज्ञ इत्यष्टौ दन्तरोगाः प्रकीर्तिताः ॥ २ ॥ तत्र दालनस्य लक्षणमाह ॥ दीर्यमाणेष्विव रुजा यत्र दन्तेषु जायते । दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥ १ ॥ अथ कृमिदन्तकमाह ॥ कृष्णच्छिद्रश्चलः स्रावी ससंरम्भो महारुजः । अनिमित्तरुजो वातात्स ज्ञेयः कृमिदन्तकः ॥१॥ अथ भञ्जनकमाह ॥ वक्त्रं वक्रं भवेद्यस्य दन्तभङ्गश्च जायते । कफवातकृतो व्याधिः स भञ्जनक उच्यते ॥१॥ अथ दन्तहर्षमाह ॥ शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः[1] । यत्र स्युर्वातपित्ताभ्यां दन्तहर्षः स कीर्तितः ॥ १ ॥ अथ दन्तशर्करामाह ॥ मलो दन्तगतो यस्तु कफश्चानिलशोषितः । शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥ १ ॥ अथ कपालिकामाह ॥ कपालेष्विव दीर्यत्सु दन्तेषु समलेषु च । कपालिकेति विज्ञेया दन्तच्छिद्दन्तशर्करा ॥ १ ॥ ॥ अथ श्यावदन्तकमाह ॥ योऽसृग्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः । श्यावतां नीलतां वापि गतः स श्यावदन्तकः ॥ १ ॥ अथ करालमाह ॥ शनैः शनैः प्रकुपितो यत्र दन्ताश्रितोऽनिलः । करालान् विकटान् दन्तान्स करालो न सिध्यति ॥१॥ अथ हनुमोक्षमाह ॥वातेन तैस्तैर्भावैस्तु हनुसन्धिर्विसंहतः । हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः ॥ १ ॥ तन्त्रान्तरे ॥ भाराभिघाताज्जन्तोश्च हनुसन्धिर्विमुच्यते । निरस्तजिह्वकृच्छ्रेण भाषितुं तत्र गच्छति ॥ सकृच्छ्रमानिलव्याधिं हनुमोक्षं

---

१ ( च० ) शीतरूक्षद्रवाम्ल—।

विनिर्दिशेत् ॥ १ ॥ इत्येवमष्टौ दन्तरोगाः ॥ अथ जिह्वारोगाः ॥ तत्र जिह्वारोगाणां निदानं नामानि संख्यां चाह ॥ वातजः पित्तजश्चापि कफजोऽलाससंज्ञकः । उपजिह्विका च गदा जिह्वायां पञ्च कीर्तिताः ॥१॥ अथ वातजमाह ॥ जिह्वानिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा ॥१॥ अथ पित्तजमाह । पित्तात्सदाहैरनुचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च ॥ १ ॥ अथ कफजमाह ॥ कफेन गुर्वी बहुलान्विता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः ॥१॥ अथालासमाह ॥ जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्तिः । जिह्वां स तु स्तम्भयति प्रवृद्धो मूले च जिह्वा भृशमेति पाकम् ॥१॥ अथोपजिह्विकामाह ॥ जिह्वाग्ररूपः श्वयथुर्हि जिह्वामुन्नम्य जातः कफरक्तयोनिः । प्रसेककण्डूपरिदाहयुक्तः प्रकथ्यते सा उपजिह्विकेति ॥१॥ इति जिह्वारोगाः ॥ अथ तालुरोगाः ॥ तत्र तालुरोगाणां नामानि संख्यां चाह ॥ गलशुण्डीतुण्डिकेर्यध्रुवः कच्छप एव च । ताल्वर्बुदश्च कथितो मांससङ्घात एव च ॥ १ ॥ तालुपुप्पुटनामा च तालुशोषस्तथैव च । तालुपाकश्च कथितास्तालुरोगा अमी नव ॥ २ ॥ तत्र गलशुण्डीलक्षणमाह ॥ श्लेष्मासृग्भ्यां तालुमूलात्प्रवृद्धो दीर्घः शोफो ध्मातवस्तिप्रकाशः । तृष्णाकासश्वासकृत्तं वदन्ति व्याधिं वैद्याः कण्ठशुण्डीतिनाम्ना ॥ १ ॥ अथ तुण्डिकेरीमाह ॥ शोथः शूलस्तोददाहप्रपाकी प्रागुक्ताभ्यां तुण्डिकेरी मता तु ॥१॥ अथाध्रुवलक्षणमाह । शोथः स्तब्धो लोहितः शोणितोत्थो ज्ञेयोऽध्रुवः सज्वरस्तीव्ररुक् च ॥ १ ॥ अथ कच्छपमाह ॥ कूर्मोत्सन्नो वेदनो शीघ्रजन्मा रोगो ज्ञेयः कच्छपः श्लेष्मणा च ॥१॥ अथ ताल्वर्बुदमाह ॥ पद्माकारं तालुमध्ये तु शोथं विद्याद्रक्तादर्बुदं प्रोक्तलिङ्गम् ॥ अथ मांससङ्घातमाह ॥ दुष्टं मांसं श्लेष्मणा नीरुजं च ताल्वन्तःस्थं मांससंघातमाहुः ॥ १ ॥ अथ तालुपुप्पुटमाह ॥ नीरुक् स्थायी कोलमात्रः कफात्स्यान्मेदोयुक्तात्पुप्पुटस्तालुदेशे ॥१॥ अथ तालुशोषमाह ॥ शोषोऽत्यर्थं दीर्यते चापि तालु श्वासो वातात्तालुशोषोऽयमुक्तः ॥ अथ तालुपाकमाह ॥ पित्तं कुर्यात्पाकमत्यर्थघोरं तालुन्येवं तालुपाकं वदन्ति ॥१॥ इति तालुरोगाः ॥ अथ गलरोगाः ॥ तत्र गलरोगाणां नामानि संख्यां चाह । रोहिणी पञ्चधा प्रोक्ता कण्ठशालूक एव च । अधिजिह्वश्च वलयोऽलासनामैकवृन्दकः ॥ १ ॥ ततो वृन्दं शतघ्नी च गिलायुः कण्ठविद्रधिः । गलौघश्च स्वरघ्नश्च मांसतानस्तथैव च ॥ विदारी कण्ठदेशे तु रोगा अष्टादश स्मृताः ॥ २ ॥ अथ तत्र पञ्चानामपि रोहिणीनां[1] सामान्यां संप्राप्तिमाह ॥ गलेऽनिलः पित्तकफौ च मूर्च्छितौ प्रदूष्य मांसं च तथैव शोणितम् । गलोपसंरोधकरैस्तथाङ्कुरैर्निहन्त्यसून्व्याधिरयं तु रोहिणी ॥ १ ॥ अथ तत्र वातजालक्षणमाह ॥ जिह्वा समन्ताद्भृशवेदनास्तु मांसाङ्कुराः कण्ठनिरोधनाः स्युः । सा रोहिणी वातकृता प्रदिष्टा वातात्मकोपद्रवगाढजुष्टा ॥१॥ अथ पित्तजामाह ॥ क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्तजाता ॥१॥ अथ श्लेष्मजामाह ॥ स्रोतोनिरोधिन्यपि मन्दपाका गुरुस्थिरा सा कफसं-

१ ( मु० पु० पा० ) दशत्सूपचीयते ।

भवा तु ॥१॥ अथ सन्निपातजामाह ॥ गम्भीरपाकिन्यनिवार्यवीर्या त्रिदोषलिङ्गा त्रिभवा भवेत्सा ॥१॥ अथ रक्तजामाह ॥ स्फोटैश्चिता पित्तसमानलिङ्गा साध्या प्रदिष्टा रुधिरात्मिका तु ॥ १ ॥ सद्यस्त्रिदोषजा हन्ति त्र्यहात्कफसमुद्भवा । पञ्चाहात्पित्तसंभूता सप्ताहात्पवनोत्थिता ॥ २ ॥ अथ कण्ठशालूकमाह ॥ कोलास्थिमात्रः कफसंभवो यो ग्रन्थिर्गले कण्टकशूकभूतः । खरः स्थिरः शस्त्रनिपातसाध्यस्तं कण्ठशालूकमिति ब्रुवन्ति ॥ १ ॥ अथाधिजिह्वमाह ॥ जिह्वाग्ररूपः श्वयथुः कफात्तु जिह्वोपरिष्टादसृजैव मिश्रात् । ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्जयेदागतपाकमेनम् ॥ १ ॥ अथ वलयमाह ॥ बलासं एवायतमुन्नतं च शोथं करोत्यन्नगतिं निवार्य । तं सर्वथैवाप्रतिवार्यवीर्यं विवर्जनीयं वलयं वदन्ति ॥१॥ अथालासमाह ॥ गले तु शोथं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम् । मर्मच्छिदं दुस्तरमेनमाहुरलाससंज्ञं भिषजो विकारम् ॥ १ ॥ अथैकवृन्दमाह ॥ वृत्तोन्नतोऽन्तः श्वयथुः सदाहः सकण्डुरोऽपाक्यमृदुर्गुरुश्च । नाम्नैकवृन्दः परिकीर्तितोऽसौ व्याधिर्बलासक्षतजप्रसूतः ॥ १ ॥ अथ वृन्दमाह ॥ समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति । तच्चापि पित्तक्षतजप्रकोपाद्विद्यात्सतोदं पवनात्मकं तु ॥ १ ॥ अथ शतघ्नीमाह ॥ वर्तिर्घना कण्ठनिरोधिनी या चितातिमात्रं पिशितप्ररोहैः । अनेकरुक् प्राणहरा त्रिदोषाज्ज्ञेया शतघ्नीसदृशी शतघ्नी ॥१॥ अथ गिलायुमाह ॥ ग्रन्थिर्गले त्वामलकास्थिमात्रः स्थिरोऽल्परुक् स्यात्कफरक्तमूर्तिः । संलक्ष्यते सक्तमिवाशितं च स शस्त्रसाध्यस्तु गिलायुसंज्ञः ॥ १॥ अथ गलविद्रधिमाह ॥ सर्वं गलं व्याप्य समुत्थितो यः शोफो रुजः सन्ति च यत्र सर्वाः । स सर्वदोषैर्गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्वजस्य ॥ १ ॥ अथ गलौघमाह ॥ शोथो महानन्नजलावरोधी तीव्रज्वरो वायुगतेर्निहन्ता । कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्यतेऽसौ ॥ १ ॥ अथ स्वरघ्नमाह ॥ यस्ताम्यमानः श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः । कफोपदिग्धेष्वनिलायनेषु ज्ञेयः स रोगः श्वसनात्स्वरघ्नः ॥ १ ॥ अथ मांसतानमाह ॥ प्रतानवान् यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण । स मांसतानः कथितोऽवलम्बी प्राणप्रणुत्सर्वकृतो विकारः ॥ १ ॥ अथ विदारीफलमाह ॥ सदाहतोदं श्वयथुं प्रसक्तमन्तर्गले पूतिविशीर्णमांसम् । पित्तेन विद्याद्वदने विदारीं पार्श्वे विशेषात्स तु येन शेते ॥ १ ॥ इति गलरोगाः ॥ अथ समस्तमुखरोगाः ॥ तत्र तेषां निदानं संख्यां चाह ॥ पृथग्दोषैस्त्रयो रोगाः समस्तमुखजाः स्मृताः ॥१॥ अथ तत्र वातिकस्य लक्षणमाह ॥ स्फोटैः सतोदैर्वदनं समन्ताद्यस्याचितं सर्वसरः स वातात् ॥ १ ॥ अथ पैत्तिकमाह ॥ रक्तैः सदाहैस्तनुभिः सुपीतैर्यस्याचितं वापि स पित्तकोपात् ॥ १ ॥ अथ श्लैष्मिकमाह ॥ अवेदनैः कण्डुयुतैः सवर्णैर्यस्याचितं वापि स वै कफेन ॥ १ ॥ अथ कैश्चिन्मुखपाकरोग एक एव प्रदिष्टः ॥ रक्तेन पित्तोदित एक एव कैश्चित्प्रदिष्टो मुखपाकरोगः ॥ १ ॥ अथ मुखरोगेष्वसाध्यानाह ॥ ओष्ठप्रकोपे वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः । दन्तवेष्टेषु वर्ज्यौ तु त्रिलिङ्गगतिसौषिरौ ॥ १ ॥ दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः । जि-

ह्वारोगेष्वलासस्तु तालुजेष्वर्बुदं तथा ॥ २ ॥ स्वरघ्नो वलयो वृन्दो बलासः सविदारिकः । गलौघो मांसतानश्च शतघ्नी रोहिणी गले ॥ ३ ॥ असाध्याः कीर्तिता ह्येते रोगा दश नवोत्तराः । तेषु चापि क्रियां वैद्यः प्रत्याख्यायं समाचरेत् ॥ ४ ॥ इति समस्तमुखरोगाः ॥

---

## ॥ अथ मुखरोगाणां चिकित्सा ॥

तत्रौष्ठरोगेषु। गलदन्तमूलदशनच्छदेषु रोगाः कफासृगूभूयिष्ठाः । तस्मादेतेष्वसकृद्रुधिरं विस्रावयेदुग्रम् ॥१॥ इति भावप्रकाशात् ॥ अथ वातजे ॥ स्नेहांस्तथोष्णान् परिषेकलेपान्घृतस्य पानं रसभोजनं च।अभ्यञ्जनस्वेदनलेपनं तदोष्ठे विदध्यात्पवनाभिभूते ॥ १ ॥ तैलं घृतं सर्जरसं ससिक्थं रास्नागुडं सैन्धवगैरिकं च । पक्त्वा समांशं दशनच्छदानां त्वगूभेदहन्तृ व्रणरोपणं च ॥ २ ॥ रालं मधूच्छिष्टगुडेन पक्कं तैलं घृतं वा विनिहन्ति लेपात् । त्वक्तोदपारुष्यरुजोऽधरस्य पूयास्रसंस्रावमपि प्रसह्य॥३॥अथ पित्तजे॥ वेधं शिराणां वमनं विरेकं तिक्तस्य पानं रसभोजनं च।शीताः प्रदेहाः परिषेचनं च पित्तोपसृष्टेष्वधरेषु कुर्यात्॥ १॥ अथ कफजे॥ शिरोविरेचनं धूमः स्वेदः कवल एव च । हृते रक्ते प्रयोक्तव्य ओष्ठकोपे कफात्मके ॥१॥ मेदोजे स्वेदिते भिन्ने शोधिते कवलो हितः । प्रियङ्गुत्रिफलालोध्रं सक्षौद्रं प्रतिसारणम् ॥ २ ॥ अथ प्रतिसारणस्य विधिमाह ॥ दन्तजिह्वामुखानां यच्चूर्णकल्कावलेहकैः । शनैर्घर्षणमङ्गुल्या तदुक्तं प्रतिसारणम् ॥१॥ ओष्ठरोगेष्वशेषेषु दृष्ट्वा दोषमुपाचरेत् । तेषु व्रणत्वं यातेषु व्रणवत्समुपाचरेत् ॥२॥ इत्योष्ठरोगचिकित्सा ॥ अथ दन्तमूलरोगाणां चिकित्सा ॥ दन्तमूलसमुत्थेषु दन्तोत्थेषु गदेषु च।रक्तमोक्षं प्रशंसन्ति जलौकालाबुशृङ्गकैः ॥१॥ अथ शीतादस्य चि०॥ शीतादेऽसृस्रुतिं कुर्यात्तथा गण्डूषधारणम्। शुण्ठीपर्पटकक्काथैः कवोष्णैश्च मुहुर्मुहुः ॥ १ ॥ इति योगतरङ्गिण्याः ॥ शीतादे हृतरक्ते तु तोयं नागरसर्षपान् । निष्क्वाथ्य त्रिफलां चापि कुर्याद्गण्डूषधारणम् ॥ १ ॥ इति भावप्रकाशात् ॥ कासीसलोध्रकृष्णामनःशिलाप्रियङ्गुतेजोह्वाः । एषां चूर्णं मधुयुक् शीतादे पूतिमांसहरम् ॥ तैलं घृतं वा वातघ्नं शीतादे संप्रशस्यते ॥ १ ॥ अथ दन्तपुप्पुटकस्य चिकित्सा ॥ दन्तपुप्पुटके कार्यं तरुणे रक्तमोक्षणम् । सपञ्चलवणक्षारैः सक्षौद्रैः प्रतिसारणम् ॥ १ ॥ अथ दन्तवेष्टस्य चिकित्सा ॥ दन्तवेष्टे विधिः कार्यो रक्तपित्तनिबर्हणः । शिरोविरेकश्च हितो नस्यं स्निग्धं च भोजनम् ॥ १ ॥ विस्राविते दन्तवेष्टे व्रणं तु प्रतिसारयेत् । लोध्रपत्तङ्गमधुकलाक्षाचूर्णैर्मधुप्लुतैः ॥ २॥ गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः । चलद्दन्तस्थैर्यकरं कार्यं बकुलचर्वणम् ॥ ३ ॥ अथ भद्रमुस्तादिवटिका ॥ भद्रमुस्ताभयाव्योषविडङ्गारिष्टपल्लवैः । गोमूत्रपिष्टैर्गुटिकां छायाशुष्कां प्रकल्पयेत् ॥ १ ॥ तां निधाय मुखे स्वप्याच्चलदन्तातुरो नरः । नातः

चरस्य द्रोणेऽम्भसः संश्रपयेद्यथावत् । ततश्चतुर्भागरसे तु तैलं पचेच्छनैरर्धपलप्रमाणैः ॥ १ ॥ कल्कैरनन्ताखदिरारिमेदजम्ब्वाम्रयष्टीमधुकोत्पलानाम् । तत्तैलमाश्वेव धृतं मुखेन स्थैर्यं द्विजानां विदधाति सद्यः ॥ २ ॥ इति सहाचरादितैलं भावप्रकाशात् ॥ अथ जीरकाद्यं चूर्णम् ॥ जरणलवणपथ्याशाल्मलीकण्टकानामनुदिनमनु घृष्टं दन्तमूलेषु चूर्णम् । व्रणदरणरुगस्रस्रावचाञ्चल्यशोथानपनयति विवस्वानन्धकारानिवाशु ॥ १ ॥ अथ कणाद्यं चूर्णम् ॥ कणासिन्धूत्थजरणचूर्णं तूर्णं व्यपोहति । घर्षणाद्दन्तचाञ्चल्यव्यथाशोथास्रसंस्रवान् ॥ १ ॥ अथ दशमूलादितैलघृते ॥ दशमूलीकषायेण तैलं वा घृतमेव वा । विपक्कं केवलं शस्तं सक्षौद्रं दन्तचालने ॥ १ ॥ इति दन्तवेष्टरोगचिकित्सा ॥ अथ सौषिरस्य ॥ सौषिरे हृतरक्ते तु लोध्रमुस्तारसाञ्जनैः । सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ॥ १ ॥ अथ परिदरोपकुशयोश्चिकित्सा ॥ क्रियां परिदरे कुर्याच्छीतादोक्तां विचक्षणः । संशोध्योभयतः कायं शिरश्चोपकुशे तथा ॥ १ ॥ काकोदुम्बरिकापत्रैर्व्रणं विस्रावयेद्भिषक् । लवणैः क्षौद्रयुक्तैश्च सव्योषैः प्रतिसारयेत् ॥२॥ अथ वैदर्भखल्लिवर्धनाधिमांसकदन्तविद्रधिरोगाणां चिकित्सामाह ॥ शस्त्रेणोत्कृत्य वैदर्भे दन्तमूलानि शोधयेत् । ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः ॥१॥ उद्धृत्याधिकदन्तं तु ततोऽग्निमवचारयेत् । क्रमिदन्तकवच्चात्र विधिः कार्यो विजानता ॥ २ ॥ छित्त्वाधिमांसं सक्षौद्रैरतैश्चूर्णैरुपाचरेत् । वचातेजोवतीपाठास्वर्जिकायावशूकजैः ॥ ३ ॥ क्षौद्रद्वितीयपिप्पल्यः कवले चात्र कीर्तिताः । पटोलनिम्बत्रिफलाकषायश्चात्र धावनः ॥ ४ ॥ विद्रध्युक्तं च विधिवद् विदध्याद्दन्तविद्रधौ । शस्त्रकर्म नरस्तत्र कुशलेनैव कारयेत् ॥ ५ ॥ नाडीव्रणहरं कर्म दन्तनाडीषु कारयेत् । यद्दन्तमध्ये जायेत नाडी दन्तं तमुद्धरेत् ॥६ ॥ छित्त्वा मांसानि शस्त्रेण यदि नोपरमो भवेत् । उद्धृत्य च दहेच्चापि क्षारेण ज्वलनेन वा ॥ ७ ॥ भिनत्त्युपेक्षिते दन्ते हनुं सास्थिगतिर्ध्रुवम् । उद्धृते तूत्तरे दन्ते शोणितं प्रस्रवेदति ॥८॥ रक्तातिसेकात्पूर्वोक्ता घोरा रोगा भवन्ति हि । काणः संजायते जन्तुरर्दितं तस्य जायते ॥९॥ चलमप्युत्तरं दन्तमतो नैवोद्धरेद्भिषक् । समूलं दशनं तस्मादुद्धरेद्भ्रमस्थि च ॥१०॥ अथ जात्यादितैलम् ॥ कषायैर्जातिमदनकण्टकीस्वादुकण्टकैः । मञ्जिष्ठालोध्रखदिरयष्ट्याह्वैश्चापि यत्कृतम् । तैलं यत्साधितं तत्र हन्याद्दन्तगतां गतिम् ॥१॥ अथ दन्तरोगाणां चिकित्सा ॥ दन्तरोगेषु सर्वेषु शस्तो वातहरो विधिः । पक्कं तैलं कवोष्णं च शस्तं कवलधारणे ॥ १ ॥ जयेद्विस्रावणैः स्विन्नमचलं क्रमिदन्तकम् । तथावपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः ॥ २ ॥ भद्रदार्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः । क्रमिदन्तापहं कोष्णं हिङ्गु दन्ताम्बरे स्थितम् ॥ ३ ॥ बृहतीभूमिकादम्बीपञ्चाङ्गुलकण्टकारिकाक्काथः । गण्डूषस्तैलयुतः क्रमिदन्तकवेदनाशमकः ॥ ४ ॥ नीलीवायसजङ्घाकटुतुम्बीमूलमेकैकम् । संचूर्ण्य दशनविधृतं दशनक्रमिपीतनं प्राहुः

१ (क०) कार्यो शिरा (ग०) कार्यं। २ (क०) नोपरिजो—।

॥ ५ ॥ पिष्ट्वा च सारिवापर्णं दृढं दन्तेषु धारयेत् । पतन्ति दन्तकीटाश्च चाञ्चल्यं हरति क्षणात् ॥ ६ ॥ इति वैद्यविलासात् ॥ कासीसं हिङ्गु सौराष्ट्री देवदारु समं जलैः । गुटिकां धारयेद् दन्तकृमिशूलहरं परम् ॥ १ ॥ इति चिकित्सासारात् ॥ अथ दन्तहर्षचिकित्सा ॥ स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रिवृतस्य च । निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥ १ ॥ स्नैहिकोऽत्र हितो धूमो नस्यं स्नैहिकमेव च । रसा रसयवाग्वश्च क्षीरं सन्तानिकाघृतम् ॥ शिरोबस्तिर्हितश्चापि क्रमो यश्चानिलापहः ॥ २ ॥ अच्छिद्य दन्तमूलानि शर्करामुद्धरेद्भिषक् । लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ॥ ३ ॥ दन्तहर्षक्रियां चात्र कुर्यान्निरवशेषितः । कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिता । ४ ॥ अथ सामान्यचिकित्सा । अरिमेदत्वचं क्षुण्णां पचेच्छतपलोन्मिताम् । जलद्रोणेन तत्क्वाथं गृह्णीयात्पादशेषितम् ॥ १ ॥ तैलस्यार्धाढकं दत्वा कल्कैः कर्षमितैः पचेत् । अरिमेदलवङ्गाभ्यां गैरिकागुरुपद्मकैः ॥२॥ मञ्जिष्ठालोध्रमधुकैर्लाक्षान्यग्रोधमुस्तकैः । त्वग्जातीफलकर्पूरकक्कोलखदिरैस्तथा ॥३॥ पत्तङ्गधातकीपुष्पसूक्ष्मैलानागकेशरैः । कट्फलेन च संसिद्धं तैलं मुखरुजं जयेत् ॥ ४ ॥ मदुष्टमांसचलितं शीर्णं दन्तं च सौषिरम् । शीतादं दन्तहर्षं च विद्रधिं कृमिदन्तकम् ॥ दन्तस्फुटनदौर्गन्ध्यं जिह्वाताल्वोष्ठजां रुजम् ॥ ५ ॥ इत्यरिमेदादि तैलं भावप्रकाशात् ॥ अथ लाक्षादितैलम् ॥ तैलं लाक्षारसं क्षीरं पृथक् प्रस्थमितं पचेत् । द्रव्यैः पलमितैरेतैः क्वाथैश्चापि चतुर्गुणैः ॥ १ ॥ लोध्रकट्फलमञ्जिष्ठापद्मकेसरपद्मकैः । चन्दनोत्पलयष्ट्याह्वैस्तत्तैलं वदने धृतम् ॥ २ ॥ दालनं दन्तचालं च दन्तमोक्षकपालिकाम् । शीतादं पूतिवक्त्रं च विरुचिं विरसास्यताम् ॥ ३ ॥ हन्यादाशु गदानेतान्कुर्याद्दन्तानपि स्थिरान् । लाक्षादिकमिदं तैलं दन्तरोगेषु पूजितम् ॥ ४ ॥ इति लाक्षादितैलम् ॥ अथ कुष्ठादिचूर्णम् ॥ कुष्ठं दार्वी लोध्रमब्दं समङ्गा पाठा तिक्ता तेजनी पीतिका च । चूर्णं शस्तं घर्षणे तद्द्विजानां रक्तस्रावं हन्ति कण्डूरुजं च ॥ १ ॥ सौराष्ट्रीत्रिफलामदत्रुटिकृमिद्विट्तुत्थपत्राङ्गकं कासीसं खदिरस्य सारममलं मायाफलं चायसम् । जीमूतं च समांशकं हि सकलं संकुट्य वस्त्रे भृशं पूतं तोययुतं रदेषु रदरुग्विच्छित्तिकृद्घृष्टकम् ॥ २ ॥ छिन्नया पिष्टया वारा दन्तशूलो विनश्यति । स्वेदिता रवितोयेन चलता नाशयेद्ध्रुवम् ॥ ३ ॥ अथ जातीपत्रादिचूर्णम् ॥ जातीपत्रपुनर्नवागजकणाकोरण्टकुष्ठं वचा शुण्ठीदीप्यहरीतकीतिलसमं श्लक्ष्णं भृशं चूर्णयेत् । तच्चूर्णं वदने धृतं विजयते दौर्गन्ध्यदन्तव्यथां चाञ्चल्यत्वमतिव्रणश्वयथुरुक्कण्डूकृमिन्यापदः ॥ १ ॥ फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् । तथातिकठिनं भक्ष्यं दन्तरोगी विवर्जयेत् ॥ २ ॥ इति दन्तरोगचिकित्सा ॥ अथ जिह्वारोगाणां चिकित्सामाह । जिह्वागतविकाराणां शस्तं शोणितमोक्षणम् । गुडूचीपिप्पलीनिम्बकवलः कटुभिर्मुखः ॥ १ ॥ ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम् । कण्टकेष्वनिलोत्थेषु

तत्कार्यं भिषजा खलु ॥ २ ॥ पित्तजेषु विघृष्टेषु निःसृते दुष्टशोणिते । प्रतिसारण-गण्डूषनस्यं च मधुरं हितम् ॥ ३ ॥ उपजिह्वां तु संलिख्य क्षारेण प्रतिसारयेत् । शिरोविरेकगण्डूषधूमैश्चैनामुपाचरेत् ॥ ४ ॥ व्योषक्षाराभयावह्निचूर्णमेतत्प्रघर्षणम् । उपजिह्वाप्रशान्त्यर्थमेभिस्तैलं च पाचयेत् ॥ ५ ॥ गृहधूमारनालेन क्राथं समधुसैन्धवम् । पाणिना मर्दयेच्चास्ये उपजिह्वाप्रशान्तये ॥ ६ ॥ निर्गुण्डीमुसलीकन्दं चर्वयेदुपजिह्वजित् । काञ्चनारत्वचः क्राथः प्रातरास्ये धृतः मुहुः ॥ कुर्यात्सखदिरो जिह्वादरणोन्मूलनं मुहुः ॥ ७ ॥ इति जिह्वारोगचिकित्सा ॥ अथ तालुरोगाणां चिकित्सा ॥ युञ्ज्यात्कफहरं शुण्ठ्यां रसं गण्डूषधारणे । कुष्ठोषणवचासिन्धुकणापाठाप्लुवैः सह ॥ १ ॥ सक्षौद्रैर्भिषजा कार्यं गलशुण्डीप्रघर्षणम् । अङ्गुष्ठाङ्गुलिसन्दंशेनाकृष्य गलशुण्डिकाम् ॥ २ ॥ छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम् । अतिच्छेदात्स्रवेद्रक्तं ततो हेतोर्म्रियेत च ॥ ३ ॥ हीनच्छेदात्भवेच्छोथो लालास्रावो भ्रमस्तथा । तस्माद्वैद्यः प्रयत्नेन दृष्टकर्मा विशारदः ॥ ४ ॥ गलशुण्डीं तु संछिद्य कुर्यात् प्राप्तमिमं क्रमम् । पिप्पल्यतिविषाकुष्ठवचामरिचनागरैः ॥ ५ ॥ क्षौद्रयुक्तैः सलवणैस्ततस्तां प्रतिसारयेत् । तुण्डीकेर्यध्रुवे कूर्मे संघाते तालुपुप्पुटे ॥ ६ ॥ एष एव विधिः कार्यो विशेषः शस्त्रकर्मणि । तालुपाके तु कर्तव्यं विधानं पित्तनाशनम् ॥ स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥ ७ ॥ इति तालुरोगाणां चिकित्सा ॥ अथ गलरोगाणां चिकित्सा ॥ रोहिणीनां तु साध्यानां हितं शोणितमोक्षणम् । वमनं धूमपानं च गण्डूषो नस्यकर्म च ॥ १ ॥ वातजां तु हृते रक्ते लवणैः प्रतिसारयेत् । सुखोष्णान्स्नेहगण्डूषान् धारयेच्चाप्यभीक्ष्णशः ॥ २ ॥ विस्राव्य पित्तसंभूतां सिताक्षौद्रप्रियङ्गुभिः । घर्षयेत्कवलो द्राक्षापरुषैः क्वथितैर्हितः ॥ ३ ॥ अगारधूमकटुकैः कफजां प्रतिसारयेत् । श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवम् ॥ ४ ॥ नस्यकर्मणि दातव्यं कवलं च कफोच्छ्रये । पित्तवत्साधयेद्वैद्यो रोहिणीं रक्तसंभवाम् ॥ ५ ॥ विस्राव्य कण्टशालूकं साधयेत् तुण्डिकेरिवत् । एककाले यवान्नं च भुञ्जीत स्निग्धमल्पशः ॥ ६ ॥ उपजिह्वकवच्चापि साधयेदधिजिह्वकम् । एकवृन्दं तु विस्राव्य विधिं शोधनमाचरेत् ॥ ७ ॥ एकवृन्दमिव प्रायो वृन्दं च समुपाचरेत् । गिलायुश्चापि यो व्याधिस्तं च शस्त्रेण साधयेत् ॥ अमर्मस्थं सुसंपक्वं छेदयेद्गलविद्रधिम् ॥ ८ ॥ अथ सामान्यानां गलरोगाणां चिकित्सा ॥ कण्ठरोगेष्वसृग्मोक्षस्तीक्ष्णैर्नस्यादिकर्मभिः । चिकित्सकश्चिकित्सां तु कुशलोऽत्र समाचरेत् ॥ १ ॥ क्राथं दद्याच्च दार्वीत्वग्निम्बुताक्ष्र्यकलिङ्गजम् । हरीतकीकषायो वा हितो माक्षिकसंयुतः ॥ २ ॥ कटुकातिविषादारुपाठामुस्ताकलिङ्गकाः । गोमूत्रक्वथिताः पीताः कण्ठरोगविनाशनाः ॥ ३ ॥ मृद्वीकाकटुकाव्योषदार्वीत्वक्त्रिफला घनम् । पाठा रसाञ्जनं दूर्वा तेजोह्वेति सुचूर्णितम् ॥ ४ ॥ क्षौद्रयुक्तं विधातव्यं गलरोगे महौषधम् । यो-

गास्त्वेते त्रयः प्रोक्ता वातपित्तकफापहाः ॥ ५ ॥ यवाग्रजं तेजवतीं सपाठां रसाञ्जनं दारुनिशां सकृष्णाम् । क्षौद्रेण कुर्यात्तद्गुटिकां मुखेन तां धारयेत्सर्वगलामयेषु ॥ ६ ॥ इति गलरोगाणां चिकित्सा ॥ अथ समस्तमुखरोगाणां चिकित्सा ॥ वातात्सर्वसरं चूर्णैर्लवणैः प्रतिसारयेत् । तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ १ ॥ पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः । सर्वपित्तहरः कार्यो विधिर्मधुरशीतलः ॥ २ ॥ प्रतिसारणगण्डूषधूमसंशोधनानि च । कफात्मके सर्वसरे क्रमं कुर्यात्कफापहम् ॥ ३ ॥ इति सर्वसरोपक्रमः ॥ मुखपाके शिरावेधः शिरसश्च विरेचनम् । मधुमूत्रघृतक्षीरैः शीतैश्च कवलग्रहः ॥ १ ॥ जातीपत्रामृताद्राक्षायासदार्वीफलत्रिकैः । क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥ २ ॥ कार्यं च बहुधा नित्यं जातीपत्रस्य चर्वणम् । कृष्णजीरककुष्ठेन्द्रयवचर्वणतस्त्र्यहात् ॥ ३ ॥ मुखपाकव्रणक्लेददौर्गन्ध्यमुपशाम्यति । पटोलनिम्बजम्ब्वाम्रमालतीनवपल्लवैः ॥ ४ ॥ पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने । पञ्चवल्कलजः क्वाथस्त्रिफलासंभवोऽथवा ॥ ५ ॥ मुखपाके प्रयोक्तव्यः सक्षौद्रो मुखधावने । स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया ॥ सक्षौद्रो मुखरोगासृग्दोषनाडीव्रणापहः ॥६॥ सप्तच्छदोशीरपटोलमुस्तहरीतकीतिक्तकरोहिणीभिः । यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत्पाकहरं मुखस्य ॥ ७ ॥ पटोलशुण्ठीत्रिफलाविशालात्रायन्तितिक्ताद्विनिशामृतानाम् । पीतः कषायो मधुना निहन्ति मुखे स्थितश्चास्यगदानशेषान् ॥ ८ ॥ तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च । सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः ॥ ९ ॥ अथ हरिद्रा तैलम् ॥ हरिद्रानिम्बपत्राणि मधुकं नीलमुत्पलम् । तैलमेभिर्विपक्तव्यं मुखपाकहरं परम् ॥ १ ॥ अथ यष्टीमध्वादितैलम् ॥ यष्टीमधुपलमेकं त्रिंशन्नीलोत्पलस्य तैलस्य । प्रस्थं तद्द्विगुणपयो विधिना पक्वं तु नस्येन ॥१॥ निशि वदनस्य स्रावं क्षपयति गात्रस्य दोषसंघातम् । वपुःस्वर्णत्वमवश्यं क्रमशोऽभ्यङ्गेन जन्तूनाम् ॥२॥ अथ खदिरादिगुटिका ॥ खदिरस्य तुलां तोयद्रोणे पक्त्वाष्टशेषिते । जातीकोशेन्दुपूगैश्च चातुर्जातमृगाण्डजैः ॥१॥ पृथक्कर्षमितैः पिष्टैर्मेलयित्वा चणोपमाम् । गुटीं कृत्वा मुखे धार्या सा निहन्त्यखिलान् गदान् ॥ जिह्वोष्ठदन्तवदनगलतालुसमुद्भवान् ॥२॥ अन्यच्च । तुल्यं खदिरसारस्य त्वेषां चूर्णं विनिक्षिपेत् । जातीकक्कोलकर्पूरक्रमुकानां विचक्षणः ॥गुटिकास्तु प्रकर्तव्या मुखे स्थाप्याः सदैव हि ॥ १ ॥ ताम्बूलमध्यस्थितचूर्णकेन दग्धं मुखं यस्य भवेत्कथंचित् । तैलेन गण्डूषमसौ विदध्यादम्लारनालेन पुनः पुनर्वा ॥ २ ॥ इति समस्तमुखरोगाणां चिकित्सा ॥ अथ पथ्यापथ्यविधिः ॥ स्वेदो विरेको वमनं गण्डूषः प्रतिसारणम् । कवलोऽसृक्स्रुतिर्नस्यं धूमः शस्त्राग्निकर्मणि ॥१॥ तृणधान्यं यवा मुद्गा कुलत्था जाङ्गलो रसः । बहुपत्री कारवेल्लं पटोलं बालमूलकम् ॥२॥ कर्पूरनीरं ताम्बूलं तप्ताम्बु खदिरो घृतम् । कटुतिक्तौ च वर्गोऽयं मित्रं स्यान्मुखरोगिणाम् ॥३॥ दन्तकाष्ठं स्नानमम्लं मत्स्यमानूपमामिषम् । दधि क्षीरं गुडं माषं रूक्षान्नं

कठिनाशनम् ॥ ४ ॥ अधोमुखेन शयनं गुर्वभिष्यन्दकारि च । मुखरोगेषु सर्वेषु दिवा निद्रां च वर्जयेत् ॥ ५ ॥ इति पथ्यापथ्यविधिः ॥ इति मुखरोगाधिकारः ॥

---

## ॥ अथ कर्णरोगाधिकारः ॥

अवश्यायजलक्रीडाकर्णकण्डूयनै रुजन् । मिथ्या योगेन शस्त्रस्य कुपितोऽन्यैश्च कोपनैः ॥ १ ॥ प्राप्य श्रोत्रशिराः कुर्याच्छूलं स्रोतसि वेगवान् । ते वै कर्ण्णगता रोगा अष्टाविंशतिरीरिताः ॥ २ ॥ तत्र कर्णरोगाणां नामानि संख्यां चाह ॥ कर्णशूलं प्रणादश्च बाधिर्यं क्ष्वेड एव च । कर्णस्रावः कर्णकण्डूः कर्णगूथस्तथैव च ॥ १ ॥ प्रतिनाहो जन्तुकर्णो विद्रधिर्द्विविधस्तथा । कर्णपाकः पूतिकर्णस्तथैवार्शश्चतुर्विधम् ॥ २ ॥ तथार्बुदं सप्तविधं शोफश्चापि चतुर्विधः । एते कर्णगता रोगा अष्टाविंशतिरीरिताः ॥ ३ ॥ तेषु कर्णशूलस्य संप्राप्तिपूर्वकं लक्षणमाह ॥ अथ समीरणमाह ॥ समीरणः श्रोत्रगतोऽन्यथा चरन्समन्ततः शूलमतीव कर्णयोः । करोति दोषैश्च यथास्वमावृतः स कर्णशूलः कथितो दुराचरः ॥१॥ मूर्च्छाद्युपद्रवसंसर्गात्कर्णशूलस्यासाध्यतां चाह ॥ मूर्च्छा दाहो ज्वरः कासः क्लमोऽथ वमथुस्तथा । उपद्रवाः कर्णशूले भवन्त्येते मरिष्यतः ॥ १ ॥ अथ कर्णनादस्य लक्षणमाह ॥ कर्णस्रोतःस्थिते वाते शृणोति विविधान्स्वरान् । भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते ॥ १ ॥ अथ बाधिर्यमाह ॥ यदा शब्दवहं वायुः स्रोत आवृत्य तिष्ठति । शुद्धः श्लेष्मान्वितो वापि बाधिर्यं तेन जायते ॥ १ ॥ अथ कर्णक्ष्वेडमाह ॥ वायुः पित्तादिभिर्युक्तो वेणुघोषोपमं स्वनम् । करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः स उच्यते ॥ १ ॥ अथ कर्णस्रावमाह ॥ शिरोऽभिघातादथवा निमज्जतो जले प्रपाकादथ वापि विद्रधेः । स्रवेद्धि पूयं श्रवणोऽनिलार्दितः स कर्णजः स्राव इति प्रकीर्तितः ॥ १ ॥ अथ कर्णकण्डूमाह ॥ मारुतः कफसंयुक्तः कर्णे कण्डूं करोति हि ॥१॥ अथ कर्णगूथमाह ॥ पित्तोष्मशोषितः श्लेष्मा कुरुते कर्णगूथकम् ॥ १ ॥ अथ प्रतिनाहमाह ॥ स कर्णगूथो द्रवतां यदा गतो विलायितो घ्राणमुखं प्रपद्यते । तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकारः शिरसोऽर्धभेदकृत् ॥ १ ॥ अथ क्रिमिकर्णमाह ॥ यदा तु मूर्च्छन्त्यथ वापि जन्तवः सृजन्त्यपत्यान्यथवापि मक्षिकाः । तदञ्जनत्वाच्छ्रवणे निरुच्यते भिषग्भिराद्यैः क्रिमिकर्णको गदः ॥ १ ॥ अथ पतङ्गादिषु कर्णप्रविष्टेषु लक्षणमाह ॥ पतङ्गाः शतपद्यश्च कर्णस्रोतः प्रविश्य हि । अरतिं व्याकुलत्वं च भृशं कुर्वन्ति वेदनाम् ॥१॥ कर्णो निस्तुद्यते तस्य तथा फरफरायते । कीटे चरति रुक् तीव्रा निष्पन्दे मन्दवेदना ॥ २ ॥ अथ द्विविधं कर्णविद्रधिमाह ॥ क्षताभिघातप्रभवस्तु विद्रधिर्भवेत्तथा दोषकृतोऽपरः पुनः । स रक्तपीतारुणमस्रमास्रवेत्प्रतोदधूमायनदाहचोषवान् ॥१॥ अथ कर्णपाकमाह ॥ कर्णपाकस्तु पित्तेन कोथविक्लेदकृद्भवेत् ॥१॥ अथ पूतिकर्णमाह ॥ कर्णविद्रधिपाकाद्वा जायते चाम्बुपूरणात् । पूयं स्रवति वा पूति स ज्ञेयः पूतिकर्णकः ॥१॥

अथ कर्णगतानां शोथार्बुदार्शसां लक्षणान्याह ॥ कर्णशोथार्बुदार्शांसि जानीयादुक्तलक्षणैः ॥१॥ इदानीं चरकोक्तं कर्णरोगचतुष्टयं वातपित्तकफसन्निपातकृतमाह ॥ नादोऽतिरुक् कर्णतले तु शोथः स्रावस्तनुश्चाश्रवणं च वातात्। शोथः सरागो दरणं विदाहः सपूतिपीतस्रवणं च पित्तात् ॥१॥ वैश्रुत्यकण्डूस्थिरशोथशुक्लस्निग्धस्रुतिः स्वल्परुजः कफाच्च। सर्वाणि रूपाणि च सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः ॥ २ ॥ इति कर्णरोगनिदानम् ॥ अथ कर्णपालीरोगनिदानम्। तत्र परिपोटलक्षणमाह। सौकुमार्याच्चिरोत्सृष्टे सहसैवातिवर्धिते। कर्णपाल्यां भवेच्छोथः सरुजः परिपोटवान् ॥ १ ॥ कृष्णारुणनिभः स्तब्धः स वातात्परिपोटकः ॥ २ ॥ अथोत्पातमाह। गुर्वाभरणसंयोगात्ताडनाद्घर्षणादपि। शोथः पाल्यां भवेच्छ्यावो दाहपाकरुजान्वितः। रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मतः ॥ १ ॥ अथोन्मन्थकमाह। कर्णं बलाद्वर्धयतः पाल्यां वायुः प्रकुप्यति। कफं संगृह्य कुरुते शोथं स्तब्धमवेदनम् ॥ उन्मन्थकः सकण्डूको विकारः कफवातजः ॥ १ ॥ अथ दुःखवर्धनमाह ॥ संवर्ध्यमाने दुर्विद्धे कण्डूदाहरुजान्वितः। शोथो भवति पाकश्च त्रिदोषो दुःखवर्धनः ॥ १ ॥ अथ परिलेहिनमाह ॥ कफासृक्कृमयः क्रुद्धाः सर्षपाभा विसर्पिणः। कुर्वन्ति पिटिकाः पाल्यां कण्डूदाहरुजान्विताः ॥१॥ कफासृक्कृमिसंभूतः स विसर्पन्नितस्ततः। विलिह्यात्सकलां पालीं परिलेही च स स्मृतः ॥ २ ॥ इति कर्णरोगनिदानम् ॥

## ॥ अथ कर्णरोगाणां चिकित्सा ॥

अथ कर्णपूरणविधिः ॥ स्वेदयेत्कर्णदेशं तु किंचिन्नुः पार्श्वशायिनः। मूत्रैः स्नेहै रसैः कोष्णैस्तच्च श्रोत्रं प्रपूरयेत् ॥ १ ॥ कर्णं च पूरितं रक्षेच्छतं पञ्च शतानि च। सहस्रं वापि मात्राणां श्रोत्रकण्ठशिरोगदे ॥ २ ॥ स्वजानुनः करावर्तं कुर्याच्छोटिकया युतम्। एषा मात्रा भवेदेका सर्वत्रैव विनिश्चयः ॥ ३ ॥ रसाद्यैः पूरणं कर्णे भोजनात्प्राक् प्रशस्यते। तैलाद्यैः पूरणं कर्णे भास्करेऽस्तमुपागते ॥४॥ कर्णशूले कर्णनादे बाधिर्ये क्ष्वेड एव च। चतुर्ष्वपि च रोगेषु सामान्यं भेषजं स्मृतम् ॥ ५ ॥ शृङ्गबेररसं क्षौद्रं सैन्धवं तैलमेव च। कदूष्णं कर्णयोर्धार्यमेतत्स्याद्वेदनापहम् ॥ ६ ॥ लशुनार्द्रकशिग्रूणां वारुण्या मूलकस्य च। कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ ७ ॥ अर्काङ्कुरानम्लपिष्टान् सतैलान्लवणान्वितान्। संनिदध्यात्सुधाकाण्डे कोरिते मृत्स्नया वृते ॥ ८ ॥ पुटपाकक्रियास्विन्नं पीडयेदारसागमात्। सुखोष्णं तद्रसं कर्णे प्रक्षिपेच्छूलशान्तये ॥९॥ अर्कस्य पत्रं परिणामपीतमाज्येन लिप्तं शिखियोगतप्तम्। आपीड्य तस्याम्बु सुखोष्णमेव कर्णे निषिक्तं हरतेऽतिशूलम् ॥ १० ॥ तीव्रशूलातुरे कर्णे सरागे क्लेदवाहिनि। छागमूत्रं प्रशंसन्ति कोष्णं सैन्धवसंयुतम् ॥ ११ ॥ तैलं स्योनाकमूलेन मन्देऽग्नौ विधिना शृतम्। हरेदाशु त्रिदोषोत्थं कर्णशूलं प्रपूरणात् ॥१२॥ हिङ्गुसैन्धवशुण्ठीभिस्तैलं सर्षपसंभवम्। विपक्वं हरतेऽवश्यं कर्णशूलं

१ ( मु० पु० पा० ) कर्णमलस्य। २ ( च० ) वारिणा। ३ ( च० ) सशब्दे।

प्रपूरणात् ॥ १३ ॥ कर्णशूले कर्णनादे बाधिर्ये क्ष्वेड एव च । पूरणं कटुतैलेन हितं वातघ्नमौषधम् ॥१४॥ अथापामार्गतैलम् ॥ अपामार्गक्षारजले तत्कृतकल्केन साधितं तिलजम् । अपहरति कर्णनादं बाधिर्यं चापि पूरणतः ॥ १ ॥ अथ बिल्वतैलम् ॥ गवां मूत्रेण बिल्वानि पिष्ट्वा तैलं विपाचयेत् । सजलं च सदुग्धं च तद्बाधिर्यहरं परम् ॥ १ ॥ अथ चत्वारि तैलानि ॥ तैलं काञ्जिकबीजपूरकरसक्षौद्रैः समूत्रैः शृतं स्यात्क्षौद्रार्द्रकशिग्रुमूलकदलीकन्दद्रवैर्वा समम् । शुण्ठी तुम्बरुहिङ्गुभिः शृतमपि स्यात्कर्णशूलापहं सिद्धं बिल्वगरेण साजपयसा मूत्रेण बाधिर्यजित् ॥१॥ अथ हिङ्ग्वादिक्षारतैलम् । हिङ्ग्वब्ददारुमिसिमूलकभस्मभूर्जत्वक्क्षारसिन्धुरुचकोद्भिदशिग्रुविश्वैः । सस्वर्जिकाबिडवचाञ्जनमातुलुङ्गै रम्भारसैः समधु सूक्तमिदं विपक्वम् ॥१॥ तैलं प्रसिद्धमिति तच्छ्रवणामयघ्नं कर्णप्रणादबधिरत्वहरं नराणाम् । भ्रूमस्तकश्रवणशष्कुलिकान्तरालशूलापहं चरकसुश्रुतपूजितं च ॥२॥ अथ मधुसूक्तम् ॥ जम्बीराणां फलरसः प्रस्थैकः कुडवोन्मितम् । माक्षिकं तत्र दातव्यं पिप्पली च पलोन्मिता ॥१॥ घृतभाण्डे निधायैतद्धान्यराशौ विधारयेत् । मासेन तज्जातरसं मधुसूक्तं प्रजायते ॥२॥ इति मधुसूक्तम् ॥ अथ दीपिकातैलम् ॥ महतः पञ्चमूलस्य काण्डान्यष्टाङ्गुलानि च । क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥ १ ॥ यत्तैलं च्यवते तेभ्यः सुखोष्णं तेन पूरयेत् । ज्ञेयं तद्दीपिकातैलं कुष्ठदेवतरोस्तथा ॥ २ ॥ अथ निर्गुण्ड्यादि तैलम् ॥ निर्गुण्डिजातिरविभृङ्गरसोनरम्भाकार्पासशिग्रुसुरसार्द्रककारवेल्यः । एषां रसे तिलभवं सविषं सुकर्णबाधिर्यनादकृमिवेदनपूययुक्ते ॥ १ ॥ अथ नागरादितैलम् ॥ नागरसैन्धवमागधिमुस्ताहिङ्गुवचालशुनं तिलतैलम् । अर्कसुपक्वपलाशरसेन कर्णरुजं बधिरं विनिहन्ति ॥ १ ॥ अथ कर्णस्रावपूतिकर्णकृमिकर्णानां चिकित्सामाह ॥ कर्णस्रावे पूतिकर्णे तथैव कृमिकर्णके । सामान्यं कर्म कुर्वीत योगान् वैशेषिकानपि ॥१॥ स्वर्जिकाचूर्णसंयुक्तं बीजपूररसं क्षिपेत् । कर्णस्रावरुजादाहास्तेन नश्यन्त्यसंशयम् ॥ २ ॥ अथ समुद्रफेनचूर्णम् ॥ समुद्रफेनचूर्णं तु न्यस्तं श्रवणसंश्रये । पूयस्राव.व्रणं सान्द्रं हन्ति ध्वान्तमिवांशुमान् ॥ १ ॥ सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः । मधुसंमिश्रितः साधुः कर्णस्रावे प्रशस्यते ॥ २ ॥ जम्ब्वाम्रपत्रं तरुणं समांशं कपित्थकार्पासफलं च सान्द्रम् । हृत्वा रसं तन्मधुना विमिश्रं स्रावापहं संप्रवदन्ति तज्ज्ञाः । एतैः शृतं निम्बकरञ्जतैलं ससार्षपं स्रावहरं प्रदिष्टम् ॥३॥ अथ जम्ब्वाद्यं तैलं वृन्दात् ॥ आम्रजम्बूप्रवालानि मधुकस्य वटस्य च । एभिस्तु साधितं तैलं पूतिकर्णगदं हरेत् ॥ जातीपत्ररसे तैलं विपक्वं पूतिकर्णजित् ॥ १ ॥ अथ कर्णप्रक्षालने पञ्चकषायः ॥ कर्णप्रक्षालने शस्तं कवोष्णं सुरभीजलम् । पथ्यामलकमञ्जिष्ठा लोधतिन्दुकवाथ वा ॥ १ ॥ अन्यच्च ॥ राजवृक्षादितोयेन सुरसादिजलेन वा । कर्णप्रक्षालनं कुर्याच्चूर्णैरेतैस्तु पूरणम् ॥ १ ॥ अथ रसाञ्जनादियोगः ॥ घृष्टं रसाञ्जनं

१ "शिखरिक्षारजवारि" अयं पाठो भावप्रकाशस्थः साधुः ॥

नार्याः क्षीरेण क्षौद्रसंयुतम् । प्रशस्यते चिरोत्थे तत्स्रावे पूतिकर्णके ॥ १ ॥ अथ कुष्ठादितैलम् ॥ कुष्ठं हिङ्गुवचादारुशताह्वाविश्वसैन्धवैः। पूतिकर्णापहं तैलं बस्तमूत्रेण साधितम् ॥१॥ अथ शम्बूकतैलम् ॥ शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत् । तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति ॥ १ ॥ अथ गन्धकतैलम् । चूर्णेन गन्धकशिला-रजनीभवेन मुष्टचंशकेन कटुतैलपलाष्टकं तु । धत्तूरपत्ररसतुल्यमिदं विपक्वं नाडीं जयेच्चिरभवामपि कर्णजाताम् ॥ १ ॥ क्रमिकर्णविनाशाय क्रमिघ्नीं कारयेत्क्रियाम् । वार्ताकधूमश्च हितः सार्षपः स्नेह एव च ॥ २ ॥ पूरितं हरितालेन गव्यमूत्रयुतेन च । धूपने कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥ ३ ॥ अथ क्रमिकर्णे योगचतुष्टयम् ॥ सूर्यावर्तकस्वरसं रसं वा सिन्धुवारजम् । लाङ्गलीमूलतोयं वा त्र्यूषणं वापि चूर्णितम् ॥ १ ॥ एते योगास्तु चत्वारः पूरणात्क्रमिकर्णके। क्रमीन्निर्मूलयन्त्याशु शतपद्यस्रपादिकान् ॥ २ ॥ अथ गोमक्षिकायां योगः ॥ दन्तेन चर्वयेन्मूलं नन्द्यावर्तपलाशयोः । तल्लालपूरिते कर्णे ध्रुवं गोमक्षिकां जयेत् ॥ १ ॥ अथ क्रमिकर्णे योगः ॥ हलिरविभक्तिंव्योषानेकीकृत्य प्रकल्पयेद्बद्ध्वा । वसनान्तरे रसेन श्रवणे परिपूरयेद्युक्त्या ॥ १ ॥ कर्णजलौका नियतं क्रमिकीटपिपीलिकास्तथान्येऽपि । निपतन्ति निरवशेषाः कारण्डाश्चापि मुण्डस्थाः ॥ २ ॥ इति वृन्दात् ॥ अथ कर्णकण्डूकर्णगूथप्रतिनाहकर्णविद्रधिकर्णपाकानां चिकित्सामाह ॥ स्नेहः स्वेदोऽथ वमनं धूमं मूर्ध्नि विरेचनम् । विधिश्च कफहा सर्वः कर्णे कण्डूमतीष्यते ॥ १ ॥ प्रक्लिद्य धीमांस्तैलेन प्रविलाप्य च शोधनम् । कर्णगूथं तु मतिमान् भिषग् जह्याच्छलाकया ॥ २ ॥ अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् । ततो विरिक्तशिरसः क्रियां प्रोक्तां समाचरेत् ॥ ३ ॥ विद्रधौ वा विकुर्वन्ति विद्रध्युक्तं चिकित्सितम् । कर्णपाकस्य भैषज्यं कुर्यादतिविसर्पवत् ॥ ४ ॥ अथ कर्णशोथकर्णार्शःकर्णार्बुदानां चिकित्सा ॥ चिकित्सा कर्णशोथानां तथा कर्णार्शसामपि । कर्णार्बुदानां कुर्वीत शोथार्शोऽर्बुदवद्भिषक् ॥ १ ॥ अथ रास्नाद्यो गुग्गुलुः ॥ रास्नामृतैरण्डसुराह्वविश्वं तुल्यं पुरेणोपविमृश्य खादेत् । वातामयी कर्णशिरोगदी च नाडीव्रणी चापि भगन्दरी च ॥ १ ॥ इति कर्णरोगचिकित्सा ॥ अथ कर्णपालीविकाराणां चिकित्सा ॥ पालीसंशोषणे कुर्याद्वातकर्णरुजः क्रियाम् । स्वेदयेद्यत्नतस्तां तु स्विन्नां संवर्धयेत्तिलैः ॥ १ ॥ माहिषनवनीतयुतं सप्ताहं धान्यराशिपर्युषितम् । नवमुसलीकन्दचूर्णं वृद्धिकरं कर्णपालीनाम्. ॥ २ ॥ अथ शतावरीतैलम् ॥ शतावरीवाजिगन्धापयस्यैरण्डबीजकैः । तैलं विपक्वं सक्षीरं पालीं संवर्धयेत्सुखम् ॥ १ ॥ अथ जीवनीयं तैलम् ॥ शीतैर्लेपैर्जलौकाभिरुत्पातं समुपाचरेत् । जीवन्त्या चाश्वगन्धार्कबाकुचीबीजसैन्धवैः ॥ १ ॥ हलिनीभृङ्गरसाभ्यां च गोधाकङ्कवसान्वितम् । तैलं विपक्वमभ्यङ्गादुन्मन्थं नाशयेद् ध्रुवम् ॥२ ॥ दुःखवर्धनकं सिक्त्वा जम्ब्वाम्राश्वत्थपत्रजैः । क्वाथैस्तैलेन सुस्निग्धं तच्चूर्णैश्चावधूलयेत् ॥ ३ ॥ बहुशो गौमयैस्तप्तं स्वेदितं परिलेहितम् । घनसारैः समालिम्पेदजामूत्रेण कल्कितैः ॥ ४ ॥ इति कर्ण-

पालीरोगचिकित्सा ॥ अथ पथ्यापथ्यम् ॥ स्वेदो विरेको वमनं नस्यं धूमः शिराव्यधः । गोधूमाः शालयो मुद्रा यवाश्च प्रजनं हविः ॥ १ ॥ लावो मयूरो हरिणस्तित्तिरो वनकुक्कुटः । पटोलं शिग्रुवार्ताकं सुनिषण्णं कटिल्लकम् ॥ २ ॥ रसायनानि सर्वाणि ब्रह्मचर्यमभाषणम् । उपयुक्तं यथादोषमिदं कर्णामये हितम् ॥ ३ ॥ दन्तकाष्ठं शिरःस्नानं व्यायामं श्लेष्मलं गुरु । कण्डूयनं तुषारं च कर्णरोगी परित्यजेत् ॥ ४ ॥ इति कर्णरोगाधिकारः ॥

---

## ॥ अथ नासारोगाधिकारः ॥

अवश्यायानिलरजोभाषातिस्वप्नजागरैः । निर्वात्युच्चोपधानेन पीतेनान्येन वारिणा ॥ १ ॥ अत्यम्बुपानाद्रमणैश्छर्दिबाष्पग्रहादिभिः । क्रुद्धा वातोल्बणा दोषा नासायां स्त्यानतां गताः ॥ २ ॥ तत्र नासारोगाणां नामानि संख्यां चाह ॥ आदावपीनसः प्रोक्तः पूतिनासस्ततः परम् । नासापाकोऽत्र गणितः पूयशोणितमेव च ॥ १ ॥ क्षवथुर्भ्रंशथुर्दीप्तः प्रतिनाहः परिस्रवः । नासाशोषः प्रतिश्यायाः पञ्च सप्तार्बुदानि च ॥ २ ॥ चत्वार्यर्शांसि चत्वारः शोथाश्चत्वारि तानि च । रक्तपित्तानि नासायां चतुस्त्रिंशद्गदाः स्मृताः ॥ ३ ॥ तेषु पीनसस्य लक्षणमाह ॥ आनह्यते शुष्यति यस्य नासा प्रक्लेदमायाति च धूप्यते च । न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत्तमपीनसेन ॥ १ ॥ अथानुक्तसंग्रहार्थमाह ॥ तं चानिलश्लेष्मभवं विकारं ब्रूयात्प्रतिश्यायसमानलिङ्गम् ॥ १ ॥ अथ पूतिनासमाह ॥ दोषैर्विदग्धैर्गलतालुमूलात्संदूषितो यस्य समीरणस्तु । निरेति पूतिर्मुखनासिकाभ्यां तं पूतिनस्यं प्रवदन्ति रोगम् ॥ १ ॥ अथ नासापाकमाह ॥ घ्राणाश्रितं पित्तमरूंषि कुर्याद्यस्मिन्विकारे बलवांश्च पाकः । तं नासिकापाक इति व्यवस्येद्विक्लेदकोथावथ वापि यत्र ॥ १ ॥ अथ पूयरक्तमाह ॥ दोषैर्विदग्धैरथ वापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तैः । नासा स्रवेत्पूयमसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम् ॥ १ ॥ अथ क्षवथुमाह ॥ तत्रादौ दोषजमाह ॥ घ्राणाऽश्रिते मर्मणि संप्रदुष्टो यस्यानिलो नासिकया निरेति । कफानुयातो बहुशोऽथ शब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः ॥ १ ॥ अथागन्तुजमाह ॥ तीक्ष्णोपयोगादतिजिघ्रतो वा भावान् कटूनर्कनिरीक्षणाद्वा । सूत्रादिभिर्वा तरुणास्थिमर्मण्युद्घाटितेऽन्यः क्षवथुर्निरेति ॥ १ ॥ अथ भ्रंशथुमाह ॥ प्रभ्रश्यते नासिकयोर्हि यस्य सान्द्रो विदग्धो लवणः कफस्तु । प्राक्संचितो मूर्धनि पित्ततप्तस्तं भ्रंशथुं रोगमुदाहरन्ति ॥ १ ॥ अथ दीप्तमाह ॥ घ्राणे भृशं दाहसमन्विते तु विनिःसरेद् धूम इवेह वायुः । नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिं तु तं दीप्तमुदाहरन्ति ॥ १ ॥ अथ प्रतिनाहमाह ॥ उच्छ्वा-

---

१ (क०) नवाप्सुचो—शीलितास्वित्यर्थः । २ (ख० ग० घ० छे०) सूनताम् । ३ नासिकया इति भाव प्र० पा० ।

समार्गं तु कफः सवातो रुन्ध्यात्प्रतीनाहमुदाहरेत्तम् ॥१॥ अथ स्रावमाह ॥ घ्राणाद्घनः पीतसितस्तनुर्वा दोषः स्रवेत्स्रावमुदाहरेत्तम् ॥१॥ अथ नासाशोषमाह ॥ घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च । कृच्छ्राच्छ्वसेदूर्ध्वमधश्च जन्तुर्यस्मिन्स नासापरिशोष उक्तः ॥१॥ अथ प्रतिश्यायमाह ॥ तस्य निदानं द्विविधम् एकं सद्योजनकं तद्बलवत्त्वेन चयं नापेक्षते यत उक्तम् । न केवलं चयं प्राप्य दोषाः कुप्यन्ति देहिनाम् । अन्यदापि हि कुप्यन्ति हेतुबाहुल्यतोरणात् ॥ १ ॥ चयादिक्रमशोजनकमपरं । तथा च संचयः संचयात्प्रकोपः प्रकोपात्प्रसरः प्रसरात्स्थानसंश्रयः ततो व्यक्तिस्ततो भेद इति । तत्र प्रतिश्यायस्य सद्योजनकनिदानपूर्विकां सम्प्राप्तिमाह ॥ संधारणाजीर्णरजोऽतिभाष्यक्रोधर्तुवैषम्यशिरोऽभितापैः । प्रजागरातिस्वप्नवाम्बुशीतावश्यायकैर्मैथुनबाष्पशोकैः ॥ १ ॥ संस्त्यानदोषे शिरसि प्रवृद्धो वायुः प्रतिश्यायमुदीरयेत्तु ॥ २ ॥ चयादिक्रमशोजनकनिदानपूर्विकां संप्राप्तिमाह ॥ चयं गता मूर्धनि मारुतादयः पृथक् समस्ताश्च तथैव शोणितम् । प्रकुप्यमाणा विविधैः प्रकोपनैस्ततः प्रतिश्यायकरा भवन्ति हि ॥ १ ॥ अथ पूर्वरूपमाह ॥ क्षवप्रवृत्तिः शिरसोऽभिपूर्णता स्तम्भोऽङ्गमर्दः परिहृष्टरोमता । उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसराः स्मृताः ॥ १ ॥ अथ वातिकस्य प्रतिश्यायस्य लक्षणमाह ॥ आनद्धा पिहिता नासा तनुस्रावप्रसेकिनी । गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा ॥ १ ॥ भवेत्स्वरोपघातश्च प्रतिश्यायेऽनिलात्मके ॥ २ ॥ अथ पैत्तिकमाह ॥ उष्णः सपीतकः स्रावो घ्राणात्स्रवति पैत्तिके । कृशोऽपि पाण्डुसंतप्तो भवेदुष्णाभिपीडितः ॥ नासया तु सधूमाग्निं वमतीव स मानवः ॥ १ ॥ अथ श्लैष्मिकमाह ॥ घ्राणात्कफकृतः श्वेतः कफः शीतः स्रवेन्मुहुः । शुक्लावभासः शूनाक्षो भवेद्गुरुशिरा नरः॥ गलताल्वोष्ठशिरसां कण्डूभिरतिपीडितः ॥१॥ अथ सान्निपातिकमाह ॥ भूत्वा भूत्वा प्रतिश्यायो योऽकस्मात्संनिवर्तते । संपक्वो वाप्यपक्वो वा स सर्वप्रभवः स्मृतः ॥ १ ॥ अथ दुष्टप्रतिश्यायलिङ्गमाह ॥ प्रक्लिद्यते मुहुर्नासा पुनश्च परिशुष्यति । पुनरानह्यते वापि पुनर्विव्रियते तथा ॥ १ ॥ निःश्वासो वाति दुर्गन्धो नरो गन्धान्न वेत्ति च । एवं दुष्टप्रतिश्यायं जानीयात्कृच्छ्रसाधनम् ॥२॥ अथ रक्तजमाह ॥ रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्तते । पित्तप्रतिश्यायकृतैर्लिङ्गैश्चापि समन्वितः ॥१॥ ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः । दुर्गन्धोच्छ्वासवक्त्रश्च गन्धानपि न वेत्ति सः ॥ २ ॥ अथासाध्या भवन्तीत्याह ॥ सर्व एव प्रतिश्याया नरस्याप्रतिकारिणः । दुष्टतां यान्ति कालेन तदासाध्या भवन्ति च ॥ अथ प्रतिश्यायेषु कृमयोऽपि भवन्तीत्याह ॥ मुर्च्छन्ति कृमयश्चात्र श्वेताः स्निग्धास्तथाणवः । कृमिजो यः शिरोरोगस्तुल्यं तेनात्र लक्षणम् ॥ १ ॥ अथ प्रतिश्याया अपरानपि विकारान् कुर्वन्ति तानाह ॥ बाधिर्यमान्ध्यमघ्रत्वं घोरांश्च नयनामयान् । शोफाग्निसादकासांश्च वृद्धाः कुर्वन्ति पीनसाः ॥ १ ॥ पीनसमारभ्य प्रतिश्यायपर्यन्तं पञ्चदशोक्ताः । अपरांश्चतुस्त्रिंशत्संख्यापूरणायाह ॥ अर्बुदं सप्तधा शोथाश्चत्वारोऽर्शश्चतुर्विधम् । चतुर्विधं रक्तपित्तमुक्तं

घ्राणेऽपि तद्विदुः ॥ १ ॥ अथ चिकित्साभेदात् पीनसस्यामस्य लक्षणमाह ॥ शिरोगुरुत्वमरुचिर्नासास्रावस्तनुस्वरः । क्षामः ष्ठीवति चाभीक्ष्णमामपीनसलक्षणम् ॥१॥ अथ पक्वपीनसस्य लक्षणमाह ॥ आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जति । स्वरवर्णविशुद्धिश्च पक्वपीनसलक्षणम् ॥ १ ॥ इति नासारोगनिदानम् ॥

## ॥ अथ नासारोगाणां चिकित्सा ॥

तत्रादौ पीनसस्य चिकित्सामाह ॥ सर्वेषु पीनसेष्वादौ निवातागारगो भवेत् । शिरसोऽभ्यञ्जनैः स्वेदैर्नस्यैर्मन्दोष्णभोजनैः ॥ वमनैर्घृतपानैश्च तान्यथास्वमुपाचरेत्॥१॥ सर्जार्जुनोदुम्बरवत्सकानां त्वचां कषायैः परिधावनेन । कषायकल्कैरपि चैभिरेव सिद्धं घृतं घ्राणविपाकनाशि ॥२॥ इति सर्जकादिकषायो घृतं च ॥ अथ मरीचादियोगः ॥ सर्वेषु सर्वकालं पीनसरोगेषु जातमात्रेषु । मरिचं गुडेन दध्ना भुञ्जीत नरः सुखं लभते ॥१॥ अथ पञ्चमूल्यादियूषः ॥ पञ्चमूलीयुतं क्षीरं किं वा स्याच्चित्रकाभया । सर्पिर्गुडो विडङ्गश्च यूषः पीनसशान्तये ॥१॥ अथ गुडाद्यो योगः ॥ गुडमरिचविमिश्रं पीतमाशु प्रकामं हरति दधि नराणां पीनसं दुर्निवारम् । यदि तु सघृतमन्नं श्लक्ष्णगोधूमचूर्णैः कृतमुपहरतेऽसौ तत्कुतोऽस्यावकाशः॥१॥ अथ वेल्लगोधूमयोगौ ॥ वेल्लगोधूमभोजी च निद्राकाले च शीतलम् । जलं पिबति यो रोगी पीनसान्मुच्यते नरः ॥१॥ अथ व्योषादिवटी ॥ व्योषचित्रकतालीसतिन्तिडीकाम्लवेतसम् । सचव्याजाजितुल्यांशमेलात्वक्पत्रपादिकम् ॥ १ ॥ व्योषादिकमिदं चूर्णं पुराणगुडमिश्रितम् । पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥ २ ॥ अथ कट्फलादिचूर्णं क्वाथश्च ॥ कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी । एषां चूर्णं कषायं वा दद्यादार्द्रकजै रसैः ॥१॥ पीनसे स्वरभेदे च तमके सहलीमके । सन्निपाते कफे वाते कासे श्वासे च शस्यते ॥ २ ॥ अथ पाठादितैलम् ॥ पाठाद्विरजनीमूर्वापिप्पलीजातिपल्लवैः । एभिश्च तैलं संसिद्धं नस्यतः पीनसापहम् ॥ १ ॥ अथ षड्बिन्दुघृतम् ॥ भृङ्गं लवङ्गं मधुकं च कुष्ठं सनागरं गोघृतमिश्रितं च । षड्बिन्दु नासास्थिगतं च पीनसं शिरोगतं रोगशतं च हन्ति ॥१॥ अथ कलिङ्गाद्यवपीडः ॥ कलिङ्गहिङ्गुमरिचलाक्षास्वरसकट्फलैः । कुष्ठोग्राशिग्रुजन्तुघ्नैरवपीडः प्रशस्यते ॥ १ ॥ कफघ्नमन्नं वार्ताकं कुलत्थाढकिमुद्गजाः । यूषाः ससैन्धवव्योषाः शस्ताश्चोष्णास्तु पीनसे ॥२॥ इति पीनसचि० ॥ अथापररोगाणां चिकित्सा अथ व्याघ्रीतैलम् ॥ व्याघ्रीदन्तीवचाशिग्रुसुरसाव्योषसिन्धुजैः । सिद्धं तैलं नसि क्षिप्तं पूतिनासागदापहम् ॥१॥ अथशिग्रुतैलम् ॥ शिग्रुसिंहीनिकुम्भानां बीजैः सव्योषसैन्धवैः । बिल्वपत्ररसे सिद्धं तैलं स्यात्पूतिनस्यनुत् ॥ १ ॥ नासापाके पित्तनाशं विधानं कार्यं सर्वं बाह्यमभ्यन्तरं च । हरेद्रक्तं क्षीरवृक्षत्वचश्च योज्याः सेके सघृताश्च प्रलेपाः ॥ २ ॥ पूयास्रे रक्तपित्तघ्नाः कषाया नावनानि च । पाकदाहादिरोगेषु शीता लेपादिकाः क्रियाः ॥ ३ ॥ घृतगुग्गुलुमिश्रस्य सिक्थकस्य प्रयत्नतः । धूमं क्षवथुरोगघ्नं भ्रंशथुघ्नं च निर्दिशेत् ॥ ४ ॥ शुण्ठीकुष्ठकणाबिल्वद्राक्षाकल्ककषाय-

वत् । तैलं पक्कमथाज्यं वा नस्यात्क्षवथुनाशनम् ॥ ५ ॥ नस्यं हितं निम्बरसाञ्जनाभ्यां दीप्ते शिरःस्वेदनमल्पशस्तु । नस्ये कृते क्षीरजलावसेकान् शंसन्ति भुञ्जीत च मुद्गयूषैः ॥ ६ ॥ नासावनाहे कर्तव्यं पानं गव्यस्य सर्पिषः । नासाशोषे क्षीरपानं ससितं च प्रशस्यते ॥ ७ ॥ नासास्रावे घ्राणयोश्चूर्णमुक्तं नाड्या देयं येऽवपीडाश्च पथ्याः । तीक्ष्णान्धूमान्देवदार्वग्निकाभ्यां मांसं चाजं पथ्यमत्रादिशन्ति ॥ ८ ॥

॥ अथ प्रतिश्यायप्रतीकारः ॥ प्रतिश्यायेषु सर्वेषु गृहं वातविवर्जितम् । वस्त्रेण गुरुणोष्णेन शिरसो वेष्टनं हितम् ॥ १ ॥ बालमूलकयोर्यूषः कुलत्थोत्थश्च पूजितः । स्वेदोष्णं च हिमं भोज्यं पाचनाय प्रशस्यते ॥ २ ॥ ततः पक्कं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः । पिप्पल्यः शिग्रुबीजानि विडङ्गं मरिचानि च ॥ ३ ॥ अवपीडः प्रशस्तोऽयं प्रतिश्यायनिवारणः । वातिके च प्रतिश्याये पिबेत्सर्पिर्यथाक्रमम् ॥ ४ ॥ पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च । रक्तपित्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ॥ ५ ॥ परिषेकान् प्रदेहांश्च कुर्यादपि च शीतलान् । हितं पित्तप्रतिश्याये पाचनार्थं घृतं पयः ॥ ६ ॥ शृङ्गबेरेण पयसा शृङ्गबेरमथापि वा । सर्पिषा भृष्टया धात्र्या शिरसो लेपतः क्षणात् ॥ ७ ॥ नासायां संप्रवृत्तं च रुधिरं च विनश्यति । कफजे सर्पिषा स्निग्धं तिलमाषविपक्वया ॥ ८ ॥ यवाग्वा वामयित्वा तु श्लेष्मघ्नं क्रममाचरेत् । दार्वीङ्गुदनिकुम्भैश्च किणिह्या सरलेन च ॥ वर्तयोऽत्र कृता योज्या धूमपाने यथाविधि ॥ ९ ॥ इति वृन्दात् ॥ विडङ्गं सैन्धवं हिङ्गु गुग्गुलुः समनःशिलः । प्रतिश्याये वचायुक्तं शक्त्या धूमं पिबेन्नरः ॥ १ ॥ एतच्चूर्णं समाघ्रातं प्रतिश्यायं विनाशयेत् । घृततैलसमायुक्तं सक्तुधूमं पिबेन्नरः ॥ २ ॥ स धूमः स्यात्प्रतिश्यायकासहिक्काहरः परः । प्रतिश्याये पिबेद् धूमं सर्वं गव्यसमायुतम् ॥ ३ ॥ चातुर्जातकचूर्णं वा घ्रेयं वा कृष्णजीरकम् । प्रतिश्यायेषु सशिरःपीडेषु नवसागरम् ॥ ४ ॥ समानं कलिकाचूर्णं सूक्ष्मं संचूर्णितं द्वयम् । गुञ्जामात्रं तु तच्चूर्णं नस्यं प्रधमनं चरेत् ॥ ५ ॥ नश्यन्त्यनेन नस्येन प्रतिश्यायशिरोरुजः । सवचाचूर्णमाघ्राय वाससा पोट्टलीकृतम् ॥ ६ ॥ कारवी वस्त्रबद्धा वा प्रतिश्यायमपोहति । शटीतामलकीव्योषचूर्णं सर्पिर्गुडान्वितम् ॥ ७ ॥ हरेद् घोरं प्रतिश्यायं पार्श्वहृद्बस्तिशूलनुत् । पुटपक्कं जयापत्रं तैलसैन्धवसंयुतम् ॥ प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम् ॥ ८ ॥ अथ चित्रहरीतकी ॥ चत्वार्यत्र शतानि चित्रकजटायुक्पञ्चमूलामृताधात्रीणामुदकार्मणे त्रिभिरपां द्रोणेन च क्वाथयेत् । पादस्थे क्वथने गुडस्य च शतं पथ्याढकेनान्वितं पक्तव्यं शृतशीतले च मधुनः प्रस्थार्धमात्रं क्षिपेत् ॥ १ ॥ व्योषस्य त्रिसुगन्धकस्य च पलान्यत्रैव षट् प्रक्षिपेत् क्षारस्यार्धपलं रसायनमिदं संसेव्यते सर्वदा । शोषश्वासमलावकाशवमथुश्लेष्मप्रतिश्यायिभिः क्षीणोरःक्षतहिक्किभिः कफशिरोरुग्भिः प्रनष्टाग्निभिः ॥ २ ॥ इति चित्रकहरीतकी योगरत्नावलितः ॥ अथ हिङ्ग्वादि तैलम् । चिकित्साकलिकातः ॥ हिङ्गुव्योषविडङ्गकट्फलवचारुक्तीक्ष्णगन्धैर्युतैर्ला-

क्षाश्वेतपुनर्नवाब्दकुटजैः पुष्पोद्भवैःसौरसैः । इत्येभिः कटुतैलमेतदनले मन्दे ससूत्रं शृतं पीतं नासिकया यथाविधि भवेन्नासामयिभ्यो हितम् ॥ १ ॥ इति हिङ्ग्वादि तैलम् ॥ क्रमिघ्ना ये क्रमाः प्रोक्तास्तान्वै क्रमिषु योजयेत् । धावनानि क्रमिघ्नानि, भेषजानि च बुद्धिमान् ॥ १ ॥ रक्ताम्रस्वरसः शुद्धस्तक्रेण सह नस्यतः । तस्य पर्णानि पिष्ट्वा च बध्नीयान्नासिकामुखे ॥ २ ॥ पतन्ति कीटकाः सद्यो योगोऽयं त्रिदिनैर्हितः । पीनसान्मुच्यते रोगी शतशोऽनुमितं त्विदम् ॥ ३ ॥ इति वैद्यविलासात् ॥ इति प्रतिश्यायादिचिकित्सा ॥ रक्तपित्तानि शोथाश्च तथार्शांस्यर्बुदानि च । नासिकायां स्युरेतेषां स्वं स्वं कुर्याच्चिकित्सितम् ॥ १ ॥ गृहधूमकणादारुक्षारनक्ताह्वसैन्धवैः । सिद्धं शिखरिबीजैश्च तैलं नासार्शसे हितम् ॥ २ ॥ रक्तकरवीरपुष्पं जात्यं वा तथा मल्लिकायाः । एतैः समं तिलतैलं नासार्शोनाशनं परम् ॥ ३ ॥ नासाशोफे क्षीरसर्पिः प्रधानं तैलं सिद्धं चाणु कल्केन नस्यम् । सर्पिष्पानं भोजनं लाङ्गलैश्च स्नेहस्वेदैः स्नैहिकश्चात्र धूमः ॥ ४ ॥ अथ वृन्दात् ॥ क्षारोऽर्बुदावमांसं च क्रियाशेषेऽप्यवेक्ष्य च । स्थितिर्निर्वातनिलये प्रगाढोष्णीषधारणम् । गण्डूषो लङ्घनं नस्यं धूमश्छर्दिः शिराव्यधः ॥१॥ अथ पथ्यापथ्यम् ॥ स्नेहः स्वेदः शिरोऽभ्यङ्गः पुराणा यवशालयः । कुलित्थमुद्गयोर्यूषो ग्राम्या जाङ्गलजा रसाः ॥ १ ॥ वार्ताकं कुलकं शिग्रु कर्कोटं बालमूलकम् । लशुनं दधि तप्ताम्बु वारुणी च कटुत्रयम् ॥ २ ॥ कट्वम्ललवणं स्निग्धमुष्णं च लघुभोजनम् । नासारोगे पीनसादौ सेव्यमेतद्यथामलम् ॥ ३ ॥ स्नानं क्रोधं शकृन्मूत्रवातवेगाञ् शुचं द्रवम् । भूमिशय्यां च यत्नेन नासारोगी परित्यजेत् ॥ ४ ॥ इति नासारोगाधिकारः

---

## ॥ अथ शिरोरोगनिदानम् ॥

धूमातपतुषाराम्बुक्रीडातिस्वप्नजागरैः । उत्स्वेधातिपुरोवातबाष्पनिग्रहरोदनैः ॥ १ ॥ अत्यम्बुमद्यपानेन क्रमिभिर्वेगधारणैः । उपधावमृजाभ्यङ्गद्वेषाच्च प्रततेक्षणैः ॥ २ ॥ असात्म्यगन्धदुष्टान्नभाषाद्यैश्च शिरोगताः । शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः ॥ ३ ॥ सन्निपातेन रक्तेन क्षयेण क्रमिभिस्तथा । सूर्यावर्तानन्तवातशङ्खकार्धावभेदकाः । एकादशविधस्यास्य लक्षणानि प्रचक्षते ॥ ४ ॥ अथ चोक्तम् ॥ सर्वे एव शिरोरोगाः सन्निपातसमुद्भवाः । औत्कर्ष्यात्कीर्तितास्ते हि द्वादशेति क्षयेण च ॥ १ ॥ अथ वातिकस्यलक्षणमाह ॥ यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम् । बन्धोपतापैः प्रशमश्च यत्र शिरोऽभितापः स समीरणेन ॥ १ ॥ अथ पैत्तिकमाह ॥ यस्योष्णमङ्गारचितं यथैव भवेच्छिरो दह्यति चाक्षिनासम् । शीतेन रात्रौ च भवेच्छमश्च शिरोऽभितापः स तु पित्तकोपात् ॥ १ ॥ अथ श्लैष्मिकमाह ॥ शिरो भवेद्यस्य कफोपदिग्धं गुरु प्रतिष्टब्धमथो हिमं च । शूनाक्षिनासावदनं च

---

१ ( घ० ङ० ) स्तुलावहम् । २ ( च० ) उपधान— । ३ ( क० ग० ) भाषा— ।

यस्य शिरोऽभितापः स कफप्रकोपात् ॥ १ ॥ अथ सान्निपातिकमाह ॥ शिरोऽभितापे त्रितयप्रवृत्ते सर्वाणि लिङ्गानि समुद्भवन्ति ॥ १ ॥ अथ रक्तजमाह ॥ रक्तात्मकः पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च ॥ १ ॥ अथ क्षयजमाह ॥ वसाबलासक्षतसंभवानां शिरोगतानामतिसंक्षयेण । क्षयप्रवृत्तः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम् ॥ १ ॥ संस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति ॥ २ ॥ अथ क्रिमिजमाह ॥ निस्तुद्यते यस्य शिरोऽतिमात्रं संभक्ष्यमाणं स्फुटतीव चान्तः । घ्राणाच्च गच्छेद्रुधिरं सपूयं शिरोऽभितापः क्रिमिभिः स घोरः ॥ १ ॥ अथ सूर्यावर्तमाह ॥ सूर्योदयं या प्रतिमन्दमन्दमक्षिभ्रुवौ रुक् समुपैति गाढम् । विवर्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्तते च ॥ १ ॥ शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाच्च । सर्वात्मकं कष्टतमं विकारं सूर्यात्प्रवृत्तं तमुदाहरन्ति ॥ २ ॥ अथानन्तवातमाह ॥ दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य गाढं स्वरुजां सुतीव्राम् । कुर्वन्ति साक्षिभ्रुवि शङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु ॥ १ ॥ गण्डस्य पार्श्वे च करोति कम्पं हनुग्रहं लोचनजान्विकारान् । अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् ॥ २ ॥ अथ शङ्खकमाह ॥ पित्तरक्तानिला दुष्टाः शङ्खदेशे विमूर्च्छिताः । तीव्ररुग्दाहरोगं हि शोथं कुर्वन्ति दारुणम् ॥ १ ॥ स शिरो विषवद्वेगान्निरुध्याशु गलं तथा । त्रिरात्राज्जीवितं हन्ति शङ्खको नाम नामतः ॥ त्र्यहं जीवति भैषज्यं प्रत्याख्यायास्य कारयेत् ॥ २ ॥ अथार्धावभेदकमाह ॥ रूक्षाशनात्यध्यशनात्प्राग्वातावश्यमैथुनैः । वेगसंधारणायासव्यायामैः कुपितोऽनिलः ॥ १ ॥ केवलः सकफो वार्धं गृहीत्वा शिरसो बली । मन्याभ्रूशङ्खकर्णाक्षिललाटार्धेषु वेदनाम् ॥ २ ॥ शस्त्राशनिनिभां कुर्यात्तीव्रां सोऽर्धावभेदकः । नयनं वाथवा श्रोत्रमभिवृद्धो विनाशयेत् ॥ ३ ॥ इति शिरोरोगनिदानम् ॥

## ॥ अथ शिरोरोगाणां चिकित्सा ॥

अथ वातिकस्य चिकित्सामाह ॥ वातजातशिरोरोगे स्नेहस्वेदविमर्दनम् । पानाहारोपनाहांश्च कुर्याद्वातामयापहान् ॥१॥ कुष्ठमेरण्डमूलं च नागरं तक्रपेषितम् । कदुष्णं च शिरःपीडां भालेलेपनतो हरेत् ॥२॥ रसः श्वासकुठारो यस्तस्य नस्यं विशेषतः । शिरःशूलं हरत्येव विधेयं नात्र संशयः ॥३॥ देवदारु नतं कुष्ठं नलदं विश्वभेषजम् । स काञ्जिकस्नेहयुक्तो लेपो वातशिरोऽर्त्तिनुत् ॥४॥ कुष्ठमेरण्डमूलं च लेपः काञ्जिकपेषितः । शिरोऽर्तिं वातजां हन्यात्पुष्पं वा मुचकुन्दजम् ॥५॥ अथ शिरोवस्तिविधिः ॥ आशिरोव्यापि तच्चर्म षोडशाङ्गुलमुच्छ्रितम् । तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत् ॥ १ ॥ निश्चलस्योपविष्टस्य तैलैः कोष्णैः प्रपूरयेत् । धारयेदारुजः शान्तेर्याम

१ (च०) क्षयप्रवृत्तिः । २ (ख०ग०ङ०) रूक्षाशनाद्ध्यशनात्प्राग्वातैर्वाति । ३ (क०) मात्राले—।

यामार्धमेव वा ॥ २ ॥ शिरोवस्तिर्हरत्येष शिरोरोगं मरुद्भवम्। हनुमन्याक्षिकर्णार्तिमार्दितम् मूर्धकम्पनम् ॥ ३ ॥ विना भोजनमेवैष शिरोवस्तिः प्रयुज्यते। पञ्चाहं वापि सप्ताहं षडहं चैवमाचरेत् ॥ ४ ॥ ततोपनीतस्नेहस्तु मोचयेद्वस्तिबन्धनम्। शिरोललाटवदनग्रीवांसादीन्विमर्दयेत् ॥ सुखोष्णेनाम्भसा गात्रं प्रक्षाल्याश्नाति यद्धितम् ॥ ५ ॥ अथ पैत्तिकचिकित्सामाह ॥ पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचयेत्। मृद्वीकात्रिफलेक्षूणां रसैः क्षीरघृतैरपि ॥ १ ॥ शर्कराक्षीरसलिलैः शिरश्च परिषेचयेत्। सर्पिषः शतधौतस्य शिरसा धारणं हितम् ॥ २ ॥ निमज्जनं च शिरसः शीतले शस्यतेऽम्भसि। कुमुदोत्पलपद्मानां शीतानां चन्दनाम्बुभिः ॥ ३ ॥ स्पर्शाः सुखाश्च पवनाः सेव्या दाहार्तिशान्तये। चन्दनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः ॥ ४ ॥ क्षीरपिष्टैः प्रदेहः स्याच्छृतैर्वा परिषेचनम्। यष्ट्याह्वचन्दनानन्ताक्षीरसिद्धं हितं घृतम् ॥ ५ ॥ नावनं शर्कराद्राक्षामधुकैर्वापि पित्तजे। धात्रीकसेरुह्रीबेरपद्मपद्मकचन्दनैः ॥ ६ ॥ दूर्वोशीरनलानां च मूलैः कुर्यात्प्रलेपनम्। शिरोऽर्तिं पित्तजां हन्याद्रक्तपित्तरुजं तथा ॥ ७ ॥ रसः श्वासकुठारोऽल्पः कर्पूरः कुङ्कुमं नवम्। सिता छागीपयः सर्वं चन्दनेनानुघर्षयेत् ॥ ८ ॥ तस्य नस्यं भिषग्दद्यात्पित्तजायां शिरोरुजि। किन्तु मस्तकशूलेषु सर्वेष्वेव हितं मतम् ॥ गुडनागरकल्कस्य नस्यं मस्तकशूलनुत् ॥ ९ ॥ अथ श्लैष्मिकचिकित्सा ॥ श्लैष्मिके लङ्घनं रूक्षं लेपस्वेदादि कारयेत्। हरेणुनतशैलेयमुस्तैलागुरुदारुभिः ॥ १ ॥ मांसीरास्नोरुबूकैश्च कोष्णो लेपः कफार्तिनुत्। शुण्ठीकुष्ठप्रपुन्नाटदेवकाष्ठैः समाहिषैः ॥ मूत्रपिष्टैः सुखोष्णैश्च लेपः श्लेष्मशिरोऽर्तिनुत् ॥ २ ॥ अथ सान्निपातिकचिकित्सा ॥ सन्निपातसमुत्थेऽत्र घृतं तैलं च बस्तयः। धूमनस्यशिरोरेकलेपस्वेदाद्यमाचरेत् ॥ पुराणसर्पिषः पानं विशेषेण दिशन्ति हि ॥ १ ॥ अथ स्मरफलादिप्रधमनम् ॥ स्मरफलतिलपर्णीबीजसंयुक्तभूतां कुशदलघटबीजत्वग्रजोऽर्धांशतुल्यम्। प्रधमनविधिना तद्दत्तमात्रं शिरोरुक्प्रलपनकफतन्द्रासंनिपातं निहन्यात् ॥ १ ॥ अथ रक्तजचिकित्सा ॥ रक्तजे पित्तवत्सर्वं भोजनालेपसेवनम्। शीतोष्णयोश्च विन्यासो विशेषाद्रक्तमोक्षणम् ॥ १ ॥ अथ क्षयजचिकित्सामाह ॥ क्षयजे क्षयनाशाय कर्तव्यो बृंहणो विधिः। पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शृतम् ॥ १ ॥ योजयेत्सगुडं सर्पिर्घृतपूरांश्च भक्षयेत्। नावनं क्षीरसर्पिर्भ्यां पानं च क्षीरसर्पिषोः ॥ क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते ॥ २ ॥ अथ कृमिजचिकित्सा ॥ कृमिजे तु शिरोरोगे व्योषनक्ताह्वशिग्रुजैः। अजामूत्रेण संपिष्टैर्नस्यं कृमिहरं परम् ॥ १ ॥ अथ विडङ्गाद्यं तैलम् ॥ विडङ्गं स्वर्जिकादन्तीहिङ्गुगोमूत्रसंयुतम्। विपक्वं सार्षपं तैलं कृमिघ्नं नस्यतः स्मृतम् ॥ १ ॥ अथ सूर्यावर्तार्धावभेदकयोश्चिकित्सा ॥ सूर्यावर्ते शिरोवेधो नावनं क्षीरसर्पिषोः। हितः क्षीरघृताभ्यासस्ताभ्यां सह विरेचनम् ॥ १ ॥ भृङ्गराजरसश्छागक्षीरतुल्योऽर्कतापितः। सूर्यावर्तं निहन्त्याशु नस्ये-

१ (च०) वमनम्।

नैव प्रयोगराट् ॥ २ ॥ शिरीषमूलकफलैरवपीडं प्रयोजयेत् । अवपीडो हितो वा स्याद्वचापिप्पलिभिः कृतः ॥ ३ ॥ जाङ्गलानि च मांसानि कारयेदुपनाहनम् । तेनास्य शाम्यते व्याधिः सूर्यावर्तः सुदारुणः ॥ ४ ॥ एष एव विधिः कार्यः कृत्स्नश्चार्धावभेदके । अर्धावभेदके पूर्वं स्नेहः स्वेदो हि भेषजम् ॥ ५ ॥ विरेकः कायशुद्धिश्च धूपः स्निग्धोष्णभोजनम् । विडङ्गानि तिलान्कृष्णान्समान्पिष्ट्वा विलेपयेत् ॥ ६ ॥ नस्यं चाथाचरेत्तस्मादर्धभेदं व्यपोहति । गिरिकर्णीफलं मूलं सजलं नस्यमाचरेत् ॥ ७ ॥ मूलं वा बन्धयेत्कर्णे निहन्त्यर्धशिरोरुजम् । मरीचं भृङ्गजद्रावैर्मरिचं शालितण्डुलैः ॥ ८ ॥ अर्धशीर्षव्यथां हन्ति लेपो वा शुण्ठिवारिणा । पिबेत्सशर्करं क्षीरं नीरं वा नारिकेलजम् ॥ ९ ॥ सुशीतं वापि पानीयं सर्पिर्वा नस्यतस्तयोः । सारिवाकुष्ठमधुकवचाकृष्णोत्पलैस्तथा ॥ १० ॥ लेपः सकाञ्जिकः स्नेहः सूर्यावर्तार्धभेदयोः । सितोपलायुतं घृष्टं मदनं गोपयोऽन्वितम् ॥ ११ ॥ नस्यतोऽनुदिते सूर्ये निहन्त्येवार्धभेदकम् । पीत्वा शङ्खपुण्डरसं मरिचैरवचूर्णितम् ॥१२॥ भोजनादौ तु सप्ताहात्सूर्यावर्तार्धभेदकौ । हन्ति सर्वात्मकौ शीघ्रं दुःखदौ भृशदारुणौ ॥१३॥ अथानन्तवातशङ्खकयोश्चिकित्सा ॥ अनन्तवाते कर्तव्यः सूर्यावर्तहितो विधिः । शिराव्यधश्च कर्तव्योऽनन्तवातप्रशान्तये ॥ १ ॥ आहारश्च प्रदातव्यो वातपित्तविनाशनः । मधुमस्तकसंयावं घृतपूरैर्विशेषतः ॥२॥ दार्वी हरिद्रा मञ्जिष्ठा सनिम्बोशीरपद्मकम् । एतत्प्रलेपनं कुर्याच्छङ्खकस्य प्रशान्तये ॥३॥ शीततोयनिषेकश्च शीतलक्षीरसेवनम् । कल्कैश्च क्षीरवृक्षाणां शङ्खके लेपनं हितम् ॥ ४ ॥ वरी नीलोत्पलं दूर्वा तिलाः कृष्णाः पुनर्नवा । शङ्खकेऽनन्तवाते च लेपः सर्वशिरोऽर्तिनुत् ॥ ५ ॥ अथ सामान्यप्रतीकारमाह ॥ अथ षड्बिन्दुतैलम् ॥ एरण्डमूलं तगरं शताह्वा जीवन्ति रास्ना सह सैन्धवेन । भृङ्गं विडङ्गं मधुयष्टिका च विश्वौषधं कृष्णतिलस्य तैलम् ॥ १ ॥ अजापयस्तैलविमिश्रितं तु चतुर्गुणे भृङ्गरसे विपक्वम् । षड् बिन्दवो नासिकयोः प्रदेयाः सर्वान्निहन्युः शिरसो विकारान् ॥ २ ॥ च्युतांश्च केशांश्चलितांश्च दन्तान्निबद्धमूलान् सुदृढीकरोति । सुपर्णदृष्टिप्रतिमं च चक्षुः कुर्वन्ति बाह्वोरधिकं बलं च ॥ ३ ॥ सशर्करं कुङ्कुममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे । भ्रूशङ्खकर्णाक्षिशिरोऽर्धशूले दिनाभिवृद्धिप्रभवे च रोगे ॥ ४ ॥ पथ्याक्षधात्रीरजनीगुडूचीभूनिम्बनिम्बैः सगुडः कषायः । भ्रूशङ्खकर्णाक्षिशिरोऽर्धशूलं निहन्ति नासानिहितः क्षणेन ॥ ५ ॥ किं तु मस्तकशूलेषु सर्वेष्वेतद्धितं मतम् । गुडनागरकल्कस्य नस्यं मस्तकशूलनुत् ॥ ६ ॥ नागरकल्कविमिश्रं क्षीरं नस्येन योजितं नृणाम् । नानादोषोद्भूतां शिरोरुजं हन्ति तीव्रतराम् ॥ ७ ॥ शताह्वैरण्डमूलोग्राचक्रव्याघ्रीफलैः शृतम् । तैलं नस्यान्मरुच्छ्लेष्मतिमिरोर्ध्वगदापहम् ॥ ८ ॥ अथ मयूराद्यं घृतम् ॥ मयूरं पक्षपद्दान्त्रशकृत्पित्तास्यवर्जितम् । जले पक्त्वा घृतमस्थं

१ (च०) गोमया—।

तस्मिन्क्षीरं समं पचेत् ॥ १ ॥ दशमूलबलारास्नामधुकैस्त्रिफलैः सह । मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम् ॥२॥ कर्णनासास्यजिह्वाक्षिगलरोगविनाशनम् । मयूराद्यमिति ख्यातमूर्ध्वजत्रुगदापहम् ॥३॥ नस्येन कलिकाचूर्णं नवसागरजं रजः । वातश्लेष्मभवां पीडां शिरसो हन्ति सर्वदा ॥४॥ करञ्जशिग्रुबीजानि पत्रकं सर्षपत्वचा । सर्वेषां शीर्षरोगाणामेतच्छीर्षविरेचनम् ॥ ५ ॥ त्रिकटुकपुष्करजनीरास्नासुरदारुउग्रगन्धानाम् । क्वाथः शिरोऽतिजालं नासापीतो निवारयति ॥६॥ अथ पथ्यापथ्यम् ॥ अथ भावप्रकाशाच्छिरोवस्तिविधौ पथ्यमुच्यते ॥ आमिषं जाङ्गलं पथ्यं तत्र शाल्यादयोऽपि च । मुद्गान्माषान् कुलित्थांश्च खादेद्वा निशि केवलान् । कटुकोष्णान्ससर्पिष्कानुष्णं क्षीरं पिबेत्तथा ॥ १ ॥ अथ पथ्यापथ्यसंहितायाम् । स्वेदो नस्यं धूमपानं विरेको लेपः सेको लङ्घनं शीर्षवस्तिः । रक्तोन्मुक्तिर्वह्निकर्मोपनाहो जीर्णं सर्पिः शालयः षष्टिकाश्च ॥ १ ॥ यूषो दुग्धं धन्वमांसं पटोलं शिग्रुर्द्राक्षा वास्तुकं कारवेल्लम् । आम्रं धात्री दाडिमं मातुलिङ्गं तैलं तक्रं काञ्जिकं नारिकेलम् ॥ २ ॥ पथ्या कुष्ठं भृङ्गराजः कुमारी मुस्तोशीरं चन्द्रिका गन्धसारः । कर्पूरं च ख्यातिमानेष वर्गः सेव्यो मर्त्यैः शीर्षरोगे यथास्वम् ॥ ३ ॥ अथापथ्यम् ॥ क्षवं जृम्भा मूत्रबाष्पं निद्राविड्वेगभञ्जनम् । दुग्धं नीरं विरुद्धान्नं विरुद्धजलमज्जनम् ॥ दन्तकाष्ठं दिवा निद्रां शिरोरोगी परित्यजेत् ॥ १ ॥ इति पथ्यापथ्यम् ॥ इति शिरोरोगचिकित्सा ॥

## ॥ अथ नेत्ररोगाणामधिकारः ॥

तत्र नेत्रस्य प्रमाणमाह ॥ विद्याद्व्यङ्गुलबाहुल्यं स्वाङ्गुष्ठोदरसंमितम् । द्व्यङ्गुलं सर्वतः सार्धं भिषङ् नयनमण्डलम् ॥१॥ अथ नेत्रस्याङ्गान्याह ॥ पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां मण्डलानि तु । अनुपूर्वं तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम् ॥ १ ॥ तत्र नेत्रमण्डलेऽष्टसप्ततिर्व्याधयो भवन्तीत्याह ॥ द्वादश व्याधयो दृष्ट्यां तत्रैवान्यौ गदावुभौ । कृष्णभागे तु चत्वारो दशैकः शुक्लभागजः ॥ १ ॥ वर्त्मन्येको विंशतिश्च पक्ष्मजौ द्वौ प्रकीर्तितौ । नव सन्धिषु सर्वस्मिन्नेत्रे सप्तदशोदिताः ॥ एवं नेत्रे समस्ताः स्युरष्टसप्ततिरामयाः ॥२॥ सुश्रुतोक्तान्षट्सप्ततिसंख्यानाह ॥ वाताद्दश तथा पित्तात्कफाच्चैव त्रयोदश । रक्तात्षोडश विज्ञेयाः सर्वजाः पञ्चविंशतिः । बाह्यौ पुनर्द्वौ नयने रोगाः षट्सप्ततिः स्मृताः ॥ १ ॥ अथ नेत्ररोगाणां सामान्यतो विप्रकृष्टं सन्निकृष्टं च निदानमाह ॥ उष्णाभितप्तस्य जलप्रवेशाद्दूरेक्षणात्स्वप्नविपर्ययाच्च । स्वेदाद्रजो धूमनिषेवणाच्च च्छर्देर्विघाताद्वमनातियोगात् ॥१॥ द्रवान्नपानातिनिषेवणाच्च विण्मूत्रवातक्रमनिग्रहाच्च । प्रसक्तसंरोदनशोकतापाच्छिरोऽभिघातादतिमद्यपानात् ॥ २ ॥ तथा ऋतूनां च विपर्ययेण क्लेशाभितापादतिमैथुनाच्च । बाष्पग्रहात्सूक्ष्मनिरीक्षणाच्च नेत्रे विकाराञ्जनयन्ति दोषाः ॥३॥ नयनरोगसम्प्राप्तिः सुश्रुते प्रदृश्यते । शिरानुसारिभिर्दोषैर्विगुणैरूर्ध्वमाश्रितैः । जायन्ते नेत्रभागेषु रोगाः परमदारुणाः ॥ नेत्रभागेषु नेत्रस्य दृष्ट्याद्यवयवेषु च ॥ १ ॥ अथादौ दृष्टिरोगानाह ॥ तत्र दृष्टिलक्षणम् ॥

मसूरदलमात्रां तु पञ्चभूतप्रसादजाम् । खद्योतविस्फुलिङ्गाभां सिद्धां तेजोभिरव्ययैः ॥ १ ॥ आवृतां पटलेनाक्ष्णोर्बाह्येन विवराकृतिम् । शीतसात्म्यां नृणां दृष्टिमाहुर्नयनचिन्तकाः ॥ २ ॥ अथ तत्र पटलानि चत्वारि भवन्ति तान्याह ॥ तेजो जलाश्रितं बाह्यं तेष्वन्यत्पिशिताश्रितम् । मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम् ॥ पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते ॥ १ ॥ अथ तत्र प्रथमपटलगतस्य दोषस्य स्वभावमाह ॥ प्रथमे पटले दोषो यस्य दृष्ट्यां व्यवस्थितः । अव्यक्तानि च रूपाणि कदाचिदथ पश्यति ॥ १ ॥ दृष्टेरभ्यन्तरे दोषाः पटले समधिष्ठिताः । एकैकमनुपद्यन्ते पर्यायात्पटलान्तरम् ॥ २ ॥ इति विदेहवचनात् ॥अथ द्वितीयपटलगतदोषस्वभावमाह ॥ दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते ॥ १ ॥ मक्षिकामशकान्केशांल्लाजकानीवपश्यति । मण्डलानि पताकाश्च मरीचीन्कुण्डलानि च ॥ २ ॥ परिप्लवांश्च विविधान् वर्षमभ्रतमांसि च । दूरस्थानि च रूपाणि मन्यते च समीपतः ॥ ३ ॥ समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् । यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति ॥ ४ ॥ अथ तृतीयपटलगतदोषमाह ॥ ऊर्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते । महान्त्यपि च रूपाणि च्छादितानीव चाम्बरैः ॥ कर्णनासाक्षिरूपाणि विकृतानीव पश्यति ॥ १ ॥ अथात्र रागप्राप्तिमाह ॥ यथादोषं च रज्येत दृष्टिर्दोषे बलीयसि । अधःस्थे तु समीपस्थं दूरस्थे चोपरिस्थिते ॥ पार्श्वस्थिते पुनर्दोषे पार्श्वस्थानि न पश्यति ॥ १ ॥ समन्ततः स्थिते दोषे संकुलानीव पश्यति । दृष्टिमध्यस्थिते दोषे महद्ध्रस्वं प्रपश्यति ॥ २ ॥ दोषे दृष्टिस्थिते तिर्यगेकं वै मन्यते द्विधा । द्विधा स्थिते त्रिधा पश्येद् बहुधा वानवस्थिते ॥३॥ अथ चतुर्थपटलगतदोषमाह ॥ तिमिराख्यः स वै दोषश्चतुर्थपटलं गतः । रुणद्धि सर्वतो दृष्टिं लिङ्गनाश इति क्वचित् ॥ १ ॥ अस्मिन्नपि तमोभूते नातिरूढे महागदे । चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युतः ॥ २ ॥ निर्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति । स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः ॥ ३ ॥ अथ दृष्टिरोगाणां संख्यां नामानि चाह ॥ दृष्ट्याश्रयाः षट् च षडेव रोगाः षड् लिङ्गनाशा हि भवन्ति तत्र । वातेन पित्तेन कफेन सर्वैरक्तात्परिम्लाय्यभिधश्च षष्ठः ॥ १ ॥ तथा नरः पित्तविदग्धदृष्टिः कफेन चान्यस्त्वथ धूमदर्शी । यो ह्रस्वजात्यो नकुलान्धसंज्ञो गम्भीरसंज्ञा च तथैव दृष्टिः ॥२॥ तत्रैव द्वावन्यावाह ॥ तत्रैवान्यौ गदौ द्वौ च सन्निपातनिमित्तकौ ॥१॥ तेषु वातजस्य लिङ्गनाशस्य लक्षणमाह ॥ वातेन खलु रूपाणि भ्रमन्तीव स पश्यति । आविलान्यरुणाभानि व्याविद्धानीव मानवः ॥ १ ॥ अथ पैत्तिकमाह ॥ पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान् । नृत्यतश्चैव शिखिनः सर्वं नीलं च पश्यति ॥ १ ॥ अथ श्लैष्मिकमाह ॥ कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च । सलिलप्लावितानीव परिजाड्यानि मानवः ॥१॥ अथ संनिपातजमाह ॥ संनिपातेन चि-

---

१ ( क० ) जालकानि च ।

त्राणि विप्लुतानि च पश्यति । बहुधापि द्विधा वापि सर्वाण्येव समन्ततः ॥ हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च भूयसा ॥ १ ॥ अथ रक्तजमाह ॥ पश्येद्रक्तेन रक्तानि तमांसि विविधानि च । हरितान्यथ कृष्णानि पीतान्यपि च मानवः ॥१॥ अथ परिम्लायिनमाह ॥ रक्तेन मूर्च्छितं पित्तं परिम्लायिनमाचरेत् । तेन पीता दिशः पश्येदुद्यन्तमिव भास्करम् ॥ विकीर्यमाणान् खद्योतैर्वृक्षांस्तेजांसि चैव हि ॥ १ ॥ अथ नेत्रवर्णैः षड्विधं लिङ्गनाशमाह ॥ वातादिजनितैर्नेत्रवर्णैरपि च षड्विधः । लिङ्गनाशो निगदितो वर्णो वातादिजो यथा ॥ १ ॥ रागोऽरुणो मारुतजः प्रदिष्टो म्लायी च नीलश्च तथैव पित्तात् । कफात्सितः शोणितजः सरक्तः समस्तदोषप्रभवो विचित्रः ॥२॥ अथ वातादिना हेतुभूतेन जनिते नेत्र मण्डले रूपविशेषमाह । अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा । पित्तान्मण्डलमानीलं कांस्याभं पीतमेव च ॥ १ ॥ श्लेष्मणा बहलं स्निग्धं शङ्खकुन्देन्दुपाण्डुरम् । चलत्पद्मपलाशस्थः शुक्लो बिन्दुरिवाम्भसः ॥ २ ॥ संकुचत्यातपेऽत्यर्थं छायायां विस्तृतो भवेत् । मृद्यमाने तु नयने मण्डलं तद्विसर्पति । मण्डलं तु भवेच्चित्रं लिङ्गनाशे त्रिदोषजे ॥ ३ ॥ प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम् । रक्तजं मण्डलं दृष्टौ स्थूलं काचारुणप्रभम् ॥ ४ ॥ परिम्लायिनि रोगे स्यान्म्लानं नीलं च मण्डलम् । दोषक्षयात्स्वयं तत्र कदाचित्स्यात्तु दर्शनम् ॥५॥ अनुक्तव्यथादाहगौरवादिदोषलिङ्गसंग्रहार्थमाह ॥ यथास्वं दोषलिङ्गानि सर्वेष्वेव भवन्ति हि ॥ अथ पित्तविदग्धदृष्टेर्लक्षणमाह ॥ पित्तेन दुष्टेन गतेन वृद्धिं पीता भवेद्यस्य नरस्य दृष्टिः । पीतानि रूपाणि च तेन पश्येत्स वै नरः पित्तविदग्धदृष्टिः ॥१॥ तस्मिन्नेव पित्ते दृष्टौ तृतीयं पटलं गते रूपविशेषेण दिवान्धलक्षणमाह ॥ प्राप्ते तृतीयं पटलं तु दोषे दिवा न पश्येन्निशि वीक्षते सः । रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावात्सकलानि पश्येत् ॥१॥ अथ श्लेष्मविदग्धदृष्टिलिङ्गमाह ॥ तथा नरः श्लेष्मविदग्धदृष्टिस्तान्येव शुक्लानि हि मन्यते तु ॥ १ ॥ अथ नक्तान्ध्यमाह ॥ त्रिषु स्थितो यः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य । दिवा स सूर्यानुगृहीतदृष्टिः पश्येत्तु रूपाणि कफाल्पभावात् ॥ १ ॥ अथ धूमदर्शिनमाह ॥ शोकज्वरायासशिरोऽभितापैरभ्याहता यस्य नरस्य दृष्टिः । धूम्रांस्तु यः पश्यति सर्व भावान् सधूमदर्शीति नरः प्रदिष्टः ॥ १ ॥ अथ ह्रस्वजात्यमाह ॥ यो वासरे पश्यति कष्टतोऽथ[1] रूपं महच्चापि निरीक्षतेऽल्पम् । रात्रौ पुनर्यः प्रकृतानि पश्येत्स ह्रस्वजात्यो मुनिभिः प्रदिष्टः ॥१॥ तन्त्रान्तरे । दृष्टिमध्यस्थिते दोषे महद्ध्रस्वं न पश्यति । रात्रौ पित्ताल्पभावाच्च तानि रूपाणि पश्यति ॥१॥ अथ नकुलान्ध्यमाह ॥ विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत् । चित्राणि रूपाणि दिवा स पश्येत्स वै विकारो नकुलान्ध्यसंज्ञः ॥ १ ॥ अथ गम्भीरकामाह ॥ दृष्टिर्विरूपा श्वसनोपसृष्टा संकोचमभ्यन्तरतस्तु याति । रुजावगाढा च तमक्षिरोगं गम्भीरकेति प्रवदन्ति वृद्धाः । अथ

---

१ ( च० ) कृष्णतोऽथ ।

बाह्यौ निमित्तानिमित्तसंज्ञौ लिङ्गनाशावाह ॥ बाह्यौ पुनर्द्वाविह संप्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च । निमित्ततस्तत्र शिरोऽभितापाज्ज्ञेयस्त्वभिष्यन्दनिदर्शनः सः ॥१॥ सुरर्षिगन्धर्वमहोरगाणां सन्दर्शनेनापि च भास्करस्य । हन्येत दृष्टिर्मनुजस्य तस्य स लिङ्गनाशस्त्वनिमित्तसंज्ञः ॥ २ ॥ अथानिमित्ततो लिङ्गनाशस्य लक्षणमाह ॥ तत्राक्षिविस्पष्टमिवावभाति वैदूर्यवर्णा विमला च दृष्टिः ॥ १ ॥ अथ दृष्टिमण्डलप्रत्यासन्नतया कृष्णगतविकारानाह ॥ यत्सव्रणं शुक्रमथाव्रणं च पाकात्ययश्चाप्यजका तथैव । चत्वार एते नयनामयास्तु कृष्णप्रदेशे नियता भवन्ति ॥ १ ॥ तत्र सव्रणशुक्रलिङ्गमाह ॥ निमग्नरूपं तु भवेद्धि कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै । स्रावं स्रवेदुष्णमतीव यच्च तत्सव्रणं शुक्रमुदाहरन्ति ॥ १ ॥ विदेहेऽप्युक्तम् ॥ रक्तराजिनिभं कृष्णे छिन्नाभं यत्र लभ्यते । सूच्यग्रेणेव तच्छुक्रमुष्णाश्रुस्रावि तद्व्रणम् ॥ १ ॥ अथास्य साध्यासाध्यलक्षणमाह ॥ दृष्टे समीपे न भवेत्तु यच्च न चावगाढं न च संस्रवेच्च । अवेदनं वा न च युग्मशुक्रं तत्सिद्धिमायाति कदाचिदेव ॥ १ ॥ अथाव्रणशुक्रमाह ॥ स्यन्दात्मकं कृष्णगतं तु शुक्रं शङ्खेन्दुकुन्दप्रतिमावभासम् । वैहायसाभ्रप्रतनुप्रकाशं तं चाव्रणं साध्यतमं वदन्ति ॥ १ ॥ साध्यतमस्याप्यस्यावभेदेन कष्टसाध्यतामाह ॥ गम्भीरजातं बहुलं च शुक्रं चिरोत्थितं चापि वदन्ति कृच्छ्रम् ॥१॥ अथासाध्यतां चाह । विच्छिन्नमध्यं पिशितावृतं वा चलं शिरासूक्ष्ममदृष्टिकृच्च । द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितं चापि विवर्जनीयम् ॥१॥ अपरमसाध्यलक्षणमाह । उष्णाश्रुपातः पिटिका च नेत्रे यस्मिन्भवेन्मुद्गनिभं च शुक्रम् । तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च वा तित्तिरिपक्षतुल्यम् ॥ १ ॥ अथाक्षिपाकात्ययमाह ॥ श्वेतः समाक्रामति सर्वतो हि दोषेण यस्यासितमण्डलं तु । तमक्षिपाकात्ययमक्षिकोपं सर्वात्मकं वर्जयितव्यमाहुः॥१॥ अथाजकाजातमाह ॥ अजापुरीषप्रतिमो रुजावान्सलोहितो लोहितपिच्छिलाश्रु । विगृह्य कृष्णं प्रचयोऽभ्युपैति तं चाजकाजातमिति व्यवस्येत् ॥ १ ॥ अथात्र विदेहः ॥ कृष्णेक्षणोद्भवे शुष्कच्छगलीविट्समप्रभम् । सान्द्रपिच्छलरक्तास्रं द्वित्वग्गं वाजिकेति सा ॥१॥ इति कृष्णजाः ॥ अथ शुक्लभागजा रोगास्तेषां नामानि सङ्ख्यां चाह ॥ प्रस्तारिशुक्लक्षतजाधिमांसस्नाय्वर्मसंज्ञाः खलु पञ्च रोगाः । स्याच्छुक्तिका सार्जुनपिष्टकाख्या जालं शिराणां पिटिकाश्च तासाम् ॥ रोगा बलासग्रथितेन सार्धमेकादशोक्ताः खलु शुक्लभागे ॥ १ ॥ तेषु प्रस्तार्यर्मणो लक्षणमाह । प्रस्तारि तनु विस्तीर्णं श्यावं रक्तनिभं सिते ॥ अथ शुक्लार्माह ॥ सुश्वेतं मृदु शुक्लार्म शुक्ले तद्वर्धते चिरात् ॥ अथ रक्तजार्माह ॥ पद्माभं मृदु रक्तार्म यन्मांसं चीयते सिते ॥ १ ॥ अथाधिमांसार्माह ॥ पृथु मृद्वधिमांसार्म बहलं च यकृन्निभम् ॥ अथ स्नाय्वर्माह ॥ स्थिरं प्रस्तारिमांसाढ्यं शुष्कं स्नाय्वर्म पञ्चमम् ॥१॥ अथ शुक्तिकामाह ॥ श्यावाः स्युः पिशितनिभास्तु बिन्दवो ये शुक्त्याभास्त्वसितसिताः स शुक्तिसंज्ञः ॥ अथार्जुनमाह ॥ एको यः शश-

---

१ ( ख० ) प्रस्तार्यर्म तनु स्तीर्णम् ।

रुधिरोपमश्च बिन्दुः शुक्लस्थो भवति तदर्जुनं वदन्ति ॥ १ ॥ अथ पिष्टकमाह ॥ श्लेष्ममारुतकोपेन शुक्ले मांसं समुन्नतम् । पिष्टवद् पिष्टकं विद्धि मलाक्तादर्शसन्निभम् ॥ ॥ १ ॥ अथ शिराजालमाह ॥ जालाभः कठिनशिरो महान् सरक्तः सन्तानः स्मृत इह जालसंज्ञितस्तु ॥१॥ अथ शिरापिटिकामाह ॥ शुक्लस्थाः सितपिटिकाः शिरावृता यास्ता ब्रूयादसितसमीपजा; शिराजाः ॥ १ ॥ अथ बलासग्रथितमाह ॥ कांस्याभोऽमृदुरथ वारिबिन्दुकल्पो विज्ञेयो नयनसिते बलाससंज्ञः ॥ १ ॥ इति शुक्लभागजा रोगाः ॥ अथ वर्त्मपक्ष्मजाः ॥ तत्रत्यानां रोगाणां नामानि सङ्ख्यां चाह । उत्सङ्गिन्यथ कुम्भीका पोथकी वर्त्मशर्करा । तथार्शोवर्त्म शुष्कार्शस्तथैवाञ्जननामिका ॥१॥ बहलं वर्त्म यच्चापि तथोक्तो वर्त्मबन्धकः । क्लिष्टवर्त्म तथा वर्त्म कर्दमः श्यावववर्त्म च ॥२॥ प्रक्लिन्नवर्त्म चाक्लिन्नवर्त्म वातहतं च तत् । वर्त्मार्बुदं निमेषश्च शोणितार्शस्तथैव च ॥३॥ लगणो बिसवर्त्मापि कुञ्चनं नाम तत्परम् । एकविंशतिरित्येते विकारा वर्त्मसंश्रयाः ॥४॥ अथ तेषूत्सङ्गपिटिकामाह ॥ अभ्यन्तरमुखी ताम्रा बाह्यतो वर्त्मनश्च या । सोत्सङ्गोत्सङ्गपिटिका सर्वजा स्थूलकण्डुरा ॥ १ ॥ अथ कुम्भीकामाह ॥ वर्त्मान्तः पिटिका ध्माता भिद्यन्ते च स्रवन्ति च । कुम्भीकाबीजसदृशाः कुम्भीकाः सन्निपातजाः ॥१॥ अथ पोथकीमाह ॥ स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः । रुजावत्यश्च पिटिकाः पोथक्य इति संज्ञिताः ॥ १ ॥ अथ वर्त्मशर्करामाह ॥ पिटिकाभिः सुसूक्ष्माभिर्घनाभिरतिसंवृता । पिटिका या खरा स्थूला वर्त्मस्था वर्त्मशर्करा ॥ १ ॥ अथार्शोवर्त्माह ॥ एर्वारुबीजप्रतिमाः पिटिका मन्दवेदनाः ॥ तथा च निमिः ॥ नीरुजा कठिना वर्त्मपक्ष्मान्ते बाह्यगापि वा ॥१॥ पिटकाः सन्निपातेन तदर्शोवर्त्म कीर्तयेत् । श्लक्ष्णाः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते ॥ १ ॥ अथ शुष्कार्श आह ॥ दीर्घाङ्कुरः खरः स्तब्धो दारुणोऽभ्यन्तरोद्भवः । व्याधिरेषोऽभिविख्यातः शुष्कार्शो नाम नामतः ॥ १ ॥ अथाञ्जननामिकामाह ॥ दाहतोदवती ताम्रा पिटिका वर्त्मसम्भवा । मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साञ्जननामिका ॥ १ ॥ अथ बहलवर्त्माह ॥ वर्त्मोपचीयते यत्र पिटिकाभिः समन्ततः । सवर्णाभिः स्थिराभिश्च विद्याद्बहलवर्त्म तत् ॥१॥ अथ वर्त्मबन्धकमाह ॥ कण्डुरेणाल्पतोदेन वर्त्मशोफेन मानवः । असमं छादयेदक्षि यत्रासौ वर्त्मबन्धकः ॥ १ ॥ अथ क्लिष्टवर्त्माह ॥ मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च । अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्मेति तद्विदुः ॥१॥ तथा निमिः ॥ श्लेष्मा दुष्टेन रक्तेन क्लिष्टमांसगतः समम् । बन्धुजीवनिभं वर्त्म क्लिष्टमांसं तदुच्यते ॥१॥ अथ वर्त्मकर्दममाह ॥ क्लिष्टं पुनः पित्तयुतं शोणितं विदहेद्यदा । तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमम् ॥ १ ॥ अथ श्यावववर्त्माह ॥ वर्त्म यद्बाह्यतोऽन्तश्च श्यावं शूनं च जायते । तदाहुः श्यावववर्त्मेति वर्त्मरोगविशारदाः ॥ १ ॥ तथा च निमिः । दुष्टं श्लेष्मानिलात् पित्तं वर्त्मनोश्चीयतेयदा । अग्निदग्धनिभं श्यावं श्यावववर्त्मेति तद्विदुः ॥ १ ॥ अथ प्रक्लिन्नवर्त्माह । अरुजं बाह्यतः शूनं वर्त्म यस्य नरस्य च । प्रक्लिन्नवर्त्म तद्विद्याक्लिन्नमत्यर्थमन्ततः ॥ १ ॥ अथाक्लिन्नवर्त्माह ॥ यस्य धौतान्यधौतानि

सम्बध्यन्ते पुनः पुनः। वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत् ॥ १॥ अथ वातहतवर्त्माह ॥ विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य निमील्यते। तद्वातनिहतं वर्त्म जानीयादक्षिचिन्तकः ॥ १॥ अथ वर्त्मार्बुदमाह ॥ वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम्। आचक्षतेऽर्बुदमिति सरक्तमविलम्बितम् ॥ १॥ अथ निमेषमाह ॥ निमेषणीः शिरा वायुः प्रविष्टः सन्धिसंश्रयः। सञ्चालयति वर्त्मानि निमेषः स न सिध्यति ॥ १॥ अथ शोणितार्शोलक्षणमाह ॥ वर्त्मस्थो यो विवर्धेत लोहितो मृदुरङ्कुरः। तद्रक्तजं शोणितार्शश्छिन्नं वापि विवर्धते ॥ १॥ तथाच विदेहः ॥ वायुः शोणितमादाय शिराणां प्रमुखस्थितः। जनयत्यङ्कुरं ताम्रं वर्त्मनि च्छिन्नरोहिणम् ॥ तच्छोणितार्शोऽसाध्यं स्याद्रक्तस्राव्यथ रक्तजम् ॥२॥ अथ लगणमाह ॥ अपाकी कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः। सकण्डूः पिच्छिलः कोलप्रमाणो लगणः स्मृतः ॥ १॥ अथ बिसवर्त्माह ॥ त्रयो दोषा बहिः शोथं कुर्युश्छिद्राणि वर्त्मनाम्। प्रस्रवन्त्यन्तरुदकं बिसवद्बिसवर्त्म तत् ॥ १॥ अथ कुञ्चनमाह ॥ वाताद्या वर्त्मसङ्कोचं जनयन्ति मला यदा। तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः ॥ १॥ इति वर्त्मरोगाः ॥ अथ पक्ष्मरोगौ ॥ तत्रत्ययोरोगयोर्नामनी आह ॥ पक्ष्मकोपः पक्ष्मशातो रोगौ द्वौ पक्ष्मसंश्रयौ ॥१॥ अथ तत्र पक्ष्मकोपमाह ॥ प्रचालितानि वातेन पक्ष्माण्यक्षि विशन्ति हि। असिते सितभागे च मूलकोशात्पतन्त्यपि ॥ १॥ घृष्यन्त्यक्षि मुहुस्तानि संरम्भं जनयन्ति च। पक्ष्मकोपः स विज्ञेयो व्याधिः परमदारुणः ॥ २॥ अथ पक्ष्मशातमाह ॥ वर्त्मपक्ष्माशयगतं पित्तं रोमाणि शातयेत्। कण्डूं दाहं च कुरुते पक्ष्मशातं तमादिशेत् ॥ १॥ इति पक्ष्मरोगौ। इति वर्त्मपक्ष्मजाः ॥ अथ सन्धिरोगाः ॥ तत्र सन्धयः षट् तानाह ॥ पक्ष्मवर्त्मगतः सन्धिर्वर्त्मशुक्लगतोऽपरः। शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतोऽपि च। ततः कनीनिकगतः षष्ठश्चापाङ्गसंश्रितः ॥ १॥ तत्रत्यानां रोगाणां नामानि संख्यां चाह ॥ पूयालसः सोपनाहः स्रावाश्चत्वार एव च। पर्वणी कालजी जन्तुग्रन्थिः सन्धौ नवामयाः ॥ १॥ अथ तेषु पूयालसमाह ॥ पक्वः शोथः सन्धिजो यः सतोदो स्रवेत्पूयं पूतिपूयालसाख्यः ॥१॥ अथोपनाहमाह ॥ ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी कण्डूप्रायो नीरुजश्चोपनाहः ॥ १॥ अथ स्रावाणां सम्प्राप्तिमाह ॥ गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्युः स्रावांल्लक्षणैः स्वैरुपेतान्। तं हि स्रावं नेत्रनाडीति चैके तस्या लिङ्गं कीर्तयिष्ये चतुर्धा ॥ १॥ अथ पैत्तिकं स्रावमाह ॥ हरिद्राभं पीतमुष्णं जलं वा पित्तस्रावः संस्रवेत् सन्धिमध्यात् ॥ १॥ अथ श्लेष्मस्रावमाह ॥ श्वेतं सान्द्रं पिच्छिलं यः स्रवेत्तु श्लेष्मस्रावोऽसौ विकारः प्रदिष्टः ॥ १॥ अथ सन्निपातस्रावमाह ॥ शोथः सन्धौ संस्रवेद्यस्तु पक्वः पूयं स्रावः सर्वजः संमतः सः ॥ १॥ अथ रक्तस्रावमाह ॥ रक्तस्रावः शोणिताद्यो विकारो गच्छेद्दुष्टं तत्र रक्तं प्रभूतम् ॥ १॥ अथ पर्वणीकालज्यावाह ॥ ताम्रा तन्वी दाहपाकोपपन्ना रक्ता ज्ञेया पर्वणी वृत्तशोफा। जाता सन्धौ कृष्णशुक्लेऽलजी स्यात्तस्मिन्नेव व्याहृता पूर्वलिङ्गैः ॥ १॥ अथ जन्तुग्रन्थिमाह ॥ जन्तुग्रन्थिर्वर्त्मनः पक्ष्मणश्च

कण्डूं कुर्युर्जन्तवः सन्धिजाताः । नानारूपा वर्त्मशुक्लान्तसन्धौ चरन्त्यन्तर्लोचनं दूषयन्तः ॥ १ ॥ इति सन्धिजा रोगाः ॥ अथ समस्तनेत्रजा रोगाः । तेषां नामानि संख्यां चाह ॥ स्यन्दाश्चतुष्का इह सम्प्रदिष्टाश्चत्वार एवेह तथाधिमन्थाः । पाकः सशोथः स च शोथहीनो हताधिमन्थोऽनिलपर्ययश्च ॥ १ ॥ शुष्काक्षिपाकस्त्विह कीर्तितश्च तथान्यतो वात उदीरितश्च । दृष्टिस्तथाम्लाध्युषिता शिराणामुत्पातहर्षौ च समस्तनेत्रे ॥ २ ॥ एवं समस्तनेत्रे स्युरामया दश सप्त च । तेषामिह पृथग् वक्ष्ये यथावल्लक्षणान्यपि ॥ ३ ॥ तथाभिष्यन्दाश्चत्वार इत्याह ॥ वातात्पित्तात्कफाद्रक्तादभिष्यन्दश्चतुर्विधः । प्रायेण जायते घोरः सर्वनेत्रामयाकरः ॥ १ ॥ तेषु वातिकमभिष्यन्दमाह ॥ निस्तोदनस्तम्भनरोमहर्षसङ्घर्षपारुष्यशिरोऽभितापाः । विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति ॥ १ ॥ अथ पैत्तिकमभिष्यन्दमाह ॥ दाहप्रपाकौ शिशिराभिनन्दा धूमायनं बाष्पसमुद्भवश्च । उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति ॥ १ ॥ अथ श्लैष्मिकमभिष्यन्दमाह ॥ उष्णाभिनन्दा गुरुताक्षिशोथः कण्डूपदेहावतिशीतता च । स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति ॥१॥ अथ रक्तजमभिष्यन्दमाह ॥ ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च । पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति ॥ १ ॥ अथाधिमन्थानामभिष्यन्दजन्यत्वमाह ॥ वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् । तावन्तस्त्वधिमन्थास्युर्नयने तीव्रवेदनाः[1] ॥ १ ॥ अथाधिमन्थानां सामान्यं लक्षणम् ॥ उत्पाट्यत इवात्यर्थं तथा निर्मथ्यतेऽपि च । शिरसोऽर्धं तु तं विद्यादधिमन्थं स्वलक्षणैः ॥ १ ॥ स चाधिमन्थो यदात्मको यावता कालेन मिथ्याचाराद् दृष्टिं हन्ति तदाह ॥ हन्याद्दृष्टिं श्लैष्मिकः सप्तरात्राद्ध्याधिर्घोरो रक्तजः पञ्चरात्रात् । षड्रात्राद्वा वातिको वै निहन्यान्मिथ्याचारात्पैत्तिकः सद्य एव ॥ १ ॥ अथ सशोथं पाकमाह ॥ कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः । संरम्भी पच्यते यस्तु नेत्रपाकः सशोथकः ॥ १ ॥ अथाशोथपाकमाह ॥ शोथहीनानि लिङ्गानि नेत्रपाके त्वशोथके ॥ १ ॥ अथ हताधिमन्थमाह ॥ उपेक्षणादक्षि यदाधिमन्थो वाताधिकः शोषयति प्रसह्य । रुजाभिरुग्राभिरसाध्य एष हतोऽधिमन्थः खलु नाम रोगः ॥ १ ॥ अथ वातपर्ययमाह ॥ वारं वारं च पर्येति भ्रुवौ नेत्रे च मारुतः । रुजाभिः सह तीव्राभिः स ज्ञेयो वातपर्ययः ॥ १ ॥ अथ शुष्काक्षिपाकमाह ॥ यत्कूणितं दारुणरूक्षवर्त्म सन्दह्यते चाविलदर्शनं यत् । सुदारुणं यत्प्रतिबोधने च शुष्काक्षिपाकोपहतं तदक्षि ॥ १ ॥ अथान्यतोवातमाह ॥ यस्यावटूकर्णशिरोहनुस्थो मन्यागतो वाप्यनिलोऽन्यतो वा । कुर्याद्रुजं वै भ्रुवि लोचने च तमन्यतोवातमुदाहरन्ति ॥ १ ॥ विदेहेनाप्युक्तम् । मन्यानामन्तरे वायुरुत्थितः पृष्ठतोऽपि वा । करोति भेदं निस्तोदं शङ्खे चाक्ष्णोर्भ्रुवोस्तथा ॥ तमाहुरन्यतोवातं

---

1 ( क० ) अभिमन्था— ।

रोगं दृष्टिविदो जनाः ॥२॥ अथाम्लाध्युषितमाह ॥ श्यावलोहितपर्यन्तं सर्वमक्षि प्रपच्यते । सदाहशोथं सस्रावमम्लाध्युषितमम्लतः ॥ १ ॥ अथ शिरोत्पातमाह ॥ अवेदना वापि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः । मुहुर्विरज्यन्ति च यस्य तादृग्व्याधिः शिरोत्पात इति प्रदिष्टः ॥ १ ॥ अथ शिराप्रहर्षमाह ॥ मोहाच्छिरोत्पात उपेक्षितस्तु जायेत रोगः स शिराप्रहर्षः । ताम्राच्छमच्छं स्रवति प्रगाढं तथा न शक्नोत्यभिवीक्षितुं च ॥ १ ॥ अथ नेत्रस्य सामतालक्षणमाह ॥ उदीर्णवेदनं नेत्रं रागशोफसमन्वितम् । घर्षनिस्तोदशूलाश्रुयुक्तमामान्वितं विदुः ॥ १ ॥ अथ नेत्रस्य निरामतालक्षणमाह ॥ मन्दवेदनता कण्डुः संरम्भाश्रुप्रशान्तता । प्रसन्नवर्णता चाक्ष्णोर्निरामस्य च लक्षणम् ॥ १ ॥ इति नेत्रजा रोगाः ॥

## ॥ अथ नेत्ररोगाणां चिकित्सा ॥

तथा च तन्त्रान्तरे ॥ सेको दिनानि चत्वारि लङ्घनं भोजने रसः । स्वादुस्तिक्तश्च लेपश्च बाष्पः स्वेदनमेव च ॥१॥ एतानि नेत्ररोगाणां सामानां पाचनानि हि । अञ्जनं सर्पिषः पानं कषायं गुरुभोजनम् ॥ नेत्ररोगेषु सामेषु स्नानं च परिवर्जयेत् ॥ २ ॥ अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः । पञ्चैते पञ्चरात्रेण रोगा नश्यन्ति लङ्घनात् ॥ ३ ॥ षट्सप्ततिर्लोचनजा विकारास्तेषामभिष्यन्दसमुद्भवानाम् । श्लेष्माश्रयत्वादिह लङ्घनं प्राक् प्रशस्यते मुद्गरसौदनं च ॥ ४ ॥ अञ्जनं पूरणं क्वाथपानमामे न शस्यते । आचतुर्थाद्दिनादाममभिष्यन्देऽपि लोचनम् ॥५॥ गण्डूषाञ्जननस्यादिहीनानां कफकोपतः । षट्सप्ततिर्नेत्ररोगा दुःसहाः स्युरुपेक्षिताः ॥ ६ ॥ सेक आश्चोतनं पिण्डी बिडालस्तर्पणं तथा । पुटपाकोऽञ्जनं चैभिः कल्पैर्नेत्रमुपाचरेत् ॥ ७ ॥ अथ दृष्टिगतरोगचिकित्सामाह ॥ वर्जयेदुपसर्गोत्थां गम्भीरां ह्रस्वसंज्ञिताम् । काचांस्तु यापयेत्सर्वान्नकुलान्ध्यं तथैव च ॥ १ ॥ तिमिरं नेत्ररोगेषु कष्टं तद्यत्नतो हरेत् । मूलं दृष्टिविनाशस्य तिमिरं समुदाहृतम् ॥ ऋषिभिस्तूदितं तस्मात्तस्य कुर्याच्चिकित्सितम् ॥ २ ॥ अथ वातिकतिमिरचिकित्सामाह ॥ स्निग्धानि नस्याञ्जनशोधनानि पाकाः पुटानामथ तर्पणं च । घृतस्य पानान्यथ बस्तिकर्म कुर्यादभीक्ष्णं तिमिरेऽनिलोत्थे ॥ १ ॥ दशमूलादिना पक्वं घृतं दुग्धं चतुर्गुणम् । त्रिफलाकल्कसंयुक्तं तिमिरे वातजे पिबेत् ॥ २ ॥ रास्नाफलत्रयक्वाथे दशमूलरसे शृतम् । कल्केन जीवनीयानां घृतं तिमिरनाशनम् ॥ ३ ॥ वातिके तिमिरे पक्वं दशमूलीरसे घृतम् । त्रिवृच्चूर्णसमायुक्तं विरेकार्थं प्रयोजयेत् ॥ ४ ॥ त्रिफलादशमूलानां निर्यूहं दुग्धमिश्रितम् । गन्धर्वतैलसंयुक्तं प्रयुञ्जीत विरेचनम् ॥ ५॥ अथ पैत्तिकतिमिरचि० ॥ शीताञ्जनाश्चोतनतर्पणैश्च नस्यैर्विरेकैर्मृदुभिर्घृतैश्च । तिक्तप्रधानैस्तिमिरं निहन्यात्पित्तात्मकं शोणितमोक्षणैश्च ॥ १ ॥ तिमिरे पित्तजे सर्पिर्जीवनीयवराशृतम् । पाययित्वा शिरां विध्येत्सितैलाकुम्भसैन्धवैः ॥ २ ॥ चूर्णैर्माक्षिकसंयुक्तै रेचनं कारयेन्नरः ।

१ ( च० ) याश्च । २ ( च० ) ताम्राभमल्पम् । ३ ( क० ) समानाम् ।

बलाशतावरीवीरासिताशैलेयकैः पचेत् ॥ ३ ॥ त्रिफलासहितं सर्पिस्तिमिरघ्नमनुत्तमम् । सारिवात्रिफलोशीरमुक्ताचन्दनपद्मकैः ॥ पिष्टं वर्तीकृतं हन्ति पित्तोत्थं तिमिरं नृणाम् ॥ ४ ॥ अथ श्लैष्मिकतिमिरचिकित्सामाह ॥ तीक्ष्णानि नस्याञ्जनशोधनानि पाकः पुटानामपतर्पणं च । घृतानि वासात्रिफलापटोलसंज्ञानि कुर्यात्तिमिरे कफोत्थे ॥ १ ॥ कफोद्भवे वराचव्यशृते क्वाथे शृतं हविः । पाययित्वा शिरां विध्येद्रेचनं तिमिरे भिषक् ॥ २ ॥ यूथी पथ्या कषा शुण्ठी कुसुम्भस्याम्बुनिर्झरः । गोमूत्रक्वथिता शुण्ठी त्रिवृत्सिद्धा विरेचनम् ॥ ३ ॥ नस्यं मरीचयष्ट्याह्वविडङ्गामरदारुभिः । नेपालत्रिफलाशङ्खकान्ताव्योषं च पेषितम् ॥ वर्तीकृतं बलासोत्थमञ्जनं तिमिरापहम् ॥४॥ अथ सान्निपातिकतिमिरचि० ॥ संसर्गे सन्निपाते च यथादोषोदयक्रियाम् । धात्रीरसाञ्जने क्षौद्रं सर्पिर्भिस्तु रसक्रियाम्[1]॥१॥ पित्तानिलाक्षिरोगघ्नी तैमिर्यपटलापहा । दद्यादुशीरनिर्यूहे चूर्णितं कणसैंधवम् ॥ २ ॥ तच्छृतं सघृतं भूयः पिबेत्क्षौद्रे घने ततः । शीते चास्मिन्हितमिदं सर्वजे तिमिरे हितम् ॥ ३ ॥ वातपित्तकफसन्निपातजां नेत्रयोर्बहुविधामपि व्यथाम् । शीघ्रमेव जयति प्रयोजितः शिग्रुपल्लवरसः समाक्षिकः ॥४॥ अथ तिमिरे सामान्यचिकित्सा ॥ अथाञ्जनविधिः ॥ अथ संपक्वदोषस्य प्राप्तमञ्जनमाचरेत् । अञ्जनं क्रियते येन तद्द्रव्यं चाञ्जनं मतम् ॥१॥ तद्यथा ॥ गुटिकारसचूर्णानि त्रिविधान्यञ्जनानि तु । कुर्याच्छलाकयाङ्गुल्या हीनानि च यथोत्तरम् ॥ २ ॥ स्नेहनं रोपणं चापि लेखनं तत्त्रिधा पृथक् । मधुरं स्नेहसंपन्नमञ्जनं स्नेहनं मतम् ॥३॥ कषायतिक्तरसयुक् स्नेहनं रोपणं स्मृतम् । अञ्जनं क्षारतीक्ष्णाम्लरसैर्लेखनमुच्यते ॥ ४ ॥ हरेणुमात्रां कुर्वीत वर्तिं तीक्ष्णाञ्जने भिषक् । प्रमाणं मध्यमे सार्धं द्विगुणं तु मृदौ भवेत् ॥ ५ ॥ रसक्रिया तूत्तमा स्यात्त्रिविडङ्गमिता हिता । मध्यमा द्विविडङ्गा सा हीना त्वेकविडङ्गिका ॥ ६ ॥ शलाकाः स्नेहने चूर्णे चतस्रः प्राहुरञ्जने । रोपणे तास्तु तिस्रः स्युस्ते उभे लेखने स्मृते ॥ ७ ॥ मुखयोः कुञ्चिता श्लक्ष्णा शलाकाष्टाङ्गुलोन्मिता । अश्मजा धातुजा वा स्यात्कलायपरिमण्डला ॥ ८ ॥ सुवर्णरजतोद्भूता शलाका स्नेहने स्मृता । ताम्रलोहाश्मसञ्जाता शलाका लेखने मता ॥ अङ्गुलिस्तु मृदुत्वेन रोपणे कथिता बुधैः ॥ ९ ॥ अञ्जने केवलमपि शलाकाविशेषमाह ॥ त्रिफलाभृङ्गशुण्ठीनां रसैस्तद्वच्च सर्पिषा । गोमूत्रमध्वजाक्षीरैः सिक्तो नागः प्रतापितः ॥ १ ॥ तच्छलाका हरत्येव सकलान्नयनामयान् । कृष्णाभागादधः कुर्यादपाङ्गं यावदञ्जनम् ॥ २ ॥ प्रथमं सव्यमञ्जीयात्पश्चाद्दक्षिणमञ्जयेत् । शलाकया साञ्जनया न च तन्नयनं स्पृशेत् ॥ ३ ॥ हेमन्ते शिशिरे वापि मध्याह्नेऽञ्जनमिष्यते । पूर्वाह्णे वापराह्णे वा ग्रीष्मे शरदि चेष्यते ॥ ४ ॥ वर्षास्वनभ्रेणात्युष्णे वसन्ते च सदैव हि । प्रातः सायं च तत्कुर्यान्न च कुर्यात्सदैव हि ॥५॥ श्रान्ते प्ररुदिते भीते पीतमद्ये नवज्वरे । अजीर्णे वेगघाते च नाञ्जनं संप्रशस्यते ॥६॥ सौ-

---

१ ( च० ) पचेत् ।

वीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत् । पञ्चरात्रे ऽष्टरात्रे वा स्रावणार्थं रसाञ्जनम् ॥७॥ अथ मुक्तादिमहाञ्जनं भावप्रकाशात् ॥ मुक्ताकर्पूरकाचागुरुमरिचकणासैन्धवं सैलवालं शुण्ठीकक्कोलकांस्यत्रपुरजनिशिलाशङ्खनाभ्यभ्रतुत्थम् । दक्षाण्डत्वक् च साक्षक्षतजयुतशिवाक्रीतकं राजवर्तं जातीपुष्पं तुलस्याः कुसुममभिनवं [1]बीजमस्यास्तथैव ॥१॥ पूतीकानिम्बाञ्जनभद्रमुस्तं सुताम्रसारं रसगर्भयुक्तम् । प्रत्येकमेषां खलु माषकैकं पलेन पिष्यान्मधुनातिसूक्ष्मम् ॥ २ ॥ भवन्ति रोगा नयनाश्रिता ये नितान्तमत्रोपचिताश्च तेषाम् । विधीयते शान्तिरवश्यमेव मुक्तादिनानेन महाञ्जनेन ॥३॥ अथ नयनशाणनामाञ्जनम् ॥ कणा सलवणोषणा सह रसाञ्जनां साञ्जना सरित्पतिकफः शिफासितपुनर्नवासम्भवा । रजन्यरुणचन्दनं मधुकतुत्थपथ्या शिला अ[2]रिष्टदलशाबरस्फटिकशङ्खनाभीन्दवः ॥ १ ॥ इमानि तु विचूर्णयेत्रिबिडवाससा शोधयेत्ततोऽयसि विमर्दयेत्समधुताम्रखण्डेन तत् । इदम्मुनिभिरीरितं नयनशाणनामाञ्जनं करोति तिमिरक्षयं पटलपुष्पनाशं बलात् ॥२॥ अथ चन्द्रोदयवटी ॥ शङ्खनाभिर्बिभीतस्य मज्जा पथ्या मनःशिला । पिप्पली मरिचं कुष्ठं वचा चेति समांशकम् ॥१॥ छागक्षीरेण सम्पिष्य वटीं कुर्याद्यवोन्मिताम् । हरेणुमात्रां सङ्घृष्य जलेनाञ्जनमाचरेत् ॥ २ ॥ तिमिरं मांसवृद्धिं च काचं पटलमर्बुदम् । रात्र्यन्धं वार्षिकं पुष्पं वटी चन्द्रोदया हरेत् ॥ ३ ॥ अथ चन्द्रप्रभावर्तिः ॥ रजनी निम्बपत्राणि पिप्पली मरिचानि च । विडङ्गं भद्रमुस्तं च सप्तमी त्वभया स्मृता ॥१॥ अजामूत्रेण संपिष्य च्छायायां शोषयेद्वटीं । वारिणा तिमिरं हन्ति गोमूत्रेण तु पिष्टिकाम् ॥२॥ मधुना पटलं हन्ति नारीक्षीरेण पुष्पकम् । एषा चन्द्रप्रभावर्तिः स्वयं रुद्रेण निर्मिता ॥ ३ ॥ अथ शशिकलावर्तिः ॥ रसकजलजनाभिः पौरतुत्थं समांशं वसनगलितमेतन्निम्बुनीरेण पिष्टम् । हरति शशिकलैतद्वर्तिरभ्यञ्जिताक्ष्णोस्तिमिरकुसुमकण्डूस्रावरागा[3]र्मपिच्छान् ॥१॥ अथ लोचनशूलघ्नी पोटली ॥ कृतलाजसुराष्ट्रजाहिफेनं रुचिरं नागजगालवोत्थचूर्णम् । सुकुमार्युदकेन शुल्बपात्रे मृदितं दृष्टिरुजं जयेत्पटस्थम् ॥ १ ॥ अथ चन्द्रोदयवर्तिः ॥ हरीतकी वचा कुष्ठं पिप्पली मरिचानि च । बिभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला ॥ १ ॥ सर्वमेतत् समं कृत्वा गव्यक्षीरेण पेषयेत् । नाशयेत्तिमिरं कण्डूपटलान्यर्बुदानि च ॥ २ ॥ अपि त्रिवार्षिकं शुक्रं मासेनैकेन नाशयेत् । अधिकानि च मांसानि रात्र्यन्धत्वं तथैव च । वर्तिश्चन्द्रोदया नाम नृणां दृष्टिविशोधनी ॥ ३ ॥ अथ नयनामृतम् ॥ रसेन्द्रभुजगौ तुल्यौ तयोर्द्विगुणमञ्जनम् । सूततुर्यांशकर्पूरमञ्जनं नयनामृतम् ॥ १ ॥ तिमिरं पटलं काचं शुक्रमर्मार्जुनानि च । क्रमात्पथ्याशिनो हन्ति तथान्यानपि दृग्गदान् ॥ २ ॥ अथ कुसुमिकावर्तिः रोपणी ॥ तिलपुष्पाण्यशीतिः स्युः षष्टिः पिप्पलितण्डुलाः । जात्याः कुसुमपञ्चाशन्मरिचानि च षोडश ॥ १ ॥ सूक्ष्मपिष्टा जलैर्वर्तिः कृता कुसुमिकाभिधा । तिमिरार्जुनशुक्राणां

1 ( च० ) रसाञ्जनं साञ्जनम् । २ ( च० ) सिता । ३ ( च० )—रम्भोऽञ्जिता—।

नाशनी मांसवृद्धिनुत् ॥ एतस्याश्चाञ्जने मात्रा प्रोक्ता सार्धहरेणुका ॥ २ ॥ अथ दार्व्याद्यञ्जनम् ॥ दार्वीवरामधुकमम्भसि नारिकेले पक्त्वाष्टभागपरिशिष्टरसं पुनस्तम् । सान्द्रं विपाच्य शशिसैन्धवमाक्षिकाढ्यं युञ्ज्याद् व्रणार्तितिमिरार्तिषु पित्तजेषु ॥ १ ॥ अथ शङ्खादिवर्ती ॥ शङ्खस्य भागाश्चत्वारस्तदर्धेन मनःशिला । मनःशिलार्धं मरिचं मरिचार्धेन पिप्पली ॥ १ ॥ सर्वमेकत्र संमर्द्य गुटिकां कारयेत्ततः । वारिणा तिमिरं हन्ति चार्बुदं हन्ति मस्तुना ॥ पिच्चटं मधुना हन्ति स्त्रीक्षीरेण तथार्जुनम् ॥ २ ॥ अथ पुनर्नवाद्यञ्जनम् ॥ दुग्धेन कण्डुं क्षौद्रेण नेत्रस्रावं च सर्पिषा । पुष्पं तैलेन तिमिरं काञ्जिकेन निशान्धताम् ॥ पुनर्नवा हरत्याशु भास्करस्तिमिरं यथा ॥१॥ अथ गुडूच्याद्यञ्जनम् ॥ गुडूचीस्वरसः कर्षः क्षौद्रं स्यान्माषकोन्मितम् । सैन्धवं क्षौद्रतुल्यं स्यात्सर्वमेकत्र मर्दयेत् ॥ १ ॥ अञ्जयेन्नयनं तेन पिल्लार्मतिमिरं जयेत् । काचं कण्डुं लिङ्गनाशं शुक्लकृष्णगतान् गदान् ॥ २ ॥ अथ कतकफलादि ॥ कतकस्य फलं घृष्ट्वा मधुना नेत्रमञ्जयेत् । ईषत्कर्पूरसहितं तत्स्यान्नेत्रप्रसादनम् ॥ १ ॥ अन्यच्च ॥ कतकस्य फलं शङ्खं सैन्धवं त्र्यूषणं सिता । फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला ॥ सर्वमेतत्समं कृत्वा नारीक्षीरेण पेषयेत् ॥ १ ॥ तिमिरं पटलं काचमर्मशुक्रं व्यपोहति । कण्डूक्लेदार्बुदान् हन्ति मूलं वा सुमुखावती ॥२। इति शार्ङ्गधरः॥ अथ पिप्पल्याद्यञ्जनम्॥ पिप्पलीत्रिफलालाक्षालोध्रकं च ससैन्धवम् । भृङ्गराजरसे घृष्टं गुटिकाञ्जनमिष्यते ॥ १ ॥ अर्मं सतिमिरं काचं कण्डूं शुक्रं तथार्जुनम् । अञ्जनं नेत्रजान् रोगान्निहन्त्येव न संशयः ॥ २ ॥ अथ गुञ्जामूलाद्यञ्जनम् ॥ गुञ्जामूलं बस्तमूत्रेण पिष्टं निघृष्टा वा वारिणा भद्रमुस्ता । आन्ध्यं सद्यस्तैमिरं हन्ति पुंसामत्युद्गाढं नेत्रयोरञ्जनेन ॥१॥ अथ तुलस्यादि ॥ तुलस्या बिल्वपत्रस्य रसो ग्राह्यः समांशकः । ताभ्यां तुल्यं पयो नार्यास्त्रितयं कांस्यपात्रके ॥ १ ॥ गजवल्या दृढं मर्द्य ताम्रेण प्रहरं पुनः । कज्जलत्वं समुत्पाद्य तेनाञ्जितविलोचनः ॥ सद्यो नेत्ररुजं हन्ति सशूलां पाकसम्भवाम् ॥२॥ अथ क्वाथाः॥ वासा घनं निम्बपटोलपत्रतिक्तामृताचन्दनवत्सकत्वक् । कलिङ्गदार्वीदहनं सनागरं भूनिम्बधात्री ह्यभया बिभीतकम् ॥१॥ यवांश्च निष्क्वाथमथाष्टमांशं पिबेदिमं पूर्वदिने कषायम् । तैमिर्यकण्डूपटलार्बुदं च शुक्रं तथा सव्रणमव्रणं च ॥ दाहं सरागं सरुजं सपिल्लं हन्यात्समस्तानपि नेत्ररोगान् ॥ २ ॥ इति महावासादिक्वाथः ॥ अथ त्रिफलाक्वाथः ॥ अयःस्थं त्रिफलाक्वाथं सर्पिषा सह योजितम् । भुक्तोपरि पिबेत् सायं मासेनान्धोऽपि पश्यति ॥ १ ॥ अथचित्रकादिक्वाथः ॥ चित्रकमूलत्रिफलापटोलयवसाधितं पिबेदम्भः । सघृतं निशि चक्षुष्यं तिमिरं च विशेषतो हन्ति ॥१॥ अथ चूर्णानि ॥ तत्रादौ त्रिफलाचूर्णम् ॥ त्रिफलात्वचमायसं च चूर्णं समयष्टीमधुकं त्रिसप्तरात्रम् । मधुना सह सर्पिषा दिनान्ते पुरुषो निष्परिहारमाददीत ॥ १ ॥ तिमिरार्बुदरक्तराजिकण्डूक्षणदान्ध्यामयदाहशूलतोदान् । पटलं च सशुक्लकाचपिल्लं शमयत्येव निषेवितः प्रयोगः ॥ २ ॥ न च केवलमेव लोचनानां विहितो रोगनिबर्हणाय योगः । दशनश्रवणोर्ध्वजत्रुजानां

प्रशमे हेतुरयं महामयानाम् ॥ ३ ॥ गुदजानि भगन्दरप्रमेहान् सहकुष्ठानि हलीमकं किलासम्। पलितानि विनाशयेत्तथाग्निं चिरनष्टं कुरुते रविप्रचण्डम् ॥ ४ ॥ प्रमदाभिरयं जराधिरूढः स्फुटचन्द्राभरणासु यामिनीषु। सुरतानि पदे पदे निषेवेत्पुरुषो योगमिमं निषेवमाणः ॥ स्मृतिविक्रमबुद्धिशक्तियुक्तः शरदां जीवति वै शतं समग्रम् ॥ ५ ॥ सुखेन नीलोत्पलचारुगन्धिना शिरोरुहैरञ्जनमेचकप्रभैः। भवेत्तु गृध्रस्य समानलोचनश्चिरं नरो वर्षशतं तु जीवति ॥६॥ इति सप्तामृतो लोहः ॥ मधुकत्रिफलाचूर्णं लोहचूर्णं समं लिहेत् । मधुसर्पिर्युतं सम्यग्गव्यक्षीरं पिबेदनु ॥ १ ॥ छर्दिं सतिमिरां शूलमम्लपित्तं ज्वरं क्लमम्। आनाहं मूत्रसङ्गं च शोथं चैव निहन्ति हि ॥ २ ॥ अथ शतावर्यादिचूर्णम् ॥ शतावरी सूर्यसमा प्रदेया एला तथा रावणमूर्धतुल्या। देयं विडङ्गं वसुभिः समानमृत्तोः समं चामलकास्थिबीजम् ॥ १ ॥ विष्णोर्भुजैस्तुल्यगुणं मरीचं तद्विक्रमैर्मागधिका प्रदेया। चूर्णं समध्वाज्ञ्जनमर्धकर्षमक्ष्यामयानां विनिवारणार्थम् ॥२॥ कण्डूं सधूमं तिमिरं स घोरमर्माणि काचं पटलं त्रिदोषजम्। ये चापरे रक्तभवा विकारास्तेषामयं चूर्णवरो निहन्ता ॥ ३ ॥ अथ द्वितीयं त्रिफलादिचूर्णं वङ्गसेनात् ॥ लिह्यात्सदा वा त्रिफलां सुचूर्णितां घृतप्रगाढां तिमिरेऽथ पित्तजे। समीरणे तैलयुतां कफात्मके मधुप्रगाढां विदधीत युक्तितः ॥१॥ अथ घृतानि ॥ बिभीतकशिवाधात्रीपटोलारिष्टवासकैः। पक्वमेभिर्घृतं सर्वानक्षिरोगान्व्यपोहति ॥१॥ त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च। वृषस्य च रसप्रस्थं शतावर्याश्च तत्समम् ॥ २ ॥ अजाक्षीरं गुडूच्याश्च आमलक्या रसं तथा। प्रस्थं प्रस्थं समाहृत्य सर्वैरेभिर्घृतं पचेत् ॥ ३ ॥ कल्कः कणासिताद्राक्षात्रिफला नीलमुत्पलम्। मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका ॥ ४ ॥ तत्साधु सिद्धं विज्ञाय शुभे भाण्डे निधापयेत्। ऊर्ध्वपानमधःपानं मध्ये पानं च शस्यते ॥ ५ ॥ यावंतो नेत्रजान् रोगान्पानादेवापकर्षति। सरक्ते रक्तदुष्टे च रक्ते वा विस्रुते तथा ॥ ६ ॥ नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्बुदे। अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे सुदारुणे ॥७॥ नेत्ररोगेषु सर्वेषु दोषत्रयकृतेष्वपि। परं हितमिदं प्रोक्तं त्रिफलाद्यं महाघृतम् ॥ ८ ॥ अथ द्वितीयं त्रिफलाद्यं घृतम् ॥ शतमेकं हरीतक्या द्विगुणं च बिभीतकम्। चतुर्गुणं त्वामलकं वृषमार्कवयोः समम् ॥ १ ॥ चतुर्गुणोदकं दत्वा शनैर्मृद्वग्निना पचेत्। भागं चतुर्थं संरक्ष्य क्वाथं तमवतारयेत् ॥ २ ॥ शर्करा मधुकं द्राक्षा मधुयष्टी निदिग्धिका। काकोली क्षीरकाकोली त्रिफला नागकेशरम् ॥ ३ ॥ पिप्पली चन्दनं मुस्तं त्रायमाणा तथोत्पलम्। घृतप्रस्थं समं क्षीरं कल्कैरेतैः शनैः पचेत् ॥ ४ ॥ हन्यात्सतिमिरं काचं नक्तान्ध्यं शुक्रमेव च। तथा स्रावं च कण्डूं च श्वयथुं च कषायताम् ॥ ५ ॥ कलुषत्वं च नेत्रस्य विड्वर्त्मपटलान्वितम्। बहुनात्र किमुक्तेन सर्वान्नेत्रामयान्हरेत् ॥ ६ ॥ यस्य चोपहता दृष्टिः सूर्याभिभ्यां प्रपश्यतः। तस्मै तद्धे-

१ (च०) तथामयानाम्। २ (ख० ग० ङ०) वारण। ३ (च०) समाध्वाजक। ४ यावन्तो नेत्ररोगाः स्युस्तान्पाकादपकर्षति। इति भावप्र० पाठः।

षजं प्रोक्तं मुनिभिः परमं हितम् ॥७॥ मार्जितं दर्पणं यद्वत्परां निर्मलतां व्रजेत् । तद्व-
देतेन पीतेन नेत्रं निर्मलतामियात् ॥ वारिद्रोणद्वयं चात्र वृषमार्कवयोस्तले ॥ ८ ॥
अथ लघुत्रिफलाघृतम् ॥ त्रिफलाक्काथकल्काभ्यां सपयस्कं घृतं शृतम् । तिमिराण्य-
चिराद्धन्यात्पीतमेतन्निशामुखे ॥१॥ इति घृतानि ॥ अथ भृङ्गराजतैलम् ॥ भृङ्गप्रस्थं तैला-
त्कुडवं तथा पलं च मधुकस्य । क्षीरप्रस्थविपक्वं गतमपि चक्षुर्निवर्तयेत् ॥१॥ अथ धाव-
नम् ॥ स्नानं कृष्णतिलैश्चापि चक्षुष्यमनिलापहम् । मधुकामलकस्नानं पित्तघ्नं तिमि-
रापहम् ॥ १ ॥ वचाद्यैः स्नानमिच्छन्ति श्लेष्मघ्नं तिमिरापहम् । आमलैः सततं स्ना-
नं परं दृष्टिबलावहम् ॥ २ ॥ त्रिफलायाः कषायस्तु धावनान्नेत्ररोगजित् । कव-
लान्मुखरोगघ्नः पानतः कामलापहः ॥३॥ भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यदि दीयते ।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति ॥४॥ इति तिमिरचि०॥ अथ काचोपक्रमः॥ काचे
रक्तं जलौकाभिर्हृत्वा पूर्वोक्तमाचरेत् । शाणार्धं मरिचं द्वौ च पिप्पल्यार्णवफेनयोः
॥१॥ शाणार्धं सैन्धवाच्छाणं नवसौवीरकाञ्जनात् । पिष्टं सूक्ष्मशिलायां च चूर्णाञ्जनमिदं
शुभम् ॥२॥ कण्डूकाचकफार्तानां मलानां च विशोधनम् ॥३॥ इति शार्ङ्गधरात् ॥ समे-
षशृङ्ग्याञ्जनभागसम्मितः शङ्खाञ्जनात्काचमलं व्यपोहति ॥ १ ॥ शिलासैन्धवकासीसश-
ङ्खव्योषरसाञ्जनैः । सक्षौद्रैः काचशुक्रार्मतिमिरघ्नी रसक्रिया ॥२॥ इति काचोपक्रमः ॥
अथ पित्तविदग्धदृष्टेश्चिकित्सा ॥ रसाञ्जनं घृतक्षौद्रतालीसस्वर्णगैरिकैः । गोशकृद्र-
ससंयुक्तं पित्तोपहतदृष्टये ॥१॥ काश्मरीपुष्पमधुकदार्वीलोध्ररसाञ्जनैः । सक्षौद्रमञ्जनं
कुर्यात्पित्तव्याधिप्रशान्तये ॥२॥ अथ श्लेष्मविदग्धदृष्टेश्चिकित्सा ॥ हरेणुमगधाबीजम-
ञ्जनं यकृदन्वितम् । शकृद्रसेनाञ्जनं वा श्लेष्मोपहतदृष्टये ॥ १ ॥ अथ दिवान्धरा-
त्र्यन्धयोश्चिकित्सामाह ॥ नलिनोत्पलकिञ्जल्कगैरिकं सयकृद्रसम् । गुटिकाञ्जनमे-
तस्य दिनरात्र्यन्धयोर्हितम् ॥१॥ नदीजशङ्खत्रिकटून् रसाञ्जनं मनःशिला द्वे च निशे
गवां शकृत् । सचन्दनेयं गुटिकाशु कृत्वा प्रशस्यते रात्रिदिने न पश्यताम् ॥ २ ॥
सूर्यादिदर्शनैर्दग्धे तत्र शीतं प्रयोजयेत् । हेमघृष्टं घृतोपेतमञ्जनं चोपशस्यते ॥ ३ ॥
अथ केवलरात्र्यन्धचिकित्सा ॥ रसाञ्जनं हरिद्रे द्वे मालती निम्बपल्लवाः ।
गोशकृद्रससंयुक्ता वटी नक्तान्ध्यनाशनी ॥ १ ॥ एतस्याश्चाञ्जने मात्रा प्रोक्ता सार्ध-
हरेणुका । कणा छागयकृन्मध्ये पक्वा तद्रसपेषिता ॥ २ ॥ अचिराद्धन्ति नक्तान्ध्यं
तद्वत्सक्षौद्रमूषणम् । करञ्जपद्मकिञ्जल्कचन्दनोत्पलगैरिकैः ॥ ३ ॥ गोशकृद्रससंपिष्टै-
र्नक्तान्ध्ये हितमञ्जनम् । रसाञ्जनं शिला दारु जातीपत्ररसो मधु ॥ ४ ॥ नक्तान्धतां
जयेदेतदञ्जनं साधु योजितम् । मालतीपत्रक्षौद्रं च निशाद्वयरसाञ्जनैः ॥ ५ ॥ नक्ता-
न्ध्यमञ्जनं हन्यात्कृष्णा वा गोमयान्विता । दध्ना घृष्टं मरीचं वा रात्र्यन्धाञ्जनमुत्तमम्
॥ ६ ॥ इति दिवान्धरात्र्यन्धयोश्चिकित्सा ॥ अथ नकुलान्ध्यरोगस्य रागरहितस्य
चिकित्सा ॥ वचा त्रिवृच्चन्दनकुण्डली च भूनिम्बनिम्बरजनी सवासा । प्रस्थं जलस्य
क्वथिताष्टभागं पिबेत्सुजीर्णे नकुलान्ध्यरोगे ॥१॥ इति वङ्गसेनात् ॥ इति दृष्टिगतरोग-
चिकित्सा । अथ कृष्णगतरोगचिकित्सा । तत्रादौ सव्रणशुक्रप्रतिकारमाह । व्रणशुक्रप्र-

शान्त्यर्थं षडङ्गं गुग्गुलुं पचेत्। शिरसश्चाहरेद्रक्तं जलौकाभिश्च लोचनात् ॥१॥ ससैन्धवं त्रिवृत्क्वाथे त्रीन्वारान्पाचयेद् घृतम्। पीत्वा सर्वेषु शुक्रेषु शीघ्रं कुर्याच्छिराव्यधम् ॥२॥ अथ यष्ट्याह्वाद्याश्च्योतनम् ॥ यष्ट्याह्वदार्व्युत्पलपद्मलाक्षाप्रपौण्डरीकं नलदाम्बुना च। आश्च्योतनं स्त्रीपयसा विपक्वं निहन्ति तत्सव्रणदाहशुक्रम् ॥१॥ अथ लामज्जकाद्यञ्जनम् ॥ लामज्जकोत्पलसितासारिवाचन्दनद्वयैः। कार्षिकैः सारिवाप्रस्थं क्वाथयेत्सलिलाढके ॥१॥ पादशेषं परिस्राव्य पचेदादर्विलेपनात्। भाजने लोहशैले वा प्रातस्तत्सायमञ्जनम् ॥२॥ प्रधानमेतच्छुक्रघ्नं व्रणशुक्रं शमं नयेत्। श्यामामूलकषायं वा मधुना व्रणशुक्रिणाम् ॥ ३ ॥ अथ चन्दनादिवर्तिः ॥ चन्दनं गैरिकं लाक्षा मालती कलिकान्विता। व्रणशुक्रहरी वर्तिः शोणितस्य प्रसादनी ॥ १ ॥ अथाव्रणशुक्रचिकित्सा ॥ अथाश्च्योतनम् ॥ जात्याः प्रवालं मधुकं च सर्पिर्भृष्टं सुखोष्णाम्बुसुशीतलं च। आश्च्योतनं शुक्रहरं प्रदिष्टं शुक्रापहं स्त्रीपयसा महार्हम् ॥ १ ॥ अथ धात्रीफलादिसेचनम् ॥ धात्रीफलं निम्बकपित्थपत्रं यष्ट्याह्वलोध्रं खदिरं तिलाश्च। क्वाथः सुशीतो नयनेऽभिषिक्तः सर्वप्रकारं विनिहन्ति शुक्रम् ॥ १ ॥ अथ वर्तयः ॥ पलाशपुष्पस्वरसैर्बहुशः परिभाविता। करञ्जबीजवर्तिस्तु दृष्टेः पुष्पं व्यपोहति ॥ १ ॥ समुद्रफेनसिन्धूत्थशङ्खदक्षाङ्घ्रवल्कलैः। शिग्रुबीजयुतैर्वर्तिः शुक्रादीन् शस्त्रवल्लिखेत् ॥ २॥ अथ चन्द्रोदयवर्तिः ॥ रसाञ्जनं सशैलेयं कुङ्कुमं समनःशिलम्। शङ्खं सश्वेतमरिचं शर्करा चेति सप्तमम् ॥ १ ॥ एषा चन्द्रोदया नाम वर्तिर्वैदेहनिर्मिता। हन्यात्पिल्लं च कण्डुं च शुक्रं सतिमिरार्बुदम् ॥२॥ अथाञ्जनम् ॥ वटक्षीरेण संयुक्तं मुख्यं कर्पूरजं रजः। क्षिप्रमञ्जनतो हन्ति कुसुमं तु द्विमासिकम् ॥१॥ सङ्घृष्य पिप्पलीचूर्णं सफेनं कांस्यभाजने। सक्षौद्रं सैन्धवोपेतमञ्जनं शुक्रनाशनम् ॥ २ ॥ ताप्यं मधुकसारो वा बीजं चाक्षस्य सैन्धवम्। मधुनाञ्जनयोगाः स्युश्चत्वारः शुक्रनाशनाः ॥ ३ ॥ कुक्कुटाण्डकपालानि शङ्खः काचोऽथ चन्दनम्। सैन्धवार्धांशसंयुक्तमञ्जनं शुक्रलेखनम् ॥४॥ अथ लोहादिगुग्गुलुः ॥ अयश्च यष्टीत्रिफलाकणानां चूर्णानि तुल्यानि पुरेण नित्यम्। सर्पिर्मधुभ्यां सह भक्षितानि सर्वाणि शुक्राणि निहन्ति शीघ्रम् ॥१॥ अथ पटोलाद्यं घृतम् ॥ पटोलं कटुकादार्वीनिम्बवासाफलत्रिकम्। दुरालभां पर्पटकं त्रायन्तीं च पलोन्मिताम् ॥१॥ प्रस्थमामलकानां च क्वाथयेन्नल्वणेऽम्भसि। तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥२॥ कल्कैर्भूनिम्बकुटजमुस्तयष्ट्याह्वचन्दनैः। सपिप्पलीकैस्तत्सिद्धं चक्षुष्यं शुक्रयोजितम् ॥३॥ घ्राणकर्णाक्षिवर्त्मत्वङ्मुखरोगव्रणापहम्। कामलाज्वरवीसर्पगण्डमालापहं परम् ॥ ४ ॥ अथ कृष्णाद्यं तैलम् ॥ कृष्णाविडङ्गमधुयष्टिकसिन्धुजन्मविश्वौषधैः पयसि सिद्धमिदं छगल्याः। तैलं व्रणं तिमिरशुक्रशिरोक्षिवर्त्मपाकात्ययाञ्जयति नस्यविधौ प्रयुक्तम् ॥ १ ॥ अथाक्षिपाकात्ययचिकित्सामाह ॥ एर्वारु पुण्डरीकं च गवां क्षीरावशेषितम्। रागाश्रुवेदनां हन्यादक्षिपाकात्ययं तथा ॥ १ ॥ अथाजकाचिकित्सा-

१ (च०) परिश्राव्य। २ (कौ०)-महारि। ३ (च०) उर्वारु।

माह ॥ मूर्धाक्षिकर्णभ्रूगण्डशङ्खचर्माश्रिताजका । जायते व्यथते नेत्रं मथ्यमानमिवान्तरा ॥ १ ॥ उष्णमश्रु स्रवत्यक्षि दूषितं क्लिद्यते भृशम् । असाध्यरोगसम्भूतां दृष्टिजां च विवर्जयेत् ॥ २ ॥ स्वयं प्रवृद्धां कठिनां चिरकालोत्थितामपि । साध्यरोगसमुत्पन्नां कृष्णजां त्वजकां जयेत् ॥ ३ ॥ अजकायां शिरां मुक्त्वा त्रिवृच्चूर्णैर्विरेचयेत् । घृतं वातहरैः सिद्धमजकायां प्रयोजयेत् ॥ सेके पाने तथाभ्यङ्गे भोज्ये दृष्टिविदां वरः ॥ ४ ॥ पक्ववटपत्रपुटके विधाय मांसं धवलकर्कटकान् । पुटवह्निदग्ध बद्ध्वा तद्रससेको जयेदजकाम् ॥५॥ गवामस्थित्वचं कांस्ये विनिर्घृष्य सुखाम्बुना। पूरयेदक्षि तेनाशु प्रशाम्यत्यजकामयः ॥६॥ अङ्गारपक्वशम्बूकरसेनाश्चोतनाञ्जनम् । कर्पूरचूर्णयुक्तेन शाम्यते त्वजकामयः ॥ ७ ॥ सैन्धवं वाजिपादं च गोरोचनसमायुतम् । शेलुत्वग्रससंयुक्तं पूरणं चाजकापहम् ॥ ८ ॥ अथ शशकादिघृतम् ॥ शशकस्य कषाये तु घृतप्रस्थं विपाचयेत् । कल्कं दद्यात्तु सक्षीरं यथोक्तान्कर्षसम्मितान् ॥ १ ॥ सारिवा मधुकं लाक्षा चन्दनं नीलमुत्पलम् । बला चातिबला चैव मृणालं पत्रकं तथा ॥२॥ कार्षिकं सविषं लोध्रं जीवनीयगणान्वितम् । घृतमेतत्प्रयोक्तव्यं पाने नस्ये च पूरणे ॥ ३ ॥ अजकामर्जुनं काचं पटलं शुक्रमेव च । तथाक्षिरोगान्सकलान्वातपित्तोत्तराञ्जयेत् ॥ ४ ॥ इति कृष्णगतरोगचिकित्सा ॥ अथ शुक्लजाः ॥ प्रस्तार्यर्मानस्राय्वर्म तथैवार्माधिमांसकम् । लोहितार्म सशुक्लार्म कृष्णपाप्मानि वेदयेत् ॥ १ ॥ अर्मवाच्यं दधिनिभं नीलं रक्तमथापि वा । धूसरं तनु यच्चाशु शुक्रवत्समुपाचरेत् ॥ २ ॥ अथ कृष्णादिपुटपाकः ॥ कृष्णालोहरजस्ताम्रशङ्खविद्रुमसिन्धुजैः । समुद्रफेनकासीसस्रोतोऽञ्जदधिमस्तुभिः ॥ लेखने वा कृते तस्य परं धारणमिष्यते ॥१॥ अथ पिप्पल्यादिगुटिकाञ्जनम् ॥ पिप्पलीत्रिफलालाक्षालोहचूर्णं ससैन्धवम् । भृङ्गराजरसे पिष्टं गुटिकाञ्जनमिष्यते ॥ १ ॥ अर्म सतिमिरं काचं कण्डुं शुक्रमथार्जुनम् । अजकां नेत्ररोगांश्च हन्यान्निरवशेषितः ॥ २ ॥ अथ मरिचादिलेपः ॥ संचूर्ण्य मरिचाक्षे च रजन्या रसमर्दिते । लेपनादर्मणां नाशं करोत्येष प्रयोगराट् ॥ १ ॥ अथ पुष्पाक्षादिरसक्रिया ॥ पुष्पाक्षतार्क्ष्यजसितोदधिफेनशङ्खसिन्धूत्थगैरिकशिलामरिचैः समांशैः । पिष्टैस्तु माक्षिकरसेन रसक्रियेयं हन्त्यर्मकाचतिमिरार्जुनवर्त्मरोगान् ॥१॥ क्रिया शुक्लामये कार्या पित्ताभिष्यन्दजिच्छुभा । बलासाह्वयपिष्टे तु कार्यं शोणितमोक्षणम् ॥२॥ कफाभिष्यन्दजित्सर्वं क्रमं कुर्याद्विचक्षणः । अञ्जनं कट्फलव्योषबीजपूररसाञ्जनैः ॥ ३ ॥ अर्जुने शर्करामस्तुक्षौद्रैराश्चोतनं हितम् । शङ्खः क्षौद्रेण संयुक्तः कतकः सैन्धवेन वा ॥ सितयार्णवफेनो वा पृथगञ्जनमर्जुने ॥ ४ ॥ इति शुक्लगतरोगचिकित्सा ॥ अथ वर्त्मपक्ष्मजाः ॥ उत्सङ्गिनी बहलकर्दमवर्त्मनी च श्यावं च यानि पठितानि हि यच्च वर्त्म । क्लिष्टं च पोथकियुतं खलु वर्त्म यच्च कुम्भीकिनी च सह शर्करया च लेख्यः ॥ श्लेष्मापनाहलगणं च विशं च

---

१ (च०) प्रस्तार्यर्माय । २ (च०) श्लेष्मोपनाह— । ३ (ख० घ०) विषं ।

मेधा ग्रन्थिश्च यः क्रमिकतोऽञ्जननामिका च ॥१॥ स्विन्नां भित्त्वा विनिष्पीड्य भिन्नाम-ञ्जननामिकाम् । शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ॥२॥ रसाञ्जनमधुभ्यां वा भित्त्वा शस्त्रेण वर्त्मवित् । प्रतिसार्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः ॥ ३ ॥ स्वेदयेद् घृष्टयाङ्गुल्या हरेद्रक्तं जलौकसाम् । करे सङ्घृष्य दुर्वर्ण्यमञ्जयेल्लोचने मुहुः ॥४॥ द्वित्रिवाराञ् शमयति कण्डूदोषान्विताञ्जनम् । रसाञ्जनं व्योषयुतं सपिष्टं वटकीकृतम् ॥ ५ ॥ कण्डूपाकान्वितं हन्ति नूनमञ्जननामिकाम् । रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रमेव च ॥ ६ ॥ प्रतिसारणमेकैकं भिन्ने लगण इष्यते । निमेषं नाशमायाति सर्पिस्तेन च पूरणम् ॥७॥ स्वेदयित्वा बिसग्रन्थिंश्छिद्राण्यस्य निराश्रयेत् । पक्वं भित्त्वा तु शस्त्रेण सैन्धवेन प्रपूरयेत् ॥८॥ इति निमेषबिसग्रन्थी ॥ अथ क्लिन्नवर्त्म ॥ आलदारुवचाः पिष्ट्वा सुरसापत्रवारिणा । छायाशुष्का कृता वर्तिः क्लिन्नवर्त्मनिवारणी ॥ १ ॥ रसाञ्जनं सर्जरसो जातिपुष्पं मनःशिला । समुद्रफेनो लवणं गैरिकं मरिचानि च ॥२॥ एतत्समांशं मधुना पिष्ट्वा प्रक्लिन्नवर्त्मनि । अञ्जनं क्लेदकण्डुघ्नं पक्ष्मणां च प्ररोहणम् ॥ ३ ॥ अथ पिल्लम् ॥ पित्तश्लेष्मप्रकोपेण वर्त्मांतः संप्रकुप्यते । नाम्नातिलोमशं वापि विक्लिष्टं पिल्लमेव च ॥ १ ॥ वर्त्मावलेख्यं बहुशस्तद्वच्छोणितमोक्षणम् । पुनः पुनर्विरेकं च पिल्लरोगातुरो भजेत् ॥ २ ॥ पिल्ली स्निग्धो वमेत्पूर्वं क्रियाव्यवस्तेऽसृजि । शिलारसाञ्जनव्योषगोपित्तैर्वर्तिरञ्जनम् ॥ ३ ॥ पिल्लघ्नं छागमूत्रेण भावितं देवदारु च । हरितालवचादारुसुरसारसपेषितम् ॥ ४ ॥ अभयारससंपिष्टं तगरं पिल्लनाशनम् । ताम्रपात्रे गुहामूलं सिन्धूत्थं मरिचान्वितम् ॥ ५ ॥ आरनालेन संघृष्टमञ्जनं पिल्लनाशनम् । तुत्थकस्य पलं श्वेतमरिचानि च विंशतिः ॥६॥ त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् । पिल्लानपिल्लान्कुरुते बहुवर्षोत्थितानपि ॥ उत्सेकेनोपदेहेन कण्डूशोथांश्च नाशयेत् ॥७॥ अथ पक्ष्मरोगयोश्चिकित्सा ॥ रक्षन्नक्षि दहेत्पक्ष्म तप्तलोहशलाकया । पक्ष्मकोपे पुनर्नैवं कदाचिद्रोमसंभवः ॥१॥ पुष्पकासीसचूर्णं वा सुरसारसभावितम् । ताम्रे दशाहं तद्योज्यं पक्ष्मशातनलेपनम् ॥ २ ॥ इति वर्त्मपक्ष्मजाः ॥ अथ सन्धिजानां चिकित्सामाह ॥ तत्र पूयालसचि० ॥ पूयालसे शिरां भित्त्वा लेपोपनाहकर्मभिः । नेत्रपाकविधिः कुर्यात्परमुक्ताञ्जनं हितम् ॥१॥ आर्द्रकस्वरसैर्घृष्टं सिन्धुकासीससंमितम् । छायाशुष्कां वर्तिं कुर्यात् पूयाख्ये हितमञ्जनम् ॥ २॥ अथोपनाहालज्योश्चिकित्सा ॥ हितोपनाहे त्वलजे पिप्पली मधुसैन्धवैः । विलिखेन्मण्डलाग्रेण छेदयेद्वा समन्ततः ॥१॥ अथ स्रावाः ॥ स्रावेषु त्रिफलाक्वाथं यथादोषं प्रयोजयेत् । क्षौद्रेणाज्येन पिप्पल्या मिश्रं विध्येच्छिरां तथा ॥१॥ पथ्याक्षधात्रीफलमध्यबीजैस्त्रिद्व्येकभागैर्विदधीत वर्तिम् । तयाञ्जयेदस्रमतिप्रवृद्धमक्ष्णोर्हरेत्कष्टमपि प्रकोपम् ॥ २॥ कार्पासीफलजम्ब्वाम्रजलैर्घृष्टं रसाञ्जनम् । मधुयुक्तं चिरोत्थं च चक्षुःस्रावमपोहति ॥ ३ ॥ अथ पर्वणीका ॥ पर्वणीपिटकां सन्धिभागे छिन्द्यादसंशयम् । हितमाश्चोतनं तत्र योजयेन्मधुसैन्धवैः ॥ १ ॥

---

१ ( ख० ध० ) मेधा । २ ( घ० ) जलौकया । ३ ( क० ) क्षारं । ४ ( क० ) प्रपच्छेद्वा ।

अथ जन्तुग्रन्थिः ॥ त्रिफलामृतकासीससैन्धवैः सरसाञ्जनैः । रसक्रियां कृमिग्रन्थौ भिन्ने स्यात्प्रतिसारणम् ॥ १ ॥ इति सन्धिजाः ॥ अथ समस्तनेत्रजरोगचिकित्सामाह ॥ तत्र सेकविधिः ॥ सेकस्तु सूक्ष्मधाराभिः सर्वस्मिन्नयने हितः । मीलिताक्षस्य मर्त्यस्य प्रदेयश्चतुरङ्गुलः ॥ १ ॥ सर्वोऽपि स्नेहनो वाते रक्ते पित्ते च रोपणः । लेखनश्च कफे कार्यस्तत्र मात्राधुनोच्यते ॥२॥ षड्वाक्शतैः स्नेहनेषु चतुर्भिश्चैव रोपणे । वाक्शतैश्च द्विभिः कार्यः सेको लेखनकर्मणि ॥ कार्यस्तु दिवसे सेको रात्रौ वात्ययिके गदे ॥ ३ ॥ अथाश्चोतनविधिः ॥ अथ त्वाश्चोतनं कार्यं निशायां न कथंचन । उन्मीलितेऽक्षिण दृङ्मध्ये बिन्दुभिर्द्व्यङ्गुलोधिकम् ॥१॥ बिन्दवोऽष्टौ लेखनेषु स्नेहने दश बिन्दवः । रोपणे द्वादश प्रोक्तास्ते शीते कोष्णरूपिणः ॥ २ ॥ उष्णे च शीतरूपाः स्युः सर्वत्रैवैष निश्चयः । वाते तिक्तं तथा स्निग्धं पित्ते मधुरशीतलम् ॥ ३ ॥ तिक्तोष्णरूक्षं च कफे क्रमादाश्चोतनं हितम् । आश्चोतनानां सर्वेषां मात्रा स्याद्वाक्शतोन्मिता ॥४॥ निमेषोन्मेषणं पुंसामङ्गुल्योश्छोटिकाथ वा । गुर्वक्षरोच्चारणं वा वाङ्मात्रेयं स्मृता बुधैः ॥५॥ अथ पिण्डिकाविधिः ॥ पिण्डिकावलिका प्रोक्ता बध्यते वस्त्रपट्टकैः । नेत्राभिष्यन्दयोग्या सा व्रणेष्वपि निगद्यते ॥१॥ अथ बिडालविधिः ॥ बिडालको बहिर्लेपो नेत्रे पक्ष्मविवर्जिते । तस्य मात्रा परिज्ञेया मुखलेपविधानवत्* ॥ १ ॥ अथ तर्पणविधिः ॥ अथ तर्पणकं वच्मि नेत्रतृप्तिकरं परम् ॥१॥ यच्चक्षुः परिशुष्कं च नेत्रं कुटिलमाविलम् । शीर्णपक्ष्मशिरोत्पातकृच्छ्रोन्मीलनसंयुतम् ॥ २ ॥ तिमिरार्जुनशुक्राद्यैरभिष्यन्दाधिमन्थकैः । शुष्काक्षिपाकशोथाभ्यां युतं वातविपर्ययैः ॥ ३ ॥ तन्नेत्रं तर्पणे योज्यं नेत्ररोगविशारदैः । दुर्दिनात्युष्णशीतेषु चिन्तायासभ्रमेषु च ॥ ४ ॥ अशान्तोपद्रवे चाक्षिण तर्पणं न प्रशस्यते । वातातपरजोहीने देशे चोत्तानशायिनः ॥ ५ ॥ आधारौ माषचूर्णेन क्लिन्नेन परिमण्डलौ । समौ दृढावसम्बाधौ कर्तव्यौ नेत्रकोशयोः ॥६॥ पूरयेद् घृतमण्डेन विलीनेन सुखोदकैः । अथवा शतधौतेन सर्पिषा क्षीरजेन वा ॥७॥ निमज्जन्त्यक्षिपक्ष्माणि यावता तावदेव हि । पूरयेन्मीलिते नेत्रे तत उन्मीलयेच्छनैः ॥ ८ ॥ धारयेद्वर्त्मरोगेषु वाङ्मात्राणां शतं बुधः । स्वच्छे कफे सन्धिरोगे मात्रा पञ्चशतं हितम् ॥ ९ ॥ कफे च षट्शतं कृष्णरोगे सप्तशतं मतम् । दृष्टिरोगेष्वष्टशतमधिमन्थे सहस्रकम् ॥१०॥ सहस्रं वातरोगेषु धार्यमेवं हि तर्पणम् । एकाहं वा त्र्यहं वापि पञ्चाहं चेष्यते परम् ॥११॥ तर्पणात्तृप्तिलिङ्गानि नेत्रस्यैतानि लक्षयेत् । सुखं स्वप्नावबोधत्वं वैशद्यं वर्णवर्जितम् ॥१२॥ निर्वृतिर्व्याधिशान्तिश्च क्रियालाघवमेव च । अथ सातृग्गुरुस्निग्धं नेत्रं स्यादतितर्पितम् ॥ १३ ॥ रूक्षमस्राविलं रूक्षं नेत्रं स्याद्धीनतर्पणम् । रूक्ष-

---

* मुखालेपो यथा—अङ्गुलस्य चतुर्थांशो मुखालेपः कनिष्ठिकः । मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्धाङ्गुलो भवेत् ॥ १ ॥ स्थितिकालोऽपि तस्योक्तो यावत्कल्को न शुष्यति । तेनापि गुणहीनः स्यात्तथा दूषयति च्छविम् (त्वचम्) ॥ २ ॥

१ (च० पु० अवान्तरः पाठः) षड्भिर्वाग्भिः शतैः । २ (च०) त्वाहितम् । ३ (च. पु. पा०) अङ्गुल्या छोटिका— । ४ (च०) स्वल्पे । ५ (च०) वर्णनार्पितम् ।

स्निग्धोपचाराभ्यामेतयोः स्यात्प्रतिक्रिया ॥१४॥ अथाभिष्यन्दचिकित्सामाह ॥ तेषु वातिकाभिष्यन्दचिकित्सा ॥ अथ सेकः ॥ एरण्डत्वक्पत्रमूलैः शृतमाजं पयो हितम् । सुखोष्णं सेचनं नेत्रे वाताभिष्यन्दनाशनम् ॥१॥ परिषेके हितं नेत्रे पयः कोष्णं ससैन्धवम् । रजनीदारुसिद्धं वा सैन्धवेन समन्वितम् ॥ वाताभिष्यन्दशमनं हितं मारुतपर्यये ॥ २ ॥ अथाश्चोतनम् ॥ बिल्वाद्रिपञ्चमूलेन बृहत्यैरण्डशिग्रुभिः । क्वाथश्चाश्चोतनं कोष्णं वाताभिष्यन्दनाशनः ॥१॥ अम्बुपिष्टैर्निम्बपत्रैस्त्वचं लोध्रस्य पेषयेत् । प्रताप्य वह्निना पिष्टा तद्रसो नेत्रपूरणात् ॥ वातोत्थरक्तपित्तोत्थमभिष्यन्दं विनाशयेत् ॥ २ ॥ अथ पिण्डिका ॥ वाताभिष्यन्दशान्त्यर्थं स्निग्धोष्णा पिण्डिका भवेत् । एरण्डपत्रमूलत्वङ्निर्मिता वातनाशिनी ॥ १ ॥ अथाञ्जनम् ॥ हरिद्रामधुकं पथ्यादेवदारु च पेषयेत् । आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ॥ १ ॥ अथ पित्ताभिष्यन्दचिकित्सा ॥ अथ सेकः ॥ चन्दनारिष्टपत्राणि यष्टीदार्व्यासमसैन्धवैः । पिष्टाम्भसा भवेत्सेकः पित्ते क्षौद्रसमन्वितः ॥ १ ॥ अथाश्चोतनम् ॥ निम्बस्य पत्रैः परिलिप्य लोध्रं स्वेदोऽग्निना चूर्णमथापि कल्कम् । आश्चोतनं मानुषदुग्धमिश्रं पित्तास्रवातापहमग्र्यमुक्तम् ॥ १ ॥ द्राक्षामधुकमञ्जिष्ठजीवनीयैः शृतं पयः । प्रातराश्चोतनं पथ्यं दाहशूलाक्षिरागजित् ॥ २॥ अथ पिण्डिका ॥ पित्ताभिष्यन्दनाशाय धात्रीपिण्डी सुखावहा । महानिम्बदलोद्भूता पिण्डिका पित्तनाशनी ॥ १ ॥ अथ बिडालकः ॥ पैत्तिके चन्दनानन्तामञ्जिष्ठाभिर्बिडालकः । कार्यः सपद्मयष्ट्याह्वमांसीकालीयकैस्तथा ॥ १ ॥ चन्दनं मधुकं लोध्रं जातीपुष्पाणि गैरिकम् । प्रलेपो दाहरोगघ्नस्तोदाभिष्यन्दनाशनः ॥ २ ॥ अथ श्लैष्मिकाभिष्यन्दचिकित्सामाह ॥ कफजे लङ्घनं स्वेदो नस्यं तिक्तादिभोजनम् । तीक्ष्णैः प्रधमनं कुर्यात्तीक्ष्णैरेवोपनाहनम् । रूक्षतीक्ष्णविरेकैश्च मलं सम्यग् विनिर्हरेत् ॥१॥ अथ सेकः ॥ निम्बार्कपत्रसंपक्कं लोध्रं भागचतुष्टयम् । धूपः सर्पिः पयोभागैः कफे सेकः सुखाम्बुना ॥ १ ॥ अथाश्चोतनम् ॥ ससैन्धवं लोध्रमथाज्यभृष्टं सौवीरपिष्टं सितवस्त्रबद्धम् । आश्चोतनं तन्नयनस्य कुर्यात्कण्डूं च दाहं च रुजं च हन्यात् ॥ १ ॥ अथ पिण्डिका ॥ शिग्रुपत्रकृता पिण्डी श्लेष्माभिष्यन्दहारिणी । शुण्ठीनिम्बदलैः पिण्डी सुखोष्णा स्वल्पसैन्धवा ॥ धार्या चक्षुषि संयोगाच्छोथकण्डुव्यथाहरा ॥ १ ॥ अथ बिडालकः ॥ रसाञ्जनेन वा लेपः पथ्याविश्वदलैरपि । वचाहरिद्राविश्वैर्वा तथा नागरगैरिकैः ॥ १ ॥ अथ स्वेदनम् ॥ फणिज्जकास्फोतककपित्थबिल्वधत्तूरभङ्गार्जुनपत्रयोगैः । स्वेदं विदध्यादथ वा प्रलेपं सलोध्रशुण्ठीसुरदारुकुष्ठैः ॥ १ ॥ अथ सामान्योपचारः ॥ वल्कलं पारिजातस्य तैलसैन्धवकाञ्जिकम् । कफजाक्षिजशूलघ्नं तरुघ्नं कुलिशं यथा ॥ १ ॥ सौवीरं सैन्धवं तैलं मूर्वामूलं तथैव च । कांस्यपात्रे विघृष्टं स्यादक्ष्णोः शूलनिवारणम् ॥ २ ॥ सलवणकटुतैलं काञ्जिकं कांस्यपात्रे घनितमुपलघृष्टं धूपितं गोमयाग्नौ । सपवनकफकोपं छागदुग्धावसि-

१ ( च० ) निहित—।

कं जयति नयनशूलं स्रावशोथं सरागम् ॥३॥ स्यन्दाधिमन्थे क्रममाचरेच्च सर्वेषु चैतेषु सदा प्रशस्तम् ॥ ४ ॥ अथ रक्तजाभिष्यन्दचिकित्सामाह ॥ अथ सेकः ॥ त्रिफला-लोध्रयष्टीभिः शर्कराभद्रमुस्तकैः। पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः ॥ १ ॥ अथाश्चोतनम् ॥ स्त्रीस्तन्याश्चोतनं नेत्रे रक्तपित्तानिलार्तिजित्। क्षीरसर्पिर्घृतं वापि रक्तपित्तरुजं जयेत् ॥ १ ॥ लोध्रचूर्णं घृते घृष्टं रुजमाश्चोतनैर्हरेत्। शर्करात्रिफ-लाचूर्णमिदमाश्चोतनं परम् ॥ २ ॥ अथाञ्जनम् ॥ श्रीपर्णीपाटलाधात्रीधातकीति-ल्वकार्जुनात्। पुष्पाण्यथ बृहत्याश्च बिम्बीलोध्रं च तुल्यशः ॥ १ ॥ मञ्जिष्ठं चापि मधुना पिष्ट्वापीक्षुरसेन वा। रुधिरस्यन्दशान्त्यर्थमेतदञ्जनमिष्यते ॥ २ ॥ अथ वासादिक्वाथः ॥ आटरूषाभयानिम्बधात्रीमुस्तकमूलकैः। रक्तास्रावं कफं हन्ति चक्षुष्यं वासकादिकम् ॥ १ ॥ अथाधिमन्थान्यतोवातयोश्चिकित्सा ॥ अधिम-न्थेषु सर्वेषु ललाटे व्यधयेच्छिराम्। अशान्ते सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥१॥ अभिष्यन्देषु याः प्रोक्ताश्चतुर्ष्वपि प्रतिक्रियाः। ताः सर्वा अधिमन्थेषु प्रयोज्याश्च भिषग्व-रैः ॥२॥ सर्व एव विधिः सर्वमन्थादिष्वपि चेष्यते। तथा चाप्यन्यतोवाते सामान्यो वक्ष्यते विधिः ॥ ३॥ यष्टीं गुडूचीं त्रिफलां सदार्वीमिक्ष्यामये सर्वभवे पिबेद्वा। आश्चो-तनं सान्द्ररसेन दार्व्याः शस्तं सदा क्षौद्रयुतं नराणाम् ॥ ४ ॥ गुडूचीत्रिफलाक्वाथो मधुना सह योजितः। पीतः सर्वाक्षिरोगघ्नः कृष्णाचूर्णावचूर्णितः ॥ ५ ॥ प्रपौण्डरी-कयष्ट्याह्वदार्वीलोध्रैः सचन्दनैः। एरण्डाम्बुयुतैः सेकैः सर्वनेत्ररुजापहः ॥ ६ ॥ श्वे-तलोध्रं घृते भृष्टं चूर्णितं ताप्यतुत्थकम्। कृष्णाम्बुना विमृदितं सेकः शूलहरः परः ॥ ७ ॥ यष्टीगैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः। जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः ॥८॥ दग्ध्वा स सैन्धवं लोध्रं मधूच्छिष्टयुते घृते। पिष्टमञ्जनलेपाभ्यां सद्यो नेत्ररुजा-पहम् ॥ ९ ॥ लोहस्य पात्रे संघृष्टो रसो निम्बुफलोद्भवः। किंचिद्घनो बहिर्लेपान्नेत्र-व्याधिं व्यपोहति ॥ १० ॥ निम्बस्य चोदुम्बरवल्कलस्य एरण्डयष्टीमधुचन्दनस्य। पिण्डो विधेयो नयनप्रकोपे कफेन पित्तेन समीरणेन ॥ ११ ॥ अथ शोथपाकयोश्चि-कित्सा ॥ जलौकापातनं श्रेष्ठं नेत्रपाके विरेचनम्। शिराव्यधं वा कुर्वीत सेक-लेपौ च शुक्रवत् ॥१॥ बिभीतकशिवाधात्रीपटोलारिष्टवासकैः। क्वाथो गुग्गुलुसंयुक्तः शोथशूलाक्षिरोगनुत् ॥ २ ॥ अथ वातपर्ययशुष्काक्षिपाकयोश्चिकित्सा ॥ वाताभि-ष्यन्दवच्चात्र वातमारुतपर्यये। अनेनैव विधानेन भिषक् चैवाभिसाधयेत् ॥ १ ॥ पूर्वं तत्र हितं सर्पिः क्षीरं वाप्यथ भोजनम्। परिषेको हितं नेत्रे पयः कोष्णं स-सैन्धवम् ॥ २ ॥ रजनीदारुसिद्धं वा सैन्धवेन समन्वितम्। वाताभिष्यन्दशमनं हितं मारुतपर्यये ॥३॥ शुष्काक्षिपाके च सदा इदं सेचनकं हितम्। सैन्धवं दारु शुण्ठी च मातुलिङ्गरसे घृतम् ॥४॥ स्तन्योदकाभ्यां कुर्वीत शुष्कपाके तदञ्जनम्। शुष्काक्षिपाके हविषः पानमक्ष्णोश्च तर्पणम् ॥ घृतेन जीवनीयेन नस्यं तैलेन योजयेत् ॥ ५ ॥ अथा-

१ (ख० ग० घ० ङ०) कूलकैः।

म्लाध्युषितमाह ॥ तिक्तस्य सर्पिषः पानं बहुशश्च विरेचनम् । अम्लाध्युषितशान्त्यर्थे कुर्यात्प्रलेपान्सुशीतलान् ॥ १ ॥ बिल्वकं त्रिफलां सर्पिर्जीर्णं वा केवलम्पिबेत् । शिराव्यधं विना कार्यः पित्तस्यन्दहरो विधिः ॥२॥ अथ शिरोत्पातशिराहर्षयोश्चिकित्सा ॥ शिरोत्पातं शिराहर्षमन्यांश्चास्रभवान्गदान् । स्निग्धस्य कोष्णेनाज्येन शिरावेधैः शमं नयेत् ॥ १ ॥ सर्पिः क्षौद्रं चाञ्जनं स्याच्छिरोत्पातस्य भेषजम् । तद्वत्सैन्धवकासीसं स्तन्यपिष्टं च पूजितम् ॥२॥ शिराहर्षेऽञ्जनं कार्यं फाणितं मधुसंयुतम् । मधुना तार्क्ष्यशैलं च कासीसं वा समाक्षिकम् ॥३॥ वेतसाम्लं स्तन्ययुतं फाणितं तु ससैन्धवम् । पित्ताभिष्यन्दशमनं विधिं चात्रापि योजयेत् ॥ ४ ॥ इति सर्वजाः ॥ अथ ग्रन्थान्तरे नयनाभिघातस्य निदानचिकित्से ॥ स्रवत्यश्रु च यन्नेत्रं वृतं लोहितराजिभिः । निमेषोन्मेषणाशक्तं सशल्यं तं विनिर्दिशेत् ॥ १ ॥ नेत्रे त्वभिहते कुर्याच्छीतमाश्चोतनं हितम् । पुनर्नवामूलकल्कात् पिण्डीलेपे कुचन्दनम् ॥ अन्तःस्त्रीस्तन्यसेकश्च रक्तमोक्षश्च शस्यते ॥ २ ॥ दृष्टिप्रसादजननं विधिमाशु कुर्यात्स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः । स्वेदाग्निधूमभयशोकरुजादितापैरभ्याहतामपि तथैव भिषक् चिकित्सेत् ॥३॥ सूर्योर्चिराशाम्बरविद्युतादिविलोकनेनोपहतेक्षणस्य । सन्तर्पणं स्निग्धहिमादि कार्यं सायं निषेव्यस्त्रिफलाप्रयोगः ॥ ४ ॥ निशाब्दत्रिफलादार्वी[1] सितामधुसमन्विता । अभिघाताक्षिशूलघ्नं नारीक्षीरेण पूरणम् ॥ ५ ॥ साबरं मधुकं तुल्यं घृतभृष्टं सुचूर्णितम् । छागक्षीरोत्थितं सेकः पित्तरक्ताभिघातजित् ॥६॥ इति नयनाभिघातः ॥ क्षौद्राश्वलालासंघृष्टैर्मरिचैर्नेत्रमञ्जयेत् । अतिनिद्रा शमं याति तमः सूर्योदयादिव ॥१॥ जातीपुष्पं प्रवालं च मरिचं कटुका वचा । सैन्धवं बस्तमूत्रेण पिष्टं तन्द्राघ्नमञ्जनम् ॥ २ ॥ अथ नेत्ररोगे भीमसेनीकर्पूरः ॥ सुधांशोर्वसुभागाः स्युरेलाभागद्वयं तथा । चन्दनं चाब्धिफेनं च बीजं कतकसंभवम् ॥ १ ॥ रसाञ्जनं भद्रमुस्तं प्रत्येकं कर्षसंमितम् । सर्वं दुग्धे विमर्द्याथ पिण्डे गोधूमपिष्टवत् ॥ २ ॥ कृत्वा पात्रे निधायाथ क्षिपेत्पात्रं तथोपरि । अधः प्रज्वालयेद्दीपं वर्त्याङ्गुष्ठसमानया ॥ ३ ॥ एवं प्रहरपर्यन्तं वह्निं कुर्याच्च युक्तितः । पात्रस्योपरिभागं तु शीतलं रक्षयेद्बुधः ॥ ४ ॥ सदार्द्रचैलखण्डेन शीतलेन च वारिणा । स्वाङ्गशीतं ततो ज्ञात्वा पश्चात्कर्पूरमाहरेत् ॥ ५॥ स्फटिकाकारमत्यच्छं श्वेतहीरमणिप्रभम् । भीमसेन्याख्यकर्पूरमौषधेषु प्रयोजयेत् ॥ ६॥ इति भीमसेनीकर्पूरः ॥ अथ पथ्यापथ्यम् ॥ आश्चोतनं लङ्घनमञ्जनं च स्वेदो विरेको प्रतिसारणं च । प्रपूरणं नस्यमसृग्विमोक्षः शस्त्रक्रिया लेपनमाज्यपानम् ॥ १ ॥ सेको मुनीष्टा तिमिरघ्नपूजा मुद्गा यवा लोहितशालयश्च । कौम्भं हविर्वन्यकुलत्थयूषः पेया विलेपी सुरणं पटोलम् ॥२॥ वार्ताककर्कोटककारवेल्लं नवीनमोचं नतमूलकं च । पुनर्नवामार्कवकाकमाची पत्तूरशाकानि कुमारिका च ॥ ३ ॥ कुस्तुम्बुरुः शीरकमाणिमन्थो रोध्रं वरा क्षौद्रमुपानहश्च । नारीपयश्चन्दनमिन्दुखण्डं

[1] (च० ) निशाम्बु ।

तिक्तानि सर्वाणि लघूनि चापि ॥ ४ ॥ विजानता पथ्यमिदं प्रयुक्तं यथामलं नेत्रगदं निहन्ति । क्रोधं शुचं मैथुनमश्रुवायुविण्मूत्रनिद्रावमिवेगरोधम् ॥ ५ ॥ सूक्ष्मेक्षणं दन्तविघर्षणं च स्नानं निशाभोजनमातपं च । प्रजल्पनं छर्दनमम्बुपानं मधूकपुष्पं दधिपत्रशाकम् ॥ ६ ॥ कालिङ्गपिण्याकविरूढकानि मत्स्यं सुरामांसमजाङ्गलं च । ताम्बूलमम्लं लवणं विदाहि तीक्ष्णं कदुष्णं गुरु चान्नपानम् ॥ नरो न सेवेत हिताभिलाषी सर्वेषु रोगेषु दृगाश्रयेषु ॥ ७ ॥ शालितण्डुलगोधूममुद्गसैन्धवगोघृतम् । गोपयश्च सिता क्षौद्रं पथ्यं नेत्रगदे स्मृतम् ॥ ८ ॥ सर्वं शाकमचक्षुष्यं चक्षुष्यं शाकपञ्चकम् । जीवन्ती वास्तु मत्स्याक्षी मेघनादः पुनर्नवा ॥ ९ ॥ माषारनालकटुतैलजलावगाहक्षुद्राक्षुरैश्च सुरतैर्निशि जागरैश्च । शाकाम्लमत्स्यदधिफाणितवेसवारैश्चक्षुः क्षयं व्रजति सूर्यविलोकनाच्च ॥ १० ॥ इति नेत्ररोगाधिकारः ॥

---

## ॥ अथ स्त्रीरोगाधिकारः ॥

तत्रादौ प्रदरस्य निदानमाह ॥ विरुद्धमद्याध्यशनादजीर्णाद् गर्भप्रपातादतिमैथुनाच्च यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च ॥ १ ॥ तं श्लेष्मपित्तानिलसंनिपातैश्चतुष्प्रकारं प्रदरं वदन्ति ॥ २ ॥ प्रदरस्य सामान्यलक्षणमाह ॥ असृग्दरं भवेत्सर्वं साङ्गमर्दं सवेदनम् ॥ १ ॥ अथ श्लैष्मिकस्य लक्षणमाह ॥ आमं सपिच्छप्रतिमं सपाण्डु पुलाकतोयप्रतिमं कफात्तु ॥ १ ॥ पैत्तिकमाह ॥ सपीतनीलासितरक्तमुष्णं पित्तार्तियुक्तं भृशवेगि पित्तात् ॥ १ ॥ वातिकमाह ॥ रूक्षारुणं फेनिलमल्पमल्पं वातात्सतोदं पिशितोदकाभम् ॥ १ ॥ अथ सान्निपातिकमाह ॥ सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं त्रिदोषम् । तं चाप्यसाध्यं प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक् चिकित्साम् ॥ १ ॥ अथ रक्तस्यातिप्रवृत्तावुपद्रवानाह ॥ तस्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा । दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगश्च वातजाः ॥ १ ॥ अथासाध्यां प्रदरव्याधिमतीमाह ॥ शश्वत् स्रवन्तीमास्रावं तृषादाहज्वरान्विताम् । दुर्बलां क्षीणरक्तां च तामसाध्यां विवर्जयेत् ॥ १ ॥ अथ चिकित्सानिवृत्त्यर्थं शुद्धार्तवलक्षणमाह ॥ मासान्निष्पिच्छदाहार्ति पञ्चरात्रानुबन्धि च । नैवातिबहु नात्यल्पमार्तवं शुद्धमादिशेत् ॥ १ ॥ शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम् । तदार्तवं प्रशंसन्ति यच्चाप्सु न विरज्यते ॥ २ ॥ इति प्रदरनिदानम् ॥ अथ प्रदरचिकित्सा ॥ दध्ना सौवर्चलाजाजीमधुकं नीलमुत्पलम् । पिबेत्क्षौद्रयुतं नारी वातासृग्दरशान्तये ॥ १ ॥ नागरं मधुकं तैलं सितादधि च तत्समम् । खज्जेनोन्मथितं पीतं वातप्रदरनाशनम् ॥ २ ॥ एलामंशुमतीं द्राक्षामुशीरं तिक्तरोहिणीम् । चन्दनं कृष्णलवणं सारिवालोध्रसंयुतम् ॥ ३ ॥ वातासृग्दरशान्त्यर्थं पिबेद्दध्ना सहाङ्गना । पित्तासृग्दरशान्त्यर्थं सक्षौद्रं ललना पिबेत् ॥ ४ ॥ वासकस्य गुडूच्या वा रसं किं वा वरीभवम् । मधुकं कर्षमेकं तु चतुष्कर्षां सितां तथा ॥ तण्डुलोदकसम्पिष्टं लोहिते प्रदरे पिबेत् ॥ ५ ॥ प्रदरं हन्ति बलाया मूलं दुग्धेन संयुतं पीतम् । कुशवाट्यालकमूलं त-

ण्डुलसलिलेन रक्ताख्यम् ॥ ६ ॥ बलाकङ्कतिकाख्या या तस्या मूलं सचूर्णितम् । लोहितप्रदरे खादेच्छर्करामधुसंयुतम् ॥७॥ मद्यैर्निम्बगुडूच्योश्च रोहितस्याथवा रसम् । कफप्रदरनाशाय पिबेद्वा मलयूरसम् ॥ ८॥ काकजङ्घामूलरसं मधुना सह भामिनी । सलोध्रचूर्णमापीय कफप्रदरकं जयेत् ॥ ९ ॥ पथ्यामलकबिभीतकविश्वौषधदारुरजनीनाम् । सक्षौद्रलोध्रचूर्णः क्वाथो हन्त्येष सर्वजं प्रदरम् ॥ १० ॥ रसाञ्जनं तण्डुलकस्य मूलं क्षौद्रान्वितं तण्डुलतोयपीतम् । असृग्दरं सर्वभवं निहन्ति श्वासं सुभार्गी सह नागरेण ॥ ११ ॥ अशोकवल्कलं क्वाथशृतं दुग्धं सुशीतलम् । यथाबलं पिबेत्प्रातस्तीव्रासृग्दरनाशनम् ॥ १२ ॥ समुद्धृत्य कुशमूलं पेषयेत्तण्डुलाम्बुना । एतत्पीत्वा त्र्यहं नारी प्रदरात्परिमुच्यते ॥ १३ ॥ क्षौद्रयुक्तं फलरसं काष्ठोदुम्बरजं पिबेत् । असृग्दरविनाशाय सशर्करपयोऽन्नभुक् ॥ १४ ॥ मलयूफलचूर्णस्य शर्करासहितस्य च । मधुना मोदकं कृत्वा खादेत्प्रदरनाशनम् ॥ १५ ॥ दार्वीरसाञ्जनवृषाब्दकिरातबिल्वभल्लातकैरवकृतो मधुना कषायः । पीतो जयत्यतिबलम्प्रदरं सशूलं पीतासितारुणविलोहितनीलशुक्लम् ॥ १६ ॥ भूम्यामलकमूलं तु पीतं तण्डुलवारिणा । द्वित्रैरेव दिनैर्नार्याः प्रदरं दुस्तरं जयेत् ॥ १७ ॥ शुण्ठीतिरिटयोश्चूर्णं भुक्तं सघृतशर्करम् । प्रबलं प्रदरं हन्ति नार्या वा कुटजाष्टकम् ॥ १८ ॥ धातक्याश्च तथा पूगीकुसुमानां पिबेच्छृतम् । नाशयेत्प्रदरं सद्यस्त्रिदिनाद्योषितां ध्रुवम् ॥ १९ ॥ आखोः पुरीषं पयसा निपीय वह्नेर्बलादेकमहो द्व्यहं वा । त्रियह्व्यहं वा प्रदरं स्रवन्त्यः प्रसह्य पारं परमाप्नुवन्ति ॥ २० ॥ अशोकवल्कलं पिष्ट्वा सतार्क्ष्यं तण्डुलाम्भसा । सक्षौद्रं तद्रसं पीत्वा प्रदरान्मुच्यतेऽङ्गना ॥ २१ ॥ सूचिस्थाने व्याघ्रनख्या मूलमुत्तरदिग्भवम् । नीतमुत्तरफल्गुन्यां कटिबद्धं हरेदसृक् ॥ २२ ॥ अथ पुष्यानुगं चूर्णम् ॥ पाठा रसाञ्जनं मुस्तं मज्जा जम्ब्वाम्रयोस्तथा । अम्बष्ठकी शिलोद्भेदं समङ्गा पद्मकेसरम् ॥ १ ॥ बिल्वं मोचरसं लोध्रं केशरं गैरिकं तथा । विश्वौषधं कट्फलं च मरिचं रक्तचन्दनम् ॥ २ ॥ कट्वङ्गं धातकी द्राक्षानन्ता मधुकमर्जुनम् । वत्सकातिविषा चेति पुष्येणोद्धृत्य बुद्धिमान् ॥ ३ ॥ तुल्यभागानि सर्वाणि सूक्ष्माणि च विचूर्णयेत् । तच्चूर्णं माक्षिकोपेतं पीतं तण्डुलवारिणा ॥ ४ ॥ जयेदर्शांस्यतीसारं तथा रक्तप्रवाहिकाम् । बालानां कृमिरोगांश्च योनिदोषांश्च योषिताम् ॥ ५ ॥ रजोदोषी तथा सर्वान्प्रदरान्दुस्तरानपि । पीतनीलारुणश्वेतान्सर्वानेव विनाशयेत् । चूर्णं पुष्यानुगं नाम पूर्वमात्रेयभाषितम् ॥ ६ ॥ इति पुष्यानुगं चूर्णम् ॥ अथ जीरकावलेहः ॥ जीरकं प्रस्थमेकं तु क्षीरं द्व्याढकमेव च । प्रस्थार्धं लोध्रघृतयोः पचेन्मन्देन वह्निना ॥ १ ॥ लेहीभूतेऽथ शीतेऽत्र सिताप्रस्थं विनिक्षिपेत् । चातुर्जातकणा विश्वमजाजी मुस्तवालकम् ॥ २ ॥ दाडिमं रसजं धान्यं रजनी पञ्चवासकम् । वंशजं च तवक्षीरी प्रत्येकं शुक्तिसंमितम् ॥ ३ ॥ जीरकस्यावलेहोऽयं

---

१ ( च० ) प्रदरालनवः ।

प्रमेहप्रदरापहः । ज्वरावल्यारुचिश्वासतृष्णादाहक्षयापहः ॥ ४ ॥ निष्कमैन्द्रयवं चूर्णं सिताद्विगुणितं भवेत् । उषितेन जलेनैव पीतम्प्रदरनाशनम् ॥५॥ अथ मुद्राद्यं घृतम् ॥ मुद्गमाषस्य निर्यूहे रास्नाचित्रकमुस्तकैः । सिद्धं सपिप्पलीबिल्वैः सर्पिः श्रेष्ठमसृग्दरे ॥ १ ॥ अथ शाल्मलीघृतम् ॥ शाल्मलीपुष्पनिर्यासः पृश्निपर्णी तथैव च । काश्मरी चन्दनं चैषां कल्केन स्वरसेन वा ॥ १ ॥ गव्यं पचेद् घृतप्रस्थं तत्सिद्धं तरुणी पिबेत् । सर्वप्रदरनाशाय बलवर्णाग्निवर्धनम् ॥ २ ॥ अथ शीतकल्याणकं घृतं वृन्दात् ॥ कुमुदं पद्मकोशीरं गोधूमो रक्तशालयः । मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका ॥ १ ॥ बलातिबलयोर्मूलमुत्पलं तालमस्तकम् । विदारी शतपुष्पी च शालपर्णी सजीवका ॥२॥ त्रिफला त्रापुसम्बीजं प्रत्यग्रं कदलीफलम् । एषामर्धपलान्भागान् गव्यक्षीरं चतुर्गुणम् ॥ ३ ॥ पानीयं द्विगुणं दत्वा घृतप्रस्थं विपाचयेत् । प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके ॥ ४ ॥ अरोचके ज्वरेऽजीर्णे पाण्डुरोगे मदे भ्रमे । तरुणी त्वल्पपुष्पा वा या च गर्भं न विन्दति ॥ ५ ॥ अहन्यहनि च स्त्रीणां भवति प्रीतिवर्धनम् । शीतकल्याणकं नाम परमुक्तं रसायनम् ॥ ६ ॥ रक्तपित्ताधिकारोक्तं कूष्माण्डखण्डं च प्रदरे देयम् ॥ अथ रसाः ॥ रसं गन्धं सीसं मृतमितिसमं तैस्तु रसजं समानं सर्वैः स्यात्तुलितमपि लोध्रं वृषरसैः । दिन्नं पिष्टं नाम्ना प्रदररिपुरेषोपहरति द्विवल्लः क्षौद्रेण प्रदरमपि दुःसाध्यमपि च ॥ १ ॥ इति प्रदरारिः ॥ रसरत्नप्रदीपात् ॥ अथ बोलपर्पटी ॥ सूतगन्धकसुकज्जलिकायाः पर्पटी समयुता समभागम् । बोलचूर्णविहितं प्रतिवाप्यं स्याद्रसोऽयमसृगामयहारी ॥ १ ॥ वल्लयुग्मयुगुलं प्रतिदेयं शर्करामधुयुतः किल दत्तः । रक्तपित्तगुदजातृतियोनिस्रावमाशु विनिवारयतीशः ॥ २ ॥ इति बोलपर्पटी योगसारात् ॥ इति प्रदरचिकित्सा ॥

## ॥ अथ सोमरोगाधिकारः ॥

तत्र सोमरोगस्य निदानपूर्विकां संप्राप्तिमाह ॥ स्त्रीणामतिप्रसङ्गाद्वा शोकाच्चापि श्रमादपि । अतिसारकयोगाद्वा गरदोषात्तथैव च ॥ १ ॥ आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च । तस्यास्ताः प्रच्युताः स्थानान्मूत्रमार्गं व्रजन्ति हि ॥ २ ॥ अथ तस्य लक्षणमाह ॥ प्रसन्ना विमलाः शीता निर्गन्धा नीरुजः सिताः । स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्बला ॥ १ ॥ वेगं धारयितुं तासां न विन्दति सुखं क्वचित् । शिरःशिथिलता तस्या मुखं तालु च शुष्यति ॥२॥ मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः । भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते सदा ॥ ३ ॥ सन्धारणाच्छरीरस्य ता आपः सोमसंज्ञिताः । ततः सोमक्षयात्स्त्रीणां सोमरोग इति स्मृतः ॥ ४ ॥ तस्मात्सोमक्षयाद्देहो निश्चेष्टश्च भवेत्सदा । स एव सरुजः सोमो मूत्रेण स्रवते मुहुः ॥ ५ ॥ सोमलक्षणसंसृष्टः कालातिक्रान्तयोगतः । सोमकान्तिक्रमेणैव स्रवन्मूत्रमभीक्ष्णशः ॥ मूत्रातिसार इत्येव तमाहुर्बलनाशनम् ॥६॥ इति सोमरोगनिदानम् ॥ अथ सोमरोगस्य चिकित्सा ॥ कदलीनां फलं पक्वं धात्री-

फलरसं मधु। शर्करासहितं खादेत्सोमधारणमुत्तमम् ॥ १ ॥ माषचूर्णं समधुकं विदारीमधु शर्कराम्। पयसा पाययेत्प्रातः सोमधारणमुत्तमम् ॥ २ ॥ जलेनामलकीबीजकल्कं समधुशर्करम्। पिबेद्दिनत्रयेणैव श्वेतप्रदरनाशनम् ॥ ३ ॥ तक्रौदनाहाररता संपिबेन्नागकेशरम्। त्र्यहं तक्रेण सम्पिष्टं श्वेतप्रदरनाशनम् ॥ ४ ॥ चूर्णं तु पडवासस्य तिलतैलेन लेहयेत्। सप्तरात्रेण योषाणां श्वेतप्रदरनाशनम् ॥ ५ ॥ अत्रैव मूत्रातिसारस्य चिकित्सामाह ॥ स एव सरुजः सोमः स्रवेन्मूत्रेण चेन्मुहुः। तत्रैलापत्रचूर्णेन पाययेत् तरुणीं सुराम् ॥ १ ॥ तालकन्दं च खर्जूरं मधुकं च विदारिकाम्। सितामधुयुतां खादेन्मूत्रातीसारनाशनम् ॥ २ ॥ चक्रमर्दकमूलं तु सम्पिष्टं तण्डुलाम्बुना। प्रभातसमये पीतं जलप्रदरनाशनम् ॥ ३ ॥ अथ कदलीघृतम् ॥ कदलीकन्दनिर्यासद्रोणे शतपलान्वितम्। कदलीकुसुमं पक्कं क्वाथं पादावशेषितम् ॥ १ ॥ घृतप्रस्थं पयस्तुल्यं पिप्पल्येलालवङ्गकम्। कपित्थस्य फलं मांसी कदलीकन्दचन्दनम् ॥ २ ॥ न्यग्रोधादिगणैः सार्धं सर्वान्वारिसमुद्भवान्। सर्वं समं कर्षमात्रं कल्कीकृत्वा पचेच्छनैः ॥ ३ ॥ घृतं क्वाथं च कल्कं च पक्त्वा चैवावतारयेत्। प्रातःकाले पिबन्नित्यं सेवयेत्कर्षमात्रकम् ॥ ४ ॥ सोमरोगं हरेद्दाहं मूत्रकृच्छ्राश्मरीं तथा। प्रमेहान्विंशतिं हन्यात्प्रमेहगजकेसरी ॥ ५ ॥ मूत्रातिसारमप्यन्यं व्याधिं विध्वंसयेद् ध्रुवम्। कदलीकन्दनामेदं घृतं सर्वरुजापहम् ॥ ६ ॥ अथ रसः ॥ कूष्माण्डपत्रस्वरसैः पक्कं पारदनिष्ककम्। द्विनिष्कं गन्धकं कृत्वा ज्वलने कज्जलीकृतः ॥ असौ समरिचः सोमरोगातिस्रुतिनाशनः ॥ १ ॥ इति सोमरोगमूत्रातिसाराधिकारः ॥

---

## ॥ अथ योनिरोगाधिकारः ॥

तत्र योनिव्यापद्रोगाणां निदानान्याह ॥ विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसङ्ग्रहे। मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्तवेन च ॥ जायन्ते बीजदोषाच्च दैवाद्वा शृणु ताः पृथक् ॥१॥ अथ रोगिणीनां योनीनां नामान्याह ॥ उदावर्ता तथा वन्ध्या विप्लुता च परिप्लुता। वातला योनिरुग्ज्ञेया वातदोषेण पञ्चधा। पञ्चधा पित्तदोषेण तत्रादौ लोहितक्षया। प्रस्रंसिनी वामिनी च पुत्रघ्नी पित्तला तथा ॥ २ ॥ अत्यानन्दा कर्णिनी च चरणानन्दपूर्विका। अतिपूर्वापि सा ज्ञेया श्लेष्मला च कफादिमाः ॥ ३ ॥ षण्ढ्यण्डिनी च महती सूचीवक्त्रा त्रिदोषिणी। पञ्चैता योनयः प्रोक्ताः सर्वदोषप्रकोपतः ॥ ४ ॥ अथ तासां लक्षणमाह ॥ सा फेनिलमुदावर्ता रजः कृच्छ्रेण मुञ्चति। सा तु योनिः कफेनैवमार्तवं च विमुञ्चति ॥१॥ वन्ध्या नष्टार्तवा ज्ञेया विप्लुता नित्यवेदना। परिप्लुतायां भवति ग्राम्यधर्मेण रुग् भृशम्। २ ॥ वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता। चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥ ३ ॥ सदाहं, क्षीयते रक्तं यस्यां सा लोहितक्षया। प्रस्रंसिनी स्रंसते च क्षोभिता दुष्प्र-

जायिनी ॥ ४ ॥ सवातमुद्गिरेद्बीजं वामिनी रजसा युतम् । स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसंक्षयात् ॥ ५ ॥ अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता । चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥ ६ ॥ अल्पानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति । कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते ॥ ७ ॥ मैथुनाचरणात्पूर्वं पुरुषादतिरिच्यते । बहुशश्चातिचरणा तयोर्बीजं न विन्दति ॥ ८ ॥ श्लेष्मला पिच्छिला योनिः कण्डूग्रस्तातिशीतला । चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् ॥ ९ ॥ अनार्तवास्तनी खण्डी खरस्पर्शा च मैथुने । अतिकायगृहीतायास्तरुण्या अण्डिनी भवेत् ॥ १० ॥ विवृता तु महायोनिः सूचीवक्त्रातिसंवृता । सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ॥ ११ ॥ चतसृष्वपि चाद्यासु सर्वलिङ्गनिदर्शनम् । पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः ॥ १२ ॥ इति योनिव्यापद्रोगनिदानम् ॥ अथ योनिकन्दस्य निदानमाह ॥ दिवा स्वप्नादतिक्रोधाद् व्यायामादतिमैथुनात् । क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता मलाः ॥ १ ॥ पूयशोणितसङ्काशं लकुचाकृतिसन्निभम् । जनयन्ति यदा योनौ नाम्ना कन्दं तु योनितः ॥ २ ॥ रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् । दाहरागज्वरयुतं विद्यात्पित्तात्मकं तु तम् ॥ ३ ॥ नीलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् । सर्वलिङ्गसमायुक्तं सन्निपातात्मकं वदेत् ॥ ४ ॥ इति योनिकन्दनिदानम् ॥ अथ योनिव्यापद्रोगाणां चिकित्सा ॥ तत्र वन्ध्या चिकित्सा ॥ आर्तवादर्शने नारी मत्स्यान्सेवेत नित्यशः । काञ्जिकं च तिलान्माषानुदश्विच्च तथा दधि ॥१॥ पीतं ज्योतिष्मतीपत्रराजिकोग्रासनं त्र्यहम् । शीतेन पयसा पिष्टं कुसुमं जनयेद् ध्रुवम् ॥ २ ॥ सगुडः श्यामतिलानां क्काथः पीतः सुशीतलो नार्या । जनयति कुसुमं सहसा गतमपि सुचिरं निरातङ्कम् ॥३॥ तिलशेलुकारवीणां क्काथं पीत्वा नष्टरजा महिला । सगुडं शिशिरं त्रिदिनाज्जनयति कुसुमं न संदेहः ॥ ४ ॥ इक्ष्वाकुबीजदन्तीचपलागुडमदनकिण्वयावशूकैः । सस्नुकूक्षीरैर्वर्तिर्योनिगता कुसुमसंजननी ॥ ५ ॥ इति वन्ध्याचिकित्सा ॥ अथ वन्ध्यायाः गर्भप्रदभेषजमाह ॥ बलासिता सातिबला मधूकं वटस्य शृङ्गं गजकेशरं च । एतन्मधुक्षीरघृतैर्निपीय वन्ध्या सुपुत्रं नियतं प्रसूते ॥ १॥ अश्वगन्धाकषायेण सिद्धं दुग्धं घृतान्वितम् । ऋतुस्नाताङ्गना प्रातः पीत्वा गर्भं दधाति हि ॥२॥ पुष्पोद्धृतं लक्ष्मणाया मूलं दुग्धेन कन्यया । पिष्टं पीत्वा ऋतुस्नाता गर्भं धत्ते न संशयः ॥ ३ ॥ कुरण्टमूलं धातक्याः कुसुमानि वटाङ्कुराः । नीलोत्पलं पयोयुक्तमेतद्गर्भप्रदं ध्रुवम् ॥ ४ ॥ याबला पिबति पार्श्वपिप्पलं जीरकेण सहितं हिताशना । श्वेतया विशिखपुङ्खया युतं सा सुतं जनयतीह नान्यथा ॥ ५ ॥ पत्रमेकं पलाशस्य पिष्ट्वा दुग्धेन गर्भिणी । पीत्वा पुत्रमवाप्नोति वीर्यवन्तं न संशयः ॥ ६ ॥ शूकरशिम्बीमूलं मध्यं वा दधिफलस्य सपयस्कम् । पीत्वाथोभयलिङ्गीबीजं कन्यां न सूते स्त्री ॥ ७ ॥ क्षीरेण श्वेतबृहतीमूलं नासापुटे पिबेत् । पुत्रार्थं दक्षिणानासा वामया कन्यकार्थिनी ॥ ८ ॥ लक्ष्मणा क्षीरसंयुक्ता नस्ये पाने प्रदाप्यताम् । तेन सापि लभेद्गर्भं पुत्रो विद्याधरो भवेत्

॥ ९ ॥ वामनाड्या भवेत्कन्या पुत्रो दक्षिणया भवेत् । रक्तेऽधिके भवेत्कन्या पुत्रः शुक्रेऽधिके भवेत् ॥ १० ॥ शुक्रशोणितमिश्रेण भवेद्योऽसौ नपुंसकः । एरण्डस्य तु बीजानि मातुलुङ्गस्य चैव हि । सर्पिषा परिपिष्टानि पिबेद्गर्भप्रदानि च ॥ ११ ॥ इति चक्रदत्तात् ॥ लङ्काकारं लक्ष्मणायाश्च मूलं कण्ठे बद्धं सर्पिषा नस्ययोगात् । पीत्वा सूते पुत्रमत्यन्तवीर्यं पश्चादन्यानप्यमन्दाङ्गयष्टिः ॥१२॥ तिलतैलदुग्धफाणितदधिघृतमेकत्र पाणिना मथितम् । पीतं सपिप्पलीकं जनयति पुत्रं परं महिला ॥१३॥ एकस्य मातुलिङ्गस्य बीजानि सकलान्यपि । ऋत्वन्ते दुग्धपिष्टानि पीत्वाप्नोत्यबला सुतम् ॥१४॥ अथ फलघृतम् ॥ मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला । मेदे पयस्या काकोली मूलं चैवाश्वगन्धजम्॥१॥ अजमोदा हरिद्रे द्वे प्रियङ्गुः कटुरोहिणी । उत्पलं कुमुदं लाक्षा काकोल्यौ चन्दनद्वयम् ॥२॥ एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् । शतावरीरसं क्षीरं घृताद्देयं चतुर्गुणम् ॥३॥ सर्पिरेतन्नरः पीत्वा स्त्रीषु नित्यं वृषायते । पुत्राञ्जनयते वीरान्मेधाढ्यान्प्रियदर्शनान् ॥ ४ ॥ या चैवास्थिरगर्भा स्यात्पुत्रं वा जनयेन्मृतम् । अल्पायुषं वा जनयेद्या च कन्यां प्रसूयते ॥ ५ ॥ योनिरोगे रजोदोषे परिस्रावे च शस्यते । प्रजावर्धनमायुष्यं सर्वग्रहनिवारणम् ॥ ६ ॥ नाम्ना फलघृतं ह्येतदश्विभ्यां परिकीर्तितम् । अनुक्तं लक्ष्मणामूलं क्षिपन्त्यत्र चिकित्सकाः ॥ ७ ॥ जीवद्वत्सैकवर्णाया घृतं त्वत्र प्रयुज्यते । आरण्यगोमयेनेह वह्निज्वाला च दीयते ॥८॥ इति वन्ध्याचिकित्सा ॥ अथ गर्भनिवारणम् ॥ पिप्पलिविडङ्गटङ्कणसमचूर्णं या पिबेत्पयसा । ऋतुसमये न हि तस्या गर्भः संजायते क्वापि ॥ १ ॥ आरनालपरिपेषितं त्र्यहं या जपाकुसुममत्ति पुष्पिणी । सत्पुराणगुडमुष्टिसेविनी सा दधाति न हि गर्भमङ्गना ॥ २ ॥ तैलाविलं सैन्धवखण्डमादौ निधाय रण्डा निजयोनिमध्ये । नरेण सार्धं रतिमातनोति या सा न गर्भं लभते कदाचित् ॥३ ॥ तण्डुलीयकमूलानि पिष्ट्वा तण्डुलवारिणा । ऋत्वन्ते तु त्र्यहं पीत्वा वन्ध्याः कुर्वन्ति योषितः ॥ ४ ॥ धूपिते योनिरन्ध्रे तु निम्बकाष्ठैश्च युक्तितः । ऋत्वन्ते रमते या स्त्री न सा गर्भमवाप्नुयात् ॥ ५ ॥ तालीसगैरिके पीते बिडालपदमात्रके । शीताम्बुना चतुर्थेऽह्नि वन्ध्या नारी प्रजायते ॥ ६ ॥ ग्राह्यं कृष्णचतुर्दश्यां धत्तूरस्य च मूलकम् । कटिं बद्ध्वा रमेत्कान्तं न गर्भः संभवेत्क्वचित् ॥ ७ ॥ मुक्ते न लभते गर्भं पुरा नागार्जुनोदितम् । तन्मूलचूर्णं योनिस्थं न गर्भः संभवेत्क्वचित् ॥ ८ ॥ इति गर्भनिवारणम् ॥ अथ गर्भपातनविधिः ॥ गृञ्जनबीजं टङ्कत्रितयं तावच्च दाडिमीमूलम् । तुवरीटङ्कद्वितयं सिन्दूरं टङ्कयुगुलं च ॥ १ ॥ संमर्द्य खल्वमध्ये तोयेनैतन्निपीय गर्भवती । रण्डा योषिद् गर्भं वेश्या वा पातयत्याशु ॥ २ ॥ निर्गुण्डीद्रवसंपिष्टं चित्रमूलं मधुप्लुतम् । कर्षं पीत्वा स्रवत्याशु गर्भं रण्डा कुलोद्भवम् ॥ ३ ॥ काण्डमेरण्डपत्रस्य योनावष्टाङ्गुलं क्षिपेत् । चतुर्मासोद्भवो गर्भः स्रवत्येव हि तत्क्षणात् ॥ ४ ॥ देवालये तु यच्चूर्णं कर्षैकं तोयपेषितम् । पिबेद् गर्भ-

वती नारी गर्भः स्रवति तत्क्षणात् ॥ ५ ॥ आलोड्य काञ्जिकैर्घोटीपुरीषं वस्त्रगालितम् । संशीधूग्रासुरीतैलविषमागतगर्भनुत् ॥ ६ ॥ इति गर्भपातनम् ॥ अथावशिष्टयोनिव्यापद्रोगाणां चिकित्सा ॥ तासु योनिषु चाद्यासु स्नेहादिक्रम इष्यते । वस्त्यभ्यङ्गपरीषेकप्रलेपाः पिचुधारणम् ॥ १ ॥ नतवार्ताकिनीकुष्ठसैन्धवामरदारुभिः । तिलतैलं पचेन्नारी पिचुं तस्य विधारयेत् ॥ २ ॥ विप्लुतायां सदा योनौ व्यथा तेन प्रशाम्यति । वातलां कर्कशां स्तब्धामल्पस्पर्शां तथैव च ॥ ३ ॥ कुम्भीस्वेदैरुपचरेदन्तर्वेश्मनि संवृते । धारयेद्वा पिचुं योनौ तिलतैलस्य सा सदा ॥४॥ रास्नाश्वगन्धावृषकैर्योनिशूलहरं पयः । गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचनम् ॥५॥ बिल्वमार्कवजं बीजं कल्कं मद्येन पाययेत् । तेन योनिगतं शूलमाशु शाम्यति योषिताम् ॥ ६ ॥ उपकुञ्चिकां पिप्पलीं च मदिरालाभतः पिबेत् । सौवर्चलेन संयुक्तं योनिशूलनिवारणम् ॥ ७ ॥ पित्तलानां च योनीनां सेकाभ्यङ्गपिचुक्रियाः । शीताः पित्तहराः कार्याः स्नेहनार्थं घृतानि च ॥ ८ ॥ प्रस्रंसिनीं घृताभ्यक्तां क्षीरस्विन्नां प्रवेशयेत् । विधाय वेसवारेण ततो बन्धं समाचरेत् ॥९॥ अथ वेसवारः ॥ शुण्ठीमरीचकृष्णाभिर्धान्यकाजाजिदाडिमैः । पिप्पलीमूलसंयुक्तैर्वेसवारः स्मृतो बुधैः ॥ १ ॥ धात्रीरसं सितायुक्तं योनिदाहे पिबेत्सदा । सूर्यकान्ताभवं मूलम् पिबेद्वा तण्डुलाम्बुना ॥ २ ॥ योन्यां तु पूयस्राविण्यां शोधनद्रव्यनिर्मितैः । सगोमूत्रैः सवलणैः पिण्डैः संपूरणं हितम् ॥ ३ ॥ पिचवश्च घृताभ्यक्ताश्चन्दनाम्भःसमुत्थिताः । योनौ स्थाप्याः स्त्रिया दाहकृच्छ्रपाकप्रशान्तये ॥ ४ ॥ योन्यां बलासजुष्टायां सर्वं रूक्षोष्णमौषधम् । तैलं साधु यवान्नं च पथ्यारिष्टं च योजयेत् ॥ ५ ॥ गुडूचीत्रिफलादन्तीक्वथितोदकधारया । योनिं प्रक्षालयेत्तेन ततः कण्डूः प्रशाम्यति ॥ ६ ॥ मुद्गपुष्पं सखदिरं पथ्याजातीफलं तथा । वृकीपूगं च संचूर्ण्य वस्त्रपूतं क्षिपेद्भगे ॥ ७ ॥ योनिर्भवति संकीर्णा न स्रवेच्च जलं ततः । कपिकच्छूभवम् मूलं क्वाथयेद्विधिना भवेत् ॥ ८ ॥ योनिः सङ्कीर्णतां याति क्वाथेनानेन धावनात् । पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ॥ ९ ॥ वर्तिस्तुल्या प्रदेशिन्या धार्या योनिविशोधनी । सुरामण्डोत्थितो धार्यः पिचुर्योनौ कफात्मनि ॥ १० ॥ कण्डूपैच्छिल्यसंस्रावशैथिल्यविनिवृत्तये । सुगन्धानां पदार्थानां कल्कचूर्णैः शृतैः कृतः ॥ ११ ॥ योनौ दौर्गन्ध्यशमनः पूयपैच्छिल्यभाजि च । सन्निपातसमुत्थानां कार्या योन्या यदा क्रियाः ॥१२॥ साधारणा दशाङ्घ्रीश्रीमदाक्वाथपिचुर्हितः । जीरकद्वितयं कृष्णा सुषवी सुरभिर्वचा ॥ १३ ॥ वासकं सैन्धवश्चापि यवक्षारो यवानिका । एषां चूर्णं घृते किंचिद् भृष्ट्वा खण्डेन मोदकम् ॥ १४ ॥ कृत्वा खादेद्यथावह्नि योनिरोगाद्विमुच्यते । मूषककाथसंसिद्धतिलतैलकृतः पिचुः ॥ नाशयेद्योनिरोगांस्तान्धृतो योनौ न संशयः ॥ १५ ॥ अथ त्रिफलादि घृतम् ॥ त्रिफलां द्वौ सहचरौ गुडूचीं सपुनर्नवाम् । शुकनासं हरिद्रे द्वे रास्नामेदाश-

१ ( च० ) ससिन्धू । २ ( च० ) विधिनाम्भसा । ३ ( क

तावरीः ॥१॥ कल्कीकृत्य घृतप्रस्थं पचेत्क्षीरे चतुर्गुणे । तत्सिद्धं पाययेन्नारीं योनिरोगप्रशान्तये ॥२॥ इति योनिव्यापद्रोगचिकित्सा ॥ अथ योनिकन्दस्य चिकित्सा ॥ गैरिकाम्रास्थिजठररजन्यञ्जनकट्फलाः । पूरयेद्योनिमेतेषां चूर्णैः क्षौद्रसमन्वितैः ॥ १ ॥ त्रिफलायाः कषायेण सक्षौद्रेण च सेचयेत् । प्रमदायोनिकन्देन व्याधिना परिमुच्यते ॥२॥ आखोर्मांसं सपदि बहुधा सूक्ष्मखण्डीकृतं तत्तैले पाच्यं द्रवति नियतं यावदेतेन सम्यक् । तत्तैलाक्तं वसनमनिशं योनिभागे दधाना सत्यं व्रीडाजनकमबलायोनिकन्दं निहन्ति ॥३॥ इति योनिकन्दचिकित्सा ॥ इति योनिरोगाधिकारः ॥

---

## ॥ अथ स्त्रीगर्भरोगनिदानम् ॥

तत्र गर्भस्य स्रावपातयोर्निदानमाह ॥ भयाभिघातात्तीक्ष्णोष्णपानाशननिषेवणात् । गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥ १ ॥ अथ स्रावपातयोरवधिमाह ॥ आचतुर्थात्ततो मासात्प्रस्रवेद्गर्भविद्रवः । ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥ १ ॥ अथ गर्भपातस्य दृष्टान्तं दर्शयति ॥ गर्भोऽभिघातविषमासनपीडनाद्यैः पक्वं द्रुमादिव फलं पतति क्षणेन ॥१॥ इति गर्भस्रावपातयोर्निदानं माधवात् ॥ अथ भावप्रकाशाद् गर्भपातस्योपद्रवानाह ॥ प्रस्रंसमाने गर्भे स्याद्दाहः शूलश्च पार्श्वयोः । पृष्ठे रुक् प्रदरानाहौ मूत्रसङ्गश्च जायते ॥ १ ॥ अथ गर्भस्य स्थानान्तरगमने चोपद्रवानाह ॥ स्थानात् स्थानान्तरं तस्मिन्प्रयात्यपि च जायते । आमपक्वाशयादौ तु क्षोभः पूर्वेऽप्युपद्रवाः ॥ १ ॥ प्रसवोचिते काले यथा मूढो गर्भो भवति तदाह ॥ तत्र मूढगर्भस्य निदानसम्प्राप्तिपूर्वकं सामान्यं लक्षणमाह ॥ मूढं करोति पवनः खलु मूलगर्भं शूलं च योनिजठरादिषु मूत्रसङ्गम् । भुग्नेऽनिलेन विगुणेन ततः स गर्भः संख्यामतीत्य बहुधा समुपैति योनिम् ॥१॥ तत्राष्टौ प्रकारानाह ॥ द्वारं निरुद्धशिरसा जठरेण कश्चित्कश्चिच्छरीरपरिवर्तनकुब्जदेहः । एकेन कश्चिदपरस्तु भुजद्वयेन तिर्यग्गतो भवति कश्चिदवाङ्मुखोऽन्यः ॥१॥ पार्श्वापवृत्तगतिरेति तथैव कश्चिदित्यष्टधा भवति गर्भगतिः प्रसूतौ ॥ २ ॥ सुश्रुतस्त्वष्टौ प्रकारान्तराण्याह ॥ कश्चिद्द्वाभ्यां सक्थिभ्यां योनिमुखं प्रपद्यते ॥१॥ कश्चिदाभुग्नैकसक्थ इतरेण सक्थ्ना ॥२॥ कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्यग्गतः ॥३॥ कश्चिदुदरपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते ॥४॥ अन्तःपार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना ॥५॥ कश्चिदाभुग्नशिरा बाहुद्वयेन ॥६॥ कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः ॥७॥ कश्चिदेकेन सक्थ्ना योनिद्वारं प्रतिपद्यते अपरेण पायुमिति ॥८॥ अथापराश्चतस्रो गतीराह ॥ सकीलकः प्रतिखुरः परिघोऽथ बीजस्तेषूर्ध्वबाहुचरणैः शिरसा च योनौ । सङ्गी च यो भवति कीलकवत्सकीलो दृश्यैः खुरैः प्रतिखुरः स हि कायसङ्गी ॥ गच्छेद्भुजद्वयशिराः स च बीजकाख्यो योनौ स्थितः सपरिघः परिघेण तुल्यः ॥ १ ॥ अथ परिघमाह ॥ परिघस्य लक्षणं भोजेऽपि पठ्यते तद्यथा ॥ योनिमावृत्य यस्तिष्ठेत्परिघो गोपुरं यथा । तथान्तर्गर्भमा-

यान्तं विद्यात्परिघसंज्ञितम् ॥ २ ॥ अथासाध्यमूढगर्भगर्भिण्योर्लक्षणमाह ॥ अपविद्ध-शिरा या तु शीताङ्गी निरपत्रपा । नीलोद्गतशिरा हन्ति सा गर्भं स च तां तथा ॥ १ ॥ अथ मृतस्य मूढगर्भस्य प्रतिपाद्यत्वात्कर्षणार्थं लक्षणमाह ॥ गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता । भवेदुच्छ्वासपूतित्वं शूलश्चान्तर्मृते शिशौ ॥ १ ॥ अथ गर्भ-स्य मरणहेतुमाह ॥ मानसागन्तुभिर्मातुरुपतापैः पृथग्विधैः । गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडितः ॥ १ ॥ अथापरमसाध्यगर्भिणीलक्षणमाह ॥ योनिसंवरणं सङ्गः कुक्षौ मक्कल्ल एव च । हन्युः स्त्रियं मूढगर्भो यथोक्ताश्चाप्युपद्रवाः ॥ १ ॥ वात-लान्यन्नपानानि ग्राम्यधर्मं प्रजागरम् । अत्यर्थं सेवमानाया गर्भिण्या योनिमार्गगः ॥ २ ॥ मातरिश्वा प्रकुपितो योनिद्वारस्य संवृतिम् । कुरुते रुद्धमार्गत्वात्पुनरन्तर्ग-तोऽनिलः ॥ ३ ॥ निरुणद्ध्याशयद्वारं पीडयन् गर्भसंस्थितिम् । निरुद्धवदनोच्छ्वासो गर्भश्चाशु विपद्यते ॥ ४ ॥ उच्छ्वासरुद्धहृदयां नाशयत्यथ गर्भिणीम् । योनिसंवरणं नाम व्याधिमेनं प्रचक्षते ॥ अन्तकप्रतिमं घोरं नारभेत्तु चिकित्सितुम् ॥ ५ ॥ इति मूढगर्भनिदानम् ॥ अथ विकृताकृतिगर्भलक्षणमाह ॥ ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत् । आर्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥ १ ॥ मासि मासि विवर्धे-त गर्भिण्या गर्भलक्षणम् । कललं जायते तस्या वर्जितं पैतृकैर्गुणैः ॥२॥ सर्पवृश्चिककूष्मा-ण्डविकृताकृतयश्च ये । गर्भाश्चेति त्रयश्चैव ज्ञेयाः पापकृतो भृशम् ॥३॥ इति सुश्रुतात् ॥

## ॥ अथ स्त्रीगर्भरोगचिकित्सा ॥

तत्र गर्भस्य स्रावपातयोश्चिकित्सामाह ॥ गुर्विण्या गर्भतो रक्तं स्रवेद्यदि मुहुर्मुहुः । तन्निरोधाय सा दुग्धमुत्पलादि शृतं पिबेत् ॥ १ ॥ उत्पलादिगणमाह ॥ उत्पलं नील-मारक्तं कल्हारं कुमुदं तथा । श्वेताम्भोजं च मधुकमुत्पलादिरयं गणः ॥ १ ॥ सं-शीलितो हरत्येव दाहं तृष्णात्हृदामयम् । रक्तं पित्तं च मूर्च्छां च तथा छर्दिमरोचकम् ॥२॥ लज्जालुर्धातकीपुष्पमुत्पलं मधु लोध्रकम् । जलस्थया स्त्रिया पीतं गर्भपातं निवा-रयेत् ॥ ३ ॥ पतन्तं स्तम्भयेद्गर्भं कुलालकरमृत्तिका । मधुच्छागीपयःपीता किं वा श्वेतापराजिता ॥ ४ ॥ पारावतमलः पीतस्त्र्यहं ताम्बूलवारिणा । गर्भिणी गर्भतो रक्तं स्तम्भयेन्निरुपद्रवम् ॥ ५ ॥ शर्कराबिसातिलं समांशकं माक्षिकेण सह भक्ष्यते यदा । नास्ति गर्भपतनोद्भवं भयं पापभीतिरिव तीर्थसेवया ॥ ६ ॥ कङ्कतीमू-लमाबद्धं कुमारीसूत्रकैः समैः । कटिदेशे नितम्बिन्या गर्भपातं निवारयेत् ॥ ७ ॥ वेणुग्रन्थिकुलत्थानां हरिद्राञ्जनितं शृतम् । देयं न्यूनदिने पाते गर्भिणीनां भिषग्-वरैः ॥ ८ ॥ ह्रीबेरातिविषामुस्तामोचशक्रैः शृतं जलम् । दद्याद्गर्भे प्रचलिते प्रदरे कु-क्षिरुज्यपि ॥ ९ ॥ अतः परं मासानुमासिकं वक्ष्यामः ॥ मधुकं शाकबीजं च पयस्या सुरदारु च । अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥ १ ॥ वृक्षादनी पयस्या च लता चोत्पलसारिवा । अनन्ता सारिवा रास्ना पद्मा मधुकमेव च ॥ २ ॥ बृहती द्वयकाश्मर्यक्षीरिशुङ्गास्त्वचो घृतम् । पृश्निपर्णी बला शिग्रु श्वदं-

ष्टा मधुपर्णिका ॥ ३ ॥ शृङ्गाटकं बिसं द्राक्षा कसेरुमधुकं सिता । सप्तैतान्पयसा-योगानर्धश्लोकसमापितान् ॥ ४ ॥ क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् । कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धजैः ॥ ५ ॥ मूलैः शृतं प्रभुञ्जीत क्षीरं मासे तथाष्टमे । नवमे मधुकानन्तापयस्यासारिवाः पिबेत् ॥ ६ ॥ क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितम् । सक्षीरा वा हिता शुण्ठी मधुकं सुरदारु च ॥ ७[1]॥ क्षीरिकामुत्पलं दुग्धं समङ्गामूलकं शिवाम् । पिबेदेकादशे मासि गर्भिणी शूलशान्तये ॥ ८ ॥ सिता-विदारिकाकोलीक्षीरीकाश्च मृणालिकाः । गर्भिणी द्वादशे मासि पिबेच्छूलघ्नमौषधम् । एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति ॥ ९ ॥ अथान्यच्च ॥ ग्रन्थान्तरे मासविशेषे गर्भवेदनाहरमौषधम् ॥ चलनं प्रथमे मासि गर्भस्य यदि जायते । औषधं च तदा देयं विचक्षणभिषग्वरैः ॥ १ ॥ मृद्वीका ज्येष्ठिका चैव चन्दनं रक्तचन्दनम् । गवां च पयसा पेयं स्थिरता जायते ध्रुवम् ॥ २ ॥ नीलोत्पलं सवालं च शृङ्गाटं च कसेरुकम् । शीततोयेन पिष्ट्वा तु क्षीरेणालोड्य तत्पिबेत् ॥ ३ ॥ एवं न पतते गर्भः स च शूलः प्रशाम्यति । द्वितीये मासि गर्भस्य चलनं च भवेद्यदि ॥ ४ ॥ पयसा च तदा पेयं मृणालं नागकेशरम् । तगरं कमलं बिल्वं कर्पूरेण समन्वितम् ॥ ५ ॥ अजाक्षीरेण तत्पिष्ट्वा क्षीरेणालोड्य पूर्ववत् । तृतीये मासि चलनं जायते गर्भजं यदि ॥ ६ ॥ पयसालोडितं पेयं शर्करानागकेशरम् । पद्मकं चन्दनं चैव वालकं पद्म-नालकम् ॥ ७ ॥ पिष्ट्वा शीतेन तोयेन क्षीरेणालोड्य तत्पिबेत् । एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥ ८ ॥ यदि गर्भस्य चलनं चतुर्थे मासि जायते । तृष्णाशूलविदाहैश्च ज्वरेण च निपीडनम् ॥ ९॥ क्षीरं च कदलीमूलमुत्पलं वालकं तथा। आलोड्य समभागेन पिबेद्रोगोपशान्तये ॥ १०॥ पञ्चमे मासि गर्भस्य चलनं कुत्रचिद्भवेत् । दध्ना च मधुना पेयं दाडिमीपत्रचन्दनम् ॥११॥ नीलोत्पलं मृणालं च कौलीक्षीरं तथैव च । केशरम् पद्मकं चैव तोयेनालोड्य तत्पिबेत् ॥ १२ ॥ एवं न पतते गर्भः स च शूलः प्रशाम्यति । षष्ठे मासि तु गर्भस्य चलता जायते यदा ॥ १३॥ गैरिका गोमयम् भस्म कृष्णा मृत्स्ना तथैव च । एतेषां साधितम् प्राज्ञभिषजा च मृतं तदा ॥ १४ ॥ पेयं शीतं परं साकं सितया चन्दनेन च । सप्तमे मासि गर्भस्य चलनं जायते यदा ॥ १५ ॥ उशीरं गोक्षुरघनः समङ्गा नागकेशरम् । सपद्मकं समधुना[2] पाययेच्च विचक्षणः ॥ १६ ॥ अष्टमे मासि चलनं गर्भजं यदि जायते । लोध्रमागधिका-चूर्णम् मधुना पयसा पिबेत् ॥ नवमे सुप्रसूतिः स्यादेवं गर्भस्य पोषणम् ॥ १७॥ इति गर्भस्रावपातादिचिकित्सा ॥ अथ गर्भपातस्योपद्रवाणां चिकित्सा । स्निग्धशीताः क्रियास्तेषु दाहादिषु[3] समाचरेत् । कुशकाशोरुबूकाणाम् मूलैर्गोक्षुरकस्य च ॥ १ ॥ शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलहृत् परम् । श्वदंष्ट्रामधुकद्राक्षाम्लानैः सिद्धं पयः पिबेत् ॥ २ ॥ शर्करामधुसंयुक्तं गुर्विणीवेदनापहम् । मृत्कोष्ठगारिका गेहसम्भवा नवमृत्तिका ॥ ३ ॥ समङ्गा धातकीपुष्पं गैरिकं च रसाञ्जनम् । तथा सर्जरसश्चैतान्य-

---

१ ( च० ) कौन्तीक्षीरीम् । २ ( च० ) समधुरम् । ३ ( च० ) वातादिषु ।

थालाभं विचूर्णयेत् ॥ ४ ॥ तच्चूर्णम्मधुना लिह्यान्नारी प्रदरशान्तये । कसेरूत्पलशृङ्गाटकल्कं वा पयसा पिबेत् ॥ ५ ॥ पक्कं वचारसोनाभ्यां हिङ्गुसौवर्चलान्वितम् । आनाहेषु पिबेद् दुग्धं गुर्विणी सुखिनी भवेत् ॥ ६ ॥ तृणपञ्चकमूलानां कल्केन विपचेत्पयः । तत्पयो गुर्विणी पीत्वा मूत्रसङ्गाद्विमुच्यते ॥७॥ शालीक्षुकुशकाशैः स्याच्छरेण तृणपञ्चकम् । एषां मूलं तृषादाहपित्तासृङ्मूत्रसङ्गहृत् ॥ ८ ॥ कसेरुशृङ्गाटकपद्मकोत्पलं समुद्गपर्णीमधुकं सशर्करम् । सशूलगर्भास्रुतिपीडिताबला पयोविमिश्रम् पयसान्नभुक् पिबेत् ॥९॥ इति गर्भपातोपद्रवचिकित्सा ॥ अथ गुर्विण्या रोगाणां चि० ॥ मधूकचन्दनोशीरसारिवायष्टिपद्मकैः । शर्करामधुसंयुक्तः कषायो गर्भिणीज्वरे ॥१॥ चन्दनं सारिवालोध्रमृद्वीकाशर्करान्वितम् । क्वाथं कृत्वा प्रदद्याच्च गर्भिणीज्वरशान्तये ॥२॥ पयस्यासारिवापाठातोयतोयदनागरैः । शृतं शीतम् पिबेद्वारि गर्भिणीज्वरवारणम् ॥ ३ ॥ मृद्वीकापद्मकोशीरश्रीपर्णीचन्दनं तथा । मधुकं च पयस्या च सारिवामलकं तथा ॥ ४ ॥ पित्तज्वरहरः क्वाथो गर्भिणीनां प्रशस्यते । पीतं विश्वमजाक्षीरैर्नाशयेद्विषमज्वरम् ॥ ५ ॥ ह्रीबेरारलुरक्तचन्दनबलाधान्याकवत्सादनीमुस्तोशीरयवासपर्पटविषाक्वाथं पिबेद्गुर्विणी । नानावर्णरुजातिसारकगदे रक्तस्रुतौ वा ज्वरे योगोऽयं मुनिभिः पुरा निगदितः सूत्यामयेषूत्तमः ॥ ६ ॥ ज्वरातिसारे गर्भिण्याः शस्तं सामे सशोणिते । समङ्गामधुकं लोध्रं फाणितं शर्करान्वितम् ॥७॥ प्रवाहिकायां गर्भिण्याः शस्तं सामे सशोणिते । आम्रजम्बूत्वचः क्वाथैर्लेहयेल्लाजसक्तुकम् ॥ ८ ॥ अनेन लीढमात्रेण गर्भिणी ग्रहणीं जयेत् । शुण्ठीबिल्वकषायं तु यवसक्तुसमन्वितम् ॥ ९ ॥ गर्भिणीं पाययेद्वैद्यश्छर्द्यतीसारनाशनम् । पृश्नीपर्णी बलावासानिर्यूहोरक्तपित्तजित् ॥१०॥ गर्भिण्याः कामलाशोफश्वासकासज्वरापहः । कुस्तुम्बरीणां कल्कं तु तण्डुलोदकसंयुतम् ॥ ११ ॥ पिबेत्सशर्करं हृद्यं गर्भिणीछर्दिवारणम् । बिल्वमज्जा च लाजाम्बु पिबेच्छर्दिषु गर्भिणी ॥ १२ ॥ भार्गीशुण्ठीकणाचूर्णं गुडेन श्वासका नुत् । अजमोदा नागरं च पिप्पली जीरकं समम् ॥ १३ ॥ तच्चूर्णं सगुडक्षौद्रं गर्भिण्या वह्निदीपनम् । बिल्वाग्निमन्थपक्कं वा पाटल्या नागरेण वा ॥१४॥ सिद्धमम्बु पिबेच्छीतं गर्भिणी वातरोगनुत् । चन्दनं मधुकोशीरं नागपुष्पं तिलास्तथा ॥१५॥ अजशृङ्गी च मञ्जिष्ठा रविमूलं पुनर्नवा । श्रेष्ठः शोफहरो लेपो गर्भिणीनां विशेषतः ॥१६॥ इति गुर्विणीरोगाणां चिकित्सा ॥ अथ वातशुष्कस्य गर्भस्य चिकित्सा ॥ गर्भो वातेन संशुष्को नोदरं पूरयेद्यदि । सा बृंहणीयैः संसिद्धं दुग्धं मांसरसं पिबेत् ॥ १ ॥ शुक्रार्तवमजाताङ्गं प्रत्यङ्गं मारुतार्दितम् । त्यक्तं जीवेन तत्तस्मात्कथितं चावतिष्ठते ॥ २ ॥ शुक्रार्तवार्द्रको वायुरुदराध्मानकृद्भवेत् । कदाचिच्चेत्तदाध्मानं स्वयमेवापैतेत्तराम् ॥ ३ ॥ नैगमेयेन गर्भोऽयं हतो लोकध्वनिस्तथा । स चापि गर्भो भवति

---

१ ( च० ) शृतम् । २ ( च० ) बिल्वमज्जोत्पलाम्बं तु । ३ ( च० ) शुक्रार्तवादिको । ४ ( च० ) स्वयमेव करोत्यसौ ( प्रशाम्यति ) इत्यपि पाठान्तरम् ।

लोके नागोदराह्वयः ॥ धान्यकुट्टनमुख्या स्याच्चिकित्सा तूभयोरपि ॥ ४ ॥ अथ प्रसवमासमाह ॥ नवमे दशमे मासि नारी गर्भं प्रसूयते । एकादशे द्वादशे वा ततोऽन्यत्र विकारतः ॥ १ ॥ अथ च प्रसवमासमतिक्रम्य स्थायिनि गर्भे चिकित्सामाह ॥ वातेन गर्भसङ्कोचात्प्रसूतिसमयेऽपि या । गर्भं न जनयेन्नारी तस्याः शृणु चिकित्सितम् ॥ १ ॥ कुट्टयेन्मुशलेनैषा कृत्वा धान्यमुलूखले । विषमं चासनं यानं सेवेत् प्रसवार्थिनी ॥ २ ॥ अथ काले प्रसवविलम्बे चिकित्सामाह ॥ प्रसवस्य विलम्बे तु धूपयेदभितो भगम् । कृष्णसर्पस्य निर्मोकैस्तथा पिण्डीतकेन वा ॥ १ ॥ तन्तुना लाङ्गलीमूलं बध्नीयाद्धस्तपादयोः । सुवर्चलां विशल्यां वा धारयेदाशु सूतये ॥२॥ कृष्णा वचा चापि जलेन पिष्टा सैरण्डतैला खलु नाभिलेपात् । सुखप्रसूतिं कुरुतेऽङ्गनानां निपीडितानां बहुभिः प्रमादैः ॥ ३ ॥ मातुलुङ्गस्य मूलं तु मधुकं संयुतं तथा । घृतेन सहितं पीत्वा सुखं नारी प्रसूयते ॥ ४ ॥ इक्षोरुत्तरमूलं निजतनुमानेन तन्तुना बद्ध्वा । कटिविन्यस्ते गर्भवती सुखेन सूते विलम्बितेनापि ॥ ५ ॥ तालस्य चोत्तरं मूलं स्वप्रमाणेन तन्तुना । बद्ध्वा कट्यां तु नियतं सुखं नारी प्रसूयते ॥ ६ ॥ प्रत्यक्पुष्प्याः पारिभद्रस्य यद्वा मूलं यद्वा काकजङ्घासमुत्थम् । कट्यां बद्धं योषितां संप्रसूतिं योगे युक्त्या संहृतं साधु कुर्यात् ॥७॥ इहामृतं च सोमश्च चित्रभानुश्च भामिनि । उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥ ८ ॥ इदममृतमपां समुद्धृतं वै तव लघु गर्भमिमं विमुञ्चतु स्त्रि । तदनलपवनार्कवासवास्ते सहलवणाम्बुधरैर्दिशन्तु शान्तिम् ॥९॥ मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्येण रश्मयः । मुक्तः सर्वभयाद्गर्भ एहि मा चिर मा चिरम् (स्वाहा) ॥१०॥ जलं च्यावनमन्त्रेण सप्तवाराभिमन्त्रितम् । पीत्वा प्रसूयते नारी दृष्ट्वा चोभयत्रिंशकम् ॥११॥ कलारसाष्टभिः पक्षदिगष्टादशभिः क्रमात् । अर्कैश्च भुवनैर्वेदैरुभयत्रिंशकं भवेत् ॥१२॥ हिमवदक्षिणे पार्श्वे सुरसा नाम यक्षिणी । तस्या नूपुरशब्देन विशल्या भव गर्भिणि ॥ १३ ॥ इमं श्लोकं पठित्वा तु क्षिपेदक्षतपञ्चकम् । गर्भिण्युपरि सद्यः सा गर्भं मुञ्चति गर्भिणी ॥ १४ ॥ इति काले प्रसवविलम्बे चिकित्सा ॥ अथ मूढगर्भस्य चिकित्सामाह ॥ याभिः सङ्कटकाले वैद्यैर्नार्यः प्रसाविताः सम्यक् । लब्धं यशः समग्रास्ता एवातः क्रिया कुर्युः ॥ १ ॥ गर्भे जीवति मूढं तु गर्भं यत्नेन निर्हरेत् । हस्तेन सर्पिषाक्तेन योनेरन्तर्गतेन सा ॥ मृते तु गर्भे गर्भिण्या योनौ शस्त्रं प्रवेशयेत् ॥२॥ शस्त्रशास्त्रार्थविदुषी लघुहस्ता भयोज्झिता । सचेतनं तु शस्त्रेण न कथंचन दारयेत् ॥ ३ ॥ स दार्यमाणो जननीमात्मानं चापि मारयेत् । नोपेक्षेत मृतं गर्भं मुहूर्तमपि पण्डितः ॥ स चाशु जननीं हन्ति प्रभूतान्नं यथा पशुम् ॥ ४ ॥ अथ च्छेदनप्रकारः ॥ यद्यदङ्गं हि गर्भस्य योनौ सज्जति तद्भिषक् । सम्यग् विनिर्हरेच्छित्त्वा रक्षेन्नारीं प्रयत्नतः ॥ १ ॥ एवं विहृतशल्यां तां सिञ्चेदुष्णेन वारिणा । ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत् ॥ एवं मृद्वी भवेद्योनिस्तच्छूलं चोपशाम्यति ॥ २ ॥ अथ प्रसूताया योनौ क्षतादेस्तु

१ (च०) चादनम् ।

चिकित्सितम् ॥ तुम्बीपत्रं तथा लोध्रं समभागं तु पेषयेत् । तेन लेपो भगे कार्यः शीघ्रं स्याद्योनिरक्षता ॥ १ ॥ पलाशोदुम्बरफलं तिलतैलसमन्वितम् । योनौ प्रलिप्तं मधुना गाढीकरणमुत्तमम् ॥ २ ॥ प्रसूता वनिता वृद्धकुक्षिह्रासाय संपिबेत् । मातर्मथितसंमिश्रां त्रिःसप्ताहात्कणाजटाम् ॥ ३ ॥ इति भावप्रकाशात् ॥ अथ वङ्गसेनात् ॥ आसुरीहिङ्गुसिन्धूत्थं काञ्जिकेनावलोडितम् । गर्भाशये मृतं गर्भं पातयेत्पानयोगतः ॥ १ ॥ आलोड्य काञ्जिकैर्घोटीपुरीषं वस्त्रगालितम् । ससिन्धूग्रासुरीतैलं विषमागतगर्भनुत् ॥ २ ॥ परूषकशिफालेपः स्थिरामूलकृतोऽथ वा । नाभिबस्तिभगाद्येषु मूढगर्भापकर्षणः ॥ ३ ॥ इति मूढगर्भचिकित्सा ॥

## ॥ अथ प्रसूताया उदरस्थापरोपद्रवानाह ॥

प्रसूताया न पतिता जठरादपरा यदि । तदा सा कुरुते शूलमाध्मानं वह्निमन्दताम् ॥ १ ॥ अथ तच्चिकित्सा ॥ केशवेष्टितयाङ्गुल्या तस्याः कण्ठं प्रघर्षयेत् । निर्मोककटुकालाबुकृतवेधनसर्षपैः ॥ १ ॥ चूर्णितैः कटुतैलाक्तैर्धूपयेदभितो भगम् । लाङ्गलीमूलकल्केन पाणिपादतलानि हि । प्रलिम्पेत्सूतिका योषिदपरापातनाय वै ॥२॥ हस्तं छिन्ननखं स्निग्धं सूतीयोनौ शनैः क्षिपेत् । अपरां तेन हस्तेन जनयित्री विनिर्हरेत् ॥ ३ ॥ इत्यपरापातनविधिः ॥

## ॥ अथ सूतिकारोगाधिकारः ॥

पृथिव्यां पतिते वत्से योनौ पिण्डनमिष्यते । अप्रवेशो यथा वायोस्तथा संरक्षणक्रिया ॥ १ ॥ वायुः प्रकुपितः कुर्यात्संरुद्ध्य रुधिरं च्युतम् । सूताया हृच्छिरोबस्तिशूलं मक्कल्लसंज्ञितम् ॥ २ ॥ अथ मक्कल्लस्य चिकित्सा ॥ संचूर्णितं यवक्षारं पिबेत्कोष्णेन वारिणा । सर्पिषा वा पिबेन्नारी मक्कल्लस्य निवृत्तये ॥ . ॥ पिप्पली पिप्पलीमूलं मरिचं गजपिप्पली । नागरं चित्रकं चव्यं रेणुकैलाजमोदिकाः ॥ २ ॥ सर्षपो हिङ्गु भार्गी च पाठेन्द्रयवजीरकाः । महानिम्बश्च मूर्वा च विषा तिक्ता विडङ्गकम् ॥३॥ पिप्पल्यादिगणो ह्येष कफमारुतनाशनः । गुल्मशूलज्वरहरो दीपनश्चामपाचनः ॥ ४ ॥ क्वाथमेषां पिबेन्नारी लवणेन समन्वितम् । मक्कल्लशूलगुल्मघ्नं कफानिलहरं परम् ॥ ५ ॥ त्रिकटुकचातुर्जातककुस्तुम्बरुचूर्णसंयुक्तम् । खादेद्गुडं पुराणं नित्यं नारी मक्कल्लदलनाय ॥ ६ ॥ शोणं बोलं सघृतं सगुडं गुटकीकृतं गिलितम् । मक्कल्लाभिधशूलं हन्ति समूलं सशोणितातङ्कम् ॥ ७ ॥ हिङ्गुशुद्धं ससर्पिष्कं भुक्तं मक्कल्लशूलनुत् ॥८॥ इति मक्कल्लचिकित्सा ॥ अथ प्रसूताया हितान्याह ॥ प्रसूता युक्तमाहारं विहारं च समाचरेत् । व्यायामं मैथुनं क्रोधं शीतसेवां च वर्जयेत् ॥ १ ॥ मिथ्याचारात् सूतीकाया यो व्याधिरुपजायते । सकृच्छ्रसाध्योऽसाध्यो वा भवेत्पथ्यं समाचरेत् ॥ २ ॥ इति भावप्रकाशात् ॥ अथ सूतिकारोगनिदानम् ॥

मिथ्योपचारात् सङ्क्लेशाद्विषमाजीर्णभोजनात् । सूतिकायास्तु ये रोगा जायन्ते दारुणाश्च ते ॥ १ ॥ अङ्गमर्दो ज्वरः कम्पः पिपासा गुरुगात्रता । शोफः शूलातिसारौ च सूतिकारोगलक्षणम् ॥ २ ॥ ज्वरादीनां रोगविशेषाणां निदानविशेषमाह ॥ ज्वरातीसारशोथाश्च शूलानाहबलक्षयाः । तन्द्रारुचिप्रसेकाद्याः वातश्लेष्मसमुद्भवाः ॥१॥ कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाश्रिताः । ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः॥२॥अथ सूतिकारोगचिकित्सामाह॥ सूतिकारोगशान्त्यर्थं कुर्याद्वातहरीं क्रियाम् । दशमूलकृतं क्काथं कोष्णं दद्याद् घृतान्वितम् ॥१ ॥ अमृतानागरसहचरभद्रोत्कटपञ्चमूलकं जलदः । शृतशीतं मधुयुक्तं शमयत्यचिरेण सूतिकातङ्कम् ॥ २ ॥ अथ देवदार्वादिः ॥ देवदारु वचा कुष्ठं पिप्पली विश्वभेषजम् । भूनिम्बः कट्फलं मुस्तं तिक्ता धान्यं हरीतकी ॥१॥ गजकृष्णा सदुःस्पर्शा गोक्षुरो धन्वयासकः । बृहत्यतिविषा छिन्ना कर्कटी कृष्णजीरकम् ॥ २ ॥ समभागान्वितैरेतैः सिन्धुरामठसंयुतम् । क्काथमष्टावशेषं तु प्रसूतां पाययेत् स्त्रियम् ॥३॥ शूलकासज्वरश्वासमूर्च्छाकम्पशिरोऽर्तिभिः । युक्तं प्रलापतृड्दाहतन्द्रातीसारवान्तिभिः ॥ ४ ॥ निहन्ति सूतिकारोगं वातपित्तकफोद्भवम् । कषायो देवदार्व्यादिः सूतायाः परमौषधम् ॥ ५ ॥ अथ निर्गुण्ड्यादिक्काथः ॥ संयोजितो दलितया कणया कवोष्णो निर्गुण्डिकालशुननागरजः कषायः । पीतो निहन्ति कफमारुतकोपजातं सूत्यामयं सकलमेव सुदुस्तरं च ॥१॥ अथ सहचरादिः ॥ सहचरकुलत्थपुष्करदारुनिशादारुवेतसक्काथः । पीतः सहिङ्गुलवणः शमयति शूलज्वरौ सूत्याः ॥ १ ॥ अथ पञ्चमूलादिः ॥ पञ्चमूलस्य वा क्काथं तप्तलोहेन सङ्गतम् । सूतिकारोगनाशाय पिबेद्वा तद्युतां सुराम् ॥१॥ अथ पञ्चजीरकपाकः ॥ जीरकं स्थूलजीरश्च शतपुष्पाद्वयं तथा । यवानी चाजमोदा च धान्यकं मेथिकापि च ॥ १ ॥ शुण्ठी कृष्णा कणामूलं चित्रकं हपुषापि च । विदारीफलचूर्णं तु कुष्ठं कम्पिल्लकं तथा ॥ २ ॥एतानि पलमात्राणि गुडं पलशतं मतम् । क्षीरं प्रस्थद्वयं दद्यात्सर्पिषः कुडवं तथा ॥ ३ ॥ पञ्चजीरकपाकोऽयं प्रसूतानां प्रशस्यते । युज्यते सूतिकारोगे योनिरोगे ज्वरे क्षये ॥ कासे श्वासे पाण्डुरोगे कार्श्ये वातामयेषु च ॥४॥ इति पञ्चजीरकपाकः॥ अथ सौभाग्यशुण्ठी ॥ आज्यस्याञ्जलियुग्मपत्रपयसः प्रस्थद्वयं खण्डतः पञ्चाशत्पलमत्र चूर्णितमथ प्रक्षिप्यते नागरम् । प्रस्थार्धं गुडवद्विपाच्य विधिना मुष्टित्रयं धान्यकान्मिस्याः पञ्चपलं पलं कृमिरिपोः साजाजिजीरादपि ॥ १ ॥ व्योषाम्भोददलोरगेन्द्रसुमनः सद्राविडानां[1] पलं पक्कं नागरखण्डसंज्ञकमिदं सौभाग्यदं योषिताम् । तृट्छर्दिज्वरदाहशोषशमनं सश्वासकासापहं प्लीहव्याधिविनाशनं कृमिहरं मन्दाग्निसन्दीपनम् ॥२॥ इति सौभाग्यशुण्ठी ॥अन्यच्च॥ नागरं कणशः कृत्वा प्रस्थमात्रं भिषग्वरः । अजादुग्धाढकद्वन्द्वे विपचेन्मन्दवह्निना ॥ १ ॥ घनीभूते तु पयसि तस्माच्छुण्ठीं समुद्धरेत् । अतिसूक्ष्मं विनिष्पिष्य शोषयेदातपे खरे

1 ( च० ) सद्राविडीनाम् ।

॥ २ ॥ घृतमानीं समावाप्य तद्दुग्धं तु पुनः पचेत् । यावत्पिण्डत्वमायाति ततस्तत्र विनिक्षिपेत् ॥ ३ ॥ चातुर्जातं तुगावेल्लं धान्यकं जीरकद्वयम् । मिशिमाकल्लकं शुण्ठीं लवङ्गं च शतावरीम् ॥ ४ ॥ तालमूलीत्रिकटुकं कपिकच्छू च षट्कटु । जातीफलं जातिपत्रीं शृङ्गाटं वृद्धदारुकम् ॥५॥ त्रिवृतापद्मबीजं च त्रिफला च बलात्रयम् । जलं सेव्यं वाजिगन्धा चन्दनागरुकारवी ॥ ६ ॥ कक्कोलमजगन्धां च द्राक्षामाक्षोटवारिजे । अजमोदं च बादामं नारीकेलगतं तथा ॥ ७ ॥ कर्पूरमभ्रकं लोहं वङ्गताम्रं शिलाजतु । स्वर्णमाक्षिकमप्येतत्प्रत्येकं कर्षमात्रकम् ॥८॥ चूर्णीकृत्य क्षिपेत्तत्र पाणिभ्यां मर्दयेद् दृढम् । ततः खण्डतुलां पक्त्वा तथा तच्च क्रियां चरेत् ॥९॥ खण्डनागरकं नाम्ना भैषज्यमिदमुत्तमम् । यथाबलमिदं खादेत् प्रातः सायं च भेषजम् ॥१०॥ स्त्रीणामतिहितं नात्र पथ्यापथ्यविचारणा । क्षये पाण्डौ ज्वरे कासे श्वासे मन्दानले तथा ॥११॥ सङ्ग्रहण्यां[1] रक्तगुल्मे प्रदरे सोमरोगके । दुग्धक्षये मूत्रकृच्छ्रे कामलायां गलग्रहे ॥ १२ ॥ पित्तरोगेषु सर्वेषु वातपित्तगदेषु च । सूतिकापवनव्याधौ शस्तमेतन्न संशयः ॥ १३ ॥ अश्विभ्यां पूर्वमुदितः सेव्यो योगोऽयमुत्तमः । एषा सौभाग्यदा शुण्ठी स्त्रीणां पुत्रप्रदा शुभा ॥ १४ ॥ इति द्वितीयसौभाग्यशुण्ठीपाकः ॥ अथान्यच्च नागरस्य पलान्यष्टौ घृतस्य पलविंशतिः । क्षीराढकेन संयुक्तं खण्डस्यार्धतुलां पचेत् ॥ १ ॥ शताह्वाजीरकव्योषत्रिसुगन्धियवानिकाः । कारवीमिसिचव्याग्निमुस्तानां च पलं पलम् ॥ २ ॥ लेहीभूतमिदं सिद्धं घृतभाण्डे निधापयेत् । तद्यथाग्निबलं खादेत्सूतिका तु विशेषतः ॥ ३ ॥ बल्यं वर्ण्यं तथा पुष्यं वलीपलितनाशनम् । वयसः स्थापनं हृद्यं मन्दाग्नेर्दीपनं परम् ॥ ४ ॥ आमवातप्रशमनं सौभाग्यकरमुत्तमम् । मक्कल्लशूलशमनं सूतिकारोगनाशनम् ॥ ५ ॥ इति तृतीयसौभाग्यशुण्ठी ॥ अथ प्रतापलङ्केश्वरो रसः ॥ एकेन्दुचन्द्रानलवार्धिदन्तीकलैकभागं क्रमशो विमिश्रम् । सूताभ्रगन्धोषणलोहशङ्खवन्योत्पलाभस्मविषं च पिष्टम् ॥१॥ प्रसूतिवातेऽनिलदन्तबन्धे सार्द्राम्भसा वल्लममुष्य लिह्यात् । वातामये श्लेष्मगदेऽर्शसि स्यात्पुराम्रुत।द्रांत्रिफलागतोऽयम् ॥ २ ॥ सशृङ्गबेरद्रव एष हन्ति ससन्निपातं ज्वरमुग्ररूपम् । निजानुपानैर्निजपथ्ययुक्तः प्रतापलङ्केश्वरनामधेयः ॥ ३ ॥ सूतः प्रयुक्तो गिरिराजपुत्र्या* ॥ इति प्रतापलङ्केश्वरः ॥ अथ प्रसूताया नियमसमयावधिमाह ॥ सर्वतः परिशुद्धा स्यात्स्निग्धपथ्याल्पभोजना । स्वेदाभ्यङ्गपरा नित्यं भवेन्मासमतन्द्रिता ॥ १ ॥ प्रसूता सार्धमासान्ते दृष्टे वा पुनरार्तवे । सूतिका नाम हीना स्यादिति धन्वन्तरेर्मतम् ॥ २ ॥ उपद्रवैर्विशुद्धां च विज्ञाय वरवर्णिनीम् । ऊर्ध्वं चतुर्भ्यो मासेभ्यः परिहारं विसर्जयेत् ॥ ३ ॥ इति भावप्रकाशात् ॥ इति सूतिकारोगचिकित्सा ॥

## ॥ अथ स्तनरोगस्य निदानपूर्विकां चिकित्सामाह ॥

सक्षीरौ चाप्यदुग्धौ वा दोषः प्राप्य स्तनौ स्त्रियाः । रक्तं मांसं च सन्दूष्य स्तनरो-

* अयंश्लोकस्तु एक चरणः

1 ( ख० ) स्त्रीग्रहण्याम् ।

गाय कल्पते ॥१॥ स्तनरोगाणामतिदेशेन लक्षणान्याह॥ पञ्चानामपि तेषां हि रक्तजं विद्रधिं विना। लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥ २ ॥ इति स्तनरोगनिदानम् ॥ अथ स्तनरोगचिकित्सा ॥ शोथं स्तनोत्थितमवेक्ष्य भिषग्विदध्याद्विद्रधावभिहितं बहुधा विधानम्। आमे विदह्यति तथैव गते च पाकं यस्याः स्तनौ सततमेव च निग्रहीतौ ॥१॥ पित्तघ्नानि तु शीतानि द्रव्याण्यत्र प्रयोजयेत्। जलौकाभिर्हरेद्रक्तं तत्स्तनावुपनाहयेत् ॥२॥ लेपो विशालामूलेन हन्ति पीडां स्तनोत्थिताम्। निशाकनककल्काभ्यां लेपः प्रोक्तः स्तनार्तिहा ॥ ३ ॥ लेपाद्विहन्ति मूलं स्तनरोगं वन्ध्यकर्कोट्याः। निर्वाप्य तप्तलोहं सलिले तद्वा पिबेत्तत्र ॥४॥ इति स्तनरोगचिकित्सा ॥

---

## ॥ अथ क्षीरदोषनिदानम् ॥

उक्तं सुश्रुते। रक्तप्रसादो मधुरः पक्काहारनिमित्तजः। कृत्स्नदेहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते ॥ १ ॥ माधवेनाप्युक्तम्। गुरुभिर्विविधैरन्नैर्दुष्टैर्दोषैः प्रदूषितम्। क्षीरं धात्र्याः कुमारस्य नानारोगाय कल्पते ॥२॥ कषायं सलिलप्लावि स्तन्यं मारुतदूषितम्। कट्वम्ललवणं पीतराजिमत्पित्तसंज्ञितम् ॥ ३ ॥ कफदुष्टं घनं तोये निमज्जति सुपिच्छिलम्। द्विलिङ्गं द्वन्द्वजं विद्यात्सर्वलिङ्गं त्रिदोषजम् ॥ ४ ॥ अथाविकृतस्तन्यमाह ॥ अदुष्टं चाम्बुनिक्षिप्तमेकीभवति पाण्डुरम्। मधुरं चाविवर्णं च तत्प्रसन्नं विनिर्दिशेत् ॥ १ ॥ इति क्षीरदोषनिदानम् ॥ अथ तच्चिकित्सा ॥ तत्र वातात्मके स्तन्ये दशमूलीं त्र्यहं पिबेत्। वातव्याधिहरं सर्पिः पीत्वा मृदु विरेचयेत् ॥ १ ॥ पित्तदुष्टेऽमृताभीरुपटोलं निम्बचन्दनम्। धात्री कुमारश्च पिबेत्क्काथयित्वा सशर्करम् ॥२॥ कफदुष्टे घृतं पेयं यष्टीसैन्धवसंयुतम्। राढपुष्पैः स्तनौ लिम्पेच्छिशोश्च दशनच्छदौ ॥ ३ ॥ सुखमेवं वमेद्बालः कफकोपश्च शाम्यति। द्वन्द्वदुष्टे द्वियोगाभ्यां पूर्वोक्ताभ्यां विशोधयेत् ॥ ४ ॥ स्तन्ये त्रिदोषसन्दुष्टे शकृदामजलोपमम्। नानावर्णरुजं चार्धं विबन्धमुपवेश्यते ॥ ५ ॥ पाठा मूर्वा च भूनिम्बदारुशुण्ठीकलिङ्गकाः। सारिवानततिक्ताख्यं तच्च स्तन्यविशोधनम् ॥ ६ ॥ इति क्षीरदोषविशुद्धिचिकित्सा ॥ अथ स्तन्यजननविधिः ॥ भूमिकूष्माण्डमूलस्य क्षीरपिष्टस्य या रसम्। पिबेत्सशर्करं तस्याः क्षीरं बहु विवर्धते ॥ १ ॥ शतावरी क्षीरपिष्टा पीता स्तन्यविवर्धनी। कवोष्णं कणया पीतं क्षीरं क्षीरविवर्धनम् ॥ २ ॥ वनकार्पासकेक्षूणां मूलं सौवीरकेण वा। विदारिकन्दं सुरया पिबेद्वा स्तन्यवर्धनम् ॥ ३ ॥ अथ वज्रकाञ्जिकम् ॥ पिप्पली पिप्पलीमूलं चव्यं शुण्ठी यवानिका। जीरके द्वे हरिद्रे द्वे बिडं सौवर्चलं तथा ॥ १ ॥ एतैरेवौषधैः पिष्टैरारनालं विपाचयेत्। तद्यथाग्निबलं पीत्वा प्रसूता सुखमश्नुते ॥ २ ॥ आमवातहरं वृष्यं कफघ्नं वातनाशनम्। तद्वज्रकाञ्जिकं नाम्ना स्त्रीणामग्निविवर्धनम् ॥ मक्कल्लशूलशमनं परं क्षीरविवर्धनम् ॥ ३ ॥

---

१ (च०) पित्तमृष्टे। २ (च०) वर्चो। ३ (च) विबद्ध—।

इति वज्रकाञ्जिकम् ॥ इति स्तन्यजननविधिः ॥ अथ पथ्यापथ्यम् ॥ यत्पथ्यं यदपथ्यं च रक्तपित्तेषु कीर्तितम् । प्रदरेऽपि यथादोषं तत्तु नारी रुजि त्यजेत् ॥१॥ वातव्याधिमतां पथ्यापथ्यं च यदुदीरितम् । योनिव्यापत्सु सर्वासु तद्विद्यात्तु यथामलम् ॥ २ ॥ शालयः षष्टिका मुद्गा गोधूमा लाजसक्तवः । नवनीतं घृतं क्षीरं रसाला मधु शर्करा । पनसं कदलं धात्री द्राक्षाम्लं स्वादु शीतलम् ॥ ३ ॥ कस्तूरी चन्दनं माला कर्पूरमनुलेपनम् । चन्द्रिका स्नानमभ्यङ्गा मृदुशय्या हिमानिलः ॥ ४ ॥ सन्तर्पणं प्रियाश्लेषो विहाराश्च मनोरमाः । प्रियंकरं चान्नपानं गर्भिणीनां हितं सदा ॥ ५ ॥ इति पथ्यम् ॥ स्वेदनं वमनं क्षारं कदन्नं विषमाशनम् । अपथ्यमिदमुद्दिष्टं गुर्विणीनां महर्षिभिः ॥ १ ॥ सूतिकाख्येषु रोगेषु वातश्लेष्मोद्भवेषु च । तत्र रोगानुकल्पेन पथ्यापथ्यानि निर्दिशेत् ॥२॥ इति पथ्यापथ्यम् ॥ इति स्त्रीरोगाधिकारः ॥

---

## ॥ अथ बालरोगाधिकारः ॥

तत्र बालरोगाणां निदानानि लक्षणानि चाह ॥ धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा । दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति ॥१॥ मिथ्याहारविहारिण्या दुष्टा वातादयस्त्रियः । दूषयन्ति पयस्तेन जायन्ते व्याधयः शिशोः ॥ २ ॥ वातदुष्टं शिशुः स्तन्यं पिबन्वातगदातुरः । क्षामस्वरः कृशाङ्गः स्याद्बद्धविण्मूत्रमारुतः ॥ ३ ॥ स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान् । तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन् ॥४॥ कफदुष्टं पिबन् क्षीरं लालालुः श्लेष्मरोगवान् । निद्रार्दितो जडः शूनवक्त्राक्षश्छर्दनः शिशुः ॥५॥ अथ शिशोर्वक्तुमक्षमस्यान्तर्गतवेदनाज्ञानोपायमाह ॥ शिशोस्तीव्रामतीव्रां च रोदनाल्लक्षयेद्रुजम् ॥१॥ अथ कुकूणकमाह ॥ कुकूणकः क्षीरदोषाच्छिशूनामेव वर्त्मनि । जायते तेन तन्नेत्रं कण्डूरं च स्रवेन्मुहुः ॥१॥ शिशुः कुर्याल्ललाटाक्षिकण्ठनासावघर्षणम् । शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः ॥ २ ॥ अथ पारिगर्भिकमाह ॥ मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि । श्वासाग्निसादवमथुतन्द्राकासारुचिभ्रमैः ॥ १ ॥ युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम् । रोगं परिभवाख्यं च तत्र युञ्जीत दीपनम् ॥ २ ॥ अथ तालुकण्टकमाह ॥ तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् । तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ १ ॥ तालुपाते स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम् । तृडक्षिकण्ठास्यरुजो ग्रीवादुर्धरता वमिः ॥ २ ॥ अथ महापद्ममाह ॥ विसर्पस्तु शिशोः प्राणनाशनो शीर्षवस्तिजः । पद्मवर्णो महापद्मरोगो दोषत्रयोद्भवः ॥१॥ शङ्खाभ्यां हृदयं याति हृदयाच्च गुदं व्रजेत् । क्षुद्ररोगे च कथिते अजगल्यहिपूतने ॥२॥ अथान्येऽपि विकारा बालानां भवन्ति तानतिदेशेनाह ॥ ज्वराद्या व्याधयः सर्वे महतां ये पुरेरिताः । बालदेहेऽपि ते तद्वज्ज्ञेयाः स्युः कुशलैरिह ॥१॥ अथ दन्तोद्भेदकान् रोगानाह ॥ दन्तोद्भेदः शिशोः सर्वरोगाणां कारणं ।

---

१ ( च० ) मधुलेपनम् । २ ( च० ) स्त्रियः । ३ ( च० ) शूनः शुक्लाक्ष— । ४ ( च० ) कूट । ५ ( च० ) कास । ६ ( च० ) कार्या— ।

स्मृतः। विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजाः॥ अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते॥१॥ इति बालरोगनिदानलक्षणानि॥अथ ग्रहग्रस्तबालरोगोपक्रमः॥बालग्रहा अनाचारात्पीडयन्ति शिशुं यतः । तस्मात्तदुपसर्गेभ्यो रक्षेद्बालं प्रयत्नतः ॥१॥ अथ बालग्रहाणां नामान्याह ॥ स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार एव च । शकुनी रेवती चैव पूतना गन्धपूतना ॥ १ ॥ पूतना शीतपूर्वा च तथैव मुखमण्डिका । नवमो नैगमेयश्च प्रोक्ता बालग्रहा अमी ॥२॥ अथ सामान्यग्रहदुष्टानां बालानां लक्षणान्याह ॥ क्षणादुद्विजते बालः क्षणात्त्रस्यति रोदिति । नखैर्दन्तैर्दारयति धात्रीमात्मानमेव च ॥१॥ ऊर्ध्वं निरीक्षते दन्तान् खादेत्कूजति जृम्भति। भ्रुवौ क्षिपति दन्तोष्ठं फेनं वमति चासकृत् ॥२॥ क्षामोऽतिनिशि जागर्ति शूनाङ्गो भिन्नविट्स्वरः । मांसशोणितगन्धिश्च न चाश्नाति यथा पुरा ॥ ३ ॥ दुर्बलो मलिनाङ्गश्च नष्टसंज्ञोऽपि जायते । सामान्यग्रहदुष्टानां लक्षणं समुदाहृतम्॥४॥अथ विशिष्टग्रहदुष्टानां लक्षणान्याह ॥ तत्रादौ स्कन्दग्रहस्य लक्षणमाह ॥ एकनेत्रस्य गात्रस्य स्रावः स्यन्दनकम्पनम् । ऊर्ध्वदृष्ट्या निरीक्षेत वक्रास्यो रक्तगन्धिकः ॥१॥ दन्तान् खादति वित्रस्तः स्तन्यं नैवाभिनन्दति । स्कन्दग्रहगृहीतानां रोदनं चाल्पमेव च ॥ २ ॥ अथ स्कन्दापस्मारग्रहस्य लक्षणम् ॥ नष्टसंज्ञो वमेत्फेनं संज्ञावानतिरोदिति । पूयशोणितगन्धित्वं स्कन्दापस्मारलक्षणम् ॥ १ ॥ अथ शकुन्या लक्षणमाह ॥ स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः सास्रावव्रणपरिपीडितः समन्तात् । स्फोटैश्च प्रचिततनुः सदाहपाकैर्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥ १ ॥ अथ रेवतीग्रहलक्षणम् ॥ व्रणैः स्फोटैश्चितं गात्रं पङ्कगन्धं स्रवेदसृक् । भिन्नवर्चा ज्वरी दाही रेवतीग्रहलक्षणम् ॥१ ॥ अथ पूतनालक्षणमाह ॥ अतीसारो ज्वरस्तृष्णा तिर्यक्प्रेक्षणरोदनम् । नष्टनिद्रस्तथोद्विग्नो ग्रस्तः पूतनया शिशुः॥१॥ अथ गन्धपूतनालक्षणमाह ॥ छर्दिः कासो ज्वरस्तृष्णा वसागन्धोऽतिरोदनम् । स्तन्यद्वेषोऽतिसारश्च गन्धपूतनया भवेत् ॥१॥ अथ शीतपूतनालक्षणमाह ॥ वेपते कासते क्षीणो नेत्ररोगो विगन्धिता । छर्द्यतीसारयुक्तश्च शीतपूतनया शिशुः ॥ १ ॥ अथ मुखमण्डनिकालक्षणमाह ॥ प्रसन्नवर्णवदनः शिराभिरभिसंवृतः । मूत्रगन्धिश्च बह्वाशी मुखमण्डनिकाग्रहे ॥ १ ॥अथ नैगमेयग्रहलक्षणमाह ॥ छर्दिः स्पन्दनकण्ठास्यशोषो मूर्च्छा विगन्धिता । ऊर्ध्वं पश्येद्दशेद्दन्तान्नैगमेयग्रहं वदेत् ॥१॥ स्रस्ताक्षश्च स्तनद्वेषी मुह्यते चानिशं मुहुः । तं बालमचिराद्धन्ति ग्रहः संपूर्णलक्षणः ॥ २॥ इति ग्रहग्रस्तबालरोगोपक्रमः ॥ अथ चिकित्सा ॥ तत्रादौ बालरोगाणां चिकित्सा ॥ भैषज्यं पूर्वमुद्दिष्टं महतां यज्ज्वरादिषु । तदेव कार्यं बालानां किं तु दाहादिकं विना ॥१॥ महाकष्टे चोत्पन्ने वमनविरेकावपि दद्यात् । यत आह सुश्रुतः ॥ विरेकबस्तिवमनान्यृते कुर्याच्च नात्ययात् । त एव दोषदूष्याश्च ज्वराद्या व्याधयश्च ते ॥ अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ॥ १ ॥ अथ कनीयसीं मात्रामाह विश्वामित्रः ॥ विडङ्गफलमात्रं तु जातमात्रस्य भेषजम् । अनेनैव प्रमाणेन मासि मासि प्र-

१ ( च० ) मु० पु० पा० शूनाक्षो—।

वर्धयेत् ॥ १ ॥ अथ तन्त्रान्तरे त्वन्यथाभिहितम् ॥ प्रथमे मासि बालाय देया भेषजरक्तिका । अवलेह्या तु कर्तव्या मधुक्षीरसिताघृतैः ॥ १ ॥ एकैकां वर्धयेत्ताव-द्यावत्संवत्सरो भवेत्। तदूर्ध्वं माषवृद्धिः स्याद्यावत्षोडश वत्सराः ॥ २ ॥ ततः स्थिरा भवेत्तावद्यावद्वर्षाणि सप्ततिः । ततो वालकवन्मात्रा ह्रासनीया शनैः शनैः ॥३ ॥ चूर्णकल्कावलेहानामियं मात्रा प्रकीर्तिता । कषायस्य पुनः सैव विज्ञातव्या चतुर्गुणा ॥ ४ ॥ क्षीरपस्य शिशोर्देयमौषधं क्षीरसर्पिषा । धात्र्यास्तु केवलं देयं न क्षीरेणापि सर्पिषा ॥ ५ ॥ अथ ज्वरस्य चिकित्सा ॥ सर्वं निवार्यते बाले स्तन्यं नैव निवार्यते । मात्रया लङ्घयेद्धात्रीं शिशोरेतद्धि लङ्घनम् ॥ १ ॥ अथ भद्रमुस्तादिक्काथः सर्वज्वरेषु ॥ भद्रमुस्ताभयानिम्बपटोलमधुकैः कृतः । क्षीरादस्यौषधं धात्र्या क्षीरान्नादस्य चोभयोः ॥ १ ॥ अन्नादस्य तु बालस्य योजयेत् कुशलो भिषक् । क्काथः कोष्णः शिशोरेष निःशेषज्वरनाशनः ॥ २ ॥ एलाम्रास्थिकटुत्रिकत्रिफलिकावेल्लाब्दशृङ्गीविषा लोध्रं धातकिचित्रकाह्लद्वपुषाबिल्वाजमोदाः समाः । वस्वंशा तुरगी जया नवपल्लवा सर्वैः समांशा सिता बालानां ज्वरकार्श्यकासशमनश्चूर्णोऽतिसारं जयेत् ॥ ३ ॥ अथ जिह्वायां लेपः ॥ बालो योऽचिरजातः स्तन्यं गृह्णाति नो तदा तस्य । सैन्धवधात्रीमधुघृतपथ्याकल्केन घर्षयेज्जिह्वाम् ॥ १ ॥ अथ पलङ्कषादिधूपः ॥ पलङ्कषा वचा कुष्ठगजचर्माविचर्म च । निम्बस्य पत्रं क्षौद्रेण सार्धयुक्तं तु धूपनम् ॥ ज्वरवेगं निहन्त्याशु बालकानां विशेषतः ॥१ ॥ अथ मूर्वाद्युद्वर्तनम् ॥ मूर्वानिशासर्षपरामसेनश्वेतासमङ्गाम्बुदकारवीणाम् । छागीपयोभिः सह पेषितानामुद्वर्तनं स्याज्ज्वरजिच्छिशूनाम् ॥१॥ इति ज्वरचिकित्सा ॥ अथातिसारग्रहण्योश्चिकित्सा ॥ घनकृष्णारुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम् । शिशोर्ज्वरातिसारघ्नं कासं श्वासं वमिं हरेत् ॥१॥ लोध्रेण पिप्पली बालाबालकातिसृतो हितः । श्रीरसो माक्षिकयुतो धातकीकुसुमैः समम् ॥२ ॥ बिल्वं च पुष्पाणि च धातकीनां जलं सलोध्रं गजपिप्पली च । क्काथावलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु ॥३॥ समङ्गाधातकीलोध्रसारिवाभिः शृतं जलम् । दुर्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम् ॥४॥ विडङ्गान्यजमोदा च पिप्पलीतण्डुलानि च । एषामालिह्य चूर्णानि सुखतप्तेन वारिणा ॥ ५ ॥ आमे प्रवृत्तेऽतीसारे कुमारं पाययेद्भिषक् । मोचारसं समङ्गा च धातकी पद्मकेसरम् । पिष्टैरेतैर्यवागूः स्याद्रक्तातीसारनाशिनी ॥६॥ इति मोचरसादिर्यवागू रक्तातिसारे ॥ नागरातिविषामुस्तवालकेन्द्रयवैः शृतम् । कुमारं पाययेत्प्रातः सर्वातीसारनाशनम् ॥ १ ॥ लाजाः सयष्टिमधुकाः शर्करा क्षौद्रमेव च । तण्डुलोदकयोगेन क्षिप्रं हन्ति प्रवाहिकाम् ॥२॥ इति लाजादिचूर्णं प्रवाहिकायाम् ॥ लोध्रेन्द्रयवधान्याकधात्रीह्रीवेरमुस्तकम् । मधुना लेहयेद्बालं ज्वरातीसारनाशनम् ॥१॥ रजनी सरलो दारु बृहती गजपिप्पली ॥ २ ॥ पृश्निपर्णी शताह्वा च लीढा माक्षिकसर्पिषा । दीपनी ग्रहणीं हन्ति मारुतार्तिं सकामलाम् ॥ ज्वरातीसारपाण्डुत्वं बालानां सर्वरोगनुत् ॥ ३ ॥ इति रजन्यादिचूर्णं सङ्ग्रहण्यादौ ॥ इत्यतिसारग्रहण्योश्चिकित्सा ॥ अथ कासरोगचिकित्सा ॥ पौष्करातिविषाशृङ्गीमागधीधन्वयासकैः । कृतं चूर्णं तु सक्षौद्रं

शिशूनां पञ्चकासजित् ॥१॥ इति पौष्करादिचूर्णम् ॥ अथ मुस्तकादिस्वरसः ॥ मुस्तका-
तिविषावासाकणाशृङ्गीरसं लिहन् । मधुना मुच्यते बालः कासैः पञ्चभिरुच्छ्रितैः ॥१॥
अथ व्याघ्रीकुसुमाद्यवलेहिका ॥ व्याघ्रीकुसुमसञ्जातकेसरैरवलेहिका । मधुना चिरस-
ञ्जातान् शिशोः कासान् व्यपोहति ॥१॥ अथ कासश्वासचिकित्सामाह ॥ धान्यं शर्करया
युक्तं तण्डुलोदकसंयुतम् । पानमेतत्प्रदातव्यं कासश्वासापहं शिशोः ॥१॥ इति धान्यादि
पानकम् ॥ अथ द्राक्षादिचूर्णम् ॥ द्राक्षावासाभयाकृष्णाचूर्णं क्षौद्रेण सर्पिषा । लीढं श्वासं
निहन्त्याशु कासं च तमकं तथा ॥१॥ अथ दुरालभादिलेहः ॥ दुरालभाकणाद्राक्षापथ्याः
क्षौद्रेण लेहयेत् । त्रिरात्रं पञ्चरात्रं वा कासश्वासहरः शिशोः ॥ तुगा च क्षौद्रसंलीढा कास-
श्वासौ शिशोर्जयेत् ॥ १ ॥ इति कासश्वासयोश्चिकित्सा ॥ अथ हिक्कायां छर्द्यां च ॥
चूर्णं कटुकरोहिण्या मधुना सह योजयेत् । हिक्कां प्रशमयेत्क्षिप्रं छर्दिं चापि चिरो-
त्थिताम् ॥१॥ आम्रास्थिलाजसिन्धूत्थं सक्षौद्रं छर्दिनुद्भवेत् । घनशृङ्गीविषाणां च चूर्णं
हन्ति समाक्षिकम् ॥ वान्ति ज्वरं तथा योगो मधुनातिविषारजः ॥२॥ अथ क्षीरच्छर्द्याम् ॥
पीतं पीतं वमेद्यस्तु स्तन्यं तं मधुसर्पिषा । द्विवार्ताकीफलरसं पञ्चकोलं च लेहयेत्
॥ पिप्पलीपिप्पलीमूलं चव्यचित्रकनागरम् ॥ १ ॥ अथ तृष्णायाम् ॥ ह्रीबेरशर्करा-
क्षौद्रं लीढं तृष्णाहरं परम् ॥ अथानाहे शूले च ॥ घृतेन सिन्धुविश्वैलाहिङ्गुभार्गी-
रजो लिहन् । आनाहं वातिकं शूलं हन्यात्तोयेन वा शिशोः ॥ १ ॥ अथ रेचनम् ॥
पिष्ट्वा गन्धर्वबीजानि त्वाखुविण्निम्बुवारिणा । नाभौ गुदे वा लेपेन शिशूनां रेचनं
परम् ॥ १ ॥ इन्दुलोचननेत्राणि शिखिभागं हि योजयेत् । त्रुटिगन्धकमुद्रौ-
डशतपुष्पा विचूर्णिताः ॥ २ ॥ माषद्वयं गवां दुग्धैः सेवयेद्दिनपञ्चकम् ।
रेचयेन्मृत्तिकां शुद्धां शिशूनां हितमौषधम् ॥ ३ ॥ इति वैद्यविलासात् ॥
अथ मूत्राघाते ॥ कणोषणसिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतः । मूत्रग्रहे प्रयोक्तव्यः
शिशूनां लेह उत्तमः ॥ १ ॥ अथ कार्श्ये ॥ यथा तु दुर्बलो बालः खादन्नपि च वह्नि-
मान् । विदारीकन्दगोधूमयवचूर्णं घृतप्लुतम् ॥१॥ खादयेत्तदनु क्षीरं शृतं समधुशर्क-
रम् । सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा ॥ २ ॥ मत्स्याक्षकः शङ्खपुष्पी म-
धुसर्पिः सकाञ्चनम् । अर्कपुष्पीघृतं क्षौद्रं चूर्णितं कनकं वचा ॥ ३ ॥ सहेमचूर्णं कै-
डर्यं श्वेतदूर्वाघृतं मधु । चत्वारोऽभिहिताः प्राश्याः अर्धश्लोकसमापनाः ॥ कुमा-
राणां वपुर्मेधाबलपुष्टिकराः स्मृताः ॥ ४ ॥ अथ लाक्षादितैलम् ॥ लाक्षारससमं तैलं
मस्तुन्यथ चतुर्गुणे । रास्नाचन्दनकुष्ठाब्दवाजिगन्धानिशायुतैः ॥ १ ॥ शताह्वादारु-
यष्ट्याह्वमूर्वातिक्ताहरेणुभिः । संसिद्धं ज्वररक्षोघ्नं बलवर्णकरं शिशोः ॥२॥ इति लाक्षा-
दितैलम् ॥ अथाश्वगन्धाघृतम् ॥ पादकल्केऽश्वगन्धायाः क्षीरेऽष्टगुणिते पचेत् । घृतं
देयं कुमाराणां पुष्टिकृद्बलवर्धनम् ॥१॥ इत्यश्वगन्धाघृतम् ॥ सप्तच्छदार्कच्छदनक्तमाल-
मूलैस्तुरङ्गारिजटासमेतैः । उत्सादिताङ्गः पशुमूत्रपिष्टैर्ह्रीबेरमुण्डीसलिलाभिषिक्तः ॥१॥

१ ( च० ) फलरसम् । २ ( च० ) कतकम् ।

दिने दिने याति शिशुः प्रवृद्धिं पतिः क्षपाणामिव शुक्लपक्षे ॥२॥ इति राजमार्तण्डात् ॥ इति कार्श्यचिकित्सा ॥ अथ शोथे ॥ मुस्ताकूष्माण्डबीजानि भद्रदारुकलिङ्गकान् । पिष्ट्वा तोयेन संलिपेल्लेपोऽयं शोथहृच्छिशोः ॥ १ ॥ अथ नाभिशोथे ॥ मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा । स्वेदयेदुत्थितां नाभिं शोथस्तेनोपशाम्यति ॥१॥ अथ नाभिपाके ॥ नाभिपाके निशालोध्रप्रियङ्गुमधुकैः शृतम् । तैलमभ्यञ्जने शस्तमेभिश्चाँत्रावधूनलम् ॥ १ ॥ दुग्धेन च्छागशकृता नाभिपाकेऽवचूर्णनम् । त्वक्चूर्णैः क्षीरिणा वापि कुर्याच्चन्दनरेणुना ॥ २ ॥ अथ गुदपाके ॥ गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् । रसाञ्जनं विशेषेण पानलेपनयोर्हितम् ॥ शङ्खयष्ट्याञ्जनैश्चूर्णं शिशूनां गुदपाकनुत् ॥ १ ॥ अथाहिपूतने ॥ शङ्खसौवीरयष्ट्याह्वैर्लेपो देयोऽहिपूतने ॥ १ ॥ अथ पारिगर्भिके ॥ पारिगर्भकरोगे तु युज्यते वह्निदीपनम् ॥ १ ॥ अथ क्षतविसर्पविस्फोटज्वरेषु ॥ पटोलत्रिफलारिष्टहरिद्राक्वथितं पिबेत् । क्षतवीसर्पविस्फोटज्वराणां शान्तये शिशोः ॥ १ ॥ अथ सिध्मपामाविचर्चिकासु ॥ गृहधूमं निशाकुष्ठराजिकेन्द्रयवैः शिशोः । लेपस्तक्रेण हन्त्याशु सिध्मपामाविचर्चिकाः ॥ १ ॥ अथ मुखस्रावे मुखपाके च ॥ सारिवातिललोध्राणां कषायो मधुकस्य च । संस्राविणि मुखे शस्तो धावनार्थं शिशोः सदा ॥ १ ॥ मुखपाके तु बालानां आम्रसारमयोरजः । गैरिकं क्षौद्रसंयुक्तं भेषजं सरसाञ्जनम् ॥ २ ॥ दार्वीयष्ट्याभयाजातीपत्रक्षौद्रैस्तु धावनम् । अश्वत्थत्वगदलक्षौद्रैर्मुखपाके प्रलेपनम् ॥ ३ ॥ अथ रोदने ॥ पिप्पलीत्रिफलाचूर्णं घृतक्षौद्रपरिप्लुतम् । बालो रोदिति यस्तस्मै लेढुं दद्यात्सुखावहम् ॥ १ ॥ अथ तालुकण्टके ॥ हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् । पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात् ॥ तालुपाके यवक्षारमधुभ्यां प्रतिसारणम् ॥ १ ॥ अथ कुकूणके ॥ फलत्रिकं लोध्रपुनर्नवे च सशृङ्गबेरं बृहतीद्वयं च । आलेपनं श्लेष्महरं सुखोष्णं कुकूणके कार्यमुदाहरन्ति ॥ १ ॥ अथ नयने ॥ व्योषं सभृङ्गं च मनःशिलालं करञ्जबीजं च सुपिष्टमेतत् । कुण्ड्वर्दितानामथ वर्त्मनां तु श्रेष्ठं शिशूनां नयने विदध्यात् ॥ १ ॥ अथ दन्तोद्भेदजरोगेषु ॥ दन्तपालीं तु मधुना चूर्णेन प्रतिसारयेत् । धातकीपुष्पपिप्पल्योर्धात्रीफलरसेन वा ॥ १ ॥ दतोत्थानभवा रोगाः पीडयन्ति च बालकम् । जाते दन्ते हि शाम्यन्ति यतस्तद्धेतुका गदाः ॥ २ ॥ प्राचीगतं पाण्डुरसिन्धुवारमूलं शिशूनां गलके निबद्धम् । हिनोति दन्तोद्भववेदनां च निःशेषमेकाण्डकुरण्ड एव ॥ ३ ॥ इति दन्तोद्भेदजरोगेषु ॥ यस्ताम्रचूडविहगोभयपार्श्वपक्षपुच्छैर्गवाज्यसहितैः कृतधूपनाङ्गः । आरभ्य जन्मदिवसादिनसप्तकं हि बालस्य तस्य न कुतश्चन भीतिरस्ति ॥ ४ ॥ इति राजमार्तण्डात् ॥ इति बालरोगाणां चिकित्सा ॥ अथ ग्रहग्रस्तबालरोगाणां चिकित्सामाह ॥ तत्रादौ सामान्यग्रहदुष्टानां चिकित्सा ॥

---

१ (च०) रसः । २ (च०) करोति ।

सहामुण्डीनिकोदीच्यकाथस्नानं ग्रहापहम्। सप्तच्छदाभयनिशाचन्दनैश्चानुलेपनम्॥१॥ अथ धूपः॥ सर्पत्वग्लशुनं मूर्वा सर्षपारिष्टपल्लवाः। बिडालविड्जालोममेषशृङ्गीवचा मधु। धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः॥१॥ अथ बालरोगे पर्पटीरसः॥ रसं गन्धं समं शुद्धं तयोः कृत्वा तु कज्जलीम्। लोहदर्व्यां घृताक्तायामाधाय कदलीदलैः॥१॥ छादयेदुपरिन्यस्तगोमयैर्बदरीन्धनात्। शिखिनः कोमलादेव विधेया रसपर्पटी॥२॥ पर्पट्या द्विगुणो जीरः सूर्यांशो रामठः स्मृतः। दीयते मधुना तेषां शिशोर्गुञ्जाचतुष्टयम्॥३॥ श्लेष्मपित्तानिलश्वासकासपीनसपाण्डुताः। प्लीहाग्निसादशूलानि हन्यादस्य ज्वरं जवात्॥४॥ अथाष्टमङ्गलघृतम्॥ वाचा कुष्ठं तथा ब्राह्मीं सिद्धार्थकमथापि च। सारिवा सैन्धवं चैव पिप्पली घृतमष्टकम्॥१॥ सिद्धं घृतमिदं मेध्यं पिबेत्प्रातर्दिने दिने। दृढस्मृतिः क्षिप्रमेधः कुमारो बुद्धिमान्भवेत्॥२॥ न पिशाचा न रक्षांसि न भूता न च मातरः। प्रभवन्ति कुमाराणां पिबतामष्टमङ्गलम्॥ बलिशान्तीष्टिकर्माणि कार्याणि ग्रहशान्तये॥३॥ अथ विशिष्टग्रहदुष्टानां चिकित्सा॥ तत्र स्कन्दग्रहदुष्टस्य चिकित्सा॥ स्कन्दग्रहोपसृष्टस्य कुमारस्य प्रशस्यते। वातघ्नद्रुमपत्राणां क्काथेन परिषेचनम्॥१॥ देवदारुणि रास्नायां मधुरेषु गणेषु च। सिद्धं सर्पिश्च सक्षीरं पातुमस्मै प्रदापयेत्॥२॥ सर्षपाः सर्पनिर्मोको वचा काकादनी घृतम्। उष्ट्राजाविगवां चापि रोम्णामुद्धूपनं भवेत्॥३॥ सोमवल्लीमिन्द्रवृक्षं बृहतीबिल्वजे शमीम्। मृगादन्याश्च मूलानि ग्रथितानि विधारयेत्॥४॥ रक्तानि माल्यानि तथा पताका रक्तांश्च गन्धान्विविधांश्च भक्ष्यान्। घण्टां च देवाय बलिं निवेद्य सकुक्कुटं स्कन्दग्रहाभिधाय॥५॥ स्नानं त्रिरात्रं निशि चत्वरेषु कुर्यात्परं शान्तिपदैर्निवेद्य। गायत्रिपूताभिरथाद्भिरग्निं प्रज्वालयेद्वाहुतिभिश्च धीमान्॥६॥ रक्षामतः प्रवक्ष्यामि बालानां पापनाशिनीम्। अहन्यहनि कर्तव्या याभिरद्भिरतन्द्रितैः॥७॥ तपसां तेजसां चैव यशसां वपुषां तथा। निधानं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु॥८॥ ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः। देवसेनारिपुहरः पातु त्वां भगवान्गुहः॥९॥ देवदेवस्य महतः पावकस्य च यः सुतः। गङ्गोमाकृत्तिकानां च स ते शर्म प्रयच्छतु॥१०॥ रक्तमाल्याम्बरधरो रक्तचन्दनभूषितः। रक्तदिव्यवपुर्देवः पातु त्वां क्रौञ्चसूदनः॥११॥ इति भावप्रकाशात्॥ अथ स्कन्दापस्मारग्रहदुष्टस्य चिकित्सा॥ बिल्वाः शिरीषो गोलोमी सुरसादिश्च यो गणः। परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये॥१॥ अथ सुरसादिर्गणो यथा॥ सुरसा श्वेतसुरसा पाठा फञ्जी फणिज्जकः॥१॥ सौगन्धिकं भूस्तृणकं राजिका श्वेतबर्बरी॥ कट्फलं खरपुष्पा च कासमर्दश्च शल्लकी॥२॥ विडङ्गमथ निर्गुण्डी कर्णिकार उदुम्बरः। बला च काकमाची च तथा च विषमुष्टिका॥३॥ कफक्रिमिहरः ख्यातः सुरसादिरयं गणः। अष्टमूत्रे विपक्कं च तैलमभ्यञ्जने हितम्॥४॥ अथ मूत्राष्टकमाह॥ गोऽजाविमहिषाश्वानां खरोष्ट्रकरिणां तथा। मूत्राष्टकमिति ख्यातं सर्वशास्त्रेषु संमतम्॥१॥ क्षीरिवृक्षकषायेण काकोल्यादिगणेन च। विप-

क्व्यं घृतं पश्चाद्दातव्यं पयसा सह ॥ २ ॥ काकोल्यादिर्गणो यथा ॥ काकोली क्षीरकाकोली जीवको ऋषभस्तथा । ऋद्धिर्वृद्धिस्तथा मेदा महामेदा गुडूचिका ॥ ३ ॥ मुद्गपर्णी माषपर्णी पद्मकं वंशरोचना । शृङ्गी प्रपौण्डरीकं च जीवन्ती मधुयष्टिका ॥ ४ ॥ द्राक्षा चेति गणो नाम्ना ककोल्यादिरुदीरितः । स्तन्यकृद् बृंहणो वृष्यः पित्तरक्तानिलापहः ॥५॥ उत्सादनं वचा हिङ्गुयुक्तमत्र प्रकीर्तितम् । गृध्रोलूकपुरीषाणि केशा हस्तिनखो घृतम् ॥ ६ ॥ वृषभस्य च रोमाणि योज्यान्युद्धूपने सदा । अनन्ताकुक्कुटीबिम्बीमर्कटाश्चापि धारयेत् ॥ ७ ॥ पक्वान्यामानि मांसानि प्रसन्नं रुधिरं पयः [1] भूतौदनं निवेद्याथ स्कन्दापस्मारिणं वटे ॥ ८ ॥ चतुष्पथे कारयेच्च स्नानं तेन ततः पठेत् । स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा ॥ विशाखः स शिशोरस्य शिवायास्तु शुभाननः ॥ ९ ॥ अथ शकुनीग्रहदुष्टस्य चिकित्सामाह ॥ शकुनीग्रहदुष्टस्य कार्यं वैद्येन जानता । वेतसाम्रकपित्थानां क्वाथेन परिषेचनम् ॥१॥ ह्रीबेरमधुकोशीरसारिवोत्पलपद्मकैः । लोध्रप्रियङ्गुमञ्जिष्ठागैरिकैः प्रदिहेच्छिशुम् ॥ २ ॥ स्कन्दग्रहोक्तधूपाश्च हिता अत्र भवन्ति हि । स्कन्दापस्मारशमनं घृतमत्रापि पूजितम् ॥ ३ ॥ शतावरीमृगेर्वारुनागदन्तीनिदिग्धिकाः । लक्ष्मणां सहदेवीं च बृहतीं चापि धारयेत् ॥ ४ ॥ तिलतण्डुलकं मालाहरितालं मनःशिला । बलिरेषां करञ्जे तु निवेद्यो नियतात्मना ॥ ५ ॥ निकुम्भोक्तेन विधिना स्नापयेत्तं ततः पठेत् । अन्तरिक्षचरा देवी सर्वालङ्कारभूषिता ॥ अयोमुखी सूक्ष्मतुण्डा शकुनी ते प्रसीदतु ॥ ६ ॥ दुर्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा । लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु ॥ ७ ॥ अथ रेवतीग्रहदुष्टस्य चिकित्सामाह ॥ अश्वगन्धाजशृङ्गी च सारिवाथ पुनर्नवा । सहा विदारी ह्येतासां क्वाथेन परिषेचनम् ॥ १ ॥ तैलमभ्यञ्जने कार्यं कुष्ठे सर्जरसे तथा । पलङ्कषाया नलदे तथा गौरकदम्बके ॥ २ ॥ धवाश्वकर्णककुभशल्लकीतिन्दुकेषु च । काकोल्यादिगणे वापि सिद्धं सर्पिः पिबेच्छिशुः ॥ ३ ॥ कुलित्थाः शङ्खचूर्णं च प्रदेहः पूर्वगन्धिकः । गृध्रोलूकपुरीषाणि यवान्यवफलो घृतम् ॥ ४ ॥ सन्ध्ययोरुभयोः कार्यमेतदुद्धूपनं शिशोः । शुक्लाः सुमनसो लाजाः पयः शाल्योदनं दधि ॥ ५ ॥ बलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना । स्नानं धात्रीकुमाराभ्यां संगमे कारयेद्भिषक् ॥ ६ ॥ नानावस्त्रधरा देवी चित्रमाल्यानुलेपना । चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु ॥ ७ ॥ उपासते यां सततं देव्यो विविधभूषणाः । लम्बा कराला विनता तथैव बहुपुत्रिका । रेवती शुष्कनासा च तुभ्यं देवी प्रसीदतु ॥ ८ ॥ अथ पूतनाग्रहदुष्टस्य चिकित्सामाह ॥ कपोतवङ्का स्योनाको वरुणः पारिभद्रकः । आस्फोता चैव योज्याः स्युर्बालानां परिषेचने ॥१॥ नवा पयस्या गोलोमी हरितालं मनःशिला । कुष्ठं सर्जरसश्चैव तैलार्थे कल्क इष्यते ॥ २ ॥ हितं घृतं तुगाक्षीर्या संसिद्धं मधुकोऽपि च । कुष्ठतालीसखदिराः स्यन्दनोऽर्जुन एव च

१ (क०) पातव्यम् । २ (च०) त्रिधिः । ३ (च०) नानाशस्त्र— । ४ (च०) मधुना ।

॥ ३ ॥ पनसः ककुभश्चापि मज्जानो बदरस्य च । कुक्कुटास्थि घृतं चापि धूपनं सह सर्षपैः ॥ ४ ॥ काकादनीं चित्रफलां बिम्बीं गुञ्जां च धारयेत् । मत्स्यौदनं बलिं दद्यात्कृशरां पलंजं तथा ॥ ५ ॥ शरावसम्पुटे कृत्वा तस्यै शून्ये गृहे भिषक् । उत्सृष्टान्नाभिषिक्तस्य शिशोः स्नपनमिष्यते ॥ ६ ॥ कुष्ठतालीसखदिरं चन्दनं स्यन्दनं तथा । देवदारु वचा हिङ्गु कुष्ठं गिरिकदम्बकः ॥ ७ ॥ एला हरेणवश्चापि योज्या उद्धूपने सदा । मलिनाम्बरसंवीता मलिना रूक्षमूर्धजा ॥ शून्यागाराश्रया देवी दारकं पातु पूतना ॥ ८ ॥ अथ गन्धपूतनाग्रहदुष्टस्य चिकित्सा ॥ तिक्तद्रुमाणां पत्रेषु क्वाथः कार्योऽभिषेचने ॥ १ ॥ अथ तिक्तद्रुमानाह ॥ बिल्वः पटोलः क्षुद्रा च गुडूची वासकस्तथा । विसर्पकुष्ठनुत्ख्यातो गणोऽयं पञ्चतिक्तकः ॥ १ ॥ पिप्पली पिप्पलीमूलं वर्गो मधुरकोऽपि च । शालिपर्णीबृहत्यौ च घृतार्थे सममाहरेत् ॥ २ ॥ सर्वगन्धैः प्रदेहश्च गात्रे चाक्ष्णोश्च शीतलैः । पुरीषं कौक्कुटं केशाश्चर्म सर्पभवं तथा ॥ ३ ॥ जीर्णं च वीक्ष्याधोवासो धूपनायोपकल्पयेत् । कुक्कुटीं मर्कटीं बिम्बीमनन्तां चापि धारयेत् ॥ ४ ॥ मांसमन्नं तथा पक्वं शोणितं च चतुष्पथे । निवेद्यमन्तश्च गृहे शिशोः स्नपनमिष्यते ॥ ५ ॥ कराला पिङ्गला मुण्डा काषायाम्बरसंवृता । देवी बालमिमं प्रीता रक्षताद् गन्धपूतना ॥ ६ ॥ अथ शीतपूतनाग्रहदुष्टस्य चिकित्सामाह ॥ गोमूत्रं वत्समूत्रं च मुस्ताममरदारु च । कुष्ठं च सर्वगन्धांश्च तैलार्थमवचारयेत् ॥ १ ॥ रोहिणीनिम्बखदिरपलाशककुभत्वचः । निष्क्वाथ्य तस्मिन्निष्क्वाथे सक्षीरे विपचेद् घृतम् ॥ २ ॥ गृध्रोलूकपुरीषाणि बस्तगन्धामहित्वचम् । निम्बपत्राणि च तथा धूपनार्थे समाहरेत् ॥ ३ ॥ धारयेदपि गुञ्जां च बलां काकादनीं तथा । नद्यां मुद्गौदनैश्चापि तर्पयेच्छीतपूतनाम् ॥ ४ ॥ जलाशयान्ते बालस्य स्नपनं चोपदिश्यते । देव्यै देयश्चोपहारो वारुणी रुधिरं तथा ॥ ५ ॥ मुद्गौदनाशिनी देवी सुराशोणितपायिनी । जलाशयरता नित्यं पातु त्वां शीतपूतना ॥६॥ अथ मुखमण्डनिकाग्रहदुष्टस्य चिकित्सामाह ॥ कपित्थबिल्वतर्कारीवासागन्धर्वहस्तकाः । कुबेराक्षी च योज्यास्तु बालानां परिषेचने ॥ १ ॥ स्वरसैर्भृङ्गवृक्षाणां तथैव हयगन्धया । तैलं वचां च संयोज्य पचेदभ्यञ्जने शिशोः ॥ २ ॥ वचा सर्जरसं कुष्ठं सर्पिश्चोद्धूपने हितम् । वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा ॥३॥ मनःशिलां चोपहरेद् गोष्ठमध्ये बलिं ततः । पायसं सपुरोडाशं तद्बल्यर्थमुपाहरेत् ॥ मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् ॥ ४ ॥ जलाभिमन्त्रणमन्त्रमाह ॥ अलङ्कृता कामवती सुभगा कामरूपिणी । गोष्ठमध्यालयरता पातु त्वां मुखमण्डिका ॥ ५ ॥ अथ नैगमेयग्रहदुष्टस्य चिकित्सामाह ॥ बिल्वाग्निमन्थपूतीकैः कार्यं स्यात्परिषेचनम् । प्रियङ्गुसरलानन्ताशतपुष्पाकुटन्नटैः ॥ १ ॥ पचेत्तैलं सगोमूत्रं दधिमस्त्वम्लकाञ्जिकैः । वचां वयस्थां जटिलां गोलोमीं चापि धारयेत् ॥ २ ॥ उत्सादनं हितं चात्र स्कन्दापस्मारनाशनम् । कमठोलूकगृध्राणां

---

१ ( च० ) पललम् । २ ( च० ) बस्त । ३ ( च० ) मर्कटो ।

पुरीषाणि पितृग्रहे ॥ ३ ॥ धूपः सुप्तजने कार्यो बालस्य हितमिच्छता । तिलतण्डुलकं माल्यं भक्ष्यांश्च विविधानपि ॥ ४ ॥ कौमारभृत्यमेषाय प्लक्षमूले निवेदयेत् । अधस्तात्क्षीरवृक्षस्य स्नपनं चोपदिश्यते ॥ ५ ॥ अजाननश्चलन्विभ्रूः कामरूपी महायशाः । बालं पालयिता देवो नैगमेयोऽभिरक्षतु ॥ ६ ॥ इति ग्रहग्रस्तबालरोगाणां चिकित्सा ॥ अथ ग्रन्थान्तरे उत्फुल्लिकालक्षणमाह ॥ आध्मानवातसम्फुल्लो दक्षकुक्षिः शिशोर्भवेत् । उत्फुल्लिका सा विख्याता श्वासश्वयथुसङ्कुला ॥ १ ॥ अथैतस्य चिकित्सामाह ॥ निःसारयेज्जलौकाभीरक्तं च जठरात्तदा । कर्कोटनागरामेघकङ्कोलातिविषाभवम् ॥ १ ॥ चूर्णं दुग्धेन संमिश्रं पाययेन्मातरं भिषक् । धात्रीं वा पाययेत्सद्यः क्षीरदोषनिवारणम् ॥२॥ अग्निना स्वेदयेद्वापि दाहयेच्च शलाकया । जठरे बिन्दुकाकारं पृष्ठभागे यथा ध्रुवम् ॥ ३ ॥ बिल्वमूलकं नीरदो वृकी त्रैफलं तथा सिंहिकाद्वयम् । गौडमिश्रितं क्वथितं समं पाययेच्छिशुं फुल्लिकापहम् ॥ ४ ॥ पिप्पली ग्रन्थिकं विश्वा त्रायमाणा च दार्विका । पथ्येभपिप्पली भार्गी लवङ्गं टङ्कणस्तथा ॥ ५ ॥ कुमारी बालपथ्ये च सैन्धवस्त्वाजवारिणा । घर्षितं पाययेत्मातर्द्विटङ्कं फुल्लिकापहम् ॥ ६ ॥ इति वैद्यविलासात् ॥ अथ पथ्यापथ्यम् ॥ यत्पथ्यं यदपथ्यं च नृणामुक्तं ज्वरादिषु । तत्तद्विधेयमौचित्याद्बालानां तेषु जानता ॥ १ ॥ पूर्वं पथ्यमपथ्यं च मन्दाग्नौ यत्प्रकीर्तितम् । औचित्याद्योजयेज्जाते बालानां पारिगर्भिके ॥ २ ॥ आगन्तून्मादवातानां पथ्यापथ्यं यदीरितम् । औचित्याद्योजयेत्तत्र बालेषु ग्रहरोगिषु ॥ ३ ॥ इति पथ्यापथ्यविधिः ॥ इति बालरोगाधिकारः ॥

---

## ॥ अथ विषाधिकारः ॥

तत्र विषस्य द्वैविध्यमाह ॥ स्थावरं जङ्गमं चैव द्विविधं विषमुच्यते । दशाधिष्ठानमाद्यं तु द्वितीयं षोडशाश्रयम् ॥ १ ॥ अथ स्थावरविषस्य दशाश्रयानाह ॥ मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च । निर्यासो धातवः कन्दः स्थावरस्याश्रया दश ॥ १ ॥ तद्यथा ॥ मूलविषं करवीरादि । पत्रविषं विषपत्रिकादि । फलविषं कर्कोटकादि । पुष्पविषं वेत्रादि । त्वक्सारनिर्यासविषाणि करम्भादीनि । क्षीरविषं स्नुह्यादि । धातुविषं हरतालादि । कन्दविषं वत्सनाभसक्तुकादि ॥ अथ जङ्गमविषस्य षोडशाश्रयानाह ॥ दृष्टिनिःश्वासदंष्ट्राश्च नखमूत्रमलानि च । शुक्रं लाला स्पर्शो मुखसन्दंशश्च विशर्धितम् ॥ गुदास्थिपित्तशूकादि दश षड् जङ्गमाश्रयाः ॥१॥ तथा हि ॥ दृष्टिनिःश्वासविषा दिव्याः सर्पास्तक्षकादयः । दंष्ट्राविषा भौमाः सर्पाः । नखविषा मार्जारमकरव्याघ्रादयः ते दंष्ट्राविषा अपि [1] । मूत्रपुरीषविषा गृहगोधिकादयः । शुक्रविषाः सर्पलालनादयो मूषिकाः । लालाविषा वरट्युच्चटिङ्गादयः । स्पर्शविषा लूतादयः । मुखसन्दंशविषा मक्षिकादयः । विशर्धितगुदपुरीषविषाश्चित्रशीर्षादयः । विशर्धितं नाम पायुक्र-

---

१ ( मु०पु०पा० ) वृष—। २ ( मु०पु०पा० ) विगर्द्धितम् । ३ ( मु०पु०पा० ) सर्पपलानादयः ।

तकुत्सितशब्दः। अस्थिविषाः सर्पादयः। पित्तविषा नकुलमत्स्यादयः। शूकविषा वृश्चिकभ्रमरादयः। एतेषां च सुश्रुते कल्पस्थाने विस्तारो द्रष्टव्यः॥ अथ स्थावर-जङ्गमविषाणां सामान्यलक्षणान्याह॥ स्थावरं तु ज्वरं हिक्कां दन्तहर्षं गलग्रहम्। फेनच्छर्द्यरुचिश्वासं मूर्च्छां च कुरुते विषम् ॥ १ ॥ निद्रां तन्द्रां क्लमं दाहं सकम्पं रोमहर्षणम्। शोफं चैवातिसारं च कुरुते जङ्गमं विषम्॥ २ ॥ अथावनिपतेरन्यस्य वान्नादौ निभृतेन परिकर्मिणो विषमवचारयन्ति तेषां विषदातॄणां लक्षणमाह ॥ इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः। जानीयाद्विषदातारमेतैर्लिङ्गैश्च बुद्धिमान् ॥ १ ॥ न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च। अपार्थं बहुसंकीर्णं भाषते मूढवत्तदा ॥ २ ॥ अङ्गुलीः स्फोटयेदुर्वीं विलिखेत्प्रहसेदपि। वेपथुश्चास्य भवति त्रस्तश्चान्योऽन्यमीक्षते ॥ ३ ॥ विवर्णवक्त्रो ध्यामस्तु नखैः किञ्चिच्छिनत्त्यपि। वर्तते विपरीतं च विषदाता विचेतनः ॥ ४ ॥ आलभेतासकृद्दीनः करेण च शिरोरुहान्। निर्यियासुरपद्वारैर्वीक्षते च पुनः पुनः ॥ ५ ॥ अथ स्थावरविषस्य दशाश्रयाणां प्रत्येकं लक्षणान्याह॥ उद्वेष्टनं मूलविषैः प्रलापो मोह एव च। जृम्भणं वेपनं श्वासो ज्ञेयं पत्रविषेण च ॥ १ ॥ मुष्कशोथः फलविषैर्दाहोऽन्नद्वेष एव च। भवेत्पुष्पविषैश्छर्दिराध्मानं श्वास एव च ॥ २ ॥ त्वक्सारनिर्यासविषैरुपयुक्तैर्भवन्ति हि। आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः ॥ ३ ॥ फेनागमः क्षीरविषैर्विड्भेदो गुरुजिह्वता। हृत्पीडनं धातुविषैर्मूर्च्छा दाहश्च तालुनि॥ प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत् ॥४॥ अथ कन्दविषस्य कार्यमाह॥ कन्दजान्युग्रवीर्याणि यान्युक्तानि त्रयोदश। सर्वाण्येतानि कुशलैर्ज्ञेयानि दशभिर्गुणैः॥१॥स्थावरं जङ्गमं वापि कृत्रिमं चापि यद्विषम्। सद्यो निहन्ति तत्सर्वगुणैश्च दशभिर्युतम्॥१॥ अथ तान्दशगुणानाह॥ रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च। विकाशि विशदं चापि लघ्वपाकि च ते दश ॥१॥ अथ तैर्गुणैर्विषस्य कार्यमाह॥ तद्रौक्ष्यात्कोपयेद्वायुमौष्ण्यात्पित्तं सशोणितम्। तैक्ष्ण्यान्मतिं मोहयति मर्मबन्धांश्छिनत्ति हि॥२॥ शरीरावयवान् सौक्ष्म्यात्प्रविशेद्विकरोति च। आशुत्वादाशु तद्धन्ति व्यवायात्प्रकृतिं हरेत् ॥ ३ ॥ विकाशित्वात्क्षपयति दोषान् धातून्मलानपि। अतिरिच्येत वैशद्याद्दुश्चिकित्स्यं च लाघवात् ॥ दुर्जरं चाविपाकित्वात्तस्मात्क्लेशयते चिरम्॥ ४ ॥ इति भावप्रकाशात्॥ अथ विषलिप्तशस्त्रहतस्य लक्षणमाह ॥ सद्यः पाकं याति यस्य क्षतं तत्स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम्। कृष्णीभूतं क्लिन्नमत्यर्थपूति क्षतान्मांसं जायते यस्य चापि॥ १ ॥ तृष्णा मूर्च्छा ज्वरदाहौ च यस्य दिग्धाविद्धं तं मनुष्यं व्यवस्येत्। लिङ्गान्येतान्येव कुर्यादमित्रैर्दत्तः क्ष्वेडो वा व्रणे यस्य चापि॥ २ ॥ इति स्थावरादिविषम्॥ अथ जङ्गमविषाणां कार्याण्याह॥ तत्र जङ्गमेषु तीक्ष्णतरत्वेन सर्पानाह॥ वातपित्तकफात्मानो भोगिमण्डलिराजिलाः। पृथाक्त्रयं समाख्याता द्यन्तरा द्वन्द्वरूपिणः॥ १ ॥ अथ भोगिप्रभृतिभिः

१ (मु० पु० पा०) दाहमपाकम्। २ (घ०) मर्मसन्धीन्। ३ (ख० ग० ङ० च०) शीर्यते।

कृतदंशेषु वातादीनां लिङ्गमाह ॥ दंशो भोगिकृतः कृष्णः सर्ववातविकारकृत्। पीतो मण्डलिजः शोथो मृदुः पित्तविकारवान् ॥ १ ॥ राजिलोत्थो भवेद्दंशः स्थिरशोथश्च पिच्छिलः। पाण्डुस्निग्धोऽतिसान्द्रासृक् सर्वश्लेष्मविकारकृत् ॥ २ ॥ अथ देशविशेषे कालविशेषे च दष्टस्यासाध्यत्वमाह ॥ अश्वत्थदेवायतनश्मशानवल्मीकसंध्यासु चतुष्पथेषु। याम्ये च पित्र्ये परिवर्जनीया ऋक्षे नरा मर्मसु ये च दष्टाः ॥ १ ॥ दर्वीकराणां विषमाशु हन्ति सर्वाणि चोष्णे द्विगुणीभवन्ति ॥ २ ॥ दर्वीकरलक्षणमाह ॥ रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः। ज्ञेया दर्वीकराः सर्पाः फणिनः शीघ्रगामिनः ॥ १ ॥ तथापरेषु विषमाशु मारकं भवति तानाह ॥ अजीर्णपित्तातपपीडितेषु बालेषु वृद्धेषु बुभुक्षितेषु। क्षीणे क्षते मेहिनि कुष्ठजुष्टे रूक्षेऽबले गर्भवतीषु चापि ॥ १ ॥ शस्त्रक्षते यस्य न रक्तमस्ति राज्यो लताभिश्च न सम्भवन्ति। शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्जयेत्तम् ॥ २ ॥ जिह्मं मुखं यस्य च केशशातो नासावसादश्च सकण्ठभङ्गः। कृष्णश्च रक्तः श्वयथुश्च दंशे हन्वोः स्थिरत्वे च स वर्जनीयः ॥३ ॥ अपरं च। वर्तिर्घना यस्य निरेति वक्त्राद् रक्तं स्रवेदूर्ध्वमधश्च यस्य। दंष्ट्रानिपातांश्चतुरश्च पश्येद्यस्यापि वैद्यः परिवर्जयेत्तम् ॥ ४ ॥ उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाप्यथ वा विवर्णम्। सारिष्टमत्यर्थमवेगिनं च त्यजेन्नरं तत्र न कर्म कुर्यात् ॥ ५ ॥ इति सर्पादिविषम् ॥ अथ स्थावरजङ्गमविषमेव जीर्णत्वादिभिः कारणैर्दूषीविषसंज्ञां लभते तदाह ॥ जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा। स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति ॥ १ ॥ अथ दूषीविषस्य कार्यमाह ॥ वीर्याल्पभावान्न निपातयेत्तत्कफान्वितं वर्षगणानुबन्धि। तेनार्दितो भिन्नपुरीषवर्णो विगन्धवैरस्ययुतः पिपासी ॥१॥ मूर्च्छाभ्रमं गद्गदवाग्वमिश्च विचेष्टमानो रतिमाप्नुयाद्वा ॥२॥ अथ स्थानविशेषस्थिते दूषीविषे लिङ्गविशेषमाह ॥ आमाशयस्थे कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी। भवेत्समुद्ध्वस्तशिरोऽङ्गरुहो विलूनपक्षस्तु यथा विहङ्गः ॥१॥ अथ तस्य रसादिधातुगतस्य लिङ्गमाह॥ स्थितं रसादिष्वथ तद्यथोक्तान् करोति धातुप्रभवान्विकारान्। कोपं च शीतानिलदुर्दिनेषु यात्याशु पूर्वं शृणु तस्य रूपम् ॥ १ ॥ अथ पूर्वरूपमाह ॥ निद्रा गुरुत्वं च विजृम्भणं च विश्लेषहर्षावथ वाङ्गमर्दः। ततः करोत्यन्नमदाविपाकावरोचकं मण्डलकोठजन्म। मांसक्षयं पाणिपदाक्षिशोथं मूर्च्छां तथा छर्दिमथातिसारम्॥ १ ॥ दूषीविषं श्वासतृषाज्वरांश्च कुर्यात्प्रवृद्धिं जठरस्य चापि ॥ १ ॥ अथ दूषीभेदेन विकारभेदमाह ॥ उन्मादमन्यज्जनयेत्तथान्यदानाहमन्यत्क्षपयेच्च शुक्रम्। गाद्गद्यमन्यज्जनयेच्च कुष्ठं तांस्तान् विकारांश्च बहुप्रकारान् ॥ १ ॥ अथ दूषीविषस्य निरुक्तिमाह ॥ दूषितं देशकालान्नदिवास्वापैरभीक्ष्णशः। यस्मात्संदूषयेद्धातूंस्तस्माद्दूषीविषं स्मृतम् ॥ १ ॥ अथ दूषीविषस्य साध्यत्वादिकमाह ॥ साध्यमात्मवतः

---

१ ( च० ) विवर्णे—। २ ( ख० ग० ङ० च० ) भ्रमम्। ३ ( ख० ग० ङ० च० ) शिरोरुहाङ्गो।

सद्यो याप्यं संवत्सरोषितम्। दूषीविषमसाध्यं स्यात् क्षीणस्याहितसेविनः ॥ १ ॥ अथ कृत्रिमं विषं द्विविधम् एकं सविषं दूषीविषसंज्ञम्। अपरमविषं तदेव गरसंज्ञम्॥ तथा च काश्यपसंहितायाम्॥ संयोगजं च द्विविधं द्वितीयं विषमुच्यते। दूषीविषं तु सविषम-विषं गर उच्यते ॥१॥ तत्र दूषीविषमभिधाय गरं दर्शयितुमाह ॥ सौभाग्यार्थाः स्त्रियः स्वेदरजोनानाङ्गजान्मलान्। शत्रुप्रयुक्तांश्च गरान्प्रयच्छन्त्यन्नमिश्रितान्॥ १ ॥ अथ गरकार्यमाह ॥ तैः स्यात्पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते। मर्मप्रधमनाध्मानं हस्तयोः शोथसंभवः ॥ १ ॥ जठरं ग्रहणीरोगो यक्ष्मा गुल्मः क्षयो ज्वरः। एवंविध-स्य चान्यस्य व्याधेर्लिङ्गं च जायते ॥ १ ॥ इति दूषीविषादिनिदानम् ॥ अथ लूतानां जन्तुविशेषाणामुत्पत्तिनिरुक्तिसंख्यादि चाह ॥ यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः। तेभ्यो जातास्ततो लूता इति ख्यातास्तु षोडश ॥ १ ॥ अत्र सुश्रुतः ॥ विश्वामित्रो नृपवरः कदाचिदृषिसत्तमः। वसिष्ठं कोपयामास गत्वाश्रमप-दं किल ॥ २ ॥ कुपितस्य मुनेस्तस्य ललाटात्स्वेदबिन्दवः। अपतन् दर्शनादेव ह्य-धस्तात्तीव्रवर्चसः ॥ ३ ॥ लूने तृणे महर्षेस्तु धेन्वर्थे सम्भृतेऽपि च। ततो जाता-स्त्विमा घोरा नानारूपा महाविषाः ॥ ४ ॥ तासामष्टौ कष्टसाध्या वर्ज्यास्तावन्त्य एव हि ॥ ४ ॥ तत्र त्रिमण्डलाप्रभृतयः कष्टसाध्याः। सौवर्णिकाप्रभृतयोऽष्टावसाध्याः ॥ अथ तासां सामान्यानां दंशलक्षणमाह ॥ ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च। ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ॥१॥ पिटिका विविधाकारा मण्डलानि महान्ति च। शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा ॥ सामान्यं सर्वलू-तानामेतद्दंशस्य लक्षणम् ॥२॥ अथ त्रिमण्डलादयोऽष्टौ दूषीविषास्तासां लक्षणमाह ॥ दंशमध्ये तु यत्कृष्णं श्यावं वा जालकावृतम्। दग्धाकृति भृशं पाकक्लेदशोथज्वरा-न्वितम् ॥ दूषीविषाभिर्लूताभिस्तद्दष्टमिति निर्दिशेत् ॥ १ ॥ अथ सौवर्णिकादयोऽ-ष्टावसाध्याः प्राणहरास्तासां लक्षणमाह ॥ शोथः श्वेताः सिता रक्ताः पीता वा पि-टिका ज्वरः। प्राणान्तिको भवेद्दाहः श्वासो हिक्का शिरोग्रहः ॥ १ ॥ अथाखुदूषीवि-षलक्षणमाह ॥ आदंशाच्छोणितं पाण्डुमण्डलानि ज्वरोऽरुचिः। रोमहर्षश्च दाहश्चा-प्याखुदूषीविषार्दिते ॥ १ ॥ अथ प्राणहरमूषकविषकार्यमाह ॥ मूर्च्छाङ्गशोथवैवर्ण्य-क्लेदशब्दाश्रुतिज्वराः। शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यमूषकात् ॥ १ ॥ अथ-कृकलासदष्टस्य लक्षणमाह ॥ कार्ष्ण्यं शावत्वमथ वा नानावर्णत्वमेव च। मोहोऽथ वर्चसो भेदो दष्टस्य कृकलासकैः ॥ १ ॥ अथ वृश्चिकविषस्य लक्षणमाह ॥ दहत्य-ग्निरिवादौ तु भिनत्तीवोर्ध्वमाशु च। वृश्चिकस्य विषं याति पश्चाद्दंशेऽवतिष्ठति ॥१॥ असाध्यवृश्चिकदष्टस्य लक्षणमाह ॥ दष्टोऽसाध्यस्तु हृद्घ्राणरसनोपहतो नरः। मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसून् ॥ १ ॥ अथ कणभदष्टस्य लक्षणमाह ॥ विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि वा। लक्षणं कणभैर्दष्टे दंशश्चैवावशीर्यते ॥ १ ॥ अथोच्चिटिङ्गदष्टस्य लक्षणमाह ॥ कृष्णलोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृ-

१ (च०) उच्चिट्ट। २ (च०) हृष्टलोमा—।

शार्तिमान् । दष्टः शीतोदकेनैव सिक्तान्यङ्गानि मन्यते ॥ १ ॥ अथ सविषमण्डूकदष्टस्य लक्षणमाह ॥ एकदंष्ट्रार्दितः शूनः सरुजः पीतकः सतृट् । सनिद्रश्छर्दिमान्दष्टो मण्डूकैः सविषैर्भवेत् ॥ १ ॥ अथ मत्स्यविषस्य कार्यमाह ॥ मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं ज्वरं तथा ॥१॥ अथ जलौकाविषकार्यमाह । कण्डूं शोथं ज्वरं कुर्युः सविषास्तु जलौकसः ॥१॥ अथ गृहगोधिकाविषकार्यमाह ॥ विदाहं श्वयथुं तोदं स्वेदं च गृहगोधिका ॥१॥ अथ शतपदीविषलक्षणमाह ॥ दंशे स्वेदं रुजां दाहं कुर्याच्छतपदीविषम् ॥१॥अथ मशकविषलक्षणमाह ॥ कण्डूमान्मशकैरीषच्छोथः स्यान्मन्दवेदनः ॥ असाध्यमशकक्षतलक्षणमाह ॥ असाध्यकीटसदृशमसाध्यमशकक्षतम् ॥ अथ मक्षिकादंशलक्षणमाह ॥ सद्यः प्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता । पिटिका मक्षिकादंशे तासां तु स्थगिकासुत्यहृत् ॥१॥ अथ व्याघ्रादिप्रमुखाणां विषकार्यमाह ॥ चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तक्षतं च यत् । शूयते पच्यते वापि स्रवति ज्वरयत्यपि ॥ १ ॥ अथ श्वानदष्टविषलक्षणमाह ॥ प्रभ्रान्तस्तापयुक्तः श्वसनकसनवान्पीतदृक्पीतमूत्रः सोन्मादो बुक्कमानो दशति च मनुजं योऽतिकालक्रमेण । वर्षाकाले विषार्तः प्रभवति विकलोऽसाध्यतामाप्नुयाच्च प्रायो वातप्रधानोऽखिलमलकलितः सारमेयेण दष्टः ॥ १ ॥ अथ विषोज्झितः कीदृशो भवतीति दर्शयितुमाह ॥ प्रसन्नदोषं प्रकृतिस्थधातुमन्नाभिकामं सममूत्रविट्कम् । प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽधिगच्छेदविषं मनुष्यम् ॥ १ ॥ इति जङ्गमविषाणि ॥

## ॥ अथ विषाणां चिकित्सा ॥

तत्रादौ स्थावरविषस्य चिकित्सा ॥ स्थावरेण विषेणार्तं नरं यत्नेन वामयेत् । वमनेन समं नास्ति यतस्तस्य चिकित्सितम् ॥ १ ॥ अथ वमनम् ॥ तिक्तकोशातकीक्वाथं पिबेन्मध्वाज्यसंयुतम् । कटुकालाबुमूलं वा तत्पत्रं वा पिबेज्जलैः ॥ १ ॥ तत्क्षणाद्वमनाद्धन्ति विषयोगाद्विमुच्यते । विषमत्यर्थमुष्णं च कथितं मुनिभिर्यतः ॥ २ ॥ अतः सर्वविषे प्रोक्तः परिषेकस्तु शीतलः । औष्ण्यात्तैक्ष्ण्याद्विशेषेण विषं पित्तं प्रकोपयेत् ॥३॥ वमितं सेचयेत्तस्माच्छीतलेन जलेन च । पाययेन्मधुसर्पिर्भ्यां विषघ्नं भेषजं द्रुतम् ॥ ४ ॥ भोक्तुमम्लरसं दद्याच्चर्वयेन्मरिचानि च । यस्य यस्य च दोषस्य पश्येल्लिङ्गानि भूरिशः ॥ तस्य तस्यौषधैः कुर्याद्विपरीतगुणैः क्रियाम् ॥५॥ अथ लेपः ॥ मूलत्वक्पत्रपुष्पाणि बीजं चेति शिरीषतः । गवां मूत्रेण सपिष्टं लेपाद्विषहरं परम् ॥ १ ॥ इति स्थावरविषचिकित्सा ॥ अथ जङ्गमविषचिकित्सा तत्रादौ सर्पचिकित्सामाह ॥ कार्याः सद्यः सर्पदंष्टे मणिमन्त्रौषधक्रियाः । अचिन्त्यो हि प्रभावोऽस्ति मणिमन्त्रौषधस्य यत् ॥ १ ॥ तण्डुलीयकमूलं तु पीतं तण्डुलवारिणा । तक्षकेणापि दष्टं हि निर्विषं कुरुते नरम् ॥ २ ॥ घृतमधुनवनीतं पिप्पली शृङ्गबेरं मरिचमपि च दद्यात्सप्तमं सैन्धवं च । यदि भवति सरोषं तक्षकेणापि दष्टोऽगदमिह खलु पीत्वा निर्विषं तत्क्षणेन ॥ ३ ॥ मूलं तण्डुलवारिणा पिबति यः प्रत्यङ्गिरासम्भवं निष्पिष्टं शुचि-

१ ( च० ) मूर्च्छाम् ।

भद्रयोगदिवसे तस्याहिभीतिः कुतः । दर्पादेव फणी यदा दशति तं मोहान्वितो मूलतः स्थाने तत्र तदैव याति नियतं वक्त्रं यमस्याचिरात् ॥ ४ ॥ शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् । भावितं सर्पदष्टानां पाने नस्याञ्जने हितम् ॥ ५ ॥ दंशोपरि निबध्नीयात्तत्क्षणाच्चतुरङ्गुलम् । क्षौमादिभिर्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रयेत् ॥ ६ ॥ अम्बुवत्सेतुबन्धेन स्तभ्यते विषमं विषम् । नक्तमालफलव्योषबिल्वमूलनिशाद्वयम् ॥ ७ ॥ सौरसं पुष्पमाजं वा मूत्रं बोधनमञ्जनम् । वन्ध्या कर्कोटकीमूलं छागमूत्रेण भावितम् ॥ ८ ॥ नस्यं काञ्जिकसम्पिष्टं विषोपहतचेतसः । श्वेतामूलं शमीमूलमीश्वरीमूलमेव च ॥ ९ ॥ अदारिका तथा पाठा पृथग् दष्टकबान्धवाः । कुलीकमूलनस्येन कालदष्टोऽपि जीवति ॥ १० ॥ वृन्दात् ॥ जलेन जाङ्गलीकन्दं नस्यं सर्पविषापहम् । वारिणा टङ्कणं पीतमथ वार्कस्य मूलकम् ॥ ११ ॥ अथ धूपः ॥ कपोतविण्मर्त्यशिरोरुहाणि सगोविषाणां शिखिपिच्छकाग्रम् । यवस्य धान्यस्य तुषाश्च बीजं कार्पासजं वाप्युषिताश्च माषाः ॥ १ ॥ इत्यौषधीभिः परिकल्पितोत्तमो धूपोऽगदः स्याद्भुजगैरमुक्तः । गृहे विधेयः कुशलैरनेन नश्यन्ति सर्पाश्च तथाखवश्च ॥ २ ॥ इति धूपः ॥ सातलाफलफेनेनाञ्जनं कृत्वा सर्पविषं नश्यति ॥ अथ मन्त्रः ॥ ॐ प्लुः सर्पकुलाय स्वाहा ॥ अनेन मन्त्रेण सप्तवारमभिमन्त्रितां मृत्तिकां गृहमध्ये क्षिपेत्सर्पाः पलायन्ते ॥ अथ कालवज्राशनिरसः ॥ पारदं गन्धकं तुत्थं टङ्कणं रजनीसमम् । देवदाल्या द्रवैर्मर्द्यं दिनं शुष्कं तु भक्षयेत् ॥ १ ॥ कालवज्राशनिर्नाम रसः सर्वविषापहः । नरमूत्रं पिबेच्चानु कालदष्टोऽपि जीवति ॥ २ ॥ इति सर्पविषचिकित्सा ॥ अथ दूषीविषचिकित्सा ॥ दूषीविषार्तं सुस्निग्धमूर्ध्वं वाधश्च शोधितम् । पाययेदगदं मुख्यमिदं दूषीविषापहम् ॥ १ ॥ पिप्पली धान्यकं मांसी लोध्रमेला सुवर्चिका । मरिचं बालकं चैला तथा कनकगैरिकम् । क्षौद्रयुक्तः कषायोऽयं दूषीविषमपोहति ॥ २ ॥ इति भावप्रकाशात् ॥ अथ कृत्रिमविषचिकित्सा ॥ कृत्रिमं तु विषं ख्यातम्पक्षान्मासाद्विबाधते । आलस्यं कुरुते जाड्यं कासश्वासौ बलक्षयम् ॥ १ ॥ रक्तस्रावो ज्वरः शोफः पीतचक्षुश्च लक्षयेत् । शर्कराचूर्णसंयुक्तं चूर्णं ताप्यसुवर्णयोः ॥ २ ॥ लेहः प्रशमयत्युग्रं नानायोगकृतं विषम् । पुत्रजीवस्य मज्जां च निष्कमात्रां गवां पयैः ॥ ३ ॥ पिष्ट्वा चोग्रं गरं हन्यान्नानायोगकृतं विषम् । गृहधूमं जलैः पिष्ट्वा तण्डुलीमूलतुल्यकम् ॥ ४ ॥ कल्काच्चतुर्गुणं चाज्यं घृतात्क्षीरं चतुर्गुणम् । घृतशेषं पचेत्सर्वं पिबेत्सर्वगरापहम् ॥ ५ ॥ पारावतामिषसटीपुष्कराह्वशृतं हिमम् । गरतृष्णारुजाकासश्वासहिध्माज्वरापहम् ॥ ६ ॥ वृन्दात् ॥ अथ गरनाशनरसः ॥ शुद्धसूतं मृतं स्वर्णं संशुद्धं हेममाक्षिकम् । त्रयाणां गन्धकं तुल्यं मर्द्यात्कन्याद्रवैर्दिनम् ॥ १ ॥ तच्छुष्कं ससितक्षौद्रं माषैकं लेहयेत्सदा । वह्निमूलं शृतं क्षीरैरनु स्याद्गरनाशनम् ॥ २ ॥ इति कृत्रिमविषचिकित्सा ॥ अथ नखदन्तविषचिकि-

१ (च०) मोहान्वितोन्मूलयः । २ (ग० घ०) मालाः । ३ (ख० च०) गैरयुक्तः । ४ (च०) ध्यामकम् ।

त्सा॥ पिचुमन्दशमीवटकल्कयुतं क्वथितं जलमाशु विलोकनतः। नखदन्तविषाणि निहन्ति नृणां विषमान्यखिलान्यपि सत्यमिदम्॥ १॥ अथाखुविषचिकित्सा॥ आगारधूममञ्जिष्ठारजनीलवणोत्तमैः। लेपो जयत्याखुविषं कोशातक्यथवा सिता॥ १॥ उरगेण विनिर्मुक्तनिर्मोकधूमसेवनात्। पथ्याशी त्रिदिनं धूमो भवेदाखुविषापहः॥ २॥ इति सारसंग्रहात्॥ कुष्ठं वचामदनकोशवतीफलेन संयोजितं तदिति चूर्णमिदं चतुर्णाम्। गोमूत्रपीतमखिलाखुविषं निहन्ति कोशातकीक्वथनमापिबतोऽथ वापि॥ ३॥ तुलसीरसेन गोदन्तशिलाभ्यां क्षुरेण प्रच्छिद्य लेपः कार्यः विषं नश्यति॥ अथ वा चित्रकमूलचूर्णम् तैले विपाच्य मस्तके क्षुरेण प्रच्छिद्य शिरसि ब्रह्मरन्ध्रे मर्दनं कृत्वाखुविषं नश्यति॥ चिञ्चाफलसमायुक्तं गृहधूमं पलार्धकम्। पुराणाज्येन सप्ताहं लिहेदाखुविषं हरेत्॥ १॥ अथ रसाः॥ रसं गन्धं विषं चैवं त्र्यूषणं टङ्करोहिणी। पुनर्नवरसैर्मर्द्यं गोमूत्रे च द्विगुञ्जकम्॥ १॥ पिबेदाखुविषार्तानां सर्वं हरति तद्विषम्। विषदष्टोद्भवानन्यान्हन्यादाखुविषान्तकः॥ २॥ रसगन्धनिशाबन्धुगृहधूमशिरीषजम्। बीजं दिनकरक्षीरैर्मर्दयित्वा विलेपयेत्॥ विशेषान्मूषकविषं हन्यादन्यान्विषोद्भवान्॥ ३॥ इत्याखुविषचिकित्सा॥ अथ वृश्चिकविषचिकित्सा॥ जीरकस्य कृतः कल्को घृतसैन्धवसंयुतः। सुखोष्णो मधुना लेपो वृश्चिकस्य विषं हरेत्॥ १॥ गन्धमाघ्राय मृदितं सूर्यावर्तदलस्य तु। वृश्चिकेन नरो विद्धः क्षणाद्भवति निर्विषः॥ २॥ इति भावप्रकाशात्॥ यः कासमर्दपत्रं वदने निक्षिप्य कर्णफूत्कारम्। मनुजो ददाति शीघ्रं जयति विषमाशु वृश्चिकानां सः॥ १॥ वृन्दात्॥ अजाक्षीरेण सम्पिष्टा शिरीषफलमिश्रिता। उपकुल्या विषं हन्ति वृश्चिकस्य प्रलेपतः॥ १॥ सर्पासपत्रैः सम्पिष्टैराज्यलेपो विषापहः। वृश्चिकस्याथ वा वत्सनागलेपः प्रशस्यते॥ २॥ मनःशिलाकुष्ठकरञ्जबीजशिरीषकाश्मीरभवैः समांशैः। विनिर्मितास्ये विधृता च लिप्ता संहारिणी वृश्चिकवैकृतस्य॥ ३॥ मातुलिङ्गस्य मूलं तु रविवारे समुद्धरेत्। उत्तराभिमुखेनैव ह्रींमन्त्रोच्चारणात् स्पृशेत्॥ ४॥ वामाङ्गे दक्षिणे दष्टे वामदष्टे च दक्षिणे। सप्तधा मार्जनेनैव विषं वृश्चिकजं हरेत्॥ ५॥ श्वेतं पुनर्नवामूलं रविवारे समुद्धरेत्। कार्पासमूलं चर्वित्वा विषं वृश्चिकजं हरेत्॥ ६॥ ग्राह्यं हंसपदीमूलं प्रातरादित्यवासरे। मुखैस्तन्निष्कृतिः कर्णे विषं वृश्चिकजं हरेत्॥ ॥ ७॥ अथ मन्त्रविधिः॥ ॐ क्षः फट् स्वाहा॥ अनेन मन्त्रेणापो मार्जयेत्॥ अथ मन्त्रः॥ आदित्यरथवेगेन विष्णुबाणबलेन च। गरुत्पक्षनिपातेन भूम्यां गच्छ महाविष॥ १॥ इति मन्त्रः॥ पानीयपिष्टजेपालकल्कलेपेन सर्वथा। विषं वृश्चिकविद्धस्य भस्मीभवति तत्क्षणात्॥ २॥ नवसागरहरिताले पिष्टे तोयेन लेपनाद्दंशे। तत्क्षणमेव हि जयतो वृश्चिकविद्धस्य दुर्धरक्ष्वेडम्॥ ३॥ उल्लीपाषाणमादाय निम्बुनीरेण संयुतम्। दंशस्थाने लेपनं स्याद्विषं वृश्चिकजं हरेत्॥ ४॥ इति वृश्चिकविषचिकित्सा॥

---

१ (ख० ग० ङ० च०) त्र्यूषत्राणि टङ्कण (कण्टक) रोहिणी। २ (क० च०) स्यादामाखा। ३ (ग०) कार्पासपत्रैः। (च०) सर्पास्य। ४ (च०) — तिं।

अथ कीटजलूकादिविषचिकित्सा ॥ कटभ्यर्जुनशैरीषशेलुक्षीरीद्रुमत्वचाम् । कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः ॥१॥ वृन्दात् ॥ वचाहिङ्गुविडङ्गानि सैन्धवं गजपिप्पली । पाठाप्रतिविषाव्योषं कश्यपेन विनिर्मितम् ॥ २ ॥ दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् । कीटदष्टक्रियाः सर्वाः समानाः स्युर्जलौकसाम् ॥३॥ अथ वरटीविषचिकित्सा ॥ मरीचं नागरोपेतं सिन्धुसौवर्चलान्वितम् । फणिवल्लीरसैर्लेपाद्धन्ति तद्वरटीविषम् ॥ १ ॥ अथ लूताविषचिकित्सा ॥ रजनीद्वयमञ्जिष्ठापतङ्गगजकेसरैः । शीताम्बुपिष्टैरालेपः सद्यो लूताविषापहः ॥ १ ॥ गिरिकर्णीद्वयं शेलुः पाटला द्वे पुनर्नवे । कपित्थश्च शिरीषश्च लेपो लूताविषापहः ॥ २ ॥ अथ मण्डूकविषचिकित्सा ॥ शिरीषबीजैः कुलिशद्रुमस्य क्षीरेण पिष्टैः कृतलेपनानाम् । विषं विनाशं व्रजति क्षणेन मण्डूकदंशप्रभवं नराणाम् ॥ १ ॥ अथ भृङ्गीमत्स्यविषचिकित्सा ॥ कृष्णवेत्रस्य निष्क्वाथे कल्को घृतविमिश्रितः । भृङ्गीमत्स्यविषं हन्ति धूमो वा बर्हिपक्षजः ॥ १ ॥ अथ शतपदीविषचिकित्सा ॥ लेपः प्रदीपतैलस्य खर्जूरविषनाशनः । हरिद्राद्वयलेपो वा सगैरिकमनःशिला ॥ १ ॥ अथ भ्रमरविषचिकित्सा ॥ नागरं गृहकपोतपुरीषं बीजपूरकरसो हरितालम् । सैन्धवं च विनिहन्ति विलेपादाशु भृङ्गजनितं विषमेतत् ॥१॥ अथ पिपीलिकादिविषचिकित्सा ॥ पिपीलिकाभिर्दष्टानां मक्षिकामशकैस्तथा । गोमूत्रेण वरालेपः कृष्णवल्मीकमृत्कृतः ॥ १ ॥ अथ मक्षिकापिटकाविषचिकित्सा ॥ सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपद्यपि । रजन्यौ गैरिकं लेपो मक्षिकापिटकापहः ॥ १ ॥ अथ श्वानविषचिकित्सा ॥ काकोदुम्बरिकामूलं धत्तूरफलसंयुतम् । पीतं तण्डुलतोयेन सारमेयविषापहम् ॥ १ ॥ कारस्करफलं सेव्यं क्रमवृद्धं दिने दिने । सारमेयविषं हन्ति मासेन न हि संशयः ॥ २ ॥ पिष्ट्वापामार्गमूलं तु कर्षैकं मधुना लिहेत् । श्वानदंष्ट्रं विषं हन्यात्कुमारीदलसैन्धवम् ॥ ३ ॥ दंशस्थाने बन्धयेत्तु त्रिदिनान्ते सुखावहम् ॥ कस्तूरीबब्बूलपत्ररसो गोघृतेन पाने देयः शुनो विषं नश्यति ॥ अथवा शतावरीमूलरसो गोदुग्धेन सह पाने देयः शुनो विषं नश्यति ॥ श्वानदंष्ट्राविषं[1] हन्ति लेपात्कुक्कुटविष्ठया । गुडतैलार्कदुग्धं वा लेपाच्छ्वानविषं हरेत् ॥ ४ ॥ अथ रोगोन्मादितश्वानचिकित्सा ॥ तैलं तिलानां पललं गुडं च क्षीरं तथार्कं सममेव पीतम् । आलर्कमुग्रं विषमाशु हन्ति सद्योभवं वायुरिवाभ्रवृन्दम् ॥ १ ॥ इति श्वानविषचिकित्सा ॥ इति जङ्गमविषचिकित्सा ॥

## ॥ अथ सामान्यविषचिकित्सा ॥

सैन्धवं मरिचं तुल्यं निम्बबीजं समीकृतम् । मधुसर्पिर्युतं हन्ति विषं स्थावरजङ्गमम् ॥१॥ अगारधूमो[2] महिषाक्षियुक्तः सवाजिगन्धानततण्डुलीयः । गोमूत्रपिष्टोऽप्यगदो निहन्ति विषाणि च स्थावरजङ्गमानि ॥२॥ मयूरपिच्छेन च तण्डुलीयकं काकण्ड[3]युक्तं प्रपिबेदनल्पम् । विषाणि च स्थावरजङ्गमानि सोपद्रवाण्यप्यचिरेण हन्ति ॥ ३ ॥

---

१ ( च० ) श्वदंष्ट्राज । २ ( क० ) अङ्गारधूमो । ३ ( ग० ) काकाण्ड ।

अथ प्राचेतसं चूर्णम् ॥ सप्तपर्णात्कुटजात्सनिम्बादब्दामयोशीरनतानि ताप्यम् । रोध्रं विदध्यान्नवमं नवाङ्गं प्राचेतसं चूर्णमुदाहरन्ति ॥ १ ॥ लौहेऽथ हैमे त्वथ राजते वा स्थितं सदा सद्मनि भूपतीनाम् । क्षौद्रेण लीढं सचराचराणि विषाणि हन्याद् भुवि मानवानाम् ॥ २ ॥ श्लेष्मातकत्वक्क्षवकं गुडूची नृपद्रुमत्वग् बृहतीद्वयं च । एषोऽगदः सर्वविषाणि हन्यादास्तीकनाम्ना मुनिना प्रदिष्टः ॥ ३ ॥ कृकलासपदं यस्तु सितवस्त्रेण वेष्टयेत् । बाहौ बद्ध्वा विषं हन्ति विषं भुक्त्वा न बाधते ॥ ४ ॥ यः पिबति पुष्यदिवसे जलपिष्टं सितपुनर्नवामूलम् । तत्सन्निधौ न वर्षं वृश्चिकभुजगाः प्रसर्पन्ति ॥५॥ मसूरं निम्बपत्राभ्यां पिबेन्मेषगते रवौ । अब्दमेकं न भीतिः स्याद्विषार्तस्य न संशयः ॥६॥ अथ गरुडाञ्जनम् ॥ सूतं चूर्णमगारधूमममलं प्रत्येकगद्याणकं धत्तूरस्य रसेन मर्दितमलं पश्चाच्छतं भासुरम् । जेपालं मरिचं चतुःशतयुतं वातारिबीजं लसच्छुक्तं यष्टिसुखल्विदं दृढतरैर्जम्बीरनीरैर्वरैः ॥ १ ॥ कुर्यान्माषवदाकृतिं च वटिकां छायासु शुष्कीकृतां रात्र्यन्धं ग्रहसर्पसन्धिसकलं शीतज्वरं दुर्धरम् । सन्नेत्राञ्जनमात्रकं च भुवने चाजीर्णदोषापहं नश्यन्ति प्रबलं महागुणयुतं श्रीपूज्यपादोदितम् ॥ २ ॥ इति गरुडाञ्जनम् ॥ अथ मृत्युच्छेदिघृतम् ॥ अभयां रोचनां कुष्ठमर्कपुष्पं तथोत्पलम् । नलवेतसमूलानि गरलं सुरसां तथा ॥ १ ॥ सकलिङ्गान् समञ्जिष्ठामनन्तां च शतावरीम् । शृङ्गाटकं समङ्गां च पद्मकेसरमित्यपि ॥ २ ॥ कल्कीकृत्य पचेत्सर्पिः पयो दद्याच्चतुर्गुणम् । सम्यक्पक्वेऽवतीर्णे च शीते तस्मिन्विनिक्षिपेत् ॥ ३ ॥ सर्पिस्तुल्यं भिषक् क्षौद्रं कृतरक्षं निधापयेत् । विषाणि हन्ति दुर्गाणि गरदोषकृतानि च ॥ ४ ॥ स्पर्शाद्धन्ति विषं सर्वं गरैरुपहतत्वचम् । संयोगजं तमः कण्डूं मांससादं विसंज्ञताम् ॥ ५ ॥ नाशयत्यञ्जनाभ्यङ्गपानबस्तिषु योजितम् । सर्पकीटाखुलूतादिदष्टानां विषहृत्परम् ॥६॥ अथ पथ्यापथ्यम् ॥ शालयः षष्टिकाश्चैव कोरदूष्यप्रियङ्गवः । मुद्गा हरेणवस्तैलं सर्पिश्चापि नवं क्वचित् ॥ १ ॥ वार्ताकं कलकं धात्री जीवन्ती तण्डुलीयकम् । भोजनार्थे विषार्तानां हितः पटुषु सैन्धवम् ॥ २ ॥ विरुद्धाध्यशनक्रोधक्षुद्भयायासमैथुनम् । वर्जयेद्विषमुक्तोऽपि दिवा स्वप्नं विशेषतः ॥ ३ ॥ इति विषाधिकारः ॥

---

## ॥ अथोत्तरखण्डः ॥

तत्र वाजीकरणद्रव्यस्य लक्षणमाह ॥ यद्द्रव्यं पुरुषं कुर्याद्वाजीवत्सुरतक्षमम् । तद्वाजीकरणमाख्यातं मुनिभिर्भिषजां वरैः ॥ १ ॥ अत्र प्रसङ्गात्क्लैब्यलक्षणं संख्यां निदानं चाह॰॥ क्लीबः स्यात्सुरताशक्तस्तद्भावः क्लैब्यमुच्यते । तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते ॥ १ ॥ तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते । ध्वजः पतत्यतो नृणां क्लैब्यं समुपजायते ॥ २ ॥ द्वेष्यस्त्रीसंप्रयोगाच्च क्लैब्यं तन्मानसं स्मृतम् । कटुकाम्लैः सलवणैरतिमात्रोपसेवितैः[1] ॥३॥ पित्ताच्छुक्रक्षयो दृष्टः क्लैब्यं तस्मात्प्रजा-

---

१ ( च० ) षाष्टि ।

यते । अतिव्यावायशीलो यो न च वाजीक्रियारतः ॥ ४ ॥ ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकः । महता मेण्ढ्रयोगेन चतुर्थी क्लीबता भवेत् ॥ ५ ॥ वीर्यवाहिशिराच्छेदान्मेहनानुन्नतिर्भवेत् । बलिनः क्षुब्धमनसो निरोधाद्ब्रह्मचर्यतः ॥ ६ ॥ षष्ठं क्लैब्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तकम् । जन्मप्रभृति यत्क्लैब्यं सहजं तद्धि सप्तमम् ॥ ७ ॥ अथासाध्यं क्लैब्यमाह ॥ असाध्यं सहजं क्लैब्यं मर्मच्छेदाच्च यद्भवेत् । साध्यानामवशिष्टानां कार्यो वाजीकरो विधिः ॥ १ ॥ अथ क्लैब्यस्य चिकित्सा ॥ क्लैब्यानामिह साध्यानां कार्यो हेतुविपर्ययः । मुख्यं चिकित्सितं यस्मान्निदानपरिवर्जनम् ॥ १ ॥ अथ क्लैब्यस्य चिकित्सायां वाजीकरं विधिमाह ॥ नरो वाजीकरान्योगान्सम्यक्शुद्धो निरामयः । सप्तत्यन्तं प्रकुर्वीत वर्षादूर्ध्वं तु षोडशात् ॥१ ॥ न चैव षोडशादर्वाक् सप्तत्याः परतो न च । आयुष्कामो नरः स्त्रीभिः संयोगं कर्तुमर्हति ॥२ ॥ क्षयवृद्ध्युपदंशाद्या रोगाश्चातीव दुर्जयाः । अकालमरणं च स्याद्भजतस्त्रियमन्यथा ॥३॥ स्त्रीभजनविधिर्विस्तरतो रात्रिचर्यायां लिखितोऽस्ति तत्र द्रष्टव्यः ॥ विलासिनामर्थवतां रूपयौवनशालिनाम् । नराणां बहुभार्याणां विधिर्वाजीकरो हितः ॥ ४ ॥ स्थविराणां रिरंसूनां स्त्रीणां वाल्लभ्यमिच्छताम् । योषित्प्रसंगात्क्षीणानां क्लीबानामल्परेतसाम् ॥ ५ ॥ हिता वाजीकरा योगाः प्रीणयन्ति बलप्रदाः । एतेऽपि पुष्टदेहानां सेव्याः कालाद्यपेक्षया ॥ ६ ॥ अथ वाजीकराण्याह ॥ भोजनानि विचित्राणि पानानि विविधानि च । वाचः श्रोत्राभिरामाश्च त्वचः स्पर्शः सुखस्तथा ॥ १ ॥ यामिनी सेन्दुतिलका कामिनी नवयौवना । गीतं श्रोत्रमनोहारि ताम्बूलं मदिरा स्रजः ॥ २ ॥ गन्धा मनोज्ञा रूपाणि चित्राण्युपवनानि च । मनसश्चाप्रतीघातो वाजीकुर्वन्ति मानवम् ॥ ३ ॥ अथ पायसम् ॥ गवां विरूढवत्सानां सिद्धं पयसि पायसम् । तथा गोधूमचूर्णं च सितामधुघृतान्वितम् ॥ भुक्त्वा हृष्यति जीर्णोऽपि दश दारान् व्रजत्यपि ॥१॥ अथ रसाला ॥ दध्नोऽर्धाढकमीषदम्लमधुरं खण्डस्य चन्द्रद्युतेः प्रस्थं क्षौद्रपलं पलं च हविषः शुण्ठ्याश्चतुर्माषकान् । तद्वन्मापचतुष्टयं मरिचतः कर्षं लवङ्गं तथा धृत्वा शुक्लपटे शनैः करतलेनोन्मथ्य विस्रावयेत् ॥ १ ॥ मृद्भाण्डे मृगनाभिचन्दनरसस्पृष्टेऽगुरूद्धूपिते कर्पूरेण सुगन्धितं तदखिलं संलोड्य संस्थापयेत् । रवस्यार्थे मथुरेश्वरेण रचिता ह्येषा रसाला स्वयं भोक्तुं मन्मथदीपनी सुखकरी कान्तेव नित्यं प्रिया ॥२॥ अथ शतावर्यादिचूर्णम् ॥ शतावरीनागबलाविदारीत्रिकण्टकैरामलकीफलान्वितैः । विचूर्णितैः पञ्चभिरेकशः पृथक् प्रकल्पितैर्वा घृतमाक्षिकप्लुतैः ॥ १ ॥ इति प्रयोगाः षडिमे भिषग्वरैरुदीरिताः शर्करया समन्विताः । नृणां मदान्धप्रमदोपसर्पिणां प्रधानधातोरतिरेककारणम् ॥ २ ॥ अथ मुसल्यादि चूर्णम् ॥ मुसलिकोकिलगोक्षुरचूर्णकं शशिविलोचनराममितं पचेत् । पयसि प्रातरिदं यदि कोष्णके सितया टङ्कषट्कया तु तत् ॥ १ ॥ त्रिगुणसप्तदिनं परिभक्षयन् शतवया अपि काङ्क्षति कामिनीम् ।

---

१ ( घ० ) प्रीत्यपत्यबलप्रदाः । २ ( ख० ग० घ० ) त्वचः स्पर्शसुखास्तथा ।

किमिह चित्रमुदित्वरयौवनः शशिमुखीं शयनाश्र जिहासति.॥ २ ॥ अथ वानरीगुटिका ॥ बीजानि हि कपिकच्छोः कुडवमितानि स्वेदयेच्छनकैः । प्रस्थे गोधूमदुग्धे दुग्धं यावद्भवेद्गाढम् ॥ १ ॥ त्वग्रहितानि च कृत्वा सूक्ष्मं संपेषयेत्तानि । पिष्टिकायाः सुवटिकाः कृत्वा गव्ये पचेदाज्ये ॥ २ ॥ द्विगुणितशर्करया ता वटिकाः संपक्कया लेप्याः । वटिका माक्षिकमध्ये मज्जनयोगेऽखिलाः स्थाप्याः ॥३॥ पञ्चटङ्कमितास्तास्तु प्रातः सायं च भक्षयेत् । अनेन शीघ्रद्रावी यो यश्च स्यात्पतितध्वजः ॥ ४ ॥ सोऽपि प्राप्नोति सुरते सामर्थ्यमति वाजिवत् । नानेन सदृशं किंचिद् द्रव्यं वाजीकरं परम् ॥ ५ ॥ इति वानरीगुटिका भावप्रकाशात् ॥ बस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् । यः खादेत्समुपागच्छेत्स्त्रीणां शतमपूर्ववत् ॥ १ ॥ पिप्पलीलवणोपेते बस्ताण्डे घृतसाधिते । कच्छपस्याथ वा खादेत्तत्तु वाजीकरं भृशम् ॥२॥ शतावरीगोक्षुरकाश्वगन्धापुनर्नवानागबला मुसल्या । घृतेन खण्डेन तु भक्षणीयाः क्षीणा नरा नागबला भवन्ति ॥ ३ ॥ विदारीकन्दचूर्णं तु घृतेन पयसा नरः । उदुम्बरसमं खादन्वृद्धोऽपि तरुणायते ॥ ४ ॥ सितामधुघृतं क्षीरं पलाण्डुरससंयुतम् । पिबेन्नरो भवेत्कामी वृद्धोऽपि तरुणायते ॥ ५ ॥ अथ गोक्षुरचूर्णम् ॥ शमयति गोक्षुरचूर्णं छागक्षीरेण साधितं समधु । भुक्तं क्षपयति पाण्ढ्यं यज्जनितं कुप्रयोगेण ॥ १ ॥ अथामृतभल्लातकः ॥ भल्लातकानां पवनोत्थितानां तरुच्युतानां च यदाढकं स्यात् । घृष्टेष्टिकाचूर्णकणैर्जलैश्च प्रक्षाल्य संशोष्य च मारुतेन ॥ १ ॥ शुष्काणि तानि द्विदलीकृतानि विपाचयेदप्सु चतुर्गुणासु । तत्पादशेषम्पुनरेव शीतं क्षीरेण तुल्येन विपाचयेत्तत् ॥ २ ॥ तदर्धया शर्करया विमिश्र्य पश्चात्खजेनोन्मथनं विधाय । सत्र्यूषणं त्रैफलचन्द्रमांसीत्रिवृच्च वांशीखदिरामृतं च ॥३॥ सचन्दनाकल्लकणाकबावं सदेवपुष्पं मुसलीद्वयं च । कक्कोलमोचाह्वयदीप्ययुग्मं नतं समानं्कणा विदारी ॥ ४ ॥ जातीफलं मुस्तकजातिपत्री कुबेरजीरागरुसाब्धिशोपम् । मेदाद्वयं लोहरसेन्द्रवङ्गमभ्रं तथा कुङ्कुमकं च कर्षम् ॥ ५ ॥ तत्सप्तरात्रादतिजातवीर्यं सुधारसादप्यधिकं वदन्ति । प्रातः प्रबुद्धः कृतदेहकार्यो मात्रां भजेत्सात्म्यशरीरयोग्याम् ॥६॥ न चानुपाने परिहार्यमस्ति न चातपे नाध्वनि मैथुनं च । यथेष्टचेष्टो विचरेत्प्रयोगान्नरो भवेत्काञ्चनराशिगौरः ॥ ७ ॥ अनेन मेधानरसिंहवीर्यो दृढेन्द्रियो व्याधिगतः सुबुद्धिः । दन्ता विशीर्णाः पुनरेव दिव्याः केशाश्च शुभ्राः पुनरेव कृष्णाः ॥ ८ ॥ नीलाञ्जनालिप्रतिमा भवन्ति त्वचो विशीर्णाः पुनरेव भव्याः । विशीर्णकर्णाङ्गुलिनासिकोऽपि कृम्यर्दितो भिन्नगलोऽपि कुष्ठी ॥ ९ ॥ शुष्कः पुनः स्याद्गतमूलशाखस्तरुर्यथा भाति नवाम्बुसिक्तः । बृहस्पतेरप्यधिको हि बुद्ध्या ग्रन्थं विशालं च नवं करोति ॥ १० ॥ गृह्णाति सद्यो न च विस्मृतिं च करोति कल्पायुरनल्पवीर्यम् । कुर्वन्निमं कल्पमनल्पबुद्धिर्जीवन्नरो वर्षशतं सुखी

---

१ (ग्रा० च० ) गोभवदुग्धे । २ ( क० ) षण्डेन । ३ ( च० ) घृतेष्टिका । ४ ( च० ) समानं च कणा ।

स्यात् ॥२१॥ इत्यमृतभल्लातकः ॥ अथ केशरपाकः ॥ व्योषं चतुर्जातफलत्रिकं च लवङ्गकृष्णागुरुचन्दनं च। इक्षूरबीजं करहाटकं च जातीफलं मर्कटिकाफलं च॥१॥ शाल्मल्यनिर्यासबलाश्वगन्धागोक्षूरबीजं मुसली कृमिघ्नम्। समुद्रशोषं विषपञ्जरं च पुष्पं सुजात्युद्भवकङ्कबीजम् ॥ २ ॥ सर्वैः समं योज्य सुकुङ्कुमं च सुचूर्णितं विंशतिभागयुक्तम्। कस्तूरिकाषोडशभागचूर्णं खण्डं चतुर्भागयुतं विपक्वम्॥३॥वङ्गं रसेन्द्रं गगनं सुलोहं कान्तं हि ताम्रं रविभागयुक्तम्। दलानि हेम्नो द्विशतानि दत्वा तथैव देयानि च राजतानि॥ एकत्र सर्वं विनिधाय वैद्यो जयाष्टभागं विदधीत लेहम् ॥ ४ ॥ जातीफलप्रमाणेन भक्षयेत्प्रातरुत्थितः। वीर्यवृद्धिं करोत्येष सर्वव्याधिविनाशनः ॥५॥ शतं च रमते स्त्रीणां कामतुल्यो भवेन्नरः। सर्वान्वातामयान्हन्ति प्रवृद्धं वातशोणितम् ॥ ६ ॥ अस्थिरोगं शिरोरोगं सन्धिरोगं च नाशयेत्। अस्य सेवनमात्रेण वृद्धोऽपि तरुणायते ॥ ७ ॥ धन्यं यशस्करं सम्यगायुरारोग्यवर्धनम्। काश्मीरकावलेहोऽयं बलकान्तिविवर्धनः ॥ ८ ॥ इति केशरपाकः ॥ अथ रतिवृद्धिकरो मोदकः ॥ गोक्षुरेक्षुरबीजानि वाजिगन्धा शतावरी। मुशली वानरीबीजं यष्टी नागबलाबला ॥ १ ॥ एषां चूर्णं दुग्धसिद्धं गव्येनाज्येन भर्जितम्। सितया मोदकं कृत्वा भक्ष्यं वाजीकरं परम् ॥ २ ॥ चूर्णादष्टगुणं क्षीरं घृतं चूर्णसमं स्मृतम्। सर्वतो द्विगुणं खण्डं खादेदग्निबलं यथा ॥ ३ ॥ वाजीकराणि भूरीणि संगृह्य रचितो यतः। तस्माद्बहुषु योगेषु योगोऽयं प्रवरो मतः ॥ ४ ॥ अथ रतिवल्लभाख्यपूगपाकः ॥ पूगं दक्षिणदेशजं दशपलोन्मानं भृशं कर्तयेत्तच्छिन्नं जलयोगतो मृदुतरं संकुट्य चूर्णीकृतम्। तच्चूर्णं पटशोधितं वसुगुणे गोशुद्धदुग्धे पचेद्गव्याज्याञ्जलिसंयुतेऽतिनिबिडे दद्यात्तुलार्धां सिताम् ॥ १ ॥ पक्वं तज्ज्वलनात्क्षितिं प्रति नयेत्तस्मिन्पुनः प्रक्षिपेद्द्रव्याणत्तदुदीरयामि बहुला हृष्टादरात्संहिताः। एलानागबलाबलासचपलाजातीफलं लिङ्गिता-[1] जातीपत्रकपत्रपत्रकयुगं तच्च त्वचा संयुतम् ॥ २ ॥ विश्वावीरणवारिवारिदवरा वांशी वरी वानरी द्राक्षा सेक्षुरगोक्षुराथ महती खर्जूरिका क्षीरिका। धान्या कंसकसेरुकं समधुकं शृङ्गाटकं जीरकं पृथ्वीकाथ यवानिका वराटिका मांसी मिसी मेथिका ॥ ३ ॥ कन्देष्वत्र विदारिकाथ मुशली गन्धर्वगन्धा तथा कर्चूरं करिकेसरं समरिचं चारस्य बीजं नवम्। बीजं शाल्मलिसंभवं करिकणाबीजं च राजीवजं श्वेतं चन्दनमत्र रक्तमपि च श्रीसंज्ञपुष्पैः समम् ॥४॥ सर्वं चेति पृथक् पृथक् पलमितं संचूर्ण्य तत्र क्षिपेत्सूतं वङ्गभुजङ्गलोहगगनं सन्मारितं स्वेच्छया। कस्तूरीघनसारचूर्णमपि च प्राप्तं तथा प्रक्षिपेत्। पश्चादस्य तु मोदकान्विरचयेद् बिल्वप्रमाणानथ ॥५॥ तान्भुक्त्वातिसदा यथानलबलं भुञ्जीत नाम्लं रसम् पूर्वस्मिन्नशिते गते परिणतिं प्राग्भोजनाद्भक्षयेत्। नित्यं श्रीरतिवल्लभाख्यकमिमं यः पूगपाकं भजेत्स स्याद्वीर्यविवृद्धिवृद्धमदनो वाजीव शक्तो रतौ ॥ ६ ॥ दीप्ताग्निर्बलवान्वलीविरहितो हृष्टः सुपुष्टः सदा वृद्धो

---

१ (च०) जातीफलालिङ्गिता। २ (च०) बीजानि च।

योऽपि युवेव सोऽपि रुचिरः पूर्णेन्दुवत्सुन्दरः ॥ ७ ॥ इति रतिवल्लभाख्यपूगपाकः ॥ एतस्मिन्रतिवल्लभे यदि पुनः सम्यक् खुरासानिका धत्तूरस्य च बीजमर्ककरभः पाथोऽधिशोषस्तथा । सन्माजूफलकं तथा खसफलं त्वक् चापि निक्षिप्यते चूर्णार्धा विजया तथा स हि भवेत्कामेश्वरो मोदकः ॥१॥ इति कामेश्वरमोदकः ॥ अथाम्रपाकः ॥ पक्वाम्रस्य रसद्रोणे सितामाढकसंमिताम् । घृतं प्रस्थमितं दद्यान्नागरस्य पलाष्टकम् ॥ १ ॥ मरिचं कुडवोन्मानं पिप्पलीं द्विपलोन्मिताम् । सलिलस्याढकं दत्वा सर्वमेकत्र कारयेत् ॥ २ ॥ पचेत्तन्मृन्मये पात्रे दारुदर्व्या प्रचालयेत् । चूर्णान्येषां क्षिपेत्तत्र घनीभूतेऽवतारिते ॥ ३ ॥ धान्यकं जीरकं चित्रं पत्रकं मुस्तकं त्वचम् । बृहज्जीरकमप्यत्र ग्रन्थिकं नागकेशरम् ॥ ४ ॥ एलां पत्रीं लवङ्गं च पृथगूजातीफलं पलम् । सिद्धशीते प्रदद्याच्च मधुनः कुडवद्वयम् ॥ ५ ॥ भक्षयेद्भोजनादर्वाक्पलमात्रमिदं नरः । अथ वा नियता नात्र मात्रा खादेद्यथानलम् ॥ ६ ॥ मानवः सेवनादस्य वाजीवत्सुरते भवेत् । समर्थो बलवान्पुष्टो हृष्टो नित्यं निरामयः ॥७॥ ग्रहणीं नाशयेदेष क्षयं श्वासमरोचकम् । आम्लपित्तं च पित्तं तु कुष्ठं वै पाण्डुतामपि ॥ ८ ॥ इत्याम्रपाकः ॥ अथ कामाग्निसंदीपनो मोदकः ॥ कर्पो रसो गन्धकमभ्रकं च द्विक्षारचित्रं लवणानि पञ्च । शटीयवानीद्वयकीटहारी तालीसपत्राणि परं विषं च ॥ १ ॥ जीरं चतुर्जातलवङ्गजातीफलं च कर्षत्रयमेवमन्यत् । सुवृद्धसर्वं कटुकत्रयं च तथा चतुष्कर्षमिदं निबोध ॥ २ ॥ धान्याकयष्टीमधुकं कसेरुपलं¹ पृथक् पञ्चपलं विदारी । दन्ती कणा चातिबलात्मगुप्ताबीजं तथा गोक्षुरकस्य बीजम् ॥ ३ ॥ सबीजपूरेन्द्ररजः समानं समा सिता क्षौद्रयुतं च तुल्यम् । कर्षैकमिन्दोरथ मोदकं च कामाग्निसंदीपनमेनमाहुः ॥ ४ ॥ वृष्यं तथा परतरं सततं सदीप्यमेनं निषेव्य मनुजः प्रमदासहस्रम् । गच्छेन्न लिङ्गं शिथिलत्वमेव नागाधिपं विजयते...² प्रमत्तः ॥ ५ ॥ वातानशीतिमथ पित्तभवांश्च रोगान् श्लेष्मोत्थविंशतिरुजः परमाग्निमान्द्यम् । दुर्वारकामलभगन्दरपाण्डुरोगान्मेहातिसारकृमिहृद्ग्रहणीविकारान् ॥ ६ ॥ कासज्वरश्वसनयक्ष्मकफप्रतिश्याशूलामवातसहिताश्च रुजः समस्ताः । हत्वा गदान्बहुविधांस्तदपत्यकारी सर्वत्र पथ्यमथ सर्वसुखप्रदायी । बल्यं वलीपलितहारि रसायनं स्यान्मूलं तदेव कथितं परमं पवित्रम् ॥ ७ ॥ इति कामाग्निसन्दीपनो मोदकः ॥ अथ शतावरीघृतम् ॥ घृताच्छतावरीगर्भक्षीरे दशगुणे पचेत् । शर्करापिप्पलीक्षौद्रयुक्तं तद्वृष्यमुच्यते ॥ १ ॥ अथ लघुवाजिगन्धासर्पिः ॥ कल्केन वाजिगन्धाया विपचेद् घृतमुत्तमम् । चतुर्गुणमजाक्षीरं दत्वोद्धृत्याथ शीतले ॥ सितां समां प्रदायाद्याद् बलपुष्टिविवृद्धये ॥१॥ अथ चन्दनादितैलम् ॥ द्रव्याणि चन्दनादेस्तु चन्दनं रक्तचन्दनम् । पतङ्गमथ कालीयागरुकृष्णागुरूणि च ॥ १ ॥ देवद्रुमः ससरलः पद्मकं क्रमुकोऽपि च । कर्पूरो मृगनाभिश्च लता कस्तूरिकापि च ॥ २ ॥ सिल्हकः कुङ्कुमं गव्यं जातीफलकमेव च जातीपत्रलवङ्गं च सूक्ष्मैला महती तथा ॥ ३ ॥ कङ्कोलफलकं त्वक् च पद्मकं

१ ( च० ) कसेरुफलम् । २ ( ख० ङ० ) सिद्धकः ।

गागरकेसरम्। बालकं च तथोशीरं मांसी दारु सितापि च ॥ ४ ॥ मुरा कर्चूरकश्चापि शैलेयम्भद्रमुस्तकम्। रेणुकाश्च प्रियङ्गुश्च श्रीवासो गुग्गुलुस्तथा ॥ ५ ॥ लाक्षा नखश्च रालश्च धातकीकुसुमं तथा। ग्रन्थिपर्णं च मञ्जिष्ठा तगरं सिक्थकस्तथा ॥६॥ एतानि शाणमानानि कल्कीकृत्य शनैः पचेत्। तैलं प्रस्थमितं सम्यग्गोतत्पात्रे शुभे क्षिपेत् ॥ ७॥ अनेनाभ्यक्तगात्रस्तु वृद्धोऽशीतिसमोऽपि यः। सुखी भवति शुक्राढ्यः स्त्रीणामत्यन्तदुर्लभः ॥ ८ ॥ वन्ध्यापि लभते गर्भं षण्ढोऽपि तरुणायते। अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ॥ ९ ॥ चन्दनादि महातैलं रक्तपित्तं क्षयं ज्वरम्। दाहं प्रस्वेददौर्गन्ध्यं कुष्ठं कण्डूं विनाशयेत् ॥ १० ॥ इति चन्दनादितैलम् ॥ अथ महासुगन्धि तैलम् ॥ कर्पूरागुरुचोचपत्रनलिकालाक्षाशटीधातुकीपुष्पैः सप्तदलैस्त्वालुसरलैः शैलेयमांसीप्लवैः। एलाकुङ्कुमरोचनादमनकैः श्रीवासजातीफलैः कङ्कोलक्रमुकोच्चटामदमुराकान्तालवङ्गामयैः ॥ १ ॥ वालोशीरहरेणुकामलयजस्थौणेयचण्डानखैर्जातीकोशकुलीरपद्मकनतैः स्पृक्कान्वितैः पालिकैः। लाक्षायोजनवल्लिलोध्रसलिलैस्तैलं विपाच्याढकं तैलाभ्यक्ततनुर्जरन्नपि भवेत्स्त्रीणां परं वल्लभः[1] ॥ २ ॥ शुक्राढ्यो द्युतिमानन्नल्पतनयः पण्ढोऽपि रत्युत्सुको वन्ध्या गर्भवती भवेदपि तथा वृद्धापि सूते सुतम्। कण्डूस्वेदविचर्चिकामलहरं दौर्गन्ध्यकुष्ठापहमश्विभ्यां परिकीर्तितं बहुगुणं तैलं सुगन्धं महत् ॥ ३ ॥ इति महासुगन्धतैलम् ॥ वृन्दात् ॥ अथ पञ्चबाणरसः ॥ सूताभ्रलोहोरगवङ्गशङ्खकपर्दिकाश्चैव समं विधाय। सूतार्धभागं कनकस्य दद्याद् वारत्रयं क्षीरविभावयेत्तत् ॥ १ ॥ पोस्तैस्तथा भावितमेकविंशद्वारं तथा यष्टिसुवर्णकानाम्। लवङ्गकाकल्कैर[2]विश्वजातीफलत्रिकं कोलकचन्दनानाम् ॥२॥ एषां द्रवैर्भावय सप्तवारं पृथक् तथैकं मृगनाभिकायाः। रसोऽयमुक्तो परमेश्वरेण श्रीपञ्चबाणो रतिशक्तिदो [illegible] ॥ ३ ॥ एतस्मादधिकश्च नास्ति भुवने वीर्याधिकं धीप्रदम् आयुष्कान्तिकरं हितं वसुमतां नृणामुदारात्मनाम्। आज्ञासिद्धमिदं रसायनवरं बल्यं वयःस्थापनं मेहप्लीहजलोदराश्मरिरुजापस्मारविध्वंसनम् ॥४॥ इति पञ्चबाणरसः ॥ अथ चन्द्रोदयरसः ॥ पलं मृदु स्वर्णदलं रसेन्द्रपलाष्टकं षोडश गन्धकस्य। शाणैस्तु कार्पासभवैः प्रसूनैः सर्वं विमर्द्याथ कुमारिकाद्भिः ॥ १॥ तत्काचकुम्भे निहितं सुगाढं मृत्कर्पटैस्तद्दिवसत्रयं च। पचेत्क्रमाग्नौ सिकताख्ययन्त्रे ततो रसः पल्लवरागरम्यः ॥ २ ॥ सौवर्णमेतत्सकलामयघ्नं सर्वेषु योगेषु च योजनीयम्। निगृह्य चैतस्य फलं पलानि चत्वारि कर्पूररजस्तथैव ॥ ३ जातीफलं चोषणमिन्द्रपुष्पं कस्तूरिकायामिह शाण एकः। चन्द्रोदयोऽयं कथितोऽस्य माषो भुक्तोऽहिवल्लीदलमध्यवर्ती ॥४॥ मदोद्धतानां प्रमदाशतानां गर्वाधिकत्वं श्लथयत्यवश्यम्। शृतं घनीभूतमतीव दुग्धं मृदूनि मांसानि समण्डकानि ॥ माषान्नमिष्टानि रसेऽत्र पथ्यमानन्ददायीन्यपराणि चात्र ॥ ५ ॥ वलीपलितनाशनस्तनुभृतां वयःस्तम्भनः समस्त-

---

[1] ( च० )—वल्लभः। [2] ( च० )—काकल्लक।

गदखण्डनः मधुररोगपञ्चाननः । गृहे च रसराडयं भवति यस्य चन्द्रोदयः स पञ्चशरदर्पितो मृगदृशाम्भवेद्वल्लभः ॥ ६ ॥ इति चन्द्रोदयरसः ॥ अथ वृद्धपुष्पधन्वा रसः ॥ कनकहरजकान्तं ताप्यकं वृद्धिभाव्यं द्विजकुवलययष्टीशाल्मलीनागवल्यः । घृतमधुपयखण्डं पुष्पधन्वा द्विवल्लो रमयति बहुकान्ता दीर्घमायुर्बली स्यात् ॥ १ ॥ अथ लघुपुष्पधन्वा रसः ॥ हरजभुजगलोहान्यभ्रकं च त्रिभागं कनकविजययष्टीशाल्मलीनागवल्यः । सितमधुघृतदुग्धैः सेवितो वीर्यवृद्धी रमयति बहुकान्ता पुष्पधन्वा रसः स्यात् ॥१॥ अथ मदनकामदेवो रसः ॥ तारं वज्रं सुवर्णं च ताम्रसूतकगन्धकम् । लोहं क्रमविवृद्धानि कुर्यादेतानि मात्रया ॥१॥ विमर्द्य कन्यकाद्रावैर्न्यस्येत्काचमये घटे । विमुद्य पिठिरीमध्ये धारयेत्सैन्धवैर्भृते ॥२॥ वह्निं शनैः शनैः कुर्याद्दिनैकं तु तदुद्धरेत् । स्वाङ्गशीतं च सञ्चूर्ण्य भावयेदर्कदुग्धकैः ॥ ३ ॥ अश्वगन्धा च काकोली वानरी मुसली क्षुरा । त्रिवारं च रसैर्भाव्यं शतावर्याश्च भावयेत् ॥४॥ कस्तूरीव्योषकर्पूरं कङ्कोलैलालवङ्गकम् । पूर्वचूर्णादष्टमांशमेतच्चूर्णं विमिश्रयेत् ॥ ५ ॥ सर्वैः समां शर्करां च दत्वा शाणोन्मितं पिबेत् । गोदुग्धद्विपलेनैव मधुराहारसेवकः ॥ ६ ॥ अस्य प्रभावात्सौन्दर्यं बलं तेजो विवर्धते । तरुणी रमयेद्वृद्धो न च हानिः प्रजायते ॥७॥ इति मदनकामदेवो रसः ॥ अथ महाराजवटीरसः ॥ बीजं त्राहतरोर्विधाय बहुधा खण्डं त्रियामोषितं छागे दुग्धवरेऽथ शुष्कमथ तद्गन्धेन तिथ्यंशिना । युक्तं काचघटीयुतं हुतभुजो योगेन च त्वान्ततः सत्त्वं तस्य निगृह्य काचघटिते भाण्डे सुखं स्थापयेत् ॥१॥ तत्तैलं वल्लमात्रं तु ताम्बूलीपत्रगं चरेत् । क्षिप्त्वा तत्र रसं वल्लमङ्गुल्यग्रेण मर्दयेत् ॥२॥ युक्त्या तां कज्जलीं भुक्त्वा ताम्बूलं शीलयेदनु । शाकाम्लं माषषट्कादिवर्जितं पथ्यमाचरेत् ॥ ३ ॥ अनेन योगराजेन षण्ढोऽपि पुरुषायते । अपूर्ववच्छतं गच्छेद्वनितानां मदोगणात्[4] ॥४॥ रक्तपित्तविध्वंसी योगोऽयं क्षयकुष्ठजित् । वातपित्तकफातङ्कहस्तिपञ्चाननः परम् । नास्त्यनेन समं लोके किंचिदन्यद्रसायनम् ॥ ५ ॥ इति महाराजवटीरसः सारसंग्रहात् ॥ अथ पूर्णेन्दुनामा रसः ॥ शाल्मल्युत्थैर्द्रवैर्मर्द्य पक्षैकं शुद्धसूतकम् । यामद्वयं पचेच्चापि वस्त्रे बद्ध्वाथ मर्दयेत् ॥ १ ॥ दिनैकं शाल्मलीद्रावैर्मर्दयित्वा वटीकृतम् । वेष्टयन्नागवल्ल्याथ निक्षिपेत्काचभाजने ॥ २ ॥ भाजनं शाल्मलीद्रावैः पूर्णं यामद्वयं पचेत् । वालुकायन्त्रमध्ये तु द्रव्ये जीर्णे समुद्धरेत् ॥ ३ ॥ द्विगुञ्जं भक्षयेत्प्रातर्नागवल्लीदलान्तरे । मुसलीं ससितां क्षीरं पलैकं पाययेदनु ॥ ४ ॥ रसः पूर्णेन्दुनामायं सम्यग्वीर्यकरो भवेत् । कामिनीनां सहस्रैकं नरः कामयते ध्रुवम् ॥ ५ ॥ इति पूर्णेन्दुनामा रसः ॥ अथ भस्मरसयोगः ॥ खर्परे धारयेद्गन्धं तैलवद्वह्निना क्षणम् । ततस्तस्मिन् क्षिपेत्सूतं तत्समानं ततः परम् ॥ १ ॥ घर्षयेल्लोहदर्व्याथ यावज्ज्वलति वह्निना । खर्परस्यान्तरं वह्निर्यदा ज्वलति केवलम् ॥ २ ॥ अथो वह्निं तदा मन्दं विधाय घट्टयेत्पुनः । लोहदर्व्या भवेद्यावद्भस्म तत्स्फ-

१ ( च० ) पूगचूर्णा—। २ ( ग० ) त्राप्ततरो—( घ० ) बह्नतरो । ३ ( च० ) कृत्वा ततः । ४ ( ख० ग० घ० ) मदोगणान् ।—नामदोगुणात् ।

टिकोपमम्.॥ ३ ॥ तदादाय प्रयोक्तव्यं रोगेषु सकलेष्वपि। अग्निमान्द्यं च षाण्ढ्यं च कासश्वासभगन्दराः ॥४॥ व्रणाश्च विविधाः सर्वे वलयः पलितानि च । नश्यन्त्यनेन योगेन सत्यं शिववचोदितम् ॥ ५ ॥ अथ ध्वजवृद्धिकरणम् ॥ क्षौद्रं क्षुद्रातगरमरिचैः पिप्पलीसैन्धवाभ्यां मत्यकूपुष्पीयवतिलगुडश्वेतसिद्धार्थमाषैः । श्लक्ष्णीभूतैर्भवति मिलितं वाजिगन्धासनाथैः श्रोणीश्रोत्रभुजकचशिरःशेफसां वृद्धिकारी ॥ १ ॥ इति राजमार्तण्डात् ॥ सकुष्ठमातङ्गबलाबलानां वचाश्वगन्धागजपिप्पलीनाम् । तुरङ्गशत्रोर्नवनीतयोगाल्लेपेन लिङ्गं मुशलत्वमेति ॥२॥ इत्यनङ्गरङ्गात् ॥ इति वाजीकरणाधिकारः ॥ $ अष्टाङ्गमैथुनम् ॥ स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ १ ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥ २ ॥ अथ कामेश्वरः ॥ जातीफलं च सौराष्ट्री कृष्णधत्तूरबीजकम् । जातीपुष्पमफेनं च नागं हिङ्गुलमेव च ॥ १ ॥ एतानि समभागानि खसक्काथेन मर्दयेत् । गुञ्जामात्रां च वटिकां सितया सह भक्षयेत् ॥ नाम्ना कामेश्वरः प्रोक्तो रमते कामिनीशतम् ॥ २ ॥ अथ वङ्गेश्वरः ॥ रसं वङ्गसमं कृत्वा चतुर्भागं च गन्धकम् । कुमारीरससंयुक्तं दिनमेकं तु मर्दयेत् ॥ १ ॥ मन्दमध्यमतीव्राग्निवालुकायन्त्रगं पचेत् । अश्वगन्धामृतासारमोचारसशतावरीः ॥ २ ॥ गोक्षीरधात्री कूष्माण्डी वाराही पत्रमागधी । त्रिफला कर्कटी मुस्ता यष्टी मधुसमन्वितम् ॥३॥ सर्वसाम्यं सितायुक्तं चूर्णं कर्षार्धसंयुतम् । गुञ्जाचतुष्टयं मात्रं गोक्षीरमनुपानतः ॥ ४ ॥ प्रातरुत्थाय सेवेत लवणाम्लं च वर्जयेत् । बहुमूत्रं मूत्रकृच्छ्रं रक्तमूलप्रमेहकम् ॥ ५ ॥ मधुमेहं नष्टशुक्रं नष्टलिङ्गं च नाशयेत् । सर्वमेहप्रशमनो वङ्गेश्वर इति स्मृतः ॥६॥ इति वङ्गेश्वरः ॥ *शतावर्यश्वगन्धा च वानरी मुशली तथा । गोकण्टो शर्कराक्षीरं पिबेन्नष्टेन्द्रियो नरः ॥ १ ॥ तिलगोक्षुरचूर्णेन साधितं छागलं पयः । पीत्वा सशर्कराक्षौद्रं शीघ्रं गच्छति षण्ढता ॥ २ ॥ शमयति गोक्षुरचूर्णं छागक्षीरेण साधितम् । शर्करामधुसंयुक्तं शीघ्रं गच्छति षण्ढता ॥३॥ सिन्दूरं कनकं बीजं विजया क्षुरबीजकैः । जातीफलं जातीपत्रीं कटुशिग्रुमफेनकम् ॥ ४ ॥ समुद्रशोषसंयुक्तं लवङ्गं च तथैव च । विजयारसनैर्मर्द्यं याममेकं प्रशस्यते ॥ ५ ॥ बदरीबीजमात्रं तु स्त्रीशतं रमते मुदा । अब्धिशोषं च सिद्धार्थाश्चतुर्वल्लमितान् पृथक् ॥ ६ ॥ अर्धशिष्टं च तद्दुग्धं सायंकाले पिबेन्नरः । बिन्दुपातेन कुरुते वाजीकरणमुत्तमम् ॥ ७ ॥ अथ रसभस्मयोगः ॥ शुद्धं सूतं द्विधा गन्धं लोहपात्रेऽग्निसंस्थिते । आर्द्रन्यग्रोधदण्डेन चालयेद्रसमतां नयेत् ॥ रक्तिकाद्वितयं भुक्तं रेतःपुष्टिकरं परम् ॥ १ ॥ अथ वीर्यस्तम्भवटी ॥ जातीफलं लवङ्गं च जातीपत्रं सकुङ्कुमम् । सूक्ष्मैला चाहिफेनं च त्वकारकरभं तथा ॥१॥ प्रत्येकं कर्षमात्राणि कर्पूरं शाणमात्रकम् । नागवल्लीदलरसैर्वटी चणकसन्निभा ॥ वीर्यसंस्तम्भनी ह्येषा बलवर्णाग्निदीपनी ॥ २ ॥ अथ कपि-

* इक्षुर गोक्षुर मर्कटबीजं मुसलि शतावरि शाल्मलिडिक्कम् । घृतमधुसेवितनित्यं रमते रमणीशतभरनिसम् ॥ १ ॥ $ इत्यारभ्यारसवैकृतियोगात् 'ग' पुस्तकलब्धो विषयः ॥

कच्छूपाकः ॥ निस्तुषं वानरीबीजं कृत्वा विंशत्पलानि च । त्रिंशत्पलां सितां दत्वा घृतं दत्वा पलाष्टकम् ॥१॥ दुग्धाढकसमायुक्तं मृदुना वह्निना पचेत् । यावद्दर्वीप्रलेपः स्यात्तन्मध्ये चूर्णितं क्षिपेत् ॥२॥ जातीफलं त्रिकटुकं त्रिगन्धं देवपुष्पकम् । अकल्लकरं जातिपत्री कोकिला बीजकेसरम् ॥३॥ पुनर्नवापले द्वे च मुसली साहिफेनकम् । पारदं लोहचूर्णं च त्वभ्रकं च पलार्धकम् ॥४॥ चन्दनागरुकस्तूरीकर्पूरं शाणमात्रकम् । पलार्धं भक्षयेत्तत्तु क्रमाद्वीर्यफलप्रदम् ॥ ५ ॥ अथ रसवैकृतियोगोऽभिलिख्यते ॥ जनितविविधदाहं शीततोयाभिषेको मलयजघनसारो लेपनं मन्दवातः । तरुणदधिसिताक्तं नारिकेलीफलाम्भो मधुरशिशिरपानं शीतमन्यच्च शस्तम् ॥१॥ सौभाग्यमेघनादाङ्घ्रिशीतामधुकचन्दनम् । तुषोदकेन पातव्यं सर्वस्मिन् रसवैकृते ॥२॥ छर्द्यां चेक्षुरसो देयो कपित्थं वा सितान्वितम् । कुमारीगिल्ललेपश्च सर्वाङ्गेन प्रशस्यते ॥३॥ क्षीरं मधुसितोपेतं क्राथो वामृतबिन्दुकः । उपचारा अमी सर्वे प्रशस्ता रसतापिनाम् ॥ रसदाहे भवेत्सर्वे पित्तज्वरभिषग्जितम् ॥ ४ ॥ अथ रससारः ॥ मुक्ताविद्रुमवङ्गभूतिसहितं वल्लं पृथक् स्वर्णकं छिन्नासत्त्वतुगासितानवनितं चालोड्य सम्भक्षयेत् । सञ्जाते तृपि नारिकेलसलिलं तत्कालिकं प्राशयेत्सर्वस्मिन् रसवैकृते च गदितं ह्येतच्च योगामृते ॥ १ ॥ सर्वस्मिन् रसवैकृते हि शिशिरं स्वेच्छाम्बु पानादिकम् देयं तापशमाय दाडिमतरोरग्राणि दूर्वाशिफाः । संपेष्या मलया ददात्वथ तदाश्वेच्छावशेन? त्यजेद्यावत्पूर्वबलं भवेत्पटुतरं तावत् स्त्रियं न स्पृशेत् ॥ २ ॥ यष्टीपटोलनिष्क्राथो मधुना मधुरीकृतः । तीव्रपित्तज्वरोन्मादनाशनो रसदाहजित् ॥ ३ ॥ छिन्ना यष्टीघनोशीरधान्यपर्पटचन्दनैः । रसदाहं जयेत्क्राथो खण्डवंशीकसंयुतः ॥ ४ ॥ चन्दनोदीच्यशीतैश्च क्राथः खण्डो पलान्वितः । रसदाहं जयत्याशु पित्तज्वरहरः परः ॥ ५ ॥ दूर्वा सोत्पलकिञ्जल्कमञ्जिष्ठाशैलवालुकम् । सितासितमुशीरं च मुस्तं चन्दनपद्मकम् ॥६॥ तत्समं च भवेत्क्षीरं घृतप्रस्थं विपाचयेत् । जीवकर्षभकौ मेदामदामेदास्तथैव च ॥ ७ ॥ काकोली क्षीरकाकोली मृद्वीका मधुकं तथा । मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम् ॥८॥ शर्करा मधुसंयुक्तं सिद्धं विप्लावयेद् घृतम् । रक्तपित्तविकारेषु वातरक्तगदेषु च ॥ ९ ॥ क्षीणशुक्रे प्रदातव्यं वाजीकरणमुत्तमम् । अङ्गदाहं शिरोदाहं ज्वरं पित्तसमुद्भवम् ॥ १० ॥ विकारो यदि जायेत पारदान्मलसंयुतात् । गन्धकं सेवयेत्तत्र शोधितं विधिपूर्वकम् ॥ ११ ॥ गन्धकं माषयुग्मं च नागवल्लीदलैः सह । खादयेत्पारदग्रस्तो दोषशान्तिस्तदा भवेत् ॥ १२ ॥ अथान्यच्च ॥ लाक्षाकूष्माण्डखण्डांश्च तुलसीं शतपुष्पिकाम् । लवङ्गं वत्सनागं च गन्धकेन समात्रकम् ॥ १ ॥ कर्षमात्रं पयो भुक्तं सर्वं तत्र पृथक् पृथक् । सर्वयोगोत्तरासाध्यः सूतदोषविकारनुत् ॥२॥ अथान्यच्च ॥ नागवल्लीरसैः प्रस्थं भृङ्गराजरसं तथा । तुलस्याश्च रसं प्रस्थं छागदुग्धं समांशकम् ॥ १ ॥ मर्दनं सर्वगात्रेषु यामयुग्मं दिनत्रयम् । स्नानं शीतलतोयेन सूतदोषप्रशान्तये ॥ २ ॥ इति रसवैकृतियोगः ॥

---

ददात्वथतदाश्वेच्छावश—?

# ॥ अथ रसायनाधिकारः ॥

तत्र रसायनस्य लक्षणमाह ॥ यज्जराव्याधिविध्वंसि वयसः स्तम्भकं तथा । चक्षुष्यं बृंहणं वृष्यं भेषजं तद्रसायनम् ॥ १ ॥ रसायनस्य फलमाह ॥ दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः । देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात् ॥१॥ तद्विधिमाह॥ पूर्वे वयसि मध्ये वा मनुष्यस्य रसायनम् । प्रयुञ्जीत भिषक् प्राज्ञः स्निग्धशुद्धतनोः सदा ॥१॥ नाविशुद्धशरीरस्य युक्तो रासायनो विधिः । न भाति वाससि क्लिष्टे रङ्गयोग इवाहितः ॥ २ ॥ अथ तदुदाहरणानि ॥ शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः । त्रिशः समस्तमथवा प्राक्शीतं स्थापयेद्वयः ॥ १ ॥ मण्डूकपर्ण्याः स्वरसः प्रभाते प्रयोज्य यष्टीमधुकस्य चूर्णम् । रसो गुडूच्यास्तु समूलपुष्प्याः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥ २ ॥ आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्धनानि । मेध्यानि चैतानि रसायनानि मेध्या विशेषेण च शङ्खपुष्पी ॥ ३ ॥ विशेषेण तुगाक्षीर्याः पिप्पल्या लवणेन च । त्रिफला सितया वापि युक्ता सिद्धं रसायनम् ॥४॥ सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् । वर्षादिष्वभया प्राश्या रसायनगुणैषिणा ॥ ५ ॥ ग्रन्थान्तरादथ हरीतक्यपानुपानानि ॥ ग्रीष्मे तुल्यगुडां ससैन्धवयुतां मेघावनद्धाम्बरे सार्धं शर्करया शरद्यमलया शुण्ठ्या तुषारागमे । पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजितां राजन्भुङ्क्ष्व हरीतकीमिव गदा नश्यन्तु ते शत्रवः ॥ २ ॥ पुनर्नवस्यार्धफलं नवस्य पिष्टं पिबेद्यः पयसार्धमासम् । मासत्रयं तत्रिगुणं समन्ताज्जीर्णोऽपि भूयः स पुनर्नवः स्यात् ॥३ ॥ ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजःसमुत्थम् । क्षीराशिनस्ते बलवीर्ययुक्ताः समाः शतं जीवनमाप्नुवन्ति ॥ ४ ॥ शतावरी मुण्डिनिका गुडूची सहस्तिकर्णी सहतालमूली एतानि कृत्वा समभागयुक्तान्याज्येन किं वा मधुनावलिह्यात् ॥ ५ ॥ जरारुजामृत्युवियुक्तदेहो भवेन्नरो वीर्यबलादियुक्तः । विभाति देवप्रतिमः स नित्यं प्रभामयो भूरिविवृद्धबुद्धिः ॥ ६ ॥ पीताश्वगन्धा पयसार्धमासं घृतेन तैलेन सुखाम्बुना वा । कृशस्य पुष्टिं वपुषो दधाति नरस्य सस्यस्य यथाम्बुवृष्टिः ॥ ७॥ शिशिरे चाश्वगन्धायाः कन्दचूर्णं पयोऽन्वितम् । मासमत्ति समध्वाज्यं संवृद्धोऽपि युवा भवेत् ॥ ८ ॥ घृतामलकशर्करातिलपलाशबीजानि यः समानि शयनस्थितो मधुयुतानि खादेन्निशि । वलीपलितवर्जितस्तरुणनागतुल्यो बली बृहस्पतिसमः पुमान्भवति सोऽचिरेण ध्रुवम् ॥ ९ ॥ इति राजमार्तण्डात् ॥ असिततिलविमिश्रान् पल्लवान्भक्षयेद्यः सततमिह पयोऽशी भृङ्गराजस्य मासम् । भवति च चिरजीवी व्याधिभिर्मुक्तदेहो भ्रमरसदृशकेशः कामचारी मनुष्यः ॥ १ ॥ वृन्दात् ॥ ससितया वचयामलकैरथ त्रिफलया त्वथ वा घृतमिश्रया । कनकलोहरजः सदलं कृतं परमिदं हि रसायनमिष्यते ॥१॥ इति चिकित्साकलिकातः ॥ धात्रीतिलान् भृङ्गरजोविमिश्रान्ये भक्षयेयुर्मनुजाः क्रमेण । ते कृष्णकेशा विमलेन्द्रियाश्च निर्व्याधयोऽप्यामरणाद्भवेयुः ॥ १ ॥ पञ्चभल्लातकांश्छित्त्वा शोधयेद्विधिवज्जले । कषायं

तं पिबेच्छीतं घनेनाक्तोष्ठतालुकम् ॥ २॥ पञ्चवृद्ध्या पिबेद्यावत्सप्ततिं ह्रासयेत्ततः। जीर्णेऽद्यादोदनं शीवं घृतक्षीरोपसंहितम् ॥ ३ ॥ एतद्रसायनं मेध्यं वलीपलितनाशनम्। कुष्ठार्शःक्रिमिदोषघ्नं दुष्टशुक्रविशोधनम्॥ ४॥ इति वृन्दात्॥ गुडूच्यपामार्गविडङ्गशङ्खिनीवचाभयाशुण्ठीशतावरीः समाः। घृतेन लीढा प्रकरोति मानवं त्रिभिर्दिनैः श्लोकसहस्रधारिणम् ॥ १ ॥ ब्राह्मीवचाभयावासापिप्पल्यो मधुसैन्धवम् । अस्य प्रयोगात्सप्ताहात्किन्नरैः सह गीयते ॥ २ ॥ हन्त्यम्लपित्तवमनारुचिदाहमोहखालित्यमेहतिमिरार्मसशुक्रदोषान् । भुक्त्वा नरः सततमामलकीरसेन वृद्धोऽपि तेन च भवेत्तरुणी रिरंसुः ॥३॥ अथ लोहगुग्गुलुः ॥ अयः पलं गुग्गुलुरत्र योज्यः पलत्रयं व्योषपलानि पञ्च । पलानि चाष्टौ त्रिफलारजश्च कर्षं लिहन्यात्यमरत्वमेव ॥ १ ॥ इति लोहगुग्गुलुर्भावप्रकाशात् ॥ अथ गन्धकरसायनम् ॥ शुद्धो बलिर्गोपयसा विभाव्यस्ततश्चतुर्जातगुडूचिकाभिः । पथ्याक्षधात्र्यौषधभृङ्गराजैर्भाव्योऽष्टवारं पृथगार्द्रकेण ॥ १ ॥ शुद्धे सितां योजय तुल्यभागां रसायनं गन्धकराजसंज्ञम्। कर्षोन्मितं सेवितमेति मर्त्यो वीर्यं च पुष्टिं दृढदेहवह्निम् ॥२॥ कण्डूं च कुष्ठं विषदोषमुग्रं मासद्वयेनेह जयेत्प्रयोगः घोरातिसारं ग्रहणीगदं च हरेच्च रक्तं दृढशूलयुक्तम् ॥ ३ ॥ जीर्णज्वरे मेहगणे प्रकृष्टं वातामयानां हरणे समर्थम् । प्रजाकरं केशमतीव कृष्णं करोति चेद्रक्षति चार्धवर्षम् ॥ ४ ॥ रसायनम् पर्वतजात्मबीजं क्षाराम्लतैलादिकराजिवर्जम्। ससोमरोगं सहमुष्कवृद्धिं हरेच्च वै गन्धकराजयोगः ॥ ५ ॥ हरति सकलरोगान्गन्धकाख्यः प्रयोगो मृतसदृशनराणां प्राणदो दीर्घमायुः । तदनु विहितयोगो भस्मसूतं सहेम रमयति त्रिदशानां देहदीप्तिं सुरूपाम् ॥ ६ ॥ वीर्यस्य वृद्धिं दृढदेहवह्निमशीतिवातान्विनिहन्ति कुष्ठम् । प्रमेहदुष्टोदररोगजालं विशेषतोः हन्ति तु संनिपातम् ॥७॥ दोपज्वरं राजरुजं प्रमेहं पाण्डुक्षयश्वासगुदाङ्कुरादीन् । एतान्हि रोगान् विनिहन्ति शीघ्रं रसायनं जल्पितमीश्वरेण ॥ ८ ॥ इति गन्धकरसायनम् ॥ अथ तैलानि ॥ एरण्डतैलमथ निम्बफलास्थितैलमेतद्रसायनमनामयकायकारि । ज्योतिष्मतीफलपलाशफलोद्भवं वा तैलं वलीपलितहारि भिषक्प्रदिष्टम् ॥१॥ न केवलं दीर्घमिहायुरश्नुते रसायनं यो विविधं निषेवते । गतिं सदेवर्षिनिषेवितां शुभां प्रपद्यते ब्रह्म तथैव चाक्षयम् ॥ २ ॥ इति रसायनाधिकारः ॥

---

## ॥ अथ रोगानुसारेणौषधस्यानुपानानि ॥

कैराताम्बुदपर्पटं ज्वरगदे तक्रं ग्रहण्यामथातीसारे कुटजः क्रमौ क्रिमिरिपुर्दुर्नामके शरुष्करम् । पाण्डौ किट्टमथ क्षये गिरिजतु श्वासे तु भार्ग्यौषधं मेहे त्वामलकं क्षये तृषि जलं सन्तप्तहेमान्वितम् ॥१॥ शूले हिङ्गु करञ्जमामपवने तैलं रुबोर्मूत्रयुक् श्रेष्ठा प्लीह्नि कणा विषे शुकतरुः कासे तु कण्टारिका। वातव्याधिषु गुग्गुलुश्च लशुनः स्याद्रक्तपित्ते वृषोऽपस्मारे तु वचासवाद्यथ गरे हेमोदरे रेचनम् ॥२॥ वातास्रे तु गुडूचिकार्दितगदे

माषेण्डरी मेदसि क्षौद्राम्भः प्रदरे तिरीटमरुचौ लुङ्गो व्रणेऽग्र्यः पुरः। शोके मद्यमथाम्लपित्तरुजि तु द्राक्षाथ कृच्छ्रे वरी कूष्माण्डाम्बु दृगामये तु त्रिफलोन्मादे पुराणं घृतम् ॥ ३ ॥ कुष्ठे खादिरसारवार्यथ पयो निद्राक्षये माहिषं श्वित्रे[1]बाकुचिफलत्वजीर्णरुजि तु स्वापो भये शोषणम्। छर्दौ लाजमधूध्र्वजत्रुविकृतौ नस्यं सतीक्ष्णौषधम् शूले पार्श्वभवे तु पुष्करजटामूर्च्छासु शीतो विधिः ॥ ४ ॥ कार्श्ये मांसरसोऽश्मरीषु गिरिभिद् गुल्मेषु सेतुन्वचा[3] मोक्षोऽस्रस्य तु विद्रधौ जतुरसो हिध्मासु[2]नस्यं हितम्। दाहे शीतविधिर्भगन्दरगदे तूर्वीलताश्वास्थिनी घृष्टे रासभलोहितैः स्वरगदे मध्वन्वितं पौष्करम् ॥ ५ ॥ इति सर्वरोगेष्वनुपानानि ॥ यत्किञ्चिदौषधं वैद्यैर्देयं रोगानुपानतः। तत्तद्गुणकरं ज्ञेयमनुपानबलादिह ॥ १ ॥ यावद् व्योमनि बिम्बमम्बरमणेरिन्दोश्च विद्योतते यावत्सप्त पयोधयः सगिरयस्तिष्ठन्ति पृष्ठे भुवः। यावच्चावनिमण्डलं फणिपतेरास्ते फणामण्डले तावत्सद्भिषजः पठन्तु परितः श्रीयोगरत्नाकरम् ॥ २ ॥ इति योगरत्नाकरः ॥




१ (च०) बाकुचिकाफलं त्वजीर्णे। २ (च०) तोषणम्। ३ (च०) शिमुत्वचा।

# शुद्धिपत्रम् ।

| पृष्ठाङ्काः । | पङ्क्त्यङ्काः | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १ | १ | विंपेःस्तुल्यः .... | विंपैस्तुल्यः. |
| २ | १२ | मुण्डीत .... | मुण्डित. |
| ,, | १३ | शून्यस्वर .... | शून्यःस्वर. |
| ३ | १ | नाडींजिह्वाक्ष ... | नाडीजिह्वाक्षि. |
| ,, | ५ | प्रुयात्.. .... | प्रुयात. |
| ,, | ९ | पूंसां .... .... | पुंसां. |
| ,, | २४ | नाडिम् ... .... | नाडीम्. |
| ४ | ६ | विद्धर्न्ती .... | विदधर्ती. |
| ,, | २९ | कठिणा .... | कठिना. |
| ,, | ,, | स्पृष्टा .... .... | स्पष्टा. |
| ५ | १ | यद्रोगिणः .... | यो रोगिणः. |
| ६ | २३ | भवेच्छ्लेष्मा .... | भवेच्छ्लेष्मा. |
| ८ | ८ | कुङ्कुमाकार .... | कुङ्कुमाकार. |
| ९ | २५ | मवृत्या ... .... | प्रवृत्त्या. |
| ११ | २२ | ह्लस्वा .... .... | ह्रस्वा. |
| १३ | २ | उष्म .... .... | उष्ण. |
| १४ | २ | तत्फलस्य .... | तत्फलं च. |
| ,, | २५ | तथ .... .... | तथा. |
| १५ | १७ | वदश्यामं .... | वच्छ्च्यामं. |
| १६ | २१ | कुलेचराः .... | कूलेचराः. |
| १६ | २२ | कुलेचराः .... | कूलेचराः. |
| ,, | २३ | कुले .... .... | कूले. |
| ,, | ८ | चांतेत्र.... .... | चातीत्र. |
| २२ | ११ | सुमस्ताहर .... | समस्ताहार. |
| ३१ | १० | रते .... .... | रतौ. |
| ३५ | २८ | दन्ताग्र .... | दन्ताग्रे. |
| ५५ | १ | गुडडक्तं .... | गुडमुक्तं. |
| ६० | १२ | वलीपतलि .... | वलीपलित |
| ६९ | २६ | कुप्यां .... .... | कूप्यां. |
| ७० | २० | मरुल्लीह .... | मरुत्लीह. |
| ७३ | ३० | मूर्छाय ... .... | मूर्च्छाथ. |
| ८१ | २५ | धनात्यये .... | घनात्यये. |
| ८७ | १७ | प्रलापी ... .... | प्रलापो. |
| ,, | २९ | वैमत्यं .... .... | वैमल्यं. |
| ८८ | २० | जुष्टे .... .... | जुष्टः |
| ,, | ,, | विषमे .... .... | विषम. |
| ९४ | १२ | मृष्टश्च.... .... | भृष्टश्च. |
| ९५ | १० | शमयेपित्त .... | शमयेत्पित्त. |
| ११२ | २२ | अर्कमृलंकषायं.. | अर्कमूलकषायं. |
| १२० | १३ | त्रिफलं .... | त्रिपलं. |
| १२५ | २७ | लङ्नं.... .... | लङ्घनं. |
| १३१ | १ | मध्येपुटे .... | मध्यपुटे. |
| १३९ | ९ | स्तृषा .... .... | स्तथा. |
| १४२ | २३ | मूर्च्छातिमारो | मूर्च्छातिसारौ |
| १४३ | १४ | त्र्युषण.... .... | त्र्यूषण. |
| १५५ | १४ | सृते .... .... | शृते. |
| १६१ | १४ | सतक्षौद्र .... | सक्षौद्र. |
| १६५ | १ | शून .... .... | शूलं. |
| १७५ | ३१ | सूवर्ण .... .... | सुवर्ण. |
| १८३ | १६ | सर्पिर्भि.... .... | सर्पिभिः |
| १८५ | २४ | सर्पिभ्यां .... | सर्पिभ्यां. |
| २०४ | २९ | भृद्रद .... .... | हृद्रद. |
| २०६ | १८ | भ्रमगधा ,.... | भ्रमगन्धा. |
| २१६ | १६ | तज्जं .... .... | तज्जलं. |
| ,, | १९ | न्यर्थे .... .... | न्यर्धे. |
| २२५ | १६ | संसर्गी.... .... | संसर्गो. |
| २३८ | १९ | भ्रामये.... .... | भ्रमये. |
| २४५ | १६ | कौशिक्राक्तो.... | कौशिकोक्तो. |
| २४८ | ९ | मृतया.... .... | शृतया. |
| २५९ | ३० | मृतं .... .... | शृतं. |

| पृष्ठाङ्कः । | पङ्क्त्यङ्कः । | अशुद्धम् । | शुद्धम् । | पृष्ठाङ्कः । | पङ्क्त्यङ्कः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|---|---|---|---|
| २६० | १९ | विषाला .... | विशाला. | ३५५ | २५ | प्राशा... .... | प्राश्या. |
| २६८ | ७ | धनागमे .... | घनागमे. | ३६२ | ३० | च्छितपित्त .... | च्छीतपीत्त |
| २७३ | १७ | त्र्युषणानि .... | त्र्यूषणानि. | ३६४ | १५ | च्छर्दि.... .... | श्च्छर्दि. |
| २७८ | २८ | मावर्तजो .... | मातेवजो. | ३६६ | २३ | मधुसर्पिषी. .... | मधुसर्पिषा. |
| २९३ | १६ | महतापं .... | महातापं. | ३७९ | २७ | मनःशिलाल .... | मनःशिलाक्त |
| २९८ | १४ | अश्मरीविनाश- | अश्मरिविनाश- | ३८६ | ३ | किर्तिता.. .... | कीर्तिता. |
| | | नम् .... .... | नम्. | ३९१ | २१ | अगार.... .... | अंगार. |
| ,, | १३ | अश्मरीनाशनः | अश्मरिनाशनः | ४०३ | २७ | सर्पिभ्यों.. .... | सर्पिभ्यां. |
| ,, | २१ | यतो .... .... | युतो. | ४१७ | ३२ | निम्ब..... .... | निम्बौ. |
| ,, | २४ | अश्मरीपातनः | अश्मरिपातनः | ४२२ | ५ | [illegible] | बिल्वादि |
| ३०२ | १८ | रक्तस्य स हि | रक्तस्य पित्तस्य | ४२३ | ६ | बिल्व ... | [illegible] |
| | | प्रकोपपित्तस्य | स हि प्रकोपः | ४२४ | १८ | [illegible] .... | [illegible] |
| ३०२ | २३ | सपापाठा .... | सपाठा | ४२५ | २१ | [illegible].... | [illegible] |
| ३०३ | ५ | पाचयेत् .... | पाययेत्. | ४२८ | १४ | [illegible] .... | [illegible] |
| ३०४ | ८ | त्यहम् .... | त्र्यहम्. | ,, | २७ | [illegible] .... | [illegible] |
| ,, | १६ | करायेत् .... | कारयेत्. | ४३० | ११ | सर्पिरते... .... | [illegible] |
| ,, | २३ | मूत्रघातं .... | मूत्राघातं. | ४५२ | २८ | ककलासकैः .... | [illegible] |
| ,, | २५ | पिप्पली .... | पिप्पलि. | ४५३ | २४ | सर्पिभ्यां.. .... | [illegible] |
| ,, | ३० | विद्रधी .... | विद्रधि. | ४५४ | १४ | तथारत्ववश्च .... | [illegible] |
| ३०६ | १ | द्रोण .... .... | द्रोणे. | ४५५ | ७ | कार्योः.... .... | [illegible] |
| ३०९ | १ | पुष्णात्यन्नेन .... | पुष्णान्त्यन्नेन | ,, | ८ | चूर्णम्.... .... | [illegible] |
| ३१० | ६ | कण्डूवादि .... | कण्डवादि. .... | ,, | १८ | पूत्कारम्.. .... | [illegible] |
| ३१२ | ४ | स्त्रावेद्धे .... | स्त्रवेद्धे .... .... | ४५६ | २९ | सर्पियुतं... .... | [illegible] |
| ,, | २४ | वातिं.... .... | वात .... .... | ४६२ | २५ | कुमारिकाद्भिः ... | [illegible] |
| ३१८ | ११ | लुक्षीरै .... | लुहिक्षीरै. .... | ४६६ | १३ | हरीतक्यपानु- | [illegible] |
| ३२० | ८ | न्निर्तनम् .... | न्निवर्तनम्. . .. | | | पानानि. .... | [illegible] |
| ३४५ | ४ | स्यन्दन .... | स्पन्दन.... .... | ४६७ | २० | विशेषतोः. .... | [illegible] |